अथानन्तरं ये ब्राह्मणेन शूद्रायां जाताः पारशवाः । एवं वैश्यायां जातो भू[1]र्जकण्टकः । क्षत्रियायां जातो मूर्धावसिक्तः । एतेषां पारशवादीनां स्वमानसंयोगदलसमं भवनं कार्यम् । स्वमानस्यात्मीयमानस्य द्वयोरेव मातापित्रोः संयोगादैक्यं कृत्वा तस्य दलमर्धं तत्तुल्यं पारशवादेर्भवनं गृहं कार्यम् । एतदुक्तं भवति । ब्राह्मणस्य यन्मानं यच्च शूद्रस्य तयोरैक्यं कृत्वा अर्धीकार्यम् । तन्मानं पारशवगृहस्य । वैश्यायाः क्षत्रियायाः पुत्राणामेवमपि । सर्वेषां नृपादीनां पारशवान्तानां स्वमानादात्मीयमानाद्धीनमधिकं वास्तु न शुभकरमिति ॥ १५ ॥

अथ पश्वाश्रमिणां धान्यायुधवह्निरतिगृहाणां च परमतेनोच्छ्राय-प्रमाणं चाह ।

**पश्वाश्रमिणाममितं धान्यायुधवह्निरतिगृहाणां च ।**
**नेच्छन्ति शास्त्रकारा हस्तशतादुच्छ्रितं परतः ॥ १६ ॥**

पशूनां चतुष्पदानाम् । आश्रमिणां च प्रव्राजकानाममितमपरिमितं यथेष्टप्रमाणं गृहस्य । तथा धान्यगृहस्य धान्यानि यत्र स्थाप्यन्ते । आयुधगृहस्यायुधानि यत्र स्थाप्यन्ते । वह्निगृहस्य चाग्निशालायाः । रतिगृहस्य च क्रीडावेश्मनः । एषाममितमपरिमितं प्रमाणम् । शास्त्रकारा वास्तुज्ञानविदो हस्तशतात्परत उच्छ्रितं नेच्छन्ति । हस्तशतादूर्ध्वमुच्छ्रितं गृहं न कार्यम् । "वास्तुनि यो वि[2]स्तारः स एव चोच्छ्रायनिश्चयः शुभदः" इत्यस्यायमपवादः ॥ १६ ॥

तथा च गर्गः ।

शतहस्तोच्छ्रितं कार्यं चतुःशालगृहं बुधैः ।
अपि तत्त्वेकशालं तु शुभदं तत्प्रकीर्तितम् ॥

अथ सेनापतिनृपद्वारेण सर्ववास्तूनां शालाऽलिन्दयोः प्रमाणमाह ।

**सेनापतिनृपतीनां सप्ततिसहिते द्विधाकृते व्यासे ।**
**शाला चतुर्दशहृते पञ्चत्रिंशद्धृतेऽलिन्दः ॥ १७ ॥**

सेनापतेर्नृपतेर्वा वास्तुनि व्यासस्य वा चातुर्वर्ण्यविवर्जितस्यान्यस्य वा ऽन्यस्य कस्यचित्सप्ततिसहितस्य सप्तत्या युक्तस्य तथाभूतस्य द्विधाकृतस्य

१ मनुस्मृतौ तु वैश्यायां ब्राह्मणाद्ब्राह्मण्यां जातो भूर्जकण्टक इति कथ्यते ।
२ अस्यैवाध्यायस्य ११ श्लोकः ।

द्विगुणस्यैकच चतुर्दशभिर्भागमपहृत्य यल्लभ्यते हस्ता अङ्गुलानि च तेन प्रमाणेन शाला कार्या । शालाशब्देन गृहाभ्यन्तरमुच्यते । अन्यच पञ्चविंशता भागे हृते यल्लभ्यते हस्तादिकं तेन प्रमाणेनालिन्दः कार्यः । अलिन्दशब्देन शालाभित्तेर्बाह्या या गमनिका जालकावृताङ्गणसम्मुखा क्रियते सा ज्ञेयेति । पूर्वमुक्तमुत्तममष्टाभ्यधिकं हस्तशतमित्यादि शेषप्रमाणं तत्र चायं निर्माणविधिरिति ॥ १७ ॥

अथ चातुर्वर्ण्यस्य शालालिन्दयोः प्रमाणमाह ।

**हस्तद्वात्रिंशादिषु चतुश्चतुस्त्रित्रिकत्रिकाः शालाः ।**
**सप्तदशत्रितयतिथित्रयोदशकृताङ्गुलाभ्यधिकाः ॥ १८ ॥**
**त्रित्रिद्विद्विद्विसमाः त्र्यक्रमादङ्गुलानि चैतेषाम् ।**
**व्येका विंशतिरष्टौ विंशतिरष्टादश त्रितयम् ॥ १९ ॥**

हस्तद्वात्रिंशादिषु । द्वात्रिंशदादौ ब्राह्मणादीनां वर्णानामित्यर्थः । तेषां चतुश्चतुस्त्रित्रिकत्रिका हस्ताः शालाः कार्याः । किंभूताश्च ते हस्ताः सप्तदशत्रितयतिथित्रयोदशकृताङ्गुलाभ्यधिका इति । तद्यथा । चातुर्वर्ण्यस्य प्रथमगृहे प्रधाने शाला चतुर्हस्ता सप्तदशाङ्गुलाभ्यधिका कार्या । द्वितीये चतुर्हस्ताङ्गुलत्रितयेनाधिका । तृतीये त्रिहस्ता तिथिभिः पञ्चदशभिरङ्गुलैरधिका । चतुर्थे त्रिहस्ता त्रयोदशभिरङ्गुलैरधिका । पञ्चमे त्रिहस्ता कृतैश्चतुर्भिरङ्गुलैरधिका कार्येति । एवं यद्गृहं ब्राह्मणस्य द्वितीयं तत् क्षत्रियस्य प्रधानम् । यत् क्षत्रियस्य द्वितीयं तद्वैश्यस्य प्रधानम् । यद्वैश्यस्य द्वितीयं तच्छूद्रस्य प्रधानम् । अनेनैव प्रकारेण शालाप्रमाणं विद्धम् ॥ १८ ॥

त्रित्रिद्विद्विद्विसमा इति । त्र्यादयश्च हस्ता व्येकविंशतिप्रभृतिभिरङ्गुलैर्युक्ताश्चातुर्वर्ण्यवास्तुष्वलिन्दप्रमाणमनुक्तमपि ज्ञायते । तद्यथा । ब्राह्मणस्य प्रथमगृहे अलिन्दप्रमाणं हस्तत्रितयमेकोनविंशत्यङ्गुलैरधिकम् । व्येका विंशतिः । विगत एको विंशतेः । द्वितीये हस्तत्रिकमष्टाभिरङ्गुलैरधिकम् । तृतीये हस्तद्वयं विंशत्यङ्गुलैरधिकम् । चतुर्थे हस्तद्वितयमष्टादशभिरङ्गुलैरधिकम् । पञ्चमे हस्तद्वितयं त्रिभिरङ्गुलैरधिकम् । एवमेतेषां

१ त्र्यतिक्रमादङ्गुलानि चैतेषाम्-इति पाठान्तरम् ।

हस्तानां चयक्रमाद्गृहक्रमेणैतान्यङ्गुलान्यधिकानि कार्याणि । अथ केचित् पठन्ति व्यतिक्रमादङ्गुलानि चैतेषामिति । अन्ये एवं व्याचक्षते । यथा एतान्यङ्गुलानि चयो हानिरेषां हस्तानां कार्यः । एतद्वृद्धस्थपतिभिर्नाङ्गी-कृतम् । अथ यथा सेनापतिचातुर्वर्ण्यविवरतो राजपुरुषाणामिति तच्छाला-लिन्दयोरपि कार्यमिति ॥ १६ ॥

अथ वीथिकाप्रमाणं तदुपलक्षितानां च वास्तूनां नामान्याह ।

**शालात्रिभागतुल्या कर्त्तव्या वीथिका बहिर्भवनात् ।**
**यद्यग्रतो भवति सा सोष्णीषं नाम तद्वास्तु ॥ २० ॥**
**सायाश्रयमिति पश्चात् सावष्टम्भं तु पार्श्वसंस्थितया ।**
**सुस्थितमिति च समन्ताच्छास्त्रज्ञैः पूजिताः सर्वाः ॥ २१ ॥**

शालात्रिभागतुल्येति । शालाया यत् प्रमाणमुक्तं तत्त्रिभागतुल्या वीथिका स्थला[1] भवनात् वेश्माद्बहिर्बाह्यतः कर्त्तव्या विधेया सा च वीथिका यदि गेहस्याग्रतः प्राग्भागे भवति तदा तद्वास्तु सोष्णीषं नाम ॥ २० ॥

अथ पश्चाद्भवति पश्चिमभागे वेश्मस्य तदा तद्वास्तु सायाश्रयं नाम । अथ पार्श्वयोर्दक्षिणोत्तरयोः स्थिता भवति प्राक् वा पश्चाच्च वा तदा सावष्टम्भं नाम तद्वास्तु । अथ समन्ताच्चतसृष्वपि दिक्षु भवति तदा तद्वास्तु सुस्थितं नाम । एताः सर्वाः शास्त्रज्ञैर्वास्तुलक्षणविद्भिः पूजिताः प्रशंसिता इति ॥ २१ ॥

तथा च किरणाख्ये तन्त्रे ।

यः शालायास्तृतीयांशस्तेन कार्या तु वीथिका ।
यद्यग्रतो भवेद्वीथी सोष्णीषं नाम तद्गृहम् ॥
पश्चात्सायाश्रयं नाम सावष्टम्भं तु पार्श्वयोः ।
समन्ताद्यदि जाता सा तदा सुस्थितमुच्यते ॥

अथ समस्तवास्तुनि भूमिकाप्रमाणमाह ।

**विस्तारषोडशांशः सचतुर्हस्तो भवेद्गृहोच्छ्रायः ।**
**द्वादशभागेनोना भूमौ भूमौ समस्तानाम् ॥ २२ ॥**

---

१ इयं कृत्रिमेति स्थलेत्युच्यते न तु स्थली ।

वास्तुनि यो विस्तार उक्तस्तस्य यः षोडशभागः सचतुर्हस्तः चतुर्हस्ताधिको गृहस्योच्छ्रायो भवति। अधस्तनभूमिकायामुच्छ्राय प्रोच्च्यं भवतीत्यर्थः। यथा नृपगृहस्याष्टाधिकं हस्तशतं पृथुत्वमतः षोडशांशो हस्ताः षट् अङ्गुलान्यष्टादश एव चतुर्हस्ताधिका हस्ता दश एतदधस्तनभूमिकाप्रमाणम्। एवमन्यत्रापि ज्ञेयम्। तदुपरि या भूमिका सा तद्द्वादशभागोना कार्या। प्रथमभूमिकाप्रमाणात्तद्द्वादशभागमपास्य यद्भवति तेन प्रमाणेनेत्यर्थः। एवमेतस्या अप्युपरि या भूमिका सा तद्द्वादशभागोना कार्या। एवं समस्तानां सर्वासां भूमिकानां द्वादशभागेनोनं प्रमाणमुपर्युपरि कार्यमित्यर्थः॥ २२॥

अथ भित्तिप्रमाणज्ञानं पक्वेष्टकादारुकृतानां च विशेषमाह।

**व्यासात् षोडशभागः सर्वेषां सद्मनां भवति भित्तिः।**
**पक्वेष्टकाकृतानां दारुकृतानां तु न विकल्पः॥ २३॥**

सर्वेषां नृपाद्यानां पारशवान्तानां सद्मनां गृहाणां व्यासाद्विस्ताराद्यः षोडशभागः षोडशांशः स भित्तिप्रमाणं भवति। यथा नृपगृहस्य व्यासस्याष्टाधिकशतस्य षोडशभागः षड्ढस्ता अष्टादशाङ्गुलानि एतद्भित्तिप्रमाणम्। एवमन्येषामपि ज्ञेयम्॥

तथा च गर्गः।

विस्तारषोडशांशेन गृहभित्तिं प्रकल्पयेत्।
हीनाधिका न कर्तव्या गृहभर्तुर्न शोभना॥

एतद्भित्तिप्रमाणं तत्पक्वेष्टकाकृतानां वास्तूनाम्। अन्येषां दारुकृतानां तु वास्तूनां न विकल्पः। नेयं विकल्पना। तेषां यथेच्छं कार्यम्। न केवलं भित्तिप्रमाणं यावत् पृथुत्वदैर्घ्यत्वोच्छ्रायाश्च यथाऽभिमताः कार्या इति॥ २३॥

तथा च किरणाख्ये तन्त्रे।

पक्वेष्टानामयं व्यासो दारुजानां यथेच्छया।
द्विजाद्येव गृहं कार्यं तत् स्याच्छुभं स्वदिग्गतम्॥
नवत्रयोदशाद्येश्च करैर्ज्ञात्वा प्रकल्पयेत्।

अथ नृपबलेशद्वारेण चातुर्वर्ण्यविवर्जितानां सर्वेषां वास्तूनां द्वारप्रमाणज्ञानमाह ।

**एकादशभागयुतः ससप्ततिर्नृपबलेशयोर्व्यासः ।**
**उच्छ्रायोऽङ्गुलतुल्यो द्वारस्यार्धेन विष्कम्भः ॥ २४ ॥**

अत्र नृपबलेशग्रहणमुपलक्षणार्थम् । नृपो राजा । बलेशः सेनापतिः । नृपबलेशयोरन्यस्य वा यस्य कस्यचिच्चातुर्वर्ण्यविवर्जितस्य यो व्यासो गृहविस्तारः स एकादशभागयुतः स्वकीयेनैकादशभागेन युक्तः ससप्ततिः सप्तत्या सहितः कार्यः । एवं कृते यद्भवति तावन्त्यङ्गुलानि द्वारस्योच्छ्रायः । औच्च्यमित्यर्थः । यथा नृपव्यासोऽष्टाधिकं हस्तशतमस्यैकादशभागोऽर्धाधिकाष्टौ । तत्सहितमष्टाधिकं शतं तच्च सप्तत्यधिकं अष्टाशीत्यधिकं शतम् । एतावन्त्यङ्गुलानि द्वारोच्छ्रायः । यत उक्तमुच्छ्रायोऽङ्गुलतुल्यो द्वारस्य । एवमन्येषामपि ज्ञेयम् ॥

अर्धेन विष्कम्भ इति ।

अस्मादुच्छ्रायादर्धेन विष्कम्भो विस्तारः कार्यः । यथा नृपगृहद्वारस्य नवनवत्यङ्गुलानि विस्तारः । एवमन्येषामपि ज्ञेयम् ॥ २४ ॥

अथ चातुर्वर्ण्यस्य द्वारप्रमाणमाह ।

**विप्रादीनां व्यासात् पञ्चांशोऽष्टादशाङ्गुलसमेतः ।**
**साष्टांशो विष्कम्भो द्वारस्य त्रिगुण उच्छ्रायः ॥ २५ ॥**

विप्रादीनां ब्राह्मणादीनां वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्राणां व्यासाद्विस्ताराद्यः पञ्चांशः पञ्चमो भागः स चाष्टादशभिरङ्गुलैरधिकः कार्यः । ततः पुनरस्य योऽष्टांशस्तेन युतं कृत्वा यद्भवति तावन्त्यङ्गुलानि द्वारस्य विष्कम्भो विस्तारः कार्यः । यथा । ब्राह्मणव्यासो द्वात्रिंशत् । अस्य पञ्चांशः षड्हस्ताः । एते अङ्गुलत्वेन परिकल्प्याः । अष्टादशाङ्गुलसमेतश्चतुर्विंशतिः । पुनरस्या अष्टांशेनाङ्गुलत्रितयेन युता सप्तविंशतिरेतद्विष्कम्भप्रमाणम् । विष्कम्भात्त्रिगुणादुच्छ्राय इति ॥ २५ ॥

अथ शाखोदुम्बराणां बाहुल्यं पृथुत्वं च स्तम्भस्याग्रमूलयोः प्रमाणमाह ।

**उच्छ्रायहस्तसङ्ख्यापरिमाणान्यङ्गुलानि बाहुल्यम् ।**
**शाखाद्वयेऽपि कार्यं सार्धं तत् स्यादुदुम्बरयोः ॥ २६ ॥**

**उच्छ्रायात् सप्तगुणादशीतिभागः पृथुत्वमेतेषाम् ।**
**नवगुणितेऽशीत्यंशः स्तम्भस्य दशांशहीनोऽग्रे ॥ २७ ॥**

द्वारोच्छ्रायस्य यावती हस्तसङ्ख्या तावन्त्यङ्गुलानि बाहुल्यं घनत्वं शाखाद्वयेऽपि कार्यम् । शाखा द्वारिका । अपिशब्दः सम्भावनायाम् । बहुष्वप्येवमेवेति । यथा नृपगृहद्वारस्योच्छ्रायोऽङ्गुलानामष्टाशीत्यधिकं शतम् । अत्र हस्ता अर्धाधिकेनाष्टौ भवन्ति । एतावन्त्यङ्गुलानि शाखाद्वये बाहुल्यम् । एवमन्यत्रापि ॥

सार्धं तत्स्यादुदुम्बरयोरिति । तच्छाखाबाहुल्यं सार्धं सार्धकमुदुम्बरयोः प्रमाणं स्याद्भवेत् । यथाऽत्र नृपगृहे सार्धकं शाखाबाहुल्यं द्वादशाङ्गुलान्येवमन्यत्र । उदुम्बरौ शाखयोरूर्ध्वाधःस्थिते काष्ठे देहलीनिटालाख्ये ॥ २६ ॥

उच्छ्रायात्सप्तगुणादिति । द्वारस्य य उच्छ्रायस्तस्मात्सप्तगुणाद्योऽशीतिभागोऽशीत्यंशस्तत्तुल्यं पृथुत्वं विस्तृतत्वमेतेषां शाखोदुम्बराख्ये कार्यं यथा नृपद्वारोच्छ्रायोऽष्टाशीत्यधिकमङ्गुलशतमस्मात्सप्तगुणादशीतिभागः षोडश सार्धाङ्गुलानि । एतत्सर्वेषां पृथुत्वम् । एवमन्यत्रापि ॥

नवगुणित इति ।

स्तम्भोच्छ्राये नवगुणिते नवाहते योऽशीत्यंशोऽशीतितमो भागस्तत्प्रमाणं स्तम्भस्य मूले पृथुत्वं तदेव स्वदशांशोनमग्रे पृथुत्वं स्तम्भस्य । यथा नृपगृहेऽधस्तनभूमिकाप्रमाणे दश हस्ता अष्टादशाङ्गुलानि । एतदेव स्तम्भस्योच्च्यम् । अस्मान्नवगुणितादशीत्यंशः । अष्टाविंशत्यङ्गुलानि । एतन्मूले पृथुत्वम् । तदेव स्वदशांशोनमग्रे पृथुत्वम् । अतस्त्रिगुणः परिधिः । एतदुदाहरणमात्रेण प्रदर्शनम् । अन्यथा स्तम्भं[1] विभज्य नवधा 'वहनं भाग' इत्यनया परिभाषया यो मध्यभागः समचतुरस्रादिकस्तस्यैव विभागो ज्ञेय इति ॥ २७ ॥

अथ स्तम्भादीनां नामाह ।

**समचतुरस्रो रुचको वज्रोऽष्टाश्रिर्द्विवज्रको द्विगुणः ।**
**द्वात्रिंशता तु मध्ये प्रलीनको वृत्त इति वृत्तः ॥ २८ ॥**

स्तम्भो मध्ये मध्यभागे समचतुरस्रः । समाभिस्तुल्याभिश्चतसृभिरश्रिभिर्युक्तः स रुचकनामा । यस्य मध्ये समा अष्टाश्रिः स वज्रनामा ।

---

१ अस्यैवाध्यायस्य २६ श्लोकः ।

यस्य मध्ये द्विगुणः समाभिः षोडशभिरस्रिभिर्युक्तः स द्विवज्रनामा। अष्टास्रापेक्षया द्विगुणः। यश्च मध्ये अस्रीणां द्वात्रिंशता युक्तः स प्रलीनकनामा। यश्च मध्ये वृत्तः परिवर्तुलः स वृत्तसञ्ज्ञः। एते पञ्च स्तम्भाः। सर्व एव प्रशस्तफलाः। अतोऽन्ये नेष्टा इत्यर्थाद्विज्ञेयाः। अथ मध्यग्रहणं किमर्थं कृतमुभयतः स्तम्भं विभज्य नवधेत्यनेनाधऊर्ध्वभागयो रचना भविष्यतीति ॥ २८ ॥

तथा च किरणाख्ये तन्त्रे।

वेदास्रो रुचकः स्तम्भो वज्रोऽष्टास्रियुतो मतः।

द्विवज्रः षोडशास्रिः स्यात् द्विगुणास्रिः प्रलीनकः॥

समन्ततस्तो वृत्ताख्यः स्तम्भः प्रोक्तो द्विजोत्तमैः।

अथ स्तम्भस्याधरोर्ध्वभागयो रचनाप्रदर्शनार्थमाह।

**स्तम्भं विभज्य नवधा वहनं भागो घटोऽस्य भागोऽन्यः।**
**पद्मं तथोत्तरोष्ठं कुर्याद्भागेन भागेन ॥ २९ ॥**

स्तम्भं स्तम्भप्रमाणं नवधा नवभिर्भागैर्विभज्य पृथक्पृथग्नवभागे विभक्तं कृत्वा तत्र सर्वाधोभागे वहनं कार्यम्। उह्यते धार्यते भूमौ येन स्तम्भभागेन तद्वहनम्। अस्य भागस्योपर्यन्यो यो द्वितीयो भागः स घटस्ततोऽन्यः पद्मं कमलं पद्माकारमेव कार्यम्। तथा तेनैव प्रकारेण पद्मस्योपरि यो नवमो भागः स उत्तरोष्ठः कार्यः। उत्तरोष्ठो यत्र शोभार्थं रूपकविशेषाः क्रियन्ते। एवं पद्मं भागेनोत्तरोष्ठं च भागेन कार्यम्। केचिदुत्तरोष्ठमष्टमभागे नवमे कमलमितीच्छन्ति। एतदुक्तं भवति। नवधा विभक्ते स्तम्भेऽधरोर्ध्वभागचतुष्केऽधो हिरण्यादीनि कार्याणि शेषं भागपञ्चकं समचतुरस्रादिकं कार्यम् ॥ २९ ॥

तथा च किरणाख्ये तन्त्रे।

विभज्य नवधा स्तम्भं कुर्यादुद्वहनं घटम्।

कमलं चोत्तरोष्ठं तु भागे भागे प्रकल्पयेत्—इति ॥

अथ भारतुलातुलोपतुलानां च प्रमाणमाह।

**स्तम्भसमं बाहुल्यं भारतुलानामुपर्युपर्यासाम्।**
**भवति तुलोपतुलानामूनं पादेन पादेन ॥ ३० ॥**

भारं तोलयन्तीति भारतुलाः। स्तम्भस्योपरि यत्तिर्यक् कृत्वा काष्ठं दीयते तद्भारतुलासञ्ज्ञम्। प्रासादादिषु स्तम्भानां बहुत्वाद्भारतुला इति

बहुवचननिर्देशः कृतः। भारतुलाया उपरि यदन्यत् काष्ठं दीयते ततुलोपतुलासञ्ज्ञम्। भारतुलानां स्तम्भसमं स्तम्भप्रमितं बाहुल्यं घनत्वं कार्यम्। यथा। नृपगृहे स्तम्भस्य पृथुत्वमष्टाविंशत्यङ्गुलानि तदेव भारतुलानाम्। एवमन्यच। आसां भारतुलानामुपर्युपरि यास्तुलोपतुलास्तासां ताभ्यः सकाशात् पादोनं बाहुल्यं कार्यम्। यथा। नृपगृहे एकविंशत्यङ्गुलम्। अन्यच पादेन चतुर्भागेनोनं कार्यम्। वीप्साकरणात्केचिच्चतस्र इति वर्धयन्ति। भारतुला उपतुला तुलोपतुला चेति। आसां भारतुलातः पादेन पादेनोनं बाहुल्यं कार्यम्। आश्चो युपरि दीयन्ते इति ॥ ३० ॥

अथ वास्तुकरणे पञ्च चतुःशालगृहाणि भवन्ति सर्वतोभद्रनन्द्यावर्त-वर्धमानस्वस्तिकरुचकाख्यानि।

तत्रादावेव सर्वतोभद्रस्य लक्षणमाह।

**अप्रतिषिद्धालिन्दं समन्ततो वास्तु सर्वतोभद्रम्।**
**नृपविबुधसमूहानां कार्यं द्वारैश्चतुर्भिरपि ॥ ३१ ॥**

यस्मिन् वास्तुन्यलिन्दानां गमनिकानां प्रतिषेधो विच्छित्तिर्नास्ति समन्ततः सर्वासु दिक्षु। तद्वास्तु सर्वतोभद्रसञ्ज्ञम्। तच्च नृपाणां राज्ञां विबुधसमूहानां देववृन्दानां कार्यं विधेयम्। चतुर्भिर्द्वारैरुपलक्षितं चतसृष्वपि दिक्षु तत्र द्वाराणि कार्याणि इत्यर्थः ॥ ३१ ॥

तथा च गर्गः।

अलिन्दानां व्यवच्छेदो नास्ति यत्र समन्ततः।
तद्वास्तु सर्वतोभद्रं चतुर्द्वारसमायुतम् ॥

अथ नन्द्यावर्तस्य लक्षणमाह।

**नन्द्यावर्त्तमलिन्दैः शालाकुड्यात् प्रदक्षिणान्तगतैः।**
**द्वारं पश्चिममस्मिन् विहाय शेषाणि कार्याणि ॥ ३२ ॥**

शालाकुड्यात् शालाभित्तेरारभ्य दक्षिणान्तगतैरलिन्दैर्नन्द्यावर्तनाम वास्तु। प्रादक्षिण्येनान्तं ये गता अलिन्दास्तैरुपलक्षितैः। चतसृष्वपि शालासु शालाप्रदक्षिणान्तगतास्तत्रालिन्दा भवन्ति। अस्मिन्नन्द्यावर्तिनि पश्चिमद्वारं विहाय त्यक्त्वा शेषाण्यन्यानि त्रीणि द्वाराणि पूर्वदक्षिणोत्तराणि कार्याणि ॥ ३२ ॥

तथा च गर्गः ।

प्रदक्षिणां गतैः सर्वैः शालाभित्तैरलिन्दकैः ।
विना परेण द्वारेण नन्द्यावर्तमिति स्मृतम् ॥

अथ वर्धमानस्य लक्षणमाह ।

**द्वारालिन्दोऽन्तगतः प्रदक्षिणोऽन्यः शुभस्ततश्चान्यः ।**
**तस्मिंश्च वर्धमाने द्वारं तु न दक्षिणं कार्यम् ॥ ३३ ॥**

प्रधानवास्तुनो यद्द्वारं तत्र योऽलिन्दः स द्वारालिन्दः । स चान्तगतः कार्यः । दक्षिणोत्तरशालासंलग्न इत्यर्थः । अन्यो द्वितीयोऽलिन्दः प्रदक्षिणः प्रादक्षिण्येन गतः स च शुभः शोभनः । ततश्चान्यस्तस्मात्प्रदक्षिणादन्तर्गत एव । एवंविधैरलिन्दैरुपलक्षितो वर्धमानः । तस्मिन् वर्धमाने दक्षिणं द्वारं न कार्यम् । अन्यानि त्रीणि पूर्वपश्चिमोत्तराणि कार्याणि ॥ ३३ ॥

तथा च गर्गः ।

द्वारालिन्दोऽन्तगस्तेषां ये त्रयो दक्षिणां गताः ।
विहाय दक्षिणं द्वारं वर्धमानमिति स्मृतम् ॥

अथ स्वस्तिकलक्षणमाह ।

**अपरोऽन्तगतोऽलिन्दः प्रागन्तगतौ तदुत्थितौ चान्यौ ।**
**तदवधिविधृतश्चान्यः प्राग्द्वारं स्वस्तिके शुभदम् ॥ ३४ ॥**

स्वस्तिके अपरः पश्चिमोऽलिन्दोऽन्तगतः कार्यो दक्षिणोत्तरशालासंलग्नः । अन्यौ तु दक्षिणोत्तरौ द्वावलिन्दौ तदुत्थितौ तस्मात्पश्चिमादलिन्दादुत्पन्नौ प्राक्पूर्वस्यां दिशि अन्तगतौ शालासंलग्नौ कार्यौ । अन्यश्चतुर्थः पूर्वोऽलिन्दस्तदवधिविधृतस्तयोरवधौ मध्ये विधृतः स्थित इत्यर्थः । एवं स्वस्तिकं प्राग्द्वारं शुभदं पूर्वस्यां दिशि द्वारं तस्मिन् कार्यं नान्यत्र क्वचिदिति ॥ ३४ ॥

तथा च गर्गः ।

पश्चिमोऽन्तगतोऽलिन्दः प्रागन्तौ द्वौ तदुत्थितौ ।
अन्यस्तन्मध्यविधृतः प्राग्द्वारं स्वस्तिकं शुभम् ॥

अथ रुचकलक्षणमाह ।

**प्राक्पश्चिमावलिन्दावन्तगतौ तदवधिस्थितौ शेषौ ।**
**रुचके द्वारं न शुभदमुत्तरतोऽन्यानि शस्तानि ॥ ३५ ॥**

रुचके प्राक्पश्चिमौ पूर्वापरौ द्वावलिन्दावन्तगतौ शेषौ तयोरवधौ मध्ये स्थितौ तत्संलग्नावित्यर्थः । एवं रुचके द्वारमुत्तरं न शुभदम् । अन्यानि त्रीणि पूर्वदक्षिणपश्चिमानि शस्तानीति ॥ ३५ ॥

तथा च गर्गः ।

प्राक्पश्चिमावलिन्दौ यावन्तगौ तद्भवौ परौ ।
सौम्यं द्वारं विना यत्स्याद्रुचकाख्यं तु तत्स्मृतम् ॥

अथ तेषां पञ्चानां चतुःशालानां फलान्याह ।

**श्रेष्ठं नन्द्यावर्त्तं सर्वेषां वर्धमानसञ्ज्ञं च ।**
**स्वस्तिकरुचके मध्ये शेषं शुभदं नृपादीनाम् ॥ ३६ ॥**

सर्वेषां वर्णानां नन्द्यावर्तं चतुःशालं श्रेष्ठं प्रशस्तम् । वर्धमानसञ्ज्ञं वर्धमानाख्यं च । चशब्दाच्छ्रेष्ठमेव । स्वस्तिकरुचके सर्वेषामेव मध्ये मध्यफले । न शुभे नाप्यशुभे इत्यर्थः । शेषं सर्वतोभद्रसञ्ज्ञं चतुःशालं नृपादीनां राज्ञां राजमन्त्रिणां राजाश्रितानां देवानां च शुभं नान्येषामिति ॥ ३६ ॥

अथैतानि विन्यासेन प्रदर्श्यन्ते ।



अथ त्रिशालानां हिरण्यनाभसुक्षेत्रचुल्लीपक्षघ्नानां लक्षणमाह।

**उत्तरशालाहीनं हिरण्यनाभं त्रिशालकं धन्यम्।**
**प्राक्शालया वियुक्तं सुक्षेत्रं वृद्धिदं वास्तु॥ ३७॥**
**याम्याहीनं चुल्ली त्रिशालकं वित्तनाशकरमेतत्।**
**पक्षघ्नमपरया वर्जितं सुतध्वंसवैरकरम्॥ ३८॥**

उत्तरशालया यद्विहीनम्। अन्यासु तिसृषु दिक्षु शाला भवन्ति। केवलयोत्तरया रहितं तत्त्रिशालकं हिरण्यनाभाख्यम्। तच्च धन्यं प्रशस्तम्। एवं प्राक्शालया पूर्वशालया वियुक्तं रहितं तत्त्रिशालं सुक्षेत्रं नाम वास्तु। तच्च वृद्धिं धनसुतादीनां ददाति॥ ३७॥

याम्याहीनं दक्षिणस्यां दिशि रहितं तत् चुल्लीसञ्ज्ञं त्रिशालम्। एतच्च वित्तस्य धनस्य नाशकरं क्षयावहम्। अपरया पश्चिमशालया यद्विवर्जितं तत्पक्षघ्नं पक्षघ्नसञ्ज्ञम्। तच्च सुतध्वंसवैरकरम्। सुतानां पुत्राणां ध्वंसं विनाशं वैरं च करोति। एषां विन्यासः सुगमत्वान्न प्रदर्शितः। यतश्चतुःशालाकृतिरेवालिन्दवर्जिता एकादिगृहीनेति॥ ३८॥

तथा च किरणाख्ये तन्त्रे।

शस्तं हिरण्यनाभाख्यं हीनं चोत्तरशालया।
सुक्षेत्रं पूर्वतो हीनं शालया वृद्धिदं मतम्॥
चुल्ली दक्षिणया हीनं धनार्थप्राणनाशनम्।
यत् स्यादपरया हीनं पक्षघ्नं तत् सुतान्तकृत्॥

अथ द्विशालानां सिद्धार्थयमसूर्यदण्डवाताख्यचुल्लीकाचानां लक्षणं सफलमाह।

**सिद्धार्थमपरयाम्ये यमसूर्यं पश्चिमोत्तरे शाले।**
**दण्डाख्यमुदक्पूर्वे वाताख्यं प्राग्युता याम्या॥ ३९॥**
**पूर्वापरे तु शाले गृहचुल्ली दक्षिणोत्तरे काचम्।**
**सिद्धार्थेऽर्थावाप्तिर्यमसूर्ये गृहपतेर्मृत्युः॥ ४०॥**
**दण्ड[1]बधो दण्डाख्ये कलहोद्वेगः सदैव वाताख्ये।**

१ दण्डबधो-इति पाठान्तरम्।

विक्तविनाशश्चुल्ल्यां ज्ञातिविरोधः स्मृतः काचे ॥ ४१ ॥

अपरयाम्ये पश्चिमदक्षिणे द्वे शाले यत्र भवतस्तद्द्विशालं सिद्धार्थसञ्ज्ञम् । एवं पश्चिमोत्तरे यत्र शाले तद्यमसूर्यम् । उदक्पूर्वे उत्तरपूर्वे यत्र द्वे शाले विद्येते तद्दण्डाख्यम् । प्राग्युता याम्या पूर्वयुक्ता दक्षिणा यत्र भवति तद्वाताख्यं वातसञ्ज्ञम् ॥ ३९ ॥

पूर्वापरे पूर्वपश्चिमे यत्र द्वे शाले विद्येते तद्गृहचुल्ली नाम द्विशालम् । एवं दक्षिणोत्तरशालं तत्काचं नाम द्विशालम् । एषां द्विशालानां फलान्याह । सिद्धार्थेऽर्थावाप्तिरिति । सिद्धार्थसञ्ज्ञे द्विशालेऽर्थावाप्तिर्धनलब्धिर्भवति स्वामिनः । यमसूर्ये तद्गृहपतेर्गृहनाथस्य मृत्युर्मरणं भवति ॥ ४० ॥

दण्डाख्ये दण्डसञ्ज्ञे द्विशाले दण्डवधः । दण्डताडनेन वधो मरणम् । अथवा दण्डश्च वधश्च दण्डवधाविति केचित्पठन्ति । दण्डोऽर्थाय कर्षणम् । वधस्ताडनं तौ द्वावेव भवतः । वाताख्ये वातसञ्ज्ञे सदैव सर्वकालं कलहोद्वेगश्चित्तशोकः । चुल्ल्यां वित्तस्य धनस्य विनाशः । काचे ज्ञातिविरोधो बन्धुभिः सह द्वेष इति स्मृतः ॥ ४१ ॥

तथा च किरणाख्ये तन्त्रे ।

सिद्धार्थं तु भवेच्छुभ्रं याम्यापरयुतं यदि ।
पश्चिमोत्तरसंयुक्तं यमसूर्यं तु मृत्युदम् ॥
उदक्पूर्वयुतं यत् स्याद्दण्डाख्यं दण्डकारकम् ।
पूर्वयाम्ययुतं ज्ञेयं वाताख्यं कलहप्रियम् ॥
पूर्वापरयुतं गेहं चुल्लीनामार्थनाशकृत् ।
दक्षिणोत्तरशालाढ्यं काचसञ्ज्ञं विरोधकृत् ॥

अत्र विश्वकर्ममयनग्नजिदादिभिरेकैकस्मिन् वास्तुनि योऽर्थो महता ग्रन्थसन्दर्भेण प्रोक्तः स एवाचार्येण गृहीतशास्त्रेण महाग्रन्थभीरुणा समासोक्तिप्रियेणैकेकेनैवाऽऽपादकेनार्थो निर्दिष्टः । तथा च हिरण्यगर्भेण गृहाणां विंशत्यधिकं शतमुक्तम् ।

तथा चाह ।

गृहाणां क्रमयोगेन चतुःषष्टिः समासतः ।
अनेकयोगभेदाच्च शतं विंशोत्तरं स्मृतम्—इति ॥

तथा च विश्वकर्मा ।

एवं शतद्वयं पिण्डं षट्पञ्चाशच्च वेश्मनाम् ।
यथावत् कृत्यजः कृत्स्न उक्तशास्त्रेऽपि यत्नतः ॥

आचार्येण तु:शालत्रिशालद्विशालानि पञ्चदश गृहाणि अभिहितानि। विश्वकर्मादीनां चोक्तिभिरनुपन्यस्यमानाभिः स्पष्टार्थोऽभिधातुं न शक्यते। तदुक्त्युपन्यासो वा क्रियते तदा हि विस्तरोक्तिः स्यात्। अतिविस्तरोक्तिश्च न गृह्यते।

तथा च चिकित्साशास्त्रे चरके पठ्यते।

"परा[1]धिकारेषु न विस्तरोक्तिः शस्तेति तेनात्र न तत्र प्रयत्नः" इति।

तस्मात्तात्पर्यार्थोऽभिधीयते।

"वा[2]स्तुनि यो विस्तारः स एव चोच्छ्रायनिश्चयः शुभद" इत्युक्तमाचार्येण पुनः स एवाह "ने[3]च्छन्ति शास्त्रकारा हस्तशतादुच्छ्रितं परतः"। नृपाणामष्टोत्तरशतं गृहविस्तारः। गृहविस्तारतुल्यश्च गृहोच्छ्रायः शुभदः। नेच्छन्ति शास्त्रकारा हस्तशतादुच्छ्रितं परतः इत्यनेन सह विरुध्यते। अत्र केचिदविदितशास्त्रसद्भावा मन्यन्ते। यथा गृहविस्तारतुल्यो गृहोच्छ्रायोऽभिहितो यः स उत्सर्गः। नेच्छन्ति शास्त्रकारा हस्तशतादुच्छ्रितं परत इत्यपवादः। उत्सर्गश्चापवादेन बाध्यते इति। वयं त्वत्र ब्रूमः। विषयविभागेन कल्पना कृता तत्र नोत्सर्गो न चापवाद इति।

आचार्य आह।

वि[4]स्तारषोडशांशः सचतुर्हस्तो भवेद्गृहोच्छ्रायः।
द्वादशभागेनोनो भूमौ भूमौ समस्तानाम् ॥

विप्रादीनां गृहेषु भूमिकामानमिदं विश्वकर्मणाऽभिहितम्।

---

१ चरके चिकित्सास्थानान्तर्गतषड्विंशतितमाध्याये नासारोगचिकित्सामुपक्रम्य सान्निपातिकपीनसनिदाने तदुपद्रवतया षण्णवतिर्नेत्रामया अपि जायन्ते तेषां च सलक्षणं चिकित्सितं शालाक्यभाग एव सविस्तरमभिहितमित्यत्रोपेक्षितमित्युक्तं चरकाचार्यैः।

तथा हि।

सर्वाणि रूपाणि तु सन्निपाते नेत्रामयाः षण्णवतिस्तु भेदात्।
तेषामभिव्यक्तिरभिप्रदिष्टा शालाक्यतन्त्रेषु चिकित्सितं च ॥
पराधिकारेषु न विस्तरोक्तिः शस्तेति तेनात्र न नः प्रयत्नः।
अत्र द्वितीयश्लोकस्य द्वितीयपादे "तेनात्र न नः प्रयत्नः" इति पाठभेदः।

२ अस्यैवाध्यायस्य ११ श्लो०। ३ अस्यैवाध्यायस्य १६ श्लो०। ४ अस्यैवाध्यायस्य २२ श्लो०।

अर्धचतुष्कभूमिकं गृहं शूद्राणां कर्तव्यं विशामर्धपञ्चकभूमिकम् । अर्धषष्ठभूमिकं क्षत्रियाणां द्विजानामर्धसप्तमभूमिकम् । अर्धाष्टमभूमिकं नृपाणां कर्तव्यम् ।

तथा च विश्वकर्माऽऽह ।

यजन्ते [1]राजसूयाद्यैः क्रतुभिर्येऽवनीश्वराः ।
तलैरर्धाष्टमैस्तेषां कारयेद्भवनोत्तमम् ॥
तथाऽर्धसप्तमैरेव विप्राणां कारयेद्गृहम् ।
अर्धषष्ठैः क्षत्रियाणां वैश्यानामर्धपञ्चमैः ॥
त्रिभिः सार्धैश्च शूद्राणां भवनं शुभदं स्मृतम्—इति ।

विश्वकर्मा मन्दबुद्धिप्रबोधनार्थं पुनः स्पष्टतरं साधारणेन हस्तेन गृहोच्छ्रायहस्तसङ्ख्यामाह ।

[2]साधारणेन हस्तेन परं शूद्रस्य विंशतिः ॥
चत्वारिंशच्च वैश्यस्य षष्टिः स्यात्क्षत्रियस्य तु ।
ब्राह्मणस्य तथाऽशीतिः शतं च नृपतेः स्मृतम् ॥
नातः परतरं नृणामूर्ध्वमानं विधीयते ।
गन्धर्वसिद्धयक्षाणां धर्मतः समुदाहृतम् ॥

[2]साधारणेन हस्तेन हस्तशतं यत्तत्त्रैराशिकगणनया ज्येष्ठहस्तेनानुमीयमानं सप्ताशीतिर्हस्ताः सार्द्धा भवन्ति "द्वादशभागेनोनौ भूमौ भूमाविति"त्यनेनापि न्यायेनार्धाष्टमभूमिका हस्ता द्विषष्टिः सार्धा भवन्ति । अथाचेदं मन्यसे साधारणेन हस्तेन हस्तशतोच्छ्रायं ज्येष्ठहस्तमितेन हस्ताः सप्ताशीतिः सार्धा भवन्ति नृपगृहस्योत्तमस्याष्टोत्तरशतविस्तृतस्य द्वादशभागेनोनौ भूमौ भूमौ समस्तानामित्यनेन न्यायेन हस्ता द्विषष्टिः सार्धा भवन्ति एककर्तृकस्यैव ग्रन्थस्याचापि भिन्नवाक्यता इति । अत्रोच्यते ।

१ एतानि वचनानि वास्तुविश्वकर्मप्रकाशे उपलभ्यन्ते ।

२ अत्र नृपगृहस्योत्तमस्याष्टोत्तरशतविस्तृतस्य विस्तारषोडशांशः सचतुर्हस्तो भवेद्गृहोच्छ्रायः । द्वादशभागेनोनौ भूमौ भूमौ समस्तानामित्यादिनाऽङ्गुलावयवग्रहणेन प्रथमभूमिकाप्रमाणम् १० ह० १८ अं० । द्वि० भू० प्र० = ९ ह० २० अं० । तृ० भू० प्र० = ९ ह० ० अं० । च० भू० प्र० = ८ ह० ६ अं० । प० भू० प्र० = ७ ह० १२ अं० । ष० भू० प्र० = ६ ह० २२ अं० । स० भू० प्र० = ६ ह० ८ अं० । अष्ट० भू० प्र० = ५ ह० १९ अं० । अत्र सप्तभूमिकाप्रमाणानां योगोऽस्मिन् ५८ ह० १५ अं. यदि अष्टमभूमिकाप्रमाणार्द्धमिदं २ ह० २१ अं० क्षिप्यते तदा एकषष्टिर्हस्ताः सार्द्धा भवन्ति तेनोभयत्र द्विषष्टिस्थाने एकषष्टिरिति पाठः साधुरिति सुधीभिर्भृशं विचिन्त्यम् ।

विश्वकर्मणोत्तमगृहाणां हस्तद्वयं सार्धं पीठोच्छ्रायमुक्तम् । भूमिकान्तरे काष्ठोच्छ्रायपांशुकस्तरखरण्डिकादिभिः सहितमेव मानं भवति तस्मात्पुनरुक्तदोषो नावावगम्यत इति । द्विचितुःशालेषु गृहेषु भूमिकोच्छ्रायनियमोऽवगन्तव्यः । एकशालेषु व्यासतुल्यगृहोच्छ्रायः शस्यते न द्विचितुःशालेषु ।

तथा च गर्ग आह ।

एकशालं यथाकामं विस्तारं कारयेद्गृहम् ।
गृहमायामहीनं तत्त्वेकशालं प्रचक्षते ॥
गृहविस्तारमाधिक्यं प्राहोत्सर्गास्तु गोतमः ।
आचार्येण त्वेकशाले गृहे व्यासतुल्य उच्छ्रायोऽभिहितः ।

व्यासद्विगुणश्चायामः । एकशालं विप्रादीनां न क्रियते द्विचितुःशाला एव क्रियन्ते ।

तथा च वृद्धगर्गः ।

अनाजीवकरं सर्वमेकशालमुदाहृतम् ।
अपि शाला तृणमयी कार्या तस्य शुभप्रदा ॥

आचार्य आह ।

वा[1]स्तुनि यो विस्तारः स एव चोच्छ्रायनिश्चयः शुभदः ।
शालैकेषु गृहेष्वपि" इत्यत्रापिशब्दश्चकारको द्रष्टव्यः ।

विस्ताराद्द्विगुणितं च तेष्वेकशालेषु दैर्घ्यं कर्तव्यम् । "चि[2]चि[2]द्वि-द्विशमाः क्षयक्रमाद्दकुलानि चैतेषा"मित्यत्र संदिह्यते किमष्टयवेनाङ्गुलेन चतुर्विंशत्यङ्गुलैर्यो हस्तः स सम इति । विश्वकर्मणा त्रिविधो हस्त उच्यते ।

यथा मध्यान्विता अष्टावङ्गुलं ज्येष्ठमुच्यते ।
सप्त मध्यमसङ्ख्यानामङ्गुलं षट् कनीयसाम्—इति ॥

तत्राष्टयवाङ्गुलः प्रशस्याख्यः । सप्तयवाङ्गुलः साधारणः । षड्यवाङ्गुलः शमाख्य इति । अत्रोच्यते । आचार्येण शब्दाभिधानसामान्येनैव हस्तः शमोऽभिहितः । अन्यश्च विश्वकर्मणा त्रिविधस्यापि हस्तस्य प्रत्येकं कर्म प्रदर्शितम् । तत्राप्यष्टयवेनैवाङ्गुलेन यो हस्तस्तेन गृहकर्मोक्तम् ।

---

१ अस्यैवाध्यायस्य ११ श्लो० ।　　　२ अस्यैवाध्यायस्य १६ श्लो० ।

आह च ।

[1]ग्रामखेटपुरादीनां विभागायामविस्तरान् ।
परिखाद्वाररथ्याश्च स्तम्भान् प्रासादवेश्मनाम् ॥
तेषां निर्गममार्गं च सीमाक्षेत्रान्तराणि च ।
देशान्तरविभागांश्च वासोपवनयोस्तथा ॥
अध्वनः परिमाणं च क्रोशगव्यूतियोजनैः ।
खातक्रकचराशींश्च प्रशयेन प्रमापयेत् ॥

षड्यवाङ्गुलहस्तस्य कर्माण्याह ।

शयनासनयानानि कर्मदण्डायुधं तथा ।
वापीकूपप्रमाणानि तथा नृगजवाजिनाम् ॥
इषुयन्त्रारघट्टांश्च हलयूपयुगध्वजान् ।
आतोद्यानि च नावश्च शिल्पिनां चाप्युपस्करान् ॥
पादुके च वृषीं छत्रं चर्मोपकरणानि च ।
मात्रा शमेन हस्तेन नल्वदण्डांश्च मापयेत् ॥

इत्येतन्न यस्मादाचार्येण शब्दाभिधाने सामान्येनैव शमो हस्त इत्युक्तः । केचिच्छय इति पठन्ति विचिद्विद्विद्विशया इति । एतत्प्रागुक्तं लक्षणं शयाख्यस्येति ।

"व्यासात्षोडशभागः सर्वेषां सद्मनां भवति भित्तिः ।
पक्वेष्टकाकृतानां दारुकृतानां तु न विकल्पः" ॥

इत्यत्र सर्वशब्देनेदं ज्ञापयति यथा चतुर्वर्णादिसद्मनां चतुःशालादिगृहाणां विस्तारात् षोडशभागतुल्या पृथुला भित्तिः पक्वेष्टकाकृतानां कर्तव्या । पक्वेष्टकामेष्टकासंयोगनिषेधस्तन्त्रान्तरे पठ्यते ।

न नवं पुराणयुक्तं न पक्वमामेन चैव संयोज्यम् ।
अन्यच स्खलितशिलाविशीर्णमच्छिन्नसंस्कारात् ॥

संयोगो वेष्यते तदा तेनानुक्रमेणेत्यत्र हिरण्यगर्भ आह ।

आमेष्टकास्त्वधश्चेयाः पक्काश्च चिनुयात्ततः ।
पक्काश्रिता ह्यधश्र्या यथेष्टमुपरीष्टकाः ॥

१ एतानि वचनानि वास्तुविद्यवकर्मप्रकाशे उपलभ्यन्तेऽत्र बहूनि पाठान्तराणि ।

पक्केष्टकागृहाणां सुवर्णतृणवस्त्रादिकृतानां हिरण्यगर्भोक्तानां निषेधार्थं मयेन पञ्च प्रकारा उक्ताः ।

कटिमं ग्रन्थिमं चैव दायिमं रिपिमं तथा ।
खातिमं च पुरं ख्यातं क्रियाः पञ्चविधा गृहे ॥

सुवर्णादिभेदान् हिरण्यगर्भ आह ।

गृहं तु विविधं प्रोक्तं शरीरैस्तु पृथग्विधैः ।
पाषाणैर्निचितं यच्च तद्गृहं मन्दिरं स्मृतम् ॥
पक्केष्टकं वास्तुनाम भवनं हितमुत्तमम् ।
आमेष्टकं सुमन्तं तु सुधारं कार्दमेन तु ॥
मानस्यं वर्धितं काष्ठैर्वेणुभिर्नन्दनं स्मृतम् ॥
वस्त्रैश्च विजयं प्रोक्तं राज्ञां शिल्पिविकल्पितम् ।
कालिमेति च विज्ञेयमष्टमं तृणजातिभिः ॥
उत्तमानि तु चत्वारि गृहाणि गृहमेधिनाम् ।
सौवर्णं राजतं ताम्रमायसं च प्रकीर्त्तितम् ॥
सौवर्णं पुष्करं नाम राजतं श्रीभवं तथा ।
ताम्रेण सूर्यमन्तं तु चण्डनाम तथायसम् ॥
देवदानवगन्धर्वयक्षराक्षसकिन्नरैः ।
द्वादशैते प्रकारास्तु गृहाणां नियताः स्मृताः ॥
जातुषं त्वानिलं नाम चापुषं वारिबन्धकम् ।
एवं जातिषु सर्वासु गृहाणि तु चतुर्द्दश ॥

दारुकृतानां तु न विकल्पः ।

दारुकृतानाममीषां च सुवर्णादिकृतभित्तिविस्तारविकल्पो नास्त्येव किं यद्भित्तिविस्तारमेव केवलं दारुसुवर्णादिरचितानां नेति उत सर्वे एवं स्तम्भभूमिविभागा विकल्प्या इति । अत्रोच्यते । सर्वे एव विकल्पाः पक्केष्टकाकृतानां क्रियन्ते नान्येषाम् । दारुकृतादीनां तु पुनर्देवतानिवेशभोजनदेवागारमहानसादिनिवेशमात्रमेव क्रियते नान्यदिति ।

तथा च तन्त्रान्तरे पठ्यते ।

तत्र च विषमस्थभूमेः परामर्षं देवतानिवेशश्च ।
तलकोच्छ्रायः कार्यो विधानतो वास्तुपुरुषस्य

शेषाणामपि च तथैव सन्निविष्टक्रिया समुद्दिष्टा ।
भोजनशालासंस्थानलक्षणं चैषु सामान्यम् ॥
नैषां नियमस्तलकोच्छ्रयेषु नायामविस्तरार्थेषु ।
न द्वारेषु न दारुषु न पालिनाडीविभागेषु ॥
इत्यलमतिप्रसङ्गेन प्रकृतमभिधीयते—इति ॥

अधुनैकाशीतिपदस्य क्षेत्रस्य विभागप्रदर्शनार्थमाह ।

**एकाशीतिविभागे दश दश पूर्वोत्तरायता रेखाः ।**
**अन्तस्त्रयोदश सुरा द्वात्रिंशद्बाह्यकोष्ठस्थाः ॥ ४२ ॥**

एकाशीतिपदविभागार्थं क्षेत्रे दश रेखाः पूर्वापरायता दश दक्षिणोत्तरायताश्च कार्याः । एवं कृते एकाशीतिपदं क्षेत्रमुत्पद्यते । अस्य क्षेत्रस्यान्तर्मध्ये त्रयोदश सुरा देवाः स्थिताः । बाह्यकोष्ठस्था बहिष्कोष्ठेषु स्थिता द्वात्रिंशद्देवं पञ्चचत्वारिंशत्सुरा अत्र क्षेत्र इति ॥ ४२ ॥

तत्र द्वात्रिंशद्बाह्यकोष्ठस्थान् सुरानाह ।

**शि[1]खिपर्जन्यजयन्तेन्द्रसूर्यसत्या भृशोऽन्तरिक्षश्च ।**
**ऐशान्यादिक्रमशो दक्षिणपूर्वेऽनि[2]लः कोणे ॥ ४३ ॥**
**पूषा वितथबृह[3]त्क्षतयमगन्धर्वाख्यभृङ्गराजमृगाः ।**
**पितृदौवारिकसुग्रीवकुसुमदन्ताम्बुपत्यसुराः ॥ ४४ ॥**
**शोषोऽथ पापयक्ष्मा रोगः कोणे ततोऽहिमुख्यौ च ।**
**भल्लाटसोमभुजगास्ततोऽदितिर्दितिरिति क्रमशः ॥ ४५ ॥**

ऐशानीं दिशमादितः कृत्वा क्रमशः क्रमेण कोष्ठकेषु शिख्याद्या देवाः स्थिताः । तद्यथा । ऐशान्यां शिखी केषाञ्चित्पक्षे शिखः । ततः परं तिर्यक्कृत्वा द्वितीयकोष्ठके पर्जन्यः । ततो जयन्तः । तत इन्द्रः । ततः सूर्यः । ततः सत्यः । ततो भृशः । ततोऽन्तरिक्ष इति । दक्षिणपूर्वे कोणे आग्नेय्यां दिशि अनिलो वायुः । केषाञ्चित्पक्षेऽनलोऽग्निः ॥ ४३ ॥

---

१ शिख-इति पाठान्तरम् । २ पूर्वेऽनलः-इति पाठान्तरम् ।
३ बृहत्क्षति-इति पाठान्तरम् ।

अनिलादनन्तरं क्रमेण दक्षिणस्यां दिशि पूषादयः स्थिताः । तद्यथा । पूषानन्तरं ततो वितथः । ततो बृहत्क्षतः । केषाञ्चित्पक्षे बृहत्क्षतिः । ततो यमः । ततो गन्धर्वाख्यः । ततो भृङ्गराजः । ततो मृगः । पित्रादयः पश्चिमायाम् । तद्यथा । पिता नैर्ऋतकोणे । ततोऽनन्तरं दौवारिकः । ततः सुग्रीवः । ततः कुसुमदन्तः । ततोऽम्बुपतिर्वरुणः । ततोऽसुरः ॥ ४४ ॥

ततः शोषः । अथानन्तरं पापयक्ष्मा । रोगः कोणे पश्चिमोत्तरे । तत उत्तरस्यां दिशि अहिः सर्पः । ततो मुख्यः । ततो भल्लाटः । ततः सोमः । ततो भुजगः । ततोऽदितिः । ततो दितिः । इत्यमेन प्रकारेण क्रमशः परिपाट्या देवाः स्थिता द्वात्रिंशत् ॥ ४५ ॥

अभ्यन्तरस्थितान् त्रयोदशाह ।

**मध्ये ब्रह्मा नवकोष्ठकाधिपोऽस्यार्यमा स्थितः प्राच्याम् ।**
**एकान्तरात् प्रदक्षिणमस्मात् सविता विवस्वांश्च ॥ ४६ ॥**
**विबुधाधिपतिस्तस्मान्मित्रोऽन्यो राजयक्ष्मनामा च ।**
**पृथिवीधरापवत्सावित्येते ब्रह्मणः परिधौ ॥ ४७ ॥**
**आपो नामैशाने कोणे हौताशने च सावित्रः ।**
**जय इति च नैर्ऋते रुद्र आनिलेऽभ्यन्तरपदेषु ॥ ४८ ॥**

मध्ये मध्यभागे ब्रह्मा पितामहो नवानां कोष्ठकानामधिपः स्वामी । अस्य ब्रह्मणः । अर्यमा प्राच्यां पूर्वस्यां दिशि स्थितः । अस्मादर्यम्ण एकान्तरादेकपदव्यवहितात् प्रदक्षिणं प्रादक्षिण्येन सवितृप्रभृतयः स्थिताः । तद्यथा । अर्यम्ण एकपदव्यवहितः सविता । तत एकपदव्यवहितो विवस्वान् ॥ ४६ ॥

ततोऽपि विबुधाधिपतिरिन्द्रः । तस्मादन्यो मित्रस्ततो राजयक्ष्मा नाम । ततः पृथिवीधरः । तत आपवत्सः । इत्येवं प्रकारा अष्टौ देवा एकान्तराद् ब्रह्मणः परिधिं व्याप्य स्थिताः ॥ ४७ ॥

ऐशाने कोणे पर्जन्याध आपो नाम स्थितः । हौताशने आग्नेये कोणे अन्तरिक्षस्याधः सावित्रः स्थितः । नैर्ऋते कोणे दौवारिकस्याधो जयः स्थितः । आनिले वायव्ये कोणे पापयक्ष्मणोऽधोभागे रुद्रः स्थितः । एते सुरा अभ्यन्तरपदेष्वैशानादिषु । यतो बाह्यपदेषु शिख्यादयः स्थिताः ॥ ४८ ॥

अथात्र स्थितानां देवतानां पदसङ्ख्याप्रदर्शनार्थमाह ।

**आपस्तथापवत्सः पर्जन्योऽग्निर्दितिश्च वर्गोऽयम् ।**
**एवं कोणे कोणे पदिकाः स्युः पञ्च पञ्च सुराः ॥ ४९ ॥**
**बाह्या द्विपदाः शेषास्ते विबुधा विंशतिः समाख्याताः ।**
**शेषाश्चत्वारोऽन्ये त्रिपदा दिक्ष्वर्यमाद्यास्ते ॥ ५० ॥**

आप एकः । आपवत्सो द्वितीयः । पर्जन्यस्तृतीयः । अग्निश्चतुर्थः । दितिः पञ्चमः । अयं वर्गः समूह एकपदिक एकैकस्मिन् पदे । एवमनेन क्रमेण कोणे कोणे अस्यामस्यां पञ्च पञ्च सुरा देवाः पदिका एकपदस्वामिनः स्युर्भवेयुः । तद्यथा । आपः । आपवत्सः । पर्जन्यः । अग्निः । दितिरित्यैशानकोणे एकपदिकाः । सविता । सावित्रः । अर्यमा । अन्तरिक्षः । पूषा इति पञ्चाग्नेयकोणे एकपदिकाः । विबुधाधिपतिः । जयः । दौवारिकः । पिता । मृग इति पञ्च नैर्ऋतकोणे एकपदिकाः । राजयक्ष्मा । रुद्रः । पापयक्ष्मा । रोगः । अहिरिति वायवे कोणे पञ्चैकपदिकाः ॥ ४९ ॥

शेषाः बाह्यकोष्ठेषु स्थिता विबुधा देवा द्विपदाः । पदद्वयस्वामिनस्ते च विंशतिः समाख्याताः । तद्यथा । जयन्तेन्द्रसूर्यसत्यभृशाः पूर्वस्यां दिशि द्विपदाः । वितथबृहत्क्षतयमगन्धर्वाख्यभृङ्गराजा दक्षिणस्यां द्विपदाः । सुग्रीवकुसुमदन्ताम्बुपत्यसुरशोषाः पश्चिमायां द्विपदाः । मुख्यभल्लाटसोमभुजगादितयः उत्तरस्यां द्विपदाः । एवं विंशतिर्द्विपदाः । शेषाश्चत्वारोऽन्ये त्रिपदा इति । उक्तेभ्योऽन्ये शेषा ये चत्वारो विबुधा अर्यमाद्या दिक्षु प्रागाद्यासु ब्रह्मणः स्थितास्ते च त्रिपदास्त्रिषु पदेषु स्वामिनः । तद्यथा । अर्यमा विवस्वान् मित्रः पृथिवीधरश्चेति एते त्रिपदाः स्वपदात्पार्श्वद्वये एतेषामन्यत्पदद्वयमिति ॥ ५० ॥

तथा च पराशरः ।

तत्र बहिर्देवताः प्राक्पर्जन्यकरग्रहमहेन्द्ररविसत्यभृशान्तरिक्षपवनाः ।
दक्षिणतः पूषावितथबृहत्क्षतयमभृङ्गगन्धर्वमृगपितरश्चेति ।
पश्चिमतो दौवारिकसुग्रीवपुष्पदन्तासुरवारुणयक्ष्मरोगशोषाश्चेति ।
उदङ्नागराजमुख्यभल्लाटसोमादितिकुवेरनागहुतवहाः । तन्मध्ये ब्रह्मा तत्पुरतोऽर्यमा दक्षिणतो विवस्वान्मित्रः प्रत्युदक् पृथ्वीधर इति

ब्राह्मपदानुषङ्गिनोऽष्टावन्ये । आपापवत्सावैशान्यां साविचसवितारावेवाग्नेय्यां जयेन्द्रौ नैर्ऋत्यां रुद्रवायू वायव्यामिति सर्वदेवताः पञ्चचत्वारिंशदिति । तथान्यैः सहैतेषां पदानामसादृश्यम् ।

तथा च ।

रुद्रा हुताशनश्चैव पिता चानल एव च ।
एते कोणगता देवा एकाशीतिपदे स्थिताः ॥
चतुःषष्टिपदेऽप्येवं पापयक्ष्माऽच न स्थितः ।
एभ्योऽन्ये सदृशा ज्ञेयाः सुराः सर्वपदाश्रिताः ॥

अथास्य वास्तुनरस्याङ्गप्रविभागमाह ।

**पूर्वोत्तरदिङ्मूर्धा पुरुषोऽयमवाङ्मुखोऽस्य शिरसि शिखी ।**
**आपो मुखे स्तनेऽस्यार्यमा ह्युरस्यापवत्सश्च ॥ ५१ ॥**
**पर्जन्याद्या बाह्या दृक्श्रवणोरःस्थलांसगा देवाः ।**
**सत्याद्याः पञ्च भुजे हस्ते सविता च सावित्रः ॥ ५२ ॥**
**वितथो बृहत्क्षतयुतः पार्श्वे जठरे स्थितो विवस्वांश्च ।**
**ऊरू जानु च जंङ्घे स्फिगिति यमाद्यैः परिगृहीताः ॥ ५३ ॥**
**एते दक्षिणपार्श्वे स्थानेष्वेवं च वामपार्श्वस्थाः ।**
**मेढ्रे शक्रजयन्तौ हृदये ब्रह्मा पिताऽङ्घ्रिगतः ॥ ५४ ॥**

अयं पुरुषो वास्तुनरः पूर्वोत्तरदिङ्मूर्धा । पूर्वोत्तरा ऐशानी दिक् तस्यामस्य शिरः । अवाङ्मुखोऽधोमुखः स्थितः । अस्य वास्तुनरस्य शिरसि मूर्धनि शिखी अग्निः स्थितः । आपो मुखे वदने । स्तने अस्यार्यमा स्थितः । उरसि वक्षसि आपवत्सः ॥ ५१ ॥

पर्जन्याद्याः पर्जन्यप्रभृतयो बाह्या बाह्यकोष्ठस्था यथाक्रमं दृक्श्रवणोरःस्थलांसगा देवाः स्थिताः । तद्यथा । पर्जन्यो दृशि चक्षुषि । जयन्तः श्रवणे कर्णे । इन्द्रः उरःस्थले । सूर्यः अंसे स्कन्धे । सत्याद्याः पञ्च के सत्यभृशान्तरिक्षानिलपूषणः । एते भुजे बाहौ स्थिताः । हस्ते पाणौ सविता तथा सावित्रश्च स्थितः ॥ ५२ ॥

वितथो बृहत्क्षतयुतः पार्श्वस्थितः । विवस्वानादित्यो जठरे उदरे । ऊर्वादयो यमाद्यैः परिगृहीता अधिष्ठिताः । तद्यथा । ऊरुप्रदेशे यमः । जानुनि गन्धर्वः । जङ्घायां भृङ्गराजः । स्फिजि मृगः ॥ ५३ ॥

एते यथोद्दिष्टा दक्षिणे पार्श्वे देवाः स्थिताः । एवमनेन प्रकारेण एतेषु स्थानेषु वामपार्श्वे स्थिताः । तद्यथा । वामे स्तने पृथिवीधरः । दितिर्दृशि । अदितिः श्रवणे । भुजग उरःस्थले । सोमोंऽसे । भल्लाट-मुख्याहिरोगपापयक्ष्माणो भुजे । रुद्रराजयक्ष्माणौ हस्ते । शोषासुरौ पार्श्वे । ऊरुप्रदेशे अम्बुपतिः । कुसुमदन्तो जानुनि । सुग्रीवो जङ्घायाम् । दौवा-रिकः स्फिजि । एवं वामपार्श्वे स्थिताः । मेढ्रे लिङ्गे शक्रजयन्तौ स्थितौ । ब्रह्मा हृदये । पिता अङ्घ्रिगतः पादाश्रितः । एवमेकाशीतिपदे नगरग्रा-मगृहवास्तुपुरुषे प्रविभागः ॥ ५४ ॥

अधुना चतुःषष्टिपदस्य वास्तुनरस्य प्रविभागप्रदर्शनार्थमाह ।

**अष्टाष्टकपदमथवा कृत्वा रेखाश्च कोणगास्तिर्यक् ।**
**ब्रह्मा चतुष्पदोऽस्मिन्नर्धपदा ब्रह्मकोणस्थाः ॥ ५५ ॥**
**अष्टौ च बहिष्कोणेष्वर्धपदास्तदुभयस्थिताः सार्धाः ।**
**उक्तेभ्यो ये शेषास्ते द्विपदा विंशतिस्ते हि ॥ ५६ ॥**

अथाष्टाष्टकपदं चतुःषष्टिपदं क्षेत्रं कारयेत् । एतदुक्तं भवति । नव नव पूर्वोत्तरायता रेखाः कृत्वा चतुःषष्टिपदानि भवन्ति । तत्र कोणगास्ति-र्यक्चतस्रो रेखाः कृत्वा कोणचतुष्टये तिर्यग्रेखाः कोष्ठकये मध्यगताः कार्या इति । अस्मिंश्चतुष्षष्टिपदे क्षेत्रे मध्ये ब्रह्मा चतुष्पदः । ब्रह्मको-णस्था अष्टौ विबुधा अर्धपादाः । तद्यथा । आपः आपवत्सः सविता सावित्रो विबुधाधिपतिर्जयन्तो राजयक्ष्मा रुद्रश्चेति बहिष्कोणेषु बाह्यकोणेषु अष्टौ स्थिताः । शिख्यन्तरिक्षानिलपितृपापयक्ष्मरोगादितय एते अर्धपदाः । तदि-त्यनेन शिख्यादीनां कोणगानां परामर्शः । तेषामुभयपार्श्वगाः । तद्यथा । पर्जन्यभृशभृङ्गराजदौवारिकशोषनागाधिपतय एते सार्धपदिकाः । उक्तेभ्यः कथितेभ्यो ये शेषाः परिशिष्टा विंशतिस्ते द्विपदाः । तद्यथा । जयन्तेन्द्रसू-र्यसत्यवितथबृहत्क्षतयमगन्धर्वकुसुमदन्ताम्बुपत्यसुरमुख्यभल्लाटसोमभुजगा-र्यमविवस्वन्मित्रपृथिवीधराः । एते विंशतिर्द्विपदाः । एष चतुःषष्टिपदो वास्तु-नरः । एतैः केचिद्गृहद्वास्तुनरमिच्छन्ति तदपि न कश्चिद्दोषः । अनेन प्रवि-भागेन कोणस्थं द्वारं ज्ञायते निःसन्दिग्धमिति । अथाचार्येण चतुरस्रे क्षेत्रे वास्तुनरः प्रदर्शितः न वृत्तषडस्रयष्टादशाश्रिषोडशाश्रीणां क्षेत्राणाम् । लोके

च गृहग्रामनगराणि दृश्यन्ते । तद्यथा । अनेनैवाचार्येणोक्तम् । तत्र षोडशभिर्महः । वृत्तः[२] समुद्गनामा—इत्यादि ॥ ५५-५६ ॥

तथा भरतमुनिना त्र्यस्रं वृत्तं गृहमुक्तम् । तस्मादन्यशास्त्रादानीय प्रसङ्गादस्माभिरिह प्रदर्श्यते ।

तद्यथा ।

एकाशीतिपदे क्षेत्रे कर्तव्यं वृत्तपञ्चकम् ।
बाह्ये वृत्तद्वयं यत्तत्पदद्वात्रिंशता युतम् ॥
तृतीयं द्वादशपदं चतुर्थं तु चतुष्पदम् ।
केवलं पञ्चमं कार्यं ब्रह्मा पञ्चस्ववस्थितः ॥
शिख्यादयस्तु द्विपदा बहिर्विष्कम्भसंस्थिताः ।
अर्यमाद्याः सुराः सर्वे पदिकाः परिकीर्तिताः ॥

इति वृत्तक्षेत्रे एकाशीतिपदे ॥

वृत्तानि चत्वारि समानि कृत्वा वास्तोश्चतुःषष्टिपदस्य सम्यक् ।
अधस्तदर्धेन च सूर्यवेदैर्विभज्यते वृत्तचतुष्टयं च ॥
शिख्यादयश्चैकपदे निविष्टाः पदद्वये चार्यमकादयश्च ।
आपादयश्च त्रिपदाः प्रतिष्ठाश्चतुष्पदश्चात्र पितामहः स्यात् ॥

इति वृत्तक्षेत्रे चतुःषष्टिपदे ।

एवमेव षडश्रिप्रभृतीनां विन्यासः कार्यः ।

त्र्यस्रे क्षेत्रे च ।

त्र्यस्राणि पञ्च क्षेत्राणि त्रिकोणे परिकल्पयेत् ॥
प्राची दिगष्टधा कार्या कोणवर्ज्या ततः परं ।
एविभागविभक्ते ते वास्तुद्वाराणि तानि तु ॥
दितिं वायुं जलपतिं कोणेषु त्रिषु विन्यसेत् ।
ततः शिख्यादिकान् सर्वान् शेषेषु विनिवेशयेत् ॥
द्वितीये पूर्ववद्भागाः षोडशद्विगुणास्ततः ।
तत्रापि कोणत्रितये पूर्वोक्तान् विबुधान् न्यसेत् ॥
शेषेषु वास्तुकोष्ठस्थान् सुरांश्च विनिवेशयेत् ।
क्षेत्रे तृतीये चत्वारि सर्वशाखासु कारयेत् ॥

---

१ बृहत्संहितायाम् ५६ अध्यायस्य २० श्लो० ।　　२ बृहत्संहितायाम् ५६ अध्यायस्य २३ श्लो० ।

प्राग्गतिर्यमसाविचौ सविता च ततः परम् ।
विवस्वानिन्द्रमित्रौ च जयश्चैव हरस्तथा ॥
राजयक्ष्मा भूमिधर आपो वत्सयुतः स च ।
चतुर्थे पञ्चभिर्भागैः कृत्वा तन्मध्यगस्तथा ॥
पितामहो विनिर्दिष्टस्त्यम्रसेवेऽप्ययं विधिरिति ।
एवमेते सर्वे एव स्वल्पधियां विन्यासेन द्वितीयपत्रे प्रदर्श्यन्ते ॥

अथात्र मर्मविभागप्रदर्शनार्थमाह ।

**सम्पाता वंशानां मध्यानि समानि यानि च पदानाम् ।**
**मर्माणि तानि विन्द्यान्न तानि परिपीडयेत् प्राज्ञः ॥ ५७ ॥**

वंशानां कोणात्कोणगतानां सूत्राणां ये सम्पाताः परस्परमेकीभावास्तथा च वक्ष्यति ।

रोगा[1]द्वायुं पितृतो हुताशनं शोषसूत्रमपि वितथात् ।
मुख्याद्भृशं जयन्ताच्च भृङ्गमदितेश्च सुग्रीवम्—इति ॥

अत्राचार्येण वंशानां रज्जूनां च विभागो नोक्तः समासेन रोगाद्वायुमिति सूत्रलक्षणं कृतम् ।

तथा चास्मदीयवास्तुविद्यायाम् ।
रोगाद्वायुं नयेत् सूत्रं पितृतोऽथ हुताशनम् ।
एतत्सूत्रद्वयं प्रोक्तं मुनिभिर्वंशसञ्ज्ञितम् ॥
वितथाच्छोषकं चान्यद्भृशं मुख्यात्तथा नयेत् ।
जयन्ताद्भृङ्गराजाख्यं सुग्रीवमदितेस्तथा ॥
एतच्चतुष्टयं प्रोक्तं रज्जुसञ्ज्ञं मनीषिभिः ।

एवं वंशानां ये सम्पाताः पूर्वापराभिः सह तथा पदानां सर्वेषां यानि च समानि मध्यानि तानि च सर्वाणि मर्म्माणि विन्द्याज्जानीयात् । प्राज्ञो मेधावी तानि च न परिपीडयेत्तेषां च पीडनैरन्योन्यं दोषो भवति ॥ ५७ ॥

तथाऽऽह ।

**तान्यशुचिभाण्डकीलस्तम्भाद्यैः पीडितानि शल्यैश्च ।**
**गृहभर्त्तुस्तत्तुल्ये पीडामङ्गे प्रयच्छन्ति ॥ ५८ ॥**

---

[1] अस्यैवाध्यायस्य ६१ श्लोकः ।

पूं

ई | अनलः आ

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| शिखी | पर्जन्यः | जयन्तः | इन्द्रः | सूर्यः | सत्यः | भृशः | अन्तरिक्षः | अनिलः |
| दितिः | आपः | जयन्तः | इन्द्रः | सूर्यः | सत्यः | भृशः | सावित्रः | पूषा |
| अदितिः | अदितिः | आपवत्सः | अर्यमा | अर्यमा | अर्यमा | सविता | वितथः | वितथः |
| भुजगः | भुजगः | पृथिवीधरः | ब्रह्मा | ब्रह्मा | ब्रह्मा | विवस्वान् | बृहत्क्षतः | बृहत्क्षतः |
| सोमः | सोमः | पृथिवीधरः | ब्रह्मा | ब्रह्मा | ब्रह्मा | विवस्वान् | यमः | यमः |
| भल्लाटः | भल्लाटः | पृथिवीधरः | ब्रह्मा | ब्रह्मा | ब्रह्मा | विवस्वान् | गन्धर्वः | गन्धर्वः |
| मुख्यः | मुख्यः | राजयक्ष्मा | मित्रः | मित्रः | मित्रः | इन्द्रः | भृंगराजः | भृंगराजः |
| नागः | रुद्रः | शोषः | असुरः | वरुणः | कुसुमदन्तः | सुग्रीवः | जयः | मृगः |
| रोगः | पापयक्ष्मा | शोषः | असुरः | वरुणः | कुसुमदन्तः | सुग्रीवः | दौवारिकः | पिता |

उ | द

वा | नै

प

चतुरस्रे एकाशीतिपदो वास्तुनरः

पू

ई — आ

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| शिखी / दितिः | पर्जन्यः | जयन्तः | इन्द्रः | सूर्यः | सत्यः | भृशः | अन्तरिक्षः / अनिलः |
| अदितिः | पर्जन्यः / अदितिः | जयन्तः | इन्द्रः | सूर्यः | सत्यः | भृशः / पूषा | पूषा |
| भुजगः | भुजगः | आपवत्सः / आपः | अर्यमा | अर्यमा | सविता / सावित्रः | वितथः | वितथः |
| सोमः | सोमः | पृथिवीधरः | ब्रह्मा | ब्रह्मा | विवस्वान् | बृहत्क्षतः | बृहत्क्षतः |
| भल्लाटः | भल्लाटः | पृथिवीधरः | ब्रह्मा | ब्रह्मा | विवस्वान् | यमः | यमः |
| मुख्यः | मुख्यः | रुद्रः / राजयक्ष्मा | मित्रः | मित्रः | इन्द्रः / जयः | गन्धर्वः | गन्धर्वः |
| नागः | नागः / रुद्रः | असुरः | वरुणः | कुसुमदन्तः | सुग्रीवः | भृंगराजः / दौवारिकः | भृंगराजः |
| रोगः / पापयक्ष्मा | शोषः | असुरः | वरुणः | कुसुमदन्तः | सुग्रीवः | दौवारिकः | मृगः / पिता |

उ — द

वा — नै

प

चतुरस्रे चतुःषष्टिपदो वास्तुनरः




वृत्ते एकाशीतिपदो वास्तुनरः




वृत्ते चतुःषष्टिपदो वास्तुनरः

पू




प

त्र्यस्रे एकाशीति पदो वास्तुनरः

तानि मर्माणि अशुचिभाण्डैरशुद्धैरुपकरणवस्तुभिस्तथा कीलकैः शङ्कुभिः स्तम्भैश्च । आदिग्रहणादन्यैरपि गुरुभिः पाषाणादिभिः शल्यैर्वा परिपीडितानि भवन्ति तदा तत्तुल्येऽङ्गे तस्मिन्नेवावयवे गृहभर्तुर्वेश्मस्वामिनः पीडां प्रयच्छन्ति ॥ ५८ ॥

अधुना शल्यज्ञानमाह ।

**कण्डूयते यदङ्गं गृहभर्त्तुर्यत्र वाऽमराहुत्याम् ।**
**अशुभं भवेन्निमित्तं विकृतेर्वाग्नेः सशल्यं तत् ॥ ५९ ॥**

गृहभर्तुर्गृहस्वामिनो होमकाले पृच्छायां वा यदङ्गं कण्डूयते तद्देवाङ्गं वास्तुनरस्य सशल्यम् । वाऽमराहुत्यामशुभं भवेन्निमितम् । अमरा देवाः शिख्यादयस्तेषां होमकाले याऽऽहुतिस्तस्यां यद्यशुभं निमित्तं भवेत् क्षुतनिष्ठीवनरोदनाक्रोशनवातोत्सर्गानिष्टशब्दश्रवणमग्नेर्विकृतिर्विकारो वा विस्फुलिङ्गसशब्ददुर्गन्धादि तत्स्थानममराधिष्ठितं सशल्यं शल्यसंयुतम् ॥ ५६ ॥

अथ शल्यानां प्रविभागेण फलान्याह ।

**धनहानिर्दारुमये पशुपीडा रुग्भयानि चास्थिकृते ।**
**अपि नागदन्तको मर्मसंस्थितो दोषकृद्भवति ॥ ६० ॥**

दारुमये काष्ठमये शल्ये धनहानिर्वित्तनाशो भवति । अस्थिकृते शल्ये पशूनां च पीडा व्यथा रुग्भयानि च भवन्ति । अपिशब्दः सम्भावनायां वर्तते । नागदन्तको हस्तिदन्तः शुभोऽपि मर्मसंस्थितो दोषकृदनिष्टो भवति ॥ ६० ॥

अथ वंशरज्जुलक्षणं महामर्माणि च प्रदर्शयितुमाह ।

**रोगाद्वायुं पितृतो हुताशनं शोषसूत्रमपि वितथात् ।**
**मुख्याद्भृशं जयन्ताच्च भृङ्गमदितेश्च सुग्रीवम् ॥ ६१ ॥**
**तत्सम्पाता नव ये तान्यतिमर्माणि सम्प्रदिष्टानि ।**
**यश्च पदस्याष्टांशस्तत् प्रोक्तं मर्मपरिमाणम् ॥ ६२ ॥**

रोगादारभ्य वायुमनिलं यावत्सूत्रं तिर्यक् सन्दद्यात् । एवं पितृतो हुताशनं शिखिनं यावत् । वितथात्सूत्रं शोषं यावन्नयेत् । मुख्याद्भृशं याव-

ज्जयन्ताच्च भृङ्गं यावत् । अदितेश्च सुग्रीवं यावत् । सम्पाता इति । तदिति-सूत्राणां परामर्शः । तेषां सूत्राणां ये परस्परं नव सम्पातास्तान्यतिमर्माणि महामर्माणि सम्प्रदिष्टान्युक्तानि । पदस्य यश्चाष्टांशोऽष्टमभागस्तन्मर्मपरिमाणं प्राक्कथितम् । एतदुक्तं भवति । क्षेत्रमेकाशीतिपदं विभक्तं कृत्वा यावत्प्रमाणं पदमुत्पद्यते तस्याष्टांशं मर्मपरिमाणमिति ॥ ६१–६२ ॥

अथ वंशस्य च शिरायाश्च परिमाणज्ञानमाह ।

**पदहस्तसङ्ख्यया सम्मितानि वंशोऽङ्गुलानि विस्तीर्णः ।**
**वंशव्यासोऽध्यर्धः शिराप्रमाणं विनिर्दिष्टम् ॥ ६३ ॥**

पदहस्तस्य सङ्ख्यया पदं यावत् ते हस्ता विस्तृतं भवति तत्सम्मितानि तत्सङ्ख्याङ्गुलानि वंशो विस्तीर्णो भवति । रोगाद्वायुमित्यादिकं सूत्रषट्कं वंशशब्देनोच्यते । एवं वंशव्यासो वंशविस्तारोऽध्यर्धो द्विवं प्रगुणितः शिराप्रमाणं विनिर्दिष्टं कथितम् । शिराशब्देन पूर्वापरायता दक्षिणोत्तरायताश्च दश दश रेखा ज्ञेयाः ॥ ६३ ॥

तथा ताश्च शास्त्रान्तरे पठ्यन्ते ।
[1]शान्ता यशोवती कान्ता विशाला प्राणवाहिनी ।
सती च सुमना नन्दा सुभद्रा सुरथा तथा ॥
पूर्वापरा गता ह्येता उदग्याम्याश्रिताः शृणु ।
हिरण्या सुव्रता लक्ष्मीर्विभूतिर्विमला प्रिया ।
जया काला विशोका च तथेन्द्रा दशमी स्मृता ।
धन्या धरा विशाला च स्थिरा रूपा गदा निशा ॥
विभवा प्रभवा चान्याः सौम्ययाम्याश्रिताः शिराः—इति ।

अत्रैव परिभाषार्थमाह ।

**सुखमिच्छन् ब्रह्माणं यत्नाद्रक्षेद्गृही गृहान्तःस्थम् ।**
**उच्छिष्टाद्युपघाताद्गृहपतिरुपतप्यते तस्मिन् ॥ ६४ ॥**

गृही गृहपतिः सुखमिच्छन् सुखमभिलषन् गृहान्तःस्थं गृहमध्यगतं ब्रह्माणं पितामहं यत्नात्सर्वप्रयत्नेन रक्षेत्पालयेत् । यतस्तस्य ब्रह्मण उच्छिष्टाद्युपघातात् । उच्छिष्टमशुचि । आदिग्रहणादमेध्याद्युपस्करणं भाण्डः ।

१ एतानि वचनानि वास्तुविश्वकर्मप्रकाशे उपलभ्यन्ते ।

एतेषां तत्र स्थापनादुपघातो भवति तस्मात्तस्मिन् गृहे गृहपतिर्वेश्मस्वामी उपतप्यते उपतापं प्राप्नोति ॥ ६४ ॥

अथ विकले वास्तुनि दोषप्रदर्शनार्थमाह ।

**दक्षिणभुजेन हीने वास्तुनरेऽर्थक्षयोऽङ्गनादोषाः ।**
**वामेऽर्थधान्यहानिः शिरसि गुणैर्हीयते सर्वैः ॥ ६५ ॥**
**स्त्रीदोषाः सुतमरणं प्रेष्यत्वं चापि चरणवैकल्ये ।**
**अविकलपुरुषे वसतां मानार्थयुतानि सौख्यानि ॥ ६६ ॥**

वास्तुनरे वास्तुपुरुषे दक्षिणेन सव्येन भुजेन बाहुना हीने रहिते अर्थक्षयो वित्तनाशः । अङ्गनादोषाः स्त्रीकृता दोषा भवन्ति । वामे अपसव्ये भुजे हीने वास्तुनरे अर्थानां धनानां धान्यानां च हानिर्विनाशो भवति । शिरसि मूर्धनि हीने वास्तुनरे सर्वैर्निःशेषैर्गुणैरारोग्यादिभिर्हीयते रहितो भवति ॥ ६५ ॥

चरणवैकल्ये पादभागहीने वास्तुनरे स्त्रीदोषा योषित्प्रभवा दोषाः सुतमरणं पुत्रविपत्तिः प्रेष्यत्वं दासत्वं चापि भवति । अविकलपुरुषे परिपूर्णावयवे वास्तुनरे वसतां पुंसां मानार्थयुतानि सौख्यानि भवन्ति ॥ ६६ ॥

न केवलं वास्तुनरस्यायं प्रविभागो यावन्नगरग्रामेष्वप्येवमेवेत्याह ।

**गृहनगरग्रामेषु च सर्वत्रैवं प्रतिष्ठिता देवाः ।**
**तेषु च यथानुरूपं वर्णा विप्रादयो वास्याः ॥ ६७ ॥**

एवमनेनैव प्रकारेण गृहे वेश्मनि नगरे पुरे ग्रामे च एतेष्वपि सर्वत्र सर्वस्मिन् देशे देवाः सुराः प्रतिष्ठिताः परिकल्पिताः । एतदुक्तं भवति । यथा गृहे वास्तुनरस्य परिकल्पना कृता तथैव नगरे ग्रामे च कार्या । तत्रापि च यानि मर्माणि तानि प्राग्वच्चिन्तनीयानि । तेषु नगरग्रामेषु विप्रादयो ब्राह्मणाद्या वर्णा ब्राह्मणक्षत्रियवैश्यशूद्रा यथाक्रमं वास्या विवासनीयाः । यत्र दिग्भागे यस्योचितं तत्र वासयेदित्यर्थः ॥ ६७ ॥

कथमिति तत्प्रतिपादयन्नाह ।

**वासगृहाणि च विन्द्याद्विप्रादीनामुदग्दिगाद्यानि ।**
**विशतां च यथा भवनं भवन्ति तान्येव दक्षिणतः ॥ ६८ ॥**

विन्द्याज्जानीयात् । गृहे चतुःशाले ग्रामे नगरे वा ब्राह्मणानामुत्तरस्यां दिशि वासगृहाणि कार्याणि । पूर्वस्यां क्षत्रियाणाम् । दक्षिणस्यां वैश्यानाम् । पश्चिमायां शूद्राणामिति । तथा च कार्याणि यथा भवनं गृहाभ्यन्तरमेङ्गणं विश्रितां तान्येव वासगृहाणि दक्षिणस्यां दिशि भवन्ति । एतदुक्तं भवति । प्राङ्मुखस्य गृहस्याङ्गणद्वारमुत्तराभिमुखं कार्यम् । दक्षिणाभिमुखस्य प्राङ्मुखम् । पश्चिमाभिमुखस्य दक्षिणाभिमुखम् । उत्तराभिमुखस्य पश्चिमाभिमुखमिति ॥ ६८ ॥

अधुना यानि चतसृषु दिक्षु द्वात्रिंशद्द्वाराण्युक्तानि तेषां शुभाशुभफलं वक्ष्यामीत्याह ।

**नवगुणसूत्रविभक्तान्यष्टगुणेनाथवा चतुःषष्टेः ।**
**द्वाराणि यानि तेषामनलादीनां फलोपनयः ॥ ६९ ॥**

नवगुणेन सूत्रेण यानि विभक्तानि द्वात्रिंशद्द्वाराणि नवगुणेन सूत्रेणैकाशीतिपदे अष्टगुणेन चतुःषष्टेरिति करणात् यानि द्वात्रिंशद्द्वाराण्यनलादीनि तेषामनलादीनां द्वाराणां क्रमेण परिपाट्या फलोपनयः फलकथनं क्रियत इति वाक्याध्याहारः ॥ ६९ ॥

अधुना तदेवाह ।

**अनिलभयं स्त्रीजननं प्रभूतधनता नरेन्द्रवाल्लभ्यम् ।**
**क्रोधपरतानृतत्वं क्रौर्यं चौर्यं च पूर्वेण ॥ ७० ॥**

शिखिसञ्ज्ञे आग्नेयद्वारे अनिलभयं वायुभीतिर्भवति । एवं स्त्रीजननं कन्यकाजन्म पर्जन्ये । प्रभूतधनता बहुवित्तत्वं जयन्ते । नरेन्द्रवाल्लभ्यं नृपवल्लभत्वमिन्द्रे । क्रोधपरता क्रोधशीलता सूर्ये । अनृतत्वमसत्यभाषित्वं सत्ये । क्रौर्यं क्रूरता भृशे । चौर्यं तस्करत्वमन्तरिक्षे । एवं पूर्वेण पूर्वस्यां दिशि निर्देशः ॥ ७० ॥

अथ दक्षिण आह ।

**अल्पसुतत्वं प्रैष्यं नीचत्वं भक्ष्यपानसुतवृद्धिः ।**
**रौद्रं कृतघ्नमधनं सुतवीर्यघ्नं च याम्येन ॥ ७१ ॥**

अनिले अल्पसुतत्वमल्पपुत्रता । पौष्णे प्रेष्यं दासत्वम् । वितथे नीचत्वं नीचता । बृहत्क्षते भक्ष्यपानसुतानां वृद्धिः । याम्ये रौद्रमशुभम् । गन्धर्वे कृतघ्नं कृतं हन्तीति । भृङ्गराजे अधनं धनवर्जितम् । मृगाख्ये सुतवीर्यघ्नं पुत्रबलनाशनम् । एवं याम्येन दक्षिणेन द्वारनिर्देशः ॥ ७१ ॥

अथ पश्चिम आह ।

**सुतपीडा रिपुवृद्धिर्न सुतधनाप्तिः सुतार्थफलसम्पत् ।**
**धनसम्पन्नृपतिभयं धनक्षयो रोग इत्यपरे ॥ ७२ ॥**

पित्र्ये सुतपीडा पुत्रव्यथा । दौवारिके रिपुवृद्धिः शत्रुबाहुल्यम् । सुग्रीवे सुतधनाप्तिः पुत्रधनावाप्तिः । कुसुमदन्ते सुतार्थफलसम्पत् पुत्रधनफलसम्पत्तिः । वारुणे धनसम्पत् धनानां सम्पत् । असुरे नृपतिभयं राजभीतिः । शोषे धनक्षयो वित्तनाशः । पापयक्ष्माख्ये रोगो गद इत्यपरे पश्चिमायां द्वारनिर्देशः ॥ ७२ ॥

अथोत्तर आह ।

**बधबन्धौ रिपुवृद्धिः सुतधनलाभः समस्तगुणसम्पत् ।**
**पुत्रधनाप्तिर्वैरं सुतेन दोषाः स्त्रिया नैःस्वम् ॥ ७३ ॥**

रोगाख्ये बधबन्धः । सार्पे रिपुवृद्धिः । मुख्याख्ये सुतानां पुत्राणां धनस्य च लाभः । भल्लाटे समस्तानां निःशेषाणां शौर्यादीनां गुणानां सम्पत्तिः । सौम्ये पुत्रधनाप्तिः सुतवित्तलाभः । भौजङ्गे वैरं द्वेषः सुतेन पुत्रेण सह । आदित्ये स्त्रिया दोषाः तदुत्था अशुभाः । दित्याख्ये नैःस्वं निर्धनत्वम् । एवमुत्तरतो द्वारनिर्देशः ॥ ७३ ॥

नन्वत्र नवगुणसूत्रविभक्तानीत्यत्र नृपादीनां वर्णानां चैकाशीतिपदेन नवगुणसूत्रविभक्तानि कार्याणि कुत एतन्निश्चीयते इत्युच्यते । अष्टगुणेनाथवा चतुःषष्टिरित्यस्मादेव विकल्पादवगम्यते । पूर्वाचार्यप्रणीतपक्षस्यायं विकल्पः । यस्माद्विश्वकर्मणा एकाशीतिपदगतचतुःषष्टिपदान्युक्तानि तेषु च प्रत्येकं विभक्तान्यभिहितानि ।

तथा चाह ।

राजवेश्मनि वेश्मत्व गृहादीनि च वर्णिनाम् ।
एकाशीतिपदेनैव शक्रस्थानं च मापयेत् ॥

प्रासादान् विविधान् छन्दांस्तथाऽऽद्यांश्चाष्ट मण्डपान् ।
एकाशीतिपदेनैव सर्वानेतान् प्रमापयेत् ॥
नगरग्रामखेटादीन् शिबिराणि च भूभृताम् ।
स्थपतिस्थान् शतपदप्रविभागेण मापयेत्–इति ॥

तस्मान्नवगुणसूत्रविभक्तान्येकाशीतिपदे नृपादीनां कर्तव्यानि । अत्र केचिदनिश्चितबुद्धयो विकल्पांश्चोदयन्ति यथा चतसृष्वपि दिक्षु नवगुणसूत्रविभक्तानि नव विभागा भवन्ति। अनिलभयं स्त्रीजननमित्यादीन्यष्टाष्टद्वाराण्युक्तानि योऽसौ नवमो भागस्तत्र प्रदेशे किं कर्तव्यमिति । अथोच्यते । प्रागेव वास्तुदेवतानां प्रविभागं कृत्वा अनिलादीनां देवतानां पदेषु द्वाराणि प्रविकल्प्यानि कल्पिते च द्वारभित्तिश्चिन्तनीया ।

तथा च नन्दी आह ।

भित्तिश्चिन्त्या द्वारे सत्याचार्या व्यवस्यन्ति ।
आचार्येण समाससंहितानिबन्धने स्पष्टतरं निबद्धम् ।

तथा चाह ।

पूर्वाण्यैशान्यां याम्याग्नेय्यां दक्षिणानि जानीयात् ।
द्वाराणि नैर्ऋतात् पश्चिमान्युदक्स्थानि वायव्याम् ॥
आग्नेयमग्निभयदं पार्जन्यं स्त्रीप्रसूतिदं द्वारम् ।
प्रचुरधनदं जयन्तं नृपवल्लभकारि माहेन्द्रम् ॥
सौर्ये क्रोधः प्रचुरः सत्येऽनृतवादितं भृशे क्रौर्यम् ।
चौर्यं तथान्तरिक्षे प्राग्द्वाराणि प्रदिष्टानि ॥
वायव्येऽल्पसुतत्वं प्रैष्यं पौष्णेऽथ नीचता वितथे ।
बह्वन्नपानपुत्रं बृहत्क्षते याम्य अपि रौद्रम् ॥
गान्धर्वे गन्धत्वं नृपचौरभयाय भृङ्गराजाख्यम् ।
मृगमपि सुतवीर्यघ्नं दक्षिणतो द्वारनिर्देशः ॥
पित्र्ये शरीरपीडा दौवारिकसञ्ज्ञिते च रिपुवृद्धिः ।
सुग्रीवे धनहानिः पुत्रधनाढ्यं कुसुमदन्तम् ॥
वारुणमर्थनिचयदं नृपभयदं चासुरं विनिर्दिष्टम् ।
शोषं धनहानिकरं बहुरोगं पापयक्ष्माख्यम् ॥

रोगमुखं वधबन्धदमात्मजवैराभिवृद्धिदं नागम्।
मुख्यं धनसुतवृद्धिदमनेककल्याणदं च भल्लाटम्॥
सौम्यं धनपुत्त्रकरं भोजङ्गे पुत्त्रवैररिपुवृद्धिः।
अदितौ स्त्रीदोषाः स्युर्दितौ धनं सङ्क्षयं याति—इति॥

तथा च भगवान् गर्गः।

पूर्वादिक्रमयोगेन हौताशेऽग्निभयं वदेत्।
पार्जन्ये प्रचुरा नार्यो जायन्ते बहुवित्तता॥
माहेन्द्रे नृपवाल्लभ्यं सौर्येऽतिक्रोधिता भवेत्।
सत्येऽनृतत्वं विज्ञेयं क्रूरत्वं तु भृशे भवेत्॥
अन्तरिक्षे तु विज्ञेयो नित्यं चौर्यसमागमः।
स्यात् पुत्त्रकामो वायव्ये पौष्णे प्रेष्यत्वमेव च॥
नीचत्वं वितथे ज्ञेयं स्याद्गृहाक्षे तु सन्ततिः।
क्षुद्रकर्मा भवेद्यामे गान्धर्वे कृतनाशनम्॥
पित्र्ये स्वल्पायुरधनं व्ययं दौवारिके महत्।
सुग्रीवे धननाशः स्यात् पुष्पदन्ते तु वर्धनम्॥
वरुणे मुख्यभोगित्वं नृपभङ्गस्तथासुरे।
नित्यातिरोगता शोषे पापाख्ये पापसङ्क्षयः॥
रोगे बन्धवधो नित्यं नागे रिपुभयं महत्।
मुख्ये धनसुतोत्पत्तिर्भल्लाटे विपुलाः श्रियः॥
सौम्ये तु धर्मशीलत्वं भोजङ्गे बहुवैरतां।
अदितौ वनितादोषा दितौ तु धनसङ्क्षयः॥
पदे पदे कृतं श्रेष्ठं द्वारं सफलदायिकम्।
पदद्वये कृतं यच्च तद्युग्मिश्रफलप्रदम्—इति॥

अथाचार्येण गृहाणां द्वाराणां च सामान्येन लक्षणमुक्तम्। अन्यराचार्यैर्गृहाणामष्टौ वास्तुपुरुषाः कथिताः। तेषां च नक्षत्राण्युक्तानि तथा द्वारद्वात्रिंशतो नक्षत्राण्युक्तानि। तत्र चन्द्रतारानुकूल्येन गृहाणां द्वाराणां च करणमुक्तम्। तच्च लोकतो दृश्यते यतोऽस्माभिरन्यशास्त्राद्वास्तुनराणां नामान्यानीय नक्षत्राणि च यथाक्रमेण प्रदर्श्यन्ते।

तद्यथा ।

रिक्तो ध्वजश्च ध्वाङ्क्षश्च सिंहः श्वा वृषभस्तथा ।
वानरो भद्र इत्यष्टौ ज्ञेया वास्तुनरा बुधैः ॥

अथैतेषामानयनम् ।

गृहान्तरदिशां मानं सङ्गुण्य च परस्परम् ।
वसुभिर्भागमाहृत्य शिष्टं वास्तुनरं वदेत् ॥

अथवा ।

बाह्वोः प्रबाह्वोः संयोगदलमन्योन्यताडितम् ।
वसुभक्तं ततः शेषं सेव्यं वास्तुनरं वदेत् ॥

एतच्चतुरस्रक्षेत्रे ।

अथ वर्तुले ।

व्यासं त्रिगुणितं कृत्वा विष्कम्भं[1] तत् समादिशेत् ।
व्यासार्द्धवर्गस्त्रिगुणः फलं स्यात् परिवर्तुले ॥

अथ षडस्रिप्रभृतिषु ।

[2]द्विर्न्यस्य परिधेर्वर्गमेकस्मादस्रिजाधितात् ।
लब्धं संशोध्य परतो भक्त्वा द्वादशभिः फलम् ॥

अथ त्रिकोणे ।

बाहुप्रबाहुसंयोगदलघातं त्रिकोणके ।

एवं सर्वत्र क्षेत्रफलमानीय तस्याष्टाभिर्भागमपहृत्यावशेषो वास्तुनरः ।

समशून्यगतो रिक्तो ध्वजश्चैकावशेषके ।
द्वाभ्यां ध्वाङ्क्षस्त्रिभिः सिंहश्चतुर्भिः श्वा प्रकीर्तितः ॥

---

१ सम्प्रति भास्कराचार्यादिभिर्विष्कम्भशब्देन व्यासो व्यवह्रियते परन्त्वत्र परिधिवाचको विष्कम्भशब्दः ।

२ स्वल्पान्तरात् वृत्तान्तर्गतभुजसंख्यया भक्तः परिधिर्बहुभुजैकभुजमानम् $= \frac{प}{न}$, अत्र न = बहुभुजभुजसंख्या । त्रिज्या च स्वल्पान्तरात् $= \frac{प}{६}$ ततः स्थूलशरमानम् $= त्रि - \sqrt{त्रि^२ - \frac{भु^२}{४}} = त्रि - \sqrt{त्रि^२ - \frac{प^२}{४ न^२}} = \frac{३ प}{४ न^२}$ स्वल्पा॰ चापफलं स्वल्पा॰ $= \frac{३ प^२}{८ न^३}$ । वृत्तखण्डफलं $= \frac{प^२}{१२ न}$, बहुभुजक्षेत्रफलम् $= न \left(\frac{प^२}{१२} - \frac{३ प^२}{८ न^२}\right) = \frac{प^२ - \frac{१६ प^२}{८ न^२}}{१२} = \frac{प^२ - \frac{\frac{प^२}{न^२}}{४}}{१२} = \frac{प^२ - \frac{प^२}{\left(\frac{न}{२}\right)^२}}{१२}$, अतोऽस्रिजाधितादित्यनेन बहुभुजक्षेत्रभुजसंख्यार्धवर्गो ग्राह्यः ।

पञ्चभिर्वृष इत्याहुः षड्भिर्वानर उच्यते ।
सप्तभिर्भद्र इत्येतदष्टानां लक्षणं स्मृतम् ॥
रिक्ते सूर्यस्तथाश्लेषा ध्वजे सोमश्च कृत्तिका ।
ध्वाङ्क्षे राहुश्च भरणी सिंहे भौमस्तथा मघाः ॥
बुधः शुनि धनिष्ठा च वृषे जीवश्च रोहिणी ।
भद्रे तु श्रवणः सौरः कपौ शुक्रश्च फाल्गुनी ॥
चन्द्रतारानुकूल्येन कारयेत विचक्षणः ।
विभुर्नश्यति रिक्तेन ध्वजेन विपुलाः श्रियः ॥
ध्वाङ्क्षेण नित्यमुद्वेगः सिंहेन जितशत्रुता ।
अस्थैर्यं सारमेये स्याद्वृषे परितपो ध्रुवः ॥
कपिना चापलं स्त्रीणां नित्यं भद्रेण निर्वृतिः ।

अथ द्वारनक्षत्राणि ।

कृत्तिकाभगमैन्द्रं च विशाखा च पुनर्वसुः ।
तिष्यो हस्तस्तथाऽऽर्द्रा च क्रमात् पूर्वेषु निर्दिशेत् ॥
चित्रा विशाखा पौष्णं च नैर्ऋतं यमदैवतम् ।
वैश्वदेवाश्विनं मैत्रं क्रमाद्दक्षिणसंश्रितम् ॥
पित्र्यं प्रोष्ठपदार्यम्णमाषाढं च द्विदैवतम् ।
वारुणाश्विनसावित्रं क्रमात् पश्चिमसंश्रितम् ॥
स्वात्याश्लेषाभिजित्सौम्यं वैष्णवं वासवं तथा ।
याम्यं ब्राह्मं क्रमात् सौम्यद्वारेषु च विनिर्दिशेत् ॥

अथ द्वारस्य वेधफलमाह ।

**मार्गतरुकोणकूपस्तम्भभ्रमविद्धमशुभदं द्वारम् ।**
**उच्छ्रायाद्द्विगुणमितां त्यक्त्वा भूमिं न दोषाय ॥ ७४ ॥**

मार्गः पन्थाः । तरुर्वृक्षः । कोणोऽस्रिः । कूपस्तम्भौ प्रसिद्धौ । भ्रमो जलनिर्गमनप्रदेशः । एतैः सन्मुखैर्द्वारं विद्धमशुभदम् । कियति दूरे स्थितो वेधने न दुष्टफलदो भवतीत्याह । उच्छ्रायाद्द्विगुणमितामिति । द्वारोच्छ्रायाद्द्विगुणमितो यावान् द्वारस्योच्छ्राय उच्चत्वं तद्द्विगुणप्रमाणां भूमिमवनिं

त्यक्त्वा विहाय बहिःस्थिता दोषायैव एते वेधा न भवन्ति। नन्वत्र सामान्येनोक्तमुच्छ्रायाद्द्विगुणमितां त्यक्त्वा भूमिं न दोषायेत्यत्र न ज्ञायते किं वा वेधोच्छ्रायद्विगुणां किंवा विन्ध्योच्छ्रायद्विगुणां भूमिं त्यक्त्वा न दोषाय भवतीत्यत्रोच्यते। आचार्येण समाससंहितानिबन्धे स्पष्टतरं निबद्धं तच्चाह।

स्तम्भतरुभ्रमकोणैर्विद्धं वेधश्च न शुभकरद्वारम्।
वेधोच्छ्रायाद्द्विगुणां भूमिं त्यक्त्वा न दोषाय इति॥

तथा च भगवान् गर्गः।

द्वारोच्छ्रायद्विगुणितां त्यक्त्वा भूमिं बहिःस्थितः।
न दोषाय भवेद्वेधो गृहस्य गृहिणोऽथवा—इति॥

अत्रैव विशेषफलान्याह।

**रथ्याविद्धं द्वारं नाशाय कुमारदोषदं तरुणा।**
**पङ्कद्वारे शोको व्ययोऽम्बुनिःस्राविणि प्रोक्तः॥ ७५॥**
**कूपेनापस्मारो भवति विनाशश्च देवताविद्धे।**
**स्तम्भेन स्त्रीदोषाः कुलनाशो ब्राह्मणाभिमुखे॥ ७६॥**

रथ्याविद्धं मार्गेण विद्धं द्वारं नाशाय गृहस्वामिनो भवति। तरुणा वृक्षेण विद्धं कुमाराणां बालकानां दोषदं दोषं ददाति। पङ्कद्वारे कर्दमविद्धे नित्यं यस्याग्रतः कर्दमो भवति तस्मिन् शोको भवति। अम्बुनिःस्राविणि जलनिर्गमनमार्गे विद्धे व्ययो धनव्ययो भवति॥ ७५॥

कूपेन विद्धे द्वारे अपस्मारो भवति अपस्मारो वायुदोषदः। देवताविद्धे। देवता सुरप्रतिमा तया विद्धे विनाशः स्वामिनो भवति। स्तम्भेन विद्धे स्त्रीदोषा दौःशील्यादिका भवन्ति। ब्राह्मणाभिमुखे कुलनाशो वा भवति किंवा बाह्ये ब्राह्मणाभिमुख इति नावगम्यते यस्मादुत्तममुत्तराभिमुखं पञ्चमं द्वारमिष्टमुक्तम्। तद्गृहमध्यगं भवतीत्याह। वधबन्धो [१]रिपुवृद्धिर्धनसुतलाभः समस्तगुणसम्पदित्यादि। अत्रोच्यते। बाह्यस्याभ्यन्तरस्य च ब्रह्मणोऽभिमुखद्वारस्यानिष्टं फलं प्रत्येकदेवताविद्धस्य फलमिदमाह।

देवद्वारं विनाशाय शङ्करद्वारमेव च इत्यादि।

---

१ अस्यैवाध्यायस्य ७३ श्लोकः।

तथा।

ब्रह्मणा यच्च संविद्धं तद्द्वारं कुलनाशनम्।

अभ्यन्तरब्रह्मणो मुखस्य द्वारस्यानिष्टफलं विश्वकर्माह।

गृहमध्ये कृतं द्वारं द्रव्यधान्यविनाशनम्।
आवहेत् कलहं शोकं नारीर्वा संप्रदूषयेत्॥

तथा भारद्वाजः।

शिरा मर्माणि वंशाश्च नालमध्यं च सर्वशः।
विहाय वास्तुमध्यं च द्वाराणि विनिवेशयेत्॥

तथा च यम आह।

ब्रह्मस्थाने न विध्येत नागदन्तस्थलानि च।
मृद्दारुभिर्गवाक्षैश्च मानपानैस्तथैव च॥
द्वारैश्च भित्तिभिश्चैव शय्याभागैः कथञ्चन।
स्वामिनो मरणं तत्र महादुःखेन पार्थिव॥

एवं चेतदाऽऽचार्येण पूर्वापरविरुद्धेन निबन्धनं स्यात्।

अत्रोच्यते।

सर्वेष्वेव वास्तुषु उत्सर्गापवादरूपेण द्विविधा व्याख्या च भवति। तथा च यात्राप्रकारे प्राच्यादिषु सप्त सप्त नक्षत्राण्यभिधाय पुनः सर्वद्वारिकसञ्ज्ञं नक्षत्रचतुष्टयमाह। एवमत्रापि। तस्मादयमदोष इति॥ ७६॥

अन्यद्द्वारस्य विशेषमाह।

**उन्मादः स्वयमुद्घाटितेऽथ पिहिते स्वयं कुलविनाशः।**
**मानाधिके नृपभयं दस्युभयं व्यसनमेव नीचे च॥ ७७॥**
**द्वारं द्वारस्योपरि यत्तन्न शिवाय सङ्कटं यच्च।**
**आव्यात्तं क्षुद्भयदं कुब्जं कुलनाशनं भवति॥ ७८॥**
**पीडाकरमतिपीडितमन्तर्विनतं भवेदभावाय।**
**बाह्यविनते प्रवासो दिग्भ्रान्ते दस्युभिः पीडा॥ ७९॥**

स्वयमुद्घाटिते आत्मनैवोद्घाटिते द्वारकपाटे उन्मादश्चित्तस्य भवति। स्वयं पिहिते निपीडिते कुलस्य वंशस्य विनाशः स्वयं भवति।

मानाधिके उक्तस्वप्रमाणादभ्यधिके द्वारे नृपभयं राजभीतिर्भवति। नीचे प्रमाणादल्पे दस्युभयं चोरभीतिर्व्यसनं दुःखं च भवति॥ ७७॥

द्वारस्योपरि यद्द्वारं तन्न शिवाय न श्रेयसे भवति। यच्च सङ्कटं पृथुत्वेनाल्पं तच्च न शिवायैव भवति। आव्यात्तमतिविपुलं मुरजाकारं क्षुद्भयं ददाति। कुब्जमस्पष्टं द्वारं कुलनाशनं वंशक्षयावहं भवति॥ ७८॥

अतिपीडितमुदुम्बरेणातिपीडितं गृहस्वामिनः पीडां करोति। अन्तर्गृहाभ्यन्तरे विनतं द्वारमभावाय मरणाय स्वामिनो भवति। बाह्यविनते बहिर्गते द्वारे प्रवासो भवत्यन्यदेशनिवासः। दिग्भ्रान्ते दिक्स्थे अन्यां दिशं प्रेक्षमाणे दस्युभिश्चौरैः पीडा भवति॥ ७९॥

अत्रैव विशेषमाह।

**मूलद्वारं नान्यैर्द्वारैरभिसन्दधीत रूपर्द्ध्या।**
**घटफलपत्रप्रमथादिभिश्च तन्मङ्गलैश्चिनुयात्॥ ८०॥**

मूलद्वारं प्रधानमिति यावत्। तच्चान्यैरपरैर्द्वारैः रूपर्द्ध्या रूपसमृद्ध्या नाभिसन्दधीत न सन्धानं कुर्यात्। एतदुक्तं भवति। मूलद्वारस्य यादृशी रचना कृता तादृशी नान्यद्वाराणां कार्येति। तच्च मूलद्वारं मङ्गलैः। घटैः कलशैः फलैः श्रीफलादिभिः पत्रैः पत्रलतादिभिर्वा प्रमथैर्गणैः। आदिग्रहणात् सिंहव्यालहंसजीवजीवकैश्चिनुयात् उपचितं कुर्यात्॥ ८०॥

अथ कोणचतुष्टये गृहादीनां ये दोषा निवसन्ति तांस्तन्निवासिनां च फलमाह।

**ऐशान्यादिषु कोणेषु संस्थिता बाह्यतो गृहस्यैताः।**
**चरकी विदारिनामाऽथ पूतना राक्षसी चेति॥ ८१॥**
**पुरभवनग्रामाणां ये कोणास्तेषु निवसतां दोषाः।**
**श्वपचादयोऽन्त्यजात्यास्तेष्वेव विवृद्धिमायान्ति॥ ८२॥**

अथ ऐशान्यां चरकी। आग्नेय्यां विदारिनामा। नैर्ऋते पूतना। वायव्ये राक्षसी चेति एत्येवं प्रकारा बहिष्कोणेषु निवसन्ति शास्त्रान्तरेष्वपि पठ्यन्ते।

स्कन्दोऽर्यमा जम्भकाख्यः पिलिपिञ्जस्तथापरः ।
प्राच्यादिदिक्चतुष्के तु निवसन्ति महाग्रहाः ॥

कोणेष्वाचार्योक्ता एव ।

ऐशान्यां चरकी प्रोक्ता स्कन्दः प्राग्भागसंस्थितः ।
हौताशन्यां विदारी च याम्यां चैवार्यमा स्थितः ॥
पूतना नैर्ऋते ज्ञेया जम्भकः पश्चिमे स्थितः ।
राक्षसी चानिले कोणे पिलिपिञ्जस्तथोत्तरे ॥

इत्याचार्योक्तः पक्षः शोभनः ॥ ८१ ॥

पुरभवनेति । पुरं नगरम् । भवनं गृहम् । ग्रामः प्रसिद्धः । तेषां ये कोणाश्चत्वारस्तेषु निवसतां निवस[1]मानानां दोषा भवन्ति तेष्वेव कोणेषु श्वपचादयः । श्वपचा डोमाः । आदिग्रहणाच्चण्डालपुक्कसप्रभृतयः । अन्त्यजात्याश्चर्मकारप्रभृतयः । एते निवसमाना विवृद्धिमायान्ति वृद्धिमाप्नुवन्ति नान्ये इति ॥ ८२ ॥

अथ दिक्षु शुभाशुभान् वृक्षानाह ।

**याम्यादिष्वशुभफला जातास्तरवः प्रदक्षिणेनैते ।**
**उदगादिषु प्रशस्ताः प्लक्षवटोदुम्बराश्वत्थाः ॥ ८३ ॥**

एते तरवो वृक्षा याम्यादिषु दक्षिणाद्यासु दिक्षु प्रदक्षिणेन जाता अशुभफलदाः । तद्यथा । प्लक्षो याम्यायां दक्षिणस्यामशुभः । वटः पश्चिमायाम् । उदुम्बर उत्तरस्याम् । अश्वत्थः पूर्वस्यामशुभ इति । एत एवोदगादिषूत्तराद्यासु दिक्षु प्लक्षवटोदुम्बराश्वत्थाः प्रशस्ताः । प्लक्ष उत्तरस्यां शुभः । वटः पूर्वस्याम् । उदुम्बरो दक्षिणस्याम् । अश्वत्थः पश्चिमायां शुभ इति ॥ ८३ ॥

तथा च गर्गः ।

वर्जयेत् पूर्वतोऽश्वत्थं प्लक्षं दक्षिणतस्तथा ।
न्यग्रोधं पश्चिमे भागे उत्तरे चाप्युदुम्बरम् ॥

---

१ कर्तरि कर्मव्यतिहारे १ । ३ । १४ इति सूत्रेणात्रात्मनेपदम् । तदर्थस्तु अन्यस्य योग्यं निवासं कुर्वतामिति । व्यत्युपसर्गयोगस्यानावश्यकतामभिप्रेत्येदमवधेयम् ।

अश्वत्थे तु भयं ब्रूयात् प्लक्षे ब्रूयात् पराभवम् ।
न्यग्रोधे राजतः पीडा नेत्रामयमुदुम्बरे ॥
वटः पुरस्ताद्धन्यः स्याद्दक्षिणे चाप्युदुम्बरः ।
अश्वत्थः पश्चिमे भागे प्लक्षस्तूत्तरतो भवेत् ॥

अधुनाऽरिष्टवृक्षद्वारेण गृहाणां पथिकान् वृक्षानाह ।

**आसन्नाः कण्टकिनो रिपुभयदाः क्षीरिणोऽर्थनाशाय ।**
**फलिनः प्रजाक्षयकरा दारूण्यपि वर्जयेदेषाम् ॥ ८४ ॥**
**छिन्द्याद्यदि न तरूंस्तान् तदन्तरे पूजितान् वपेदन्यान् ।**
**पुन्नागाशोकारिष्टबकुलपनसान् शमीशालौ ॥ ८५ ॥**

कण्टकिनः कण्टकिवृक्षाः खदिरप्रभृतय आसन्ना निकटवर्तिनो रिपुभयदाः शत्रुभीतिप्रदाः । क्षीरिणोऽर्कादय आसन्ना अर्थनाशाय भवन्ति । फलिनो वृक्षा आम्रप्रभृतयः प्रजाक्षयकराः प्रजानां क्षयं विनाशं कुर्वन्ति न केवलमेते आसन्ना अशुभदा भवन्ति यावदेषामपि दारूणि काष्ठानि गृहार्थं वर्जयेत् ॥ ८४ ॥

यदि तान् कण्टकिवृक्षप्रभृतींस्तरून् वृक्षान् न छिन्द्यात् तदन्तरे तेषां मध्ये अन्यानपरान् पूजितान् वृक्षान् वपेत् । कांस्तानित्याह । पुन्नागेति । पुन्नागाः । अशोकाः । अरिष्टाः । बकुलाः । पनसाः । एतांस्तथा शमीशालौ । एतेषामन्यतमे तत्रस्थे तज्जा दोषा न बाधन्ते ॥ ८५ ॥

अथ प्रशस्तभूलक्षणमाह ।

**शस्तौषधिद्रुमलता मधुरा सुगन्धा**
**स्निग्धा समा न सुषिरा च मही नराणाम् ।**
**अप्यध्वनि श्रमविनोदमुपागतानां**
**धत्ते श्रियं किमुत शाश्वतमन्दिरेषु ॥ ८६ ॥**

एवंविधा भूर्नराणां पुरुषाणामध्वनि पथि श्रमविनोदमुपागतानां श्रमापनयनं प्राप्तानामपि क्षमाऽचार्वास्थितत्वादपि श्रियं लक्ष्मीं धत्ते ददाति किमुत शाश्वतमन्दिरेषु किं पुनर्ये शाश्वतं स्थिरं मन्दिरं गृहं कृत्वा तत्र निवसन्ति । शस्तौषधिद्रुमलता । शस्ता ओषधयो जायाजयन्तीजीवन्तिजीव-

पुन्नाग एवमादिका यत्र। द्रुमा वृक्षा याज्ञिकाः पलाशपिप्पलप्रभृतयः। लता-श्चूततत यश्च श्यामलताप्रभृतयश्च यस्याम्। या च भूर्मधुरा मृष्टस्वादा। सुगन्धा शोभनगन्धा। स्निग्धा सस्नेहा। समा सर्वत्र तुल्या निम्नोतुङ्गे रहिता। न सुषिरा अन्तःसारा ॥ ८६ ॥

अन्यद्गृहे शुभफलं सन्निवेशवशेनाह।

**सचिवालयेऽर्थनाशो धूर्त्तगृहे सुतवधः समीपस्थे।**
**उद्वेगो देवकुले चतुष्पथे भवति चाकीर्त्तिः ॥ ८७ ॥**
**चैत्ये भयं ग्रहकृतं वल्मीकश्वभ्रसङ्कुले विपदः।**
**गर्त्तायां तु पिपासा कूर्माकारे धनविनाशः ॥ ८८ ॥**

सचिवालये मन्त्रिगृहे समीपस्थे निकटवर्तिनि अर्थनाशो धनविनाशः। धूर्तः परवञ्चनादक्षः। धूर्तगृहे समीपस्थे सुतवधः पुत्रमरणम्। देवकुले सुरगृहे समीपस्थे उद्वेगश्चित्तखेदः। चतुष्पथे चत्वारः पन्थानो यत्र तस्मिंश्चाकीर्तिर्लोकापवादः ॥ ८७ ॥

चैत्य इत्यनेन चैत्यवृक्षाः परिगृह्यन्ते चैत्यवृक्षे आसन्ने भयं ग्रहकृतं ग्रहोत्पन्ना भीतिर्गृहभर्तुर्भवति। ग्रहा भूतानि।

तथा च बृहस्पतिराह।

चैत्यवृक्षेषु भूतेभ्यः कृच्छ्रावासः पुराद्भयम्।
अरतिस्त्वभिवर्धेत निविष्टे कण्टकिद्रुमैः—इति ॥

चैत्यवृक्षः कल्पवृक्षः।

तथा च पुराणे।

मन्दरस्य गिरेः शृङ्गे महावृक्षः स केतुराट्।
आलम्बशाखाशिखरः कदम्बश्चैत्यपादपः—इति ॥

वल्मीकसङ्कुले वल्मीकावृते भूभागे। श्वभ्रसङ्कुले च श्वभ्रावृते समीपस्थे विपदो व्यापदो भवन्ति। गर्तो प्रसिद्धा चिता तस्यां समीपवर्तिन्यां पिपासा तृषा भवति। कूर्माकारे भूभागे समीपस्थे धनविनाशो वित्तक्षयो भवति ॥ ८८ ॥

अथापरं भूमिलक्षणमाह ।

**उदगादिप्लवमिष्टं विप्रादीनां प्रदक्षिणेनैव ।**
**विप्रः सर्वत्र वसेदनुवर्णमथेष्टमन्येषाम् ॥ ८९ ॥**

विप्रादीनां ब्राह्मणक्षत्रियवैश्यशूद्राणामुदगादिप्लवं प्रदक्षिणेन भूभागेनेष्टं शुभम् । प्लवशब्देन निम्नत्वमुच्यते । तद्यथा । उदक्प्लवा भूर्ब्राह्मणानां प्रशस्ता । पूर्वप्लवा क्षत्रियाणाम् । दक्षिणप्लवा वैश्यानाम् । पश्चिमप्लवा शूद्राणाम् । विप्रो ब्राह्मणः सर्वत्र सर्वस्यां भूमौ वसेदुत्तरपूर्वदक्षिणपश्चिमप्लवायामिति । अन्येषां क्षत्रियादीनामनुवर्णेनमथेष्टं वर्णानुक्रमेण शोभनम् । तद्यथा । पूर्वप्लवा दक्षिणप्लवा पश्चिमप्लवा क्षत्रियाणाम् । दक्षिणप्लवा पश्चिमप्लवा वैश्यानाम् । पश्चिमप्लवा शूद्राणामेवेति ॥ ८६ ॥

अथ भूमेर्विधानवशेन शुभाशुभमाह ।

**गृहमध्ये हस्तमितं खात्वा परिपूरितं पुनः श्वभ्रम् ।**
**यद्यूनमनिष्टं तत् समे समं धन्यमधिकं यत् ॥ ९० ॥**

गृहमध्ये भवनान्तर्हस्तमितं समप्रमाणं श्वभ्रमवटं खात्वा समन्ततः परिवर्तुलं हस्तायतं हस्तमात्रगम्भीरं पुनर्भूयः परिपूरितं तयैव मृत्तिकया यद्यूनं भवति तदानिष्टमशुभं समे समं न शुभं नाप्यशुभमित्यर्थः । यदधिकं भवति तद्धन्यं शुभमित्यर्थः ॥ ६० ॥

अन्यदप्याह ।

**श्वभ्रमथवाऽम्बुपूर्णं पदशतमित्वा गतस्य यदि नोनम् ।**
**तद्धन्यं यच्च भवेत् पलान्यपामाढकं चतुःषष्टिः ॥ ९१ ॥**

अथवा श्वभ्रमवटं पूर्वोक्तमेवाम्बुना जलेन परिपूर्णं कृत्वा ततः पदशतं क्रमशतमित्वा गत्वा ततः पुनरागत्य यदि तज्जलमूनं न भवति तद्धन्यं शुभमिति । अन्यथा अधन्यम् । अथवा यत्र मृत्तिकानामाढकमपामम्बूनां चतुःषष्टिः पलानि भवेत्तद्धन्यमेव । एतदुक्तं भवति । भूमौ मृत्तिकां सङ्गृह्य अवटनिर्गतां तया आढकमापूर्य तोलयेत् । तद्यदि चतुःषष्टिः पलानि भवन्ति तद्धन्यं नान्यथेति ॥ ६१ ॥

तथा च पराशरः।

निमेषशतमतीत्याखातश्वभ्रगतजलगतां चारिणीं समुद्धृतामापूर्यमाणामतिरक्तां मृदं चतुःषष्टिपलाढकां तुल्यां चेति।

अन्यदप्याह।

**आमे वा मृत्पात्रे श्वभ्रस्थे दीपवर्त्तिरभ्यधिकम्।**
**ज्वलति दिशि यस्य शस्ता सा भूमिस्तस्य वर्णस्य॥ ९२॥**

अथवा आमे अपक्के मृत्पात्रे मृन्मये भाण्डे श्वभ्रस्थे श्वभ्रान्तरगते तत्र वर्णानामचिह्नैश्चतस्रो दीपवर्तीर्दत्वा ज्वालयेत् तुल्यकालं ताश्च समाः समाः कार्याः। यस्य वर्णस्य दिश्यभ्यधिकं चिरकालं दीपवर्ती ज्वलति। तस्यैव वर्णस्य सा भूः शस्ता शुभा नान्यस्येति॥ ९२॥

अन्यदप्याह।

**श्वभ्रोषितं न कुसुमं यस्य प्रम्लायतेऽनुवर्णसमम्।**
**तत्तस्य भवति शुभदं यस्य च यस्मिन् मनो रमते॥ ९३॥**

अथवा अनुवर्णसमं ब्राह्मणादिवर्णचतुष्टयस्यानुवर्णं सितरक्तपीतकृष्णचिन्हितमेकजातीयं कार्यमित्यर्थः। कुसुमं पुष्पमनुवर्णसमं श्वभ्रोषितं रात्रौ श्वभ्रे स्थितं कृत्वा ततो द्वितीयदिने यस्य वर्णस्य संबन्धि कुसुमं न प्रम्लायते न शुष्यति तत्स्थानं तस्यैव वर्णस्य शुभदम्। अथवा यस्य वर्णस्य यस्मिन् भूभागे मनश्चित्तं रमते तत्र तस्यैव शुभदं न तत्रैव विचारः कार्य इत्यर्थः॥ ९३॥

तथा चाच गर्गः।

या यस्य शंसिता भूमिर्भवेत् गृहकर्मणि।
तस्यां श्वभ्रं खनेर्मध्ये हस्तमात्रं समन्ततः॥
तच्छ्वभ्रं पूरयेत् तेन पांशुना सुविचक्षणः।
वर्धमाने च वृद्धिः स्याद्धीयमाने विगर्हिता॥
साम्ये साम्यं विनिर्दिष्टमथवाऽन्यद्विचारणम्।
पूरयित्वाऽथवा श्वभ्रं मृद्भिः क्रमशतं व्रजेत्॥

पूर्णे स्यादागमं यावत् सा भूमिस्तु प्रशस्यते ।
तस्मिन् वा धारयेत्कुम्भे चिरं मान्यमनुक्रमात् ॥
यच्चिराम्लायते माल्यं तद्गुणे तत्र चावसेत् ।
आमे वा मृन्मये पात्रे दीपवर्तिचतुष्टयम् ॥
यस्यां दिशि प्रज्वलति चिरं तस्यैव सा शुभा ।

अथान्यद्भूमिलक्षणमाह ।

**सितरक्तपीतकृष्णा विप्रादीनां प्रशस्यते भूमिः ।**
**गन्धश्च भवति यस्यां घृतरुधिरान्नाद्यमद्यसमः ॥ ९४ ॥**
**कुशयुक्ता शरबहुला दूर्वाकाशावृता क्रमेण मही ।**
**ह्यनुवर्णं वृद्धिकरी मधुरकषायाम्लकटुका च ॥ ९५ ॥**

विप्रादीनां ब्राह्मणक्षत्रियवैश्यशूद्राणां सितरक्तपीतकृष्णा यथाक्रमेण भूमिः प्रशस्यते । श्वेतवर्णा ब्राह्मणानां भूः प्रशस्ता । रक्तवर्णा लोहिता क्षत्रियाणाम् । पीतवर्णा हरिता वैश्यानाम् । कृष्णवर्णा शूद्राणाम् । घृतसमगन्धा ब्राह्मणानाम् । रुधिरसमगन्धा क्षत्रियाणाम् । अन्नसदृशगन्धा वैश्यानाम् । मद्यसदृशगन्धा शूद्राणाम् ॥ ९४ ॥

कुशयुक्ता दर्भसंयुक्ता भूमिर्विप्राणां शुभदा । शरैः काण्डैर्बहुला संयुक्ता क्षत्रियाणाम् । दूर्वा शाद्वलम् । दूर्वायुता वैश्यानाम् । काशावृता शूद्राणाम् । एवं क्रमेण भूः प्रशस्ता । तथा मधुरकषायाम्लकटुका चानुवर्णं वृद्धिकरी । मधुरा ब्राह्मणानाम् । कषाया क्षत्रियाणाम् । आम्ला वैश्यानाम् । कटुका शूद्राणामिति ॥ ९५ ॥

तथा च गर्गः ।

मधुरा दर्भसंयुक्ता घृतगन्धा च या मही ।
उत्तरप्रवणा चेति ब्राह्मणानां तु सा शुभा ॥
रक्तगन्धा कषाया च शरवीरैः संयुता ।
रक्ता प्राक्प्रवणा ज्ञेया क्षत्रियाणां तु सा मही ॥
दक्षिणप्रवणा भूमिर्याम्ला दूर्वाभिरन्विता ।
अन्नगन्धा च वैश्यानां पीतवर्णा प्रशस्यते ॥

पश्चिमप्रवणा कृष्णा विकुण्ठा काशसंवृता ।
मद्यगन्धा मही धन्या शूद्राणां कटुका तथा ॥

अधुना गृहप्रारम्भे विधानमाह ।

**कृष्टां प्ररूढबीजां गोऽध्युषितां ब्राह्मणैः प्रशस्तां च ।**
**गत्वा महीं गृहपतिः काले सांवत्सरोद्दिष्टे ॥ ९६ ॥**
**भक्ष्यैर्नानाकारैर्दध्यक्षतसुरभिकुसुमधूपैश्च ।**
**दैवतपूजां कृत्वा स्थपतीनभ्यर्च्य विप्रांश्च ॥ ९७ ॥**
**विप्रः स्पृष्ट्वा शीर्षं वक्षश्च क्षत्रियो विशश्चोरू ।**
**शूद्रः पादौ स्पृष्ट्वा कुर्याद्रेखां गृहारम्भे ॥ ९८ ॥**

कृष्टां हलविलिखिताम् । प्ररूढबीजां सहितव्रीहिकां कृष्टायामुप्तं बीजं सञ्जातं यस्याम् । गोऽध्युषितां गावोऽध्युषिता निवासिता यस्याम् । ब्राह्मणैश्च सह तां प्रशस्तां प्रशंसिताम् । गोब्राह्मणास्तत्र रात्रिमेकामुषिता इत्यर्थः । एवं कृते शुद्धिर्भूमेर्भवति ।

तथा चोक्तम् ।

सम्मार्जनेनाञ्जनेन सेकेनोल्लेखनेन वा ।
गवां च सन्निवासेन भूमिः शुध्यति पञ्चभिः ॥

एवंविधां भूमिं गृहपतिर्गृहस्वामी सांवत्सरोद्दिष्टे दैवज्ञोक्ते काले समये सर्वगुणसहिते निरुपहते गत्वा ॥ ९६ ॥

नानाकारैर्बहुभिर्भक्ष्यैरपूपमोदकैर्लोपिकाप्रभृतिभिः । तथा दध्ना । अक्षतैश्च यवैः । सुरभिभिः सुगन्धैः । कुसुमैः पुष्पैः । धूपैश्च सुगन्धैर्दैवतपूजां दैवतानां पूजामर्चां क्षेत्रपतेश्च कृत्वा विधाय ततः स्थपतीन् विप्रान् ब्राह्मणांश्चाभ्यर्च्य सम्पूज्य ॥ ९७ ॥

विप्रः स्पृष्ट्वा शीर्षमिति । गृहपतिर्विप्रो ब्राह्मणो यदि भवति तदा शीर्षं स्वमूर्धानं स्पृष्ट्वा येन केनचिदभीष्टेन वस्तुना यथाचरितां रेखां कुर्यात् । एवं क्षत्रियो वक्षः स्पृष्ट्वा वैश्यश्चोरू स्पृष्ट्वा शूद्रः पादौ स्पृष्ट्वा गृहारम्भे रेखां कुर्यात् ॥ ९८ ॥

तस्यां कृतायां लक्षणमाह ।

**अङ्गुष्ठकेन कुर्यान्मध्याङ्गुल्याऽथवा प्रदेशिन्या ।**
**कनकमणिरजतमुक्तादधिफलकुसुमाक्षतैश्च शुभम् ॥ ९९ ॥**
**शस्त्रेण शस्त्रमृत्युर्बन्धो लोहेन भस्मनाग्निभयम् ।**
**तस्करभयं तृणेन च काष्ठोल्लिखिता च राजभयम् ॥ १०० ॥**
**वक्रा पादालिखिता शत्रुभयक्लेशदा विरूपा च ।**
**चर्माङ्गारास्थिकृता दन्तेन च कर्त्तुरशिवाय ॥ १०१ ॥**
**वैरमपसव्यलिखिता प्रदक्षिणं सम्पदो विनिर्देश्याः ।**
**वाचः परुषा निष्ठीवितं क्षुतं चाशुभं कथितम् ॥ १०२ ॥**

तां रेखां यदि गृहपतिरङ्गुष्ठकेन कुर्यात् मध्याङ्गुल्याऽथवा प्रदेशिन्या वा ज्येष्ठाङ्गुल्यङ्गुष्ठाद्द्वितीया प्रदेशिनी । तृतीया मध्यमा । चतुर्थ्यनामिका । पञ्चमी कनिष्ठिका । कनकेन सुवर्णेन । मणिना । वा रजतेन रूप्येण । मुक्ताभिर्वा । दध्ना । फलेन श्रीफलादिना । कुसुमेन पुष्पेण वा । अक्षतैर्यवैर्वा । एतेषामन्यतमेन यदि वा करोति तदा शुभं भर्तुः शुभं करोति ॥ ९९ ॥

शस्त्रेणेति । तां रेखां यदि शस्त्रेण करोति तदा शस्त्रेणैव गृहपतेर्मृत्युः । एवं लोहेन बन्धो बन्धनम् । भस्मना अग्निभयं वह्निभीतिम् । तृणेन च तस्करभयं चोरभीतिम् । काष्ठेनोल्लिखिता रेखा राजभयं राजभीतिं करोति ॥ १०० ॥

वक्रा अस्पष्टा पादेनाऽऽलिखिता च या रेखा सा शत्रुभयं रिपुभीतिं क्लेशांश्च ददाति । विरूपा च या रेखाऽदृश्याऽथवा चित्तदृगाह्लादिनी न भवति साऽपि च—शब्दाच्छत्रुभयक्लेशदा । चर्मणा अङ्गारकेण वाऽस्थ्नादन्तेन वा कृता रेखा भवति तदा भर्तुर्गृहस्वामिनो न शिवाय न श्रेयसे भवति ॥ १०१ ॥

अपसव्येन स्वासव्येन स्वादक्षिणेन लिखिता वैरं करोति । प्रदक्षिणेन या च लिखिता तया सम्पदः समृद्धयो निर्देश्या वक्तव्याः । वामभागाद्दक्षिणभागे दक्षिणे नीयते सा प्रदक्षिणगता रेखा । तथा च प्रश्नकाले वाचो गिरः परुषा रूक्षा असङ्गतियुक्तिवादिन्यः । निष्ठीवितं श्लेष्मत्यागो मुखात् सद्यः । क्षुतं च नासाशब्दः । गृहारम्भकाले अशुभमनिष्टं कथितमुक्तम् ॥ १०२ ॥

अधुना शल्यज्ञानं विवक्षुरादावेव तत्र विधानमाह ।

**अर्द्धनिचितं कृतं वा प्रविशन् स्थपतिर्गृहे निमित्तानि ।**
**अवलोकयेद्गृहपतिः क्व संस्थितः स्पृशति किं चाङ्गम् ॥ १०३॥**
**रविदीप्तो यदि शकुनिस्तस्मिन् काले विरौति परुषरवम् ।**
**संस्पृष्टाङ्गसमानं तस्मिन् देशेऽस्थि निर्देश्यम् ॥ १०४ ॥**

गृहं वेश्म अर्धनिचितमर्धकृतं कृतं वा निःशेषं रचितं तत्र प्रविशन्नन्तर्विशन् स्थपतिर्वर्धकिः प्रविश्य निमित्तानि चिह्नान्यवलोकयेत् पश्येत् । गृहपतिर्गृहस्वामी क्व संस्थितः कस्मिन् स्थाने समवस्थितो वास्तुनरस्य कस्मिन्नवयवे स्थितः किं चाङ्गं स्वावयवं स्पृशति ॥ १०३ ॥

एतदप्यवलोकयेद्रविदीप्त इति । अत्र तावद्दीप्तदिग्लक्षणं व्याख्यायते । तद्यथा । सूर्योदयात् प्रभृति दिनस्य प्रथमप्रहरं यावत् तावदैशानी दिगङ्गारिणी पूर्वा दीप्ता आग्नेयी धूमिता शेषाः शान्ताः पञ्च । ततः प्रहरादूर्ध्वं प्रहरद्वयं यावत् तावत् पूर्वाऽङ्गारिणी आग्नेयी दीप्ता याम्या धूमिता शेषाः शान्ताः । ततः प्रहरद्वयादूर्ध्वं प्रहरत्रयं यावदाग्नेयी दिगङ्गारिणी याम्या दीप्ता नैर्ऋती धूमिता शेषाः शान्ताः । ततः प्रहरत्रयादूर्ध्वं सूर्यास्तं यावत् तावत् याम्याङ्गारिणी नैर्ऋती दीप्ता पश्चिमा धूमिता शेषाः शान्ताः । ततोऽस्तमयादूर्ध्वं रात्रौ प्रथमप्रहरं यावन्नैर्ऋती दिगङ्गारिणी पश्चिमा दीप्ता वायव्या धूमिता शेषाः शान्ताः । ततो रात्रिप्रहरोर्ध्वं प्रहरद्वयं यावत् तावत् पश्चिमा दिगङ्गारिणी वायव्या दीप्ता उत्तरा धूमिता शेषाः शान्ताः । ततः प्रहरद्वयादूर्ध्वं रात्रौ प्रहरत्रयं यावत् तावद्वायव्या दिगङ्गारिणी उत्तरा दीप्ता ऐशानी धूमिता शेषाः शान्ताः । ततो रात्रौ प्रहरत्रयादूर्ध्वं सूर्योदयं यावत् तावदुत्तरा दिगङ्गारिणी ऐशानी दीप्ता पूर्वा धूमिता शेषाः पञ्च शान्ता इति । तस्मिन् काले गृहप्रवेशसमये शकुनिः पक्षी रविवशेन तत्काले या दीप्ता तस्यां दिशि स्थितः सूर्याभिमुखश्च यदि परुषरवं रूक्षशब्दं च विरौति तदा संस्पृष्टाङ्गसमानं गृहपतिना स्वकीयं यदङ्गं स्पृष्टं तत्समानं तदङ्गसम्भूतं तस्मिन् देशे यत्र गृहपतिः स्थितस्तत्रास्थि निर्देश्यं वक्तव्यम् । अत्र प्रमाणमाचार्येण नोक्तम् । ननूक्तमेवमुच्यते संस्पृष्टाङ्गसमानमित्यनेन ज्ञापयति । यत् तदङ्गं स्पृष्टं तत्प्रमाणे भूभागे शल्यं स्थितमिति ज्ञेयम् ॥ १०४ ॥

उक्तमागमान्तरे ।

पृच्छाकाले गृहस्वामी यदङ्गं स्पृशति स्वकम् ।
भुवो हस्तप्रमाणेन शल्यं ब्रूयात्तदङ्गजम् ॥

अन्यदप्याह ।

**शकुनसमयेऽथवाऽन्ये हस्त्यश्वश्वादयोऽनुवाशन्ते ।**
**तत्प्रभवमस्थि तस्मिंस्तदङ्गसम्भूतमेवेति ॥ १०५ ॥**

शकुनसमये निमित्तकाले । अथवाऽन्येऽपरे प्राणिनो हस्त्यश्वश्वादयः । हस्ती गजः । अश्वस्तुरगः । श्वादयः । श्वा सारमेयः । आदिग्रहणादुष्ट्रकाजाविकमार्जारप्रभृतयः । एते यद्यनुवाशन्ते शब्दं कुर्वन्ति । एतेषामन्यतमो निमित्तकाले रविदीप्तो यदि वाशते तदा तस्मिन् स्थाने गृहभर्त्रधिष्ठितेऽङ्गे तत्प्रभवं तत्प्राणिजातं तदङ्गसम्भूतमेव गृहपतिसंस्पृष्टाङ्गसमानमेवास्थि वक्तव्यं प्रमाणं प्राग्वदिति ॥ १०५ ॥

अन्यदप्याह ।

**सूत्रे प्रसार्यमाणे गर्दभरावोऽस्थिशल्यमाचष्टे ।**
**श्वशृगाललङ्घिते वा सूत्रे शल्यं विनिर्देश्यम् ॥ १०६ ॥**

सूत्रे प्रसार्यमाणे यदि गर्दभस्य खरस्य रवः शब्दः श्रूयते तदा अस्थिशल्यमाचष्टे कथयति । अथवा शुना शृगालेन वा लङ्घिते अतिक्रामिते तत्प्रभवमस्थिशल्यं विनिर्देश्यं वक्तव्यम् । गृहभर्तुरधिष्ठिते स्थाने संस्पृष्टाङ्गसमानं प्रमाणं प्राग्वदिति ॥ १०६ ॥

अथ शुभमाङ्गल्यज्ञानमाह ।

**दिशि शान्तायां शकुनिर्मधुरविरावी यदा तदा वाच्यः ।**
**अर्थस्तस्मिन् स्थाने गृहेश्वराधिष्ठितेऽङ्गे वा ॥ १०७ ॥**

तत्काले शान्तायां दिशि यदि शकुनिः पक्षी मधुरविरावी मधु विरौति तदा तस्मिन् स्थाने यत्र शकुनिः स्थितस्तत्रार्थो वाच्यो धनं वक्तव्यम् । अथवा गृहेश्वरेण गृहपतिना वास्तुनरस्य यदङ्गमधिष्ठितं त वाच्य इति । हस्तविज्ञानं प्राग्वदिति यदुक्तं संस्पृष्टाङ्गसमानमिति ॥ १०७ ॥

तत्र तावत्प्रथमं भूमिनिखनने यावदङ्गं गृहभर्तुरुत्थितस्योर्ध्वबाहोर्निमज्जते तावत्प्रमाणेन तच्छल्यं वक्तव्यम् ।

तथा च गर्गः ।

प्रश्नकाले गृहपतिः कस्मिन्नङ्गे समास्थितः ।
किमङ्गं संस्पृशेद्वापि व्याहरेद्वा शुभाशुभम् ॥
विलोक्य स्थपतिः पूर्वं पश्चाच्छल्यं विचारयेत् ।
शङ्खभेरीमृदङ्गानां पटहानां च निःस्वनाः ॥
दध्यक्षतानां पुष्पाणां फलानां दर्शनानि च ।
प्रष्टुश्च प्रवदेच्छल्यं वास्तुज्ञानविशारदः ॥
दीप्तदिक्संस्थितः पक्षी विरौति परुषं रवम् ।
स्पृष्टाङ्गसदृशं शल्यं तस्य स्थाने विनिर्दिशेत् ॥
निखनेदर्बानं तत्र तदङ्गं ब्रुडते यथा ।
गृहनाथस्य तत्राधः शल्यं निःसंशयं वदेत् ॥
प्रश्नकाले गजो गौर्वा तुरगो गर्दभोऽपि वा ।
उष्ट्रो वा सारमेयो वा मार्जारश्छागरोऽपि वा ॥
यः प्राणी व्याहरेत् तत्र तद्भवं शल्यमादिशेत् ।
प्रमाणं तस्य वक्तव्यं पूर्वोक्तविधिना ततः ॥

अथान्यच्छुभाशुभज्ञानमाह ।

**सूत्रच्छेदे मृत्युः कीले चावाङ्मुखे महान् रोगः ।**
**गृहनाथस्थपतीनां स्मृतिलोपे मृत्युरादेश्यः ॥ १०८ ॥**
**स्कन्धाच्च्युते शिरोरुक् कुलोपसर्गोऽपवर्जिते कुम्भे ।**
**भग्नेऽपि च कर्मिवधश्च्युते कराद्गृहपतेर्मृत्युः ॥ १०९ ॥**

सूत्रे प्रसार्यमाणे यदि सूत्रच्छेदो भवति तदा गृहपतेर्मृत्युर्भवति । तथा कीलके निखनमाने अवाङ्मुखे अधोमुखे गते महान् रोगो गृहभर्तुर्भवति । तथा गृहनाथस्य वेश्मप्रभोः स्थपतीनां वर्धकिनां च स्मृतिलोपः स्मृतिभ्रंशो यदा भवति तदा तेषामेव मृत्युरादेश्यो वक्तव्यः ॥ १०८ ॥

कुम्भे घटे आनीयमाने स्कन्धादंसाच्च्युते चलिते शिरोरुग्गृहपते-र्भवति। तथा अपवर्जिते अधोमुखे गते कुलोपसर्गः कुलस्योपद्रवस्तस्यैव। तथा भग्ने कुम्भे कर्मिवधः कर्मकाराणां बधो मरणं भवति। कराद्धस्ता-च्च्युते पतिते कुम्भे गृहपतेर्मृत्युर्मरणं भवति ॥ १०६ ॥

अथ शिलान्यासप्रदर्शनार्थमाह।

**दक्षिण[1]पूर्वे कोणे कृत्वा पूजां शिलां न्यसेत् प्रथमम्।**
**शेषाः प्रदक्षिणेन स्तम्भाश्चैवं समुत्थाप्याः ॥ ११० ॥**
**छत्रस्रगम्बरयुतः कृतधूपविलेपनः समुत्थाप्यः।**
**स्तम्भस्तथैव कार्यो द्वारोच्छ्रायः प्रयत्नेन ॥ १११ ॥**

दक्षिणपूर्वे कोणे आग्नेयदिशि स्रग्गन्धधूपाम्बरोपहारहिरण्यमद्यमांसादिभिः पूजामर्चां कृत्वा प्रथममादौ शिलां न्यसेत् स्थापयेत्। शेषाः अन्याः शिलाः प्रदक्षिणेन न्यास्याः। एतदुक्तं भवति। प्राग्दक्षिणस्यां दिशि शिलान्यासं कृत्वा ततो दक्षिणस्यां ततो नैर्ऋत्यां ततः पश्चिमायां ततो वायव्यां तत उत्तरस्यां तत ऐशान्यां ततः पूर्वस्यां दिशि शिलान्यासं कुर्यादिति। केचिदुत्तरपूर्वे कोणे कृत्वा पूजां शिलां न्यसेत् प्रथममिति पठन्ति। उत्तरपूर्वे चैशानकोणे प्रथमं शिलान्यासं कृत्वा ततः शेषाः प्रदक्षिणेन न्यास्या इत्येतल्लोके स्थपतिषु दृश्यत इति। स्तम्भाश्चैवं समुत्थाप्याः। एवमनेनैव प्रकारेण स्तम्भाः समुत्थाप्याः। यथा शिलान्यासः कृतस्तथा स्तम्भानामुत्थापनं कार्यमिति ॥ ११० ॥

स्तम्भद्वाराणां विशेषफलमाह।

स्तम्भश्छत्रेणातपत्रेण स्रग्भिर्मालाभिरम्बरैर्युतः। तथा कृतधूपविलेपनो दत्तधूपो दत्तानुलेपनः समुत्थाप्यः। तथैव तेनैव प्रकारेण प्रयत्नेन द्वारोच्छ्रायः कार्यः। एतदुक्तं भवति। यथा छत्रस्रगम्बरयुतः कृतधूपविलेपनस्तम्भ उत्थाप्यस्तथा द्वारमप्युत्थापनीयमिति ॥ १११ ॥

तथा च गर्गः।

शिलाविन्यासकाले तु सम्भारांश्चोपकल्पयेत्।
समुद्रजानि रत्नानि सुवर्णं रजतं तथा ॥

---

[1] उत्तरपूर्वे—इति पाठान्तरम्।

सर्वबीजानि गन्धांश्च शरान् दर्भांस्तथैव च।
शुक्लान् सुमनसः सर्पिः केतकीं मधुरोचनाम्॥
आमिषं च तथा मद्यं फलानि विविधानि च।
क्षीरोदनं पूर्णकुम्भान् कोणे कोणे प्रदापयेत्॥
नानाविधानि भक्ष्याणि पानानि विविधानि च।
हुत्वाऽग्निं विधिवत् काले मुहूर्त्ते चोपपादिते॥
गृहकोणेषु सर्वेषु पूजां कृत्वा विधानतः।
ततः पुण्याहघोषेण शिलान्यासं प्रकल्पयेत्॥
ऐशानमादितः कृत्वा प्राग्दक्षिण्येन विन्यसेत्।
अनेनैव विधानेन स्तम्भद्वारावरोहणम्॥
वास्तुविद्याविधानज्ञः कारयेत् सुसमाहितः।
शिलाविन्याससमन्त्रोऽयं निर्दिष्टो मुनिभिः पुरा॥
नन्दे नन्दाय वासिष्ठे वसुभिश्च हितप्रजे।
सुचिरे नन्ददे नन्दे वासिष्ठ रम्यतां गृहे॥
भद्रे काश्यपदायादे पूजनं भद्रमावह।
सुभगे सुव्रते देवि गृहे काश्यपि रम्यताम्॥
जये भार्गवदायादे प्रजानां भद्रमावह।
भव भूतिकरी देवि गृहे भार्गवि रम्यताम्॥
सर्वबीजसमायुक्ते सर्वगन्धौषधैर्वृते।
प्रजापतिसुते देवि सुखदाऽस्तु महीसुते॥
पूर्णेऽङ्गिरसदायादे पूर्णकामाः प्रजाः कुरु।
पूजिते परमाचार्यं गन्धमाल्यैरलङ्कृते॥
अव्यङ्गे चाक्षते पूर्णे मुनेरङ्गिरसः सुते।
इष्टके त्वं प्रयच्छेष्टं प्रतिष्ठां गृहिणः कुरु॥
ग्रामस्वामिपुरस्वामिगृहस्वामिपरिग्रहे।
मनुष्यपशुहस्त्यश्वधनवृद्धिकरी भव—इति॥

अथास्माभिः क्रमेण शङ्कुप्रतिष्ठालक्षणं प्रसङ्गेन लिख्यतेऽन्यशास्त्रात्।
तत्र शङ्कुलक्षणम्।

स्निग्धादिभूभागसमुत्थितानां न्यग्रोधबिल्वद्रुमखादिराणाम् ।
शमीवटोदुम्बरदेवदारुक्षीरिस्वदेशोत्थफलद्रुमाणाम् ॥
उपोषितः शिल्पिजनस्त्वथैषां मध्यात्तु तीक्ष्णेन कुठारकेण ।
भित्त्वा ततो दिक्पतिनोत्तरस्यां शुभे च लग्ने परिगृह्य शङ्कुम् ॥
करप्रमाणं परतश्चतस्त्रस्तदर्धमानेन ततोऽनुगृह्य ।
नीत्वा न्यसेत् ताश्च गृहे तु तावद्यावत् प्रतिष्ठासमयोऽस्य शङ्कोः ॥
नन्देति सूक्तिः कथितेशकोणे हुताशनाख्ये सुभगेति चान्या ।
सुमङ्गली नैर्ऋतभागसंस्था भद्रंकरी मारुतकोणयाता ॥
वृषाश्वपुन्नागपदाङ्कितानां नन्दादिकानां क्रमशः शिलानाम् ।
अखण्डितानां सुदृढीकृतानां सुलक्षणानां ग्रहणं निरुक्तम् ॥
कूर्मोऽथ शेषो हि जनार्दनः श्रीर्ध्रुवश्च मध्ये भवनस्य संस्थाः ।
द्वाराधिपा दिक्पतयो गजाश्च सम्पूजनीया बलिभिः सुमन्त्रैः ॥
स्नानार्च्यमाल्याम्बरधूपलेपैर्बल्यौपहारैः प्रतिपूज्य शङ्कुम् ।
ध्रुवे शिलायाश्च ततः खनित्वा शङ्कुं प्रतिष्ठाप्य तथा च कुम्भम् ॥
लाजाक्षतव्रीहिसपञ्चगव्यमध्वाज्ययातं परिपूर्य सम्यक् ।
ऋग्भिस्तथैशं विधिवत् प्रकुर्याद्धोमो ध्रुवादुत्तरतस्तु कार्यः ॥

अथ लग्नशुद्धिः ।

धनुर्वणिग्गोयुगनारिकुम्भे वास्तुप्रतिष्ठाकरणं प्रधानम् ।
एतच्चतुर्थे गृहसञ्ज्ञमृक्षं जलोद्भवं तच्छुभमुद्दिशन्ति ॥
असम्भवे शुक्रशशाङ्कयोगाज्जलाश्रयं प्राहुरतीन्द्रियज्ञाः ।
एषां नवांशेऽन्यगृहे शुभर्क्षे कर्तव्यमाग्नेयिककोणवर्ज्ये ॥
केन्द्रत्रिकोणाज्ज्वलनाख्यलाभार्थावस्थितेष्वीज्यसितेन्दुजेषु ।
गृहं समृद्धं सुदृढं जनाढ्यं व्यये तृतीये सगुरुः समृद्धौ ॥
वाच्यं तथा सूर्यकुजार्कजेषु तृतीयषष्ठ[illegible]गतेषु नित्यम् ।
शेषेष्वतोऽन्येषु विशेषतस्तु चोराग्निदाहक्षतरोगजाड्यम् ॥
लग्नात्तृतीयाम्बुषडायगेन्दौ कार्यं गृहं स्त्रीधनधान्यदासैः ।
अभीष्टमन्येषु गतोऽन्यथातो धिष्ण्यं गृहं चाच गुणातिरिक्तम् ॥
प्रवेश एवं भवनस्य कार्यो विप्रादिकानां यदुदीरितं प्राक् ।
किन्त्वत्र गोजाविकवाहनानां विना स्थिरैः स्वाष्टसमैः प्रवेशः ॥

अथ वैदिकमन्त्राः ।

ध्रुवे वास्तुनरे चैव द्वाराणां ग्रन्थिषु स्मृतान् ।
वैदिकांश्चैव मन्त्रांश्च प्रवक्ष्याम्यनुपूर्वशः ॥
कूर्मे मन्त्रमयो यज्ञो वर्धतां बलिकर्मणि ।
शेषे नमोऽस्तु सर्पेभ्य इदं विष्णुर्जनार्दने ॥
तव श्रियो श्रिये यान्तु ध्रुवाद्यास्तु ध्रुवे स्मृतम् ।
सविता श्रियः प्रसविता शङ्कोराहुर्मनीषिणः ॥

अथ शङ्कुदेवताः ।

ब्रह्मणो ब्रह्मजज्ञानमर्यम्णो यान्तु अर्यमम् ।
सविता श्रियः प्रसविता तथैवेति विवस्वतः ॥
इन्द्रस्येन्द्रो मयं वाच्यं मित्रे मित्राऽञ्जनं स्मृतम् ।
तथा मृडानो रुद्रोऽथ रुद्रस्य परिकीर्तितम् ॥
भूधराय इहैवेधि रम्भराय इयं महत् ।
प्रोक्ता वास्तुनरस्यैवं देवताश्च त्रयोदश ॥
ये देवा हि चतुर्दिक्षु द्वाराणां मन्त्रसङ्ग्रहे ।
तन्त्राणां पुरा प्रोक्तं सूक्तीनामधुना शृणु ॥
यो रुद्रोऽग्नौ तु नन्दिन्यामाहुत्यं शुभगाय च ।
सुमङ्गलीः सुमङ्गल्या भद्रंकर्णेति भद्रिका ॥
एतेषां बलयो वक्ष्ये हविषं पायसं दधि ।
मोदकाज्यपयोव्रीहिलाजाक्षतफलानि च ॥
ध्रुवादुत्तरतो होममनादेश्यं तु कारयेत् ।
तव श्रियादिमन्त्रैस्तु जुहुयादाज्यं समाहितः ॥
एवं प्रवेशकाले तु स्थालीपाकसमो हि सः ।
मन्त्रैर्होमस्तु सूक्तीनां पञ्चरङ्गप्रवाहणः ॥
ये देवादिकरण्डाश्च काण्डात्काण्डात्प्ररोहणम् ।
ततो युवा सुधामेति वाचनीयाः प्रदक्षिणम् ॥
पाद्यमर्घ्यादिकं यत्तु शान्तिकल्पेन दर्शितम् ।
तदिहापि ग्रहीतव्यं सर्वमेतच्छ्रुतार्थकम् ॥

एवं देवालये शान्तो दीक्षायं(?)द्वादिसर्वत: ।
स्वतन्त्रोक्तेन वक्तव्यं निर्माणस्य प्रवेशनम्—इति ॥

अथ स्तम्भादीनां प्राणिभूपविष्टेषु तस्मिंश्च कम्पितपतितदुःस्थिते सति फलमाह ।

**विहगादिभिरवलीनैराकम्पितपतितदुःस्थितैश्च तथा ।**
**शक्रध्वजसदृशफलं तदेव तस्मिन् विनिर्दिष्टम् ॥ ११२ ॥**

विहगाः पक्षिणः । आदिग्रहणात् सरीसृपमधुमक्षिकाप्रभृतयो ग्रहीतव्याः । स्तम्भेषु द्वारेषु वा विहगादिभिरवलीनैः श्लिष्टैस्तेषु संलग्नैरित्यर्थः । तथा स्तम्भादिभिराकम्पितैश्चलितैः पतितैर्वा अधोगतैश्च शक्रध्वजसदृशफलम् । शक्रध्वज इन्द्रध्वजे शुभाशुभे यत् फलमुक्तं तदेव स्तम्भादौ विनिर्दिष्टमुक्तमिति ॥ ११२ ॥

तथैन्द्रध्वजे ।

[1]क्रव्यादकौशिककपोतककाककङ्कैः केतुस्थितैर्महदुशन्ति भयं नृपस्य ।
चाषेण चापि युवराजभयं वदन्ति श्येनो विलोचनभयं निपतन् करोति ॥

छत्रभङ्गपतने नृपमृत्युस्तस्करान् मधु करोति निलीनम् ।
हन्ति चाप्यथ पुरोहितमुल्का पार्थिवस्य महिषीमशनिश्च ॥
राज्ञीविनाशं पतिता पताका करोत्यवृष्टिं पिटकस्य पातः ।
मध्याग्रमूलेषु तु केतुभङ्गो निहन्ति मन्त्रिक्षितिपालपौरान् ॥
धूमावृते शिखिभयं तमसा च मोहो
व्यालैश्च भग्नपतितैर्न भवन्त्यमात्याः ।
ग्लायन्त्युदक्प्रभृति च क्रमशो द्विजाद्यान्
भङ्गे तु बन्धकिबधः कथितः कुमार्याः ॥

रज्जूत्सङ्गच्छेदने बालपीडा राज्ञो मातुः पीडनं मातृकायाः ।
यद्यत् कुर्युश्चारणा बालका वा तत्तत् तादृग्भावि पापं शुभं वा ॥
इत्यत्र यदुक्तं तत्सर्वं गृहपतेर्वक्तव्यमिति ॥

---

१ द्रष्टव्ये अस्यैव ग्रन्थस्य ५२०-५२१ पृष्ठे ।

अथ वास्तुनो विशेषमाह ।

**प्रागुत्तरोन्नते धनसुतक्षयः सुतबधश्च दुर्गन्धे ।**
**वक्रे बन्धुविनाशो न सन्ति गर्भाश्च दिङ्मूढे ॥ ११३ ॥**
**इच्छेद्यदि गृहवृद्धिं ततः समन्ताद्विवर्धयेत् तुल्यम् ।**
**एकोद्देशे दोषः प्रागथवाऽप्युत्तरे कुर्यात् ॥ ११४ ॥**

वास्तुनि प्राक् पूर्वस्यां दिश्युन्नते उत्तरस्यां वोन्नते स्थिते धनस्यार्थस्य सुतानां पुत्राणां च क्षयो विनाशो भवति । एवं दुर्गन्धे दुष्टगन्धे वास्तुनि सुतबधः पुत्रमरणं भवति । वक्रे अस्पष्टे, यथादिग्विभागमनवस्थिते बन्धुविनाशे बन्धुमरणम् । दिङ्मूढे दिग्भ्रष्टे यस्य दिक् न ज्ञायते तत्र गर्भा न सन्ति न भवन्ति विनश्यन्तीत्यर्थः ॥ ११३ ॥

एवमन्यास्वपि दिक्ष्वुन्नतस्थिते अनिष्टमेव फलं ज्ञेयम् । तस्माद्यदि गृहवृद्धिमिच्छेद्वाञ्छेत् ततस्तस्माद्धेतोः समन्तात् सर्वासु दिक्षु तुल्यं समं विवर्धयेत् कदाचिदप्येकोद्देशे एकस्मिन् प्रदेशे स्थाने यः परिहार्यो वृद्धिदोषोऽस्ति स प्राक् पूर्वस्यां दिशि कुर्यादथवोत्तरे उत्तरस्यां दिशि कुर्यादिति ॥ ११४ ॥

नन्वत्र यदुक्तमेकोद्देशे दोषः प्रागथवाऽप्युत्तरे कुर्यात् केन हेतुना क्रियत इति तदर्थं स्वल्पदोषमाह ।

**प्राग्भवति मित्रवैरं मृत्युभयं दक्षिणेन यदि वृद्धिः ।**
**अर्थविनाशः पश्चादुदग्विवृद्धिर्मनस्तापः ॥ ११५ ॥**

वास्तुनि प्राक् पूर्वस्यां दिशि वृद्धिर्भवति तदा मित्रवैरं सुहृद्भिः सह द्वेषो भवति । एवं दक्षिणे यदि वृद्धिर्भवति तदा मृत्युभयं मरणभीतिः । पश्चात् पश्चिमायां दिशि वृद्धेरर्थस्य धनस्य विनाशः क्षयः । उदगुत्तरस्यां दिशि वृद्धेर्मनस्तापश्चित्तसन्तापो भवति । एवं स्वल्पदोषत्वादुक्तमेकोद्देशे दोषः प्रागथवाऽप्युत्तरे कुर्यादिति ॥ ११५ ॥

अथ चतुःशालगृहे कस्यां दिशि किं कुर्यादित्याह ।

**ऐशान्यां देवगृहं महानसं चापि कार्यमाग्नेय्याम् ।**
**नैर्ऋत्यां भाण्डोपस्करोऽर्थधान्यानि मारुत्याम् ॥ ११६ ॥**

चतुःशाले ऐशान्यां पूर्वोत्तरस्यां दिशि देवतागृहं कार्यम् । आग्नेय्यां पूर्वदक्षिणस्यां महानसं रन्धनस्थानम् । नैर्ऋत्यां दक्षिणपश्चिमायां भाण्डोपस्करयं गृहोपायिकानां स्थानं कार्यम् । मारुत्यां वायव्यां पश्चिमोत्तरस्यामर्थानां धनानां धान्यानां च स्थापनं कार्यम् ॥ ११८ ॥

अत्राचार्येण सामान्येन प्रविभाग उक्तः क्रियाख्ये तन्त्रे विशेषतरः पठ्यते ।

तथा च ।

पूर्वस्यां श्रीगृहं प्रोक्तमाग्नेय्यां स्यान्महानसम् ।
शयनं दक्षिणायां च नैर्ऋत्यामायुधाश्रयम् ॥
भोजनं पश्चिमायां च वायव्यां धनसङ्ग्रहम् ।
उत्तरे द्रव्यसंस्थानमैशान्यां देवतागृहम् ॥

अत्रापि केचिद्द्वास्तुपुरुषप्रविभागमिच्छन्ति ।

तथा च ।

श्रीगृहेऽत्र ध्वजः कार्यो धूपश्चैव महानसे ।
सिंहो निद्रागृहे कार्यः श्वा कुर्यादायुधाश्रये ॥
वृषो भोजनशालायां कपिर्धान्यगृहे सदा ।
द्रव्यस्थाने सदा भद्रो रिक्तो देवगृहे तथा—इति ॥

अथ जलस्य दिक्प्रविभागेण शुभाशुभफलमाह ।

**प्राच्यादिस्थे सलिले सुतहानिः शिखिभयं रिपुभयं च ।**
**स्त्रीकलहः स्त्रीदौष्ट्यं नैःस्व्यं वित्तात्मजविवृद्धिः ॥ ११७ ॥**

वास्तुनः प्राच्यां पूर्वस्यां दिशि स्थिते सलिले सुतहानिः पुत्रमरणं भवति । एवमाग्नेय्यां शिखिभयमग्निभयम् । दक्षिणस्यां रिपुभयं शत्रुभयम् । नैर्ऋत्यां स्त्रीकलहः स्त्रीणामप्रीतिः । पश्चिमायां स्त्रीदौष्ट्यं स्त्रीणामुन्मत्तता दौःशील्यम् । वायव्ये नैःस्व्यं निर्धनत्वम् । उत्तरस्यां वित्तानां धनानां विवृद्धिः । ऐशान्यामात्मजानां पुत्राणां विवृद्धिर्भवति ॥ ११७ ॥

अथ गृहार्थमेतान् वृक्षान् वर्जयित्वा अन्यान् छिन्द्यादित्याह ।

**खगनिलयभग्नसंशुष्कदग्धदेवालयश्मशानस्थान् ।**
**क्षीरतरुधवविभीतकनिम्बारणिवर्जितान् छिन्द्यात् ॥ ११८ ॥**

खगाः पक्षिणस्तेषां निलयो गृहं यत्र यस्मिन् वृक्षे । तथा यो वृक्षो भग्नः । यश्च दग्धोऽग्निप्लुष्टः । यश्च देवालयस्थः सुरगृहे स्थितः । श्मशाने स्थितः । तथा क्षीरतरुः क्षीरवृक्षः पिप्पलादिकः । धवः । बिभीतकः । निम्बः । अरणिः । एतान् वृक्षान् वर्जयित्वा विहायान्यान् छिन्द्यात् शेषानन्यान् कल्पयेदिति ॥ ११८ ॥

अथ तरुच्छेदलक्षणं पतितस्य च शुभाशुभज्ञानमाह ।

**रात्रौ कृतबलिपूजं प्रदक्षिणं छेदयेद्दिवा वृक्षम् ।**
**धन्यमुदक्प्राक्पतनं न ग्राह्योऽतोऽन्यथा पतितः ॥ ११९ ॥**

वृक्षं तरुं रात्रौ कृतबलिपूजं निशि कृतो बलिरुपहारः पूजाऽर्चा च यस्य तं दिवा दिवसे प्रदक्षिणं प्रादक्षिण्येन प्राक्प्रभृति छेदयेत् ऐशानीमादितः कृत्वा पूर्वाग्नेययाम्यनैर्ऋत्यपश्चिमवायव्योत्तरान्तं यावत् । उदगुत्तरस्यां दिशि प्राक् पूर्वस्यां वा वृक्षस्य कल्पितस्य पतनं धन्यं प्रशस्तम् । अतोऽन्यथा पतितोऽन्यासु परिशिष्टासु दिक्षु पतितो न ग्राह्यस्त्याज्य इत्यर्थः ॥ ११९ ॥

अथ शुभाशुभत्वं वृक्षशल्यज्ञानमाह ।

**छेदो यद्यविकारी ततः शुभं दारु तद्गृहौपयिकम् ।**
**पीते तु मण्डले निर्दिशेत्तरोर्मध्यगां गोधाम् ॥ १२० ॥**
**मञ्जिष्ठाभे भेको नीले सर्पस्तथाऽरुणे सरटः ।**
**मुद्गाभेऽश्मा कपिले तु मूषकोऽम्भश्च खड्गाभे ॥ १२१ ॥**

वृक्षस्याविकारी विकाररहितश्छेदो यदि भवति ततस्तस्माद्धेतोस्तद्दारु काष्ठं गृहौपयिकं वेश्मन औपयोगिकं शुभं भवति । तरोर्वृक्षस्य छेदमध्ये पीते पीतवर्णे मण्डले दृष्टे स्वाभाविकं रूपमपहाय यदि दृश्यते तदा मध्यगां मध्ये तरोः स्थितां गोधां विनिर्दिशेद्वदेत् । गोधा प्राणिविशेषः ॥ १२० ॥

मञ्जिष्ठाभे मञ्जिष्ठावर्णे एवमेव मण्डले दृष्टे भेको मण्डूकः । एवं नीलमण्डले सर्प उरगः । तथा तेनैव प्रकारेणारुणे लोहितवर्णे मण्डले सरटः प्राणिविशेषः । कृकलास इति केचित् । मुद्गाभे मुद्गसदृशे मण्डले अश्मा पाषाणः । कपिले कपिलवर्णे मूषकः । खड्गाभे खड्गसदृशे मण्डले कृष्णे अम्भो जलं वृक्षस्य मध्यगतं ज्ञेयम् । पाषाणाद्ये तदेव लक्षणमिति ॥ १२१ ॥

अथ गृहपतेः परिभाषार्थमाह ।

**धान्यगोगुरुहुताशसुराणां**
**न स्वपेदुपरि नाप्यनुवंशम् ।**
**नोत्तरापरशिरा न च नग्नो**
**नैव चार्द्रचरणः श्रियमिच्छन् ॥ १२२ ॥**

धान्यानां व्रीहीणां गवां सुरभीणां गुरूणां पित्रादीनां हुताशनस्याग्नेः सुराणां देवानामुपरि पृष्ठे श्रियमिच्छंल्लक्ष्मीमभिलषन्न स्वपेन्न सुप्यात् । वंशान्युक्तानि ।[1]

रोगाद्वायुं पितृतो हुताशनं शोषसूत्रमपि विभवात् ।
मुख्याद्भृशं जयन्ताच्च भृङ्गमदितेश्च सुग्रीवम् ॥

इत्येवं वंशानामुपरि तिर्यक् कृत्वा तदनुसारेण शय्यां दत्वा न स्वपेत् सुप्यात् ।

उत्तरस्यां उदीच्यां अपरस्यां पश्चिमायां वा दिशि शिरः कृत्वा न स्वपेत् । नग्नो दिग्वासाश्च न स्वपेत् । नैव चार्द्रचरणो जलक्लिन्नपादः स्वपेत् । तथा च गृहस्थस्य स्वपतः पादस्थाने नागदन्ता न भवन्ति तथा शयीत ॥ १२२ ॥

तथा च विश्वकर्माह ।

शय्यानुवंशविन्यस्तातुला हन्यात् कुटुम्बिनः ।
कर्तुः शय्या स्वतानस्था नागदन्ताः क्षयावहाः ॥

अथ प्रवेशलक्षणमाह ।

**भूरिपुष्पविकरं सतोरणं तोयपूर्णकलशोपशोभितम् ।**
**धूपगन्धबलिपूजितामरं ब्राह्मणध्वनियुतं विशेद्गृहम् ॥ १२३ ॥**

एवंविधं गृहं वेश्म विशेत् प्रविशेत् । कीदृशं भूरिपुष्पविकरम् । बहुप्रकाराणां पुष्पाणां कुसुमानां विकरः समूहो यत्र । तथा सतोरणं तोरणसंयुक्तं तोरणं गृहाग्रे कुर्यात् । तोयपूर्णैर्जलपूरितैः कलशैरुदकुम्भैरुपशोभितं भूषितम् । धूपैर्गुग्गुलप्रभृतिभिर्गन्धैः सुगन्धद्रव्यैरगुरुप्रभृतिभिर्बलिभिरुपहारैश्च पूजिता

१ अस्यैवाध्यायस्य ६१ श्लोकः ।

अर्चिता अमरा देवता यत्र । तथा ब्राह्मणध्वनियुतं ब्राह्मणानां द्विजानां ध्वनिर्वेदशब्दस्तेन युतम् । अत्र सामान्येनोक्तं पूजितामरं तथापि वास्तुमध्यगता अमराः पूजनीया न बाह्यस्थाः शिखिपर्जन्यप्रभृतयोऽर्यमाद्या वा ।

तन्त्रान्तरेऽप्युक्तम् ।

ज्येष्ठस्य कर्मसिद्ध्यर्थं नव पञ्चगुणाः सुराः ।
यतस्तत्र वसन्त्येते मूर्धाद्यङ्गेषु कृत्स्नशः ॥
ततोऽपि विशिष्टा अन्येऽपि बाह्याः सुरा हिरण्यगर्भेणोक्ताः ।
देवताः सम्प्रवक्ष्यामि वास्तूनामनुपूर्वशः ॥
द्वारे प्रजापतिं विन्यात् द्वारदेशे ह्युमापतिम् ।
बलदेवो यमश्चैव दक्षिणस्यां च संस्थितौ ॥
स्कन्दः शेषोऽथ वरुणः पश्चिमायां दिशि स्थितः ।
आदित्या वसवो रुद्रा उत्तरां दिशमाश्रिताः ॥
ब्रह्मा चैव महेन्द्रश्च दिशमैन्द्रीं समाश्रितौ ।
कीर्तिर्धृतिश्च लक्ष्मीश्च वास्तुमध्ये प्रतिष्ठिताः ॥
हुत्वाऽग्निं गृहमध्ये तु दैवतान्यर्चयेद्बुधः ।
दिगन्तरेषु सर्वेषु दिक्षु चैव यथाक्रमम् ॥
कुलदैवतपूजां च कृत्वा च कुलमेधिनाम् ।
दिक्षु देवीषु सर्वासु विदिक्षु च यथाक्रमम् ॥

तथा च तन्त्रान्तरे पठ्यते ।

बाह्याभ्यन्तरदेवांस्तु वास्तुमध्ये यथास्थितान् ।
तथा च सर्वान् सम्पूज्य विधिनैव पुरोहितः ॥
वराहमिहिराचार्यकृते वास्तुमहोदधौ ।
अर्थिनामुत्पलश्चक्रे स्वाप्तये विवृतिप्लवम् ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ वास्तुविद्या नाम
द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

## अथ दकार्गलं व्याख्यायते ।

तत्रादावेव प्रयोजनप्रदर्शनार्थमाह ।

**धर्म्यं यशस्यं च वदाम्यतोऽहं दकार्गलं येन जलोपलब्धिः ।**
**पुंसां यथाङ्गेषु शिरास्तथैव क्षितावपि प्रोन्नतनिम्नसंस्थाः ॥ १ ॥**
**एकेन वर्णेन रसेन चाम्भश्च्युतं नभस्तो वसुधाविशेषात् ।**
**नानारसत्वं बहुवर्णतां च गतं परीक्ष्यं क्षितितुल्यमेव ॥ २ ॥**

अतोऽस्माद्वास्तुविद्याकरणादनन्तरमहं वराहमिहिरो दकार्गलं वदामि कथयामि । कीदृशं धर्म्यं यशस्यं च । धर्मं चावहति यशश्चाऽऽवहति ददातीत्यर्थः । दगार्गलं किमुच्यते । अत आह येन जलोपलब्धिः । जलस्योदकस्य उपलब्धिरुपलम्भनं प्राप्तिः । यथा येन प्रकारेण पुंसां पुरुषाणामङ्गेष्ववयवेषु शिरा नाड्यः प्रोन्नतनिम्नसंस्था अधरोत्तरभावेन । तथा तेन प्रकारेण क्षितौ भूमावपि अधरोत्तरभावेन प्रोन्नतनिम्नसंस्थिताः । अन्याः प्रोन्नता उच्चा अन्याश्च निम्नाः स्थिताः ॥ १ ॥

एकेन वर्णेनेति । अम्भो जलं नभस्त आकाशाच्च्युतं पतितमेकेन वर्णेनैकेन च स्वादेन वसुधाविशेषाद्भुवो नानाप्रकारत्वात् नानारसत्वं बहुस्वादुवर्णतां च गतं विचित्रवर्णत्वं प्राप्तमेवानेन प्रकारेण क्षितितुल्यं भूमिवर्णतुल्यं परीक्ष्यं विचार्यं नानारसवर्णत्वेनेति ॥ २ ॥

तथा च वक्ष्यति ।

[1]सशर्करा ताम्रमही कषायं क्षारं धरित्री कपिला करोति ।
आपाण्डुरायां लवणं प्रदिष्टमिष्टं पयो नीलवसुन्धरायाम्—इति ॥

अथ शिरानामान्याह ।

**पुरुहूतानलयमनिर्ऋतिवरुणपवनेन्दुशङ्करा देवाः ।**
**विज्ञातव्याः क्रमशः प्राच्याद्यानां दिशां पतयः ॥ ३ ॥**
**दिक्पतिसञ्ज्ञा च शिरा नवमी मध्ये महाशिरानाम्नी ।**
**एताभ्योऽन्याः शतशो विनिःसृता नामभिः प्रथिताः ॥ ४ ॥**

---

१ अस्यैवाध्यायस्य १०४ श्लोकः ।

**पातालादूर्ध्वशिरा शुभा चतुर्दिक्षु संस्थिता याश्च ।**
**कोणदिगुत्था न शुभाः शिरानिमित्तान्यतो वक्ष्ये ॥ ५ ॥**

पुरुहूतादय इन्द्राद्या देवाः क्रमशः क्रमेण प्राच्याद्यानां पूर्वाद्यानां दिशामाशानां पतयः स्वामिनः । तद्यथा । पुरुहूत इन्द्रः स पूर्वस्यां दिश्यधिपतिः । अनलोऽग्निराग्नेय्याम् । यमः पितृपतिर्दक्षिणस्याम् । निर्ऋती राक्षसाधिपतिर्नैर्ऋत्याम् । वरुणोऽपाम्पतिः पश्चिमायाम् । पवनो वायुर्वायव्याम् । इन्दुश्चन्द्रश्चोत्तरस्याम् । शङ्करो रुद्र ऐशान्याम् ॥ ३ ॥

दिक्पतिसञ्ज्ञया तन्नाम्नोपलक्षिता शिरा भवति । यथा पूर्वस्यां दिशि या शिरा सैन्द्री । आग्नेय्यामाग्नेयी । दक्षिणस्यां याम्या । एवं शेषास्वपि विज्ञेयम् । एवमष्टासु दिक्ष्वष्टौ शिरा भवन्ति । नवमी मध्ये महाशिरा-नाम्नी । आसां सर्वासां दिग्विदिक्स्थानां मध्ये मध्यभागे नवमी महाशिरा भवति । एताभ्यो नवभ्योऽन्याः शिराः शतशः शतप्रकारा विनिःसृता विनिर्गता नामभिः सञ्ज्ञाभिश्च प्रथिताः प्रख्याताः ॥ ४ ॥

तथा च वक्ष्यति ।

कुमुदा[१] नाम शिरा सा पुरुषत्रयवाहिनी भवति ।

पातालादूर्ध्वशिरा योद्गच्छति सा शुभा याश्च शिराश्चतुर्दिक्षु संस्थितास्ताश्च शुभाः । कोणदिगुत्था विदिगुत्पन्नाः शिरा न शुभाः । अतोऽस्मादनन्तरं शिरानिमित्तानि शिराचिह्नानि वक्ष्ये कथयिष्ये ॥ ५ ॥

तानि चाह ।

**यदि वेतसोऽम्बुरहिते देशे हस्तैस्त्रिभिस्ततः पश्चात् ।**
**सार्धे पुरुषे तोयं वहति शिरा पश्चिमा तत्र ॥ ६ ॥**
**चिह्नमपि चार्धपुरुषे मण्डूकः पाण्डुरोऽथ मृत् पीता ।**
**पुटभेदकश्च तस्मिन् पाषाणो भवति तोयमधः ॥ ७ ॥**

अम्बुरहिते जलवर्जिते देशे यत्र स्वभावत एव जलं न विद्यते तत्र देशे जाङ्गले यदि वेतसो वेतसवृक्षो दृश्यते ततस्तस्माद्वेतसवृक्षात् त्रिभिर्हस्तैः करैः पश्चात् पश्चिमायां दिशि सार्धे पुरुषे खाते अधस्तोयं वक्तव्यम् ।

---

१ अस्यैवाध्यायस्य २१ श्लोकः ।

पुरुषशब्देनात्रोर्ध्वबाहुः पुरुषो ज्ञेयः सच विंशत्यधिकमङ्गुलशतं भवतीति सर्वत्र परिभाषा । ततश्च तस्मिन् खाते पश्चिमा शिरा वहति ॥ ६ ॥

अर्धपुरुषे खाते चिह्नम् । किं तत् । मण्डूको भेकः पाण्डुरः पाण्डुरवर्ण ईषच्छ्वेतः । तथानन्तरं पीता पीतवर्णा मृन्मृत्तिका । ततस्तस्मिन् खाते पुटभेदकः पाषाणो भवति पुटैर्भिद्यत इति पुटभेदस्तदधस्तोयं जलं भवति ॥ ७ ॥

तथा च सारस्वतः ।

निर्जले वेतसं दृष्ट्वा तस्मादृद्धादपि त्रयम् ।
पश्चिमायां दिशि ज्ञेयमधः सार्धेन वै जलम् ॥
नरोऽत्र षष्टिर्द्विगुणा चाङ्गुलानां प्रकीर्तितः ।
तत्र खात्वाऽर्धपुरुषं भेकः पाण्डुरवर्णकः ॥
मृत् पीता पुटभेदश्च पाषाणोऽधस्ततो जलम् ।
शिरा पश्चिमदिक्स्थात्र वहतीति विनिर्दिशेत् ॥

अन्यदप्याह ।

**जम्ब्वाश्चोदग्घस्तैस्त्रिभिः शिराधो नरद्वये पूर्वा ।**
**मृल्लोहगन्धिका पाण्डुरा च पुरुषेऽत्र मण्डूकः ॥ ८ ॥**

अम्बुरहिते देशे यदि जम्बूवृक्षो दृश्यते तदा तस्माज्जम्बूवृक्षादुदगुत्तरस्यां दिशि त्रिभिर्हस्तैः करैरनन्तरमधो नरद्वये खाते पूर्वा शिरा वहति । अत्रापि चिह्नानि भवन्ति । अत्र पुरुषे खाते मृन्मृत्तिका लोहगन्धिका लोहसदृशगन्धा भवति ततः परं परत ईषच्छुक्ला ततो मण्डूको भेक इति ॥ ८ ॥

अन्यदप्याह ।

**जम्बूवृक्षस्य प्राग्वल्मीको यदि भवेत् समीपस्थः ।**
**तस्माद्दक्षिणपार्श्वे सलिलं पुरुषद्वये स्वादु ॥ ९ ॥**
**अर्धपुरुषे च मत्स्यः पारावतसन्निभश्च पाषाणः ।**
**मृद्भवति चात्र नीला दीर्घं कालं च बहु तोयम् ॥ १०॥**

जम्बूवृक्षस्य प्राक् पूर्वस्यां दिशि समीपस्थो निकटवर्ती वल्मीको वल्मीककृतो मृत्स्तूपो भवति तदाऽस्माज्जम्बूवृक्षाद्दक्षिणपार्श्वे दक्षिणस्यां दिशि

त्रिभिरेव हस्तैः । यत्र हस्तप्रहणमाचार्यो न करोति तत्र प्रागुक्तं प्रमाणं सर्वत्र योज्यमित्यागमः । एवं त्रिभिर्हस्तैरधः पुरुषद्वये खाते स्वादु मिष्टं जलं भवति ॥ ६ ॥

तत्रापि चिन्हं भवति । अर्धपुरुषे च खाते मत्स्यो दृश्यते । ततः पारावतः पक्षी तत्सन्निभस्तद्वर्णः पाषाणो भवति । तथा चात्र नीला नीलवर्णा मृद्भवति । दीर्घं चिरकालं बहु च तोयं प्रभूतं जलं भवति ॥ १० ॥

तथा च सारस्वतः ।

जम्बूवृक्षात् पूर्वभागे वल्मीको यदि दृश्यते ।
तस्माद्दक्षिणतो हस्तांस्त्रींस्त्यक्त्वाऽधो जलं वदेत् ॥
नरद्वयेऽर्धपुरुषे मत्स्योऽश्मा पक्षिसन्निभः ।
ततोऽपि मृत्तिका नीला ततो मृष्टं जलं वदेत् ॥

अन्यदप्याह ।

**पश्चादुदुम्बरस्य त्रिभिरेव करैर्नरद्वये सार्धे ।**
**पुरुषे सितोऽहिरश्माञ्जनोपमोऽधः शिरा सुजला ॥ ११ ॥**

यदि जलवर्जिते देशे उदुम्बरस्य वृक्षोऽत्र दृश्यते वल्मीकयुतो वियुतो वा तदा तत्रोदुम्बरस्य पश्चात् पश्चिमायां दिशि त्रिभिरेव हस्तैरनन्तरमधः सार्धे नरद्वये सुजला शोभनसलिला शिरा भवति । अत्रापि चिह्नानि । अर्धे पुरुषे खाते सितः श्वेतोऽहिः सर्पो दृश्यते । ततः पाषाणोऽञ्जनोपमोऽञ्जनसदृशोऽतिकृष्ण इत्यर्थः । ततोऽधः शिरा सुजला शोभनतोया वहति ॥ ११ ॥

अन्यदप्याह ।

**उदगर्जुनस्य दृश्यो वल्मीको यदि ततोऽर्जुनाद्धस्तैः ।**
**त्रिभिरम्बु भवति पुरुषैस्त्रिभिरर्धसमन्वितैः पश्चात् ॥ १२ ॥**
**श्वेता गोधार्धनरे पुरुषे मृद्धूसरा ततः कृष्णा ।**
**पीता सिता ससिकता ततो जलं निर्दिशेदमितम् ॥ १३ ॥**

अर्जुनवृक्षस्योदगुत्तरस्यां दिशि यदि वल्मीको दृश्यते वल्मीककृतो मृत्स्तूपो यदि भवति । ततोऽस्मादर्जुनात् पश्चात् पश्चिमायां दिशि त्रिभिर्हस्तैरतीतैरधस्त्रिभिरर्धसमन्वितैः सार्धैस्त्रिभिः पुरुषैरम्बु जलं भवति ॥ १२ ॥

श्वेतेति । अथ चिह्नानि भवन्ति । अर्धनरे खाते श्वेता शुक्लवर्णा गोधा प्राणिविशेषो दृश्यते । पुरुषे खाते धूसरा कृष्णश्वेता मृन्मृत्तिका । ततोऽनन्तरं कृष्णा मृत् । ततः पीतवर्णा । ततोऽपि सिता श्वेता सिकता वालुकासहिता । ततोऽनन्तरममितं प्रभूतं जलमुदकं निर्दिशेद्वदेत् ॥ १३ ॥

अन्यदप्याह ।

**वल्मीकोपचितायां निर्गुण्ड्यां दक्षिणेन कथितकरैः ।**
**पुरुषद्वये सपादे स्वादु जलं भवति चाशोष्यम् ॥ १४ ॥**
**रोहितमत्स्योऽर्धनरे मृत् कपिला पाण्डुरा ततः परतः ।**
**सिकता सशर्कराऽथ क्रमेण परतो भवत्यम्भः ॥ १५ ॥**

निर्गुण्डी द्रव्यविशेषः । वनमिति प्रसिद्धम् । वल्मीकोपचिता वल्मीककृता मृत्स्तूपसंयुक्ता तत्र निर्गुण्ड्यां दक्षिणस्यां दिशि कथितकरैरुक्तहस्तैस्त्रिभिरित्यर्थः । पुरुषद्वये सपादे पादाधिके खाते अधः स्वादु मृष्टं जलमुदकमशोष्यं भवति ॥ १४ ॥

रोहितवर्णो मत्स्योऽर्धनरे अर्धपुरुषे खाते । ततो मृत्तिका कपिला गौरवर्णा । ततः परतः पाण्डुरा शुक्लवर्णा किञ्चित् । ततः सिकता वालुका सशर्कराऽथ सकर्परिका । क्रमेण परिपाट्या । ततः परतोऽम्भो जलं भवति ॥ १५ ॥

अन्यदप्याह ।

**पूर्वेण यदि बदर्या वल्मीको दृश्यते जलं पश्चात् ।**
**पुरुषैस्त्रिभिरादेश्यं श्वेता गृहगोधिकार्द्धनरे ॥ १६ ॥**

यदि बदर्या बदरीवृक्षस्य पूर्वेण पूर्वभागे वल्मीको वल्मीककृतो मृत्स्तूपो दृश्यते तदा बदर्याः पश्चात् पश्चिमायां दिशि त्रिभिः करैः प्रागुक्तैः परतस्त्रिभिः पुरुषैरधो जलमुदकमादेश्यं वक्तव्यम् । अर्धनरे खाते श्वेता गृहगोधिका दृश्यते । गृहगोधिका कुड्यमत्स्या ॥ १६ ॥

तथा च सारस्वतः ।

पूर्वभागं बदर्याश्चेद्वल्मीको दृश्यते जलम् ।
पश्चाद्धस्तत्रये वाच्यं खाते तु पुरुषत्रये ॥

अधःखातेऽर्धपुरुषे दृश्यते गृहगोधिका ।
श्वेतवर्णा ततोऽधःस्थं जलं भवति निर्मलम् ॥

अन्यदप्याह ।

**सपलाशा बदरी चेद्दिश्यपरस्यां ततो जलं भवति ।**
**पुरुषत्रये सपादे पुरुषेऽत्र च दुण्डुभश्चिह्नम् ॥ १७ ॥**

चेच्छब्दो यद्यर्थे । यदि जलरहिते देशे सपलाशा पलाशवृक्षसहिता बदरी दृश्यते सवल्मीका वल्मीकविमुखा वा । तदाऽपरस्यां पश्चिमायां दिशि ततस्तस्या बदर्यास्त्रिभिरेव करैः परतोऽधः सपादे पुरुषत्रये जलं तोयं भवति । अत्र च चिह्नम् । पुरुषे खाते दुण्डुभो निर्विषः सर्पो दृश्यते ॥ १७ ॥

तथा च सारस्वतः ।

पलाशयुक्ता बदरी यत्र दृश्या ततोऽपरे ।
हस्तत्रयादधस्तोयं सपादे पुरुषत्रये ॥
नरे तु दुण्डुभः सर्पो निर्विषश्चिह्नमेव च ।
अधस्तोयं च सुस्वादु दीर्घकालं प्रवाहितम् ॥

अन्यदप्याह ।

**बिल्वोदुम्बरयोगे विहाय हस्तत्रयं तु याम्येन ।**
**पुरुषैस्त्रिभिरम्बु भवेत् कृष्णोऽर्द्धनरे च मण्डूकः ॥ १८ ॥**

बिल्वोदुम्बरयोर्यत्र योगो बिल्व उदुम्बरवृक्षश्च यत्र समेतौ भवतः । तस्मिन् याम्येन दक्षिणस्यां दिशि हस्तत्रयं विहाय त्यक्त्वा त्रिभिः सार्धैः पुरुषैरधोऽम्बु जलं भवेत् स्यात् । अर्धनरे खाते कृष्णो मण्डूको दृश्यते ॥ १८ ॥

अन्यदप्याह ।

**काकोदुम्बरिकायां वल्मीको दृश्यते शिरा तस्मिन् ।**
**पुरुषत्रये सपादे पश्चिमदिक्स्था वहति सा च ॥ १९ ॥**
**आपाण्डुपीतिका मृद्गोरसवर्णश्च भवति पाषाणः ।**
**पुरुषार्धे कुमुदनिभो दृष्टिपथं मूषको याति ॥ २० ॥**

काकोदुम्बरिका फल्गुवृक्षः स यत्र दृश्यते तस्यां दिशि यदि समीपे वल्मीको वल्मीककृतो मृत्स्तूपो दृश्यते तदा तस्मिन्नेव वल्मीके शिरा भवति। सपादे पुरुषत्रये खाते अधः सा च शिरा पश्चिमदिक्स्था वहति॥ १९॥

अथ चिह्नानि। आपाण्डुपीतिका मृत्। पाण्डुरा पीतवर्णा च मृत्तिका प्रथमं भवति। ततो गोरसवर्णः शुक्लवर्णः पाषाणोऽश्मा भवति। पुरुषार्धे खाते कुमुदनिभः श्वेतवर्णो मूषक आखुर्दृष्टिपथं दर्शनं याति दृश्यत इत्यर्थः॥ २०॥

अन्यदप्याह।

**जलपरिहीने देशे वृक्षः कम्पिल्लको यदा दृश्यः।**
**प्राच्यां हस्तत्रितये वहति शिरा दक्षिणा प्रथमम्॥ २१॥**
**मृन्नीलोत्पलवर्णा कापोता दृश्यते ततस्तस्मिन्।**
**हस्तेऽजगन्धको मत्स्यकः पयोऽल्पं च सक्षारम्॥ २२॥**

जलपरिहीने निर्जले देशे यदा कम्पिल्लको वृक्षो दृश्यो भवति तदा तस्य वृक्षस्य प्राच्यां पूर्वस्यां दिशि हस्तत्रितये करत्रयात् परतोऽधः सपादैस्त्रिभिर्नरैः शिरा वहति॥ २१॥

प्रथममादौ मृन्नीलोत्पलवर्णा भवति ततोऽनन्तरं तस्मिन् खाते कापोता कपोतवर्णा मृत्तिका दृश्यते। हस्तेन खातेनाजगन्धश्छागलसदृशगन्धो मत्स्यो मीनो दृश्यते। तदनन्तरमल्पं पयः पानीयं तच्च सक्षारं भवति सलवणमित्यर्थः॥ २२॥

तथा च सारस्वतः।

निर्जले यत्र कम्पिल्लो दृश्यस्तस्मात् करत्रये।
प्राच्यां त्रिभिर्नरैर्वारि सा भवेद्दक्षिणा शिरा॥
अधो नीलोत्पलाभासा मृत् कापोतप्रभा क्रमात्।
हस्तेऽजगन्धको मत्स्यो जलमल्पमशोभनम्॥

अन्यदप्याह।

**शोणाकतरोरपरोत्तरे शिरा द्वौ करावतिक्रम्य।**
**कुमुदा नाम शिरा सा पुरुषत्रयवाहिनी भवति॥ २३॥**

जलपरिहीने देशे यत्र शोणाकवृक्षो दृश्यते तस्माच्छोणाकतरोरप-रोत्तरे वायव्यां दिशि द्वौ करौ हस्तद्वयमतिक्रम्य परित्यज्य कुमुदा नाम शिरा भवति सा च पुरुषत्रयवाहनी नरत्रयेऽम्भो भवति ॥ २३ ॥

अन्यदप्याह ।

**आसन्नो वल्मीको दक्षिणपार्श्वे विभीतकस्य यदि ।**
**अध्यर्धे भवति शिरा पुरुषे ज्ञेया दिशि प्राच्याम् ॥ २४ ॥**

यदि विभीतकवृक्षस्य दक्षिणपार्श्वे दक्षिणस्यां दिशि आसन्नो निकटवर्ती वल्मीको भवति तदा तस्य विभीतकस्य प्राच्यां पूर्वस्यां हस्तद्वयात् परतः सार्धे पुरुषे अधः शिरा ज्ञेया ज्ञातव्या ॥ २४ ॥

तथा च सारस्वतः ।

विभीतकस्य याम्यायां वल्मीको यदि दृश्यते ।
करद्वयान्तरे पूर्वे सार्धे च पुरुषे जलम् ॥

अथान्यदप्याह ।

**तस्यैव पश्चिमायां दिशि वल्मीको यदा भवेद्धस्ते ।**
**तत्रोदग्भवति शिरा चतुर्भिरर्धाधिकैः पुरुषैः ॥ २५ ॥**
**श्वेतो विश्वम्भरकः प्रथमे पुरुषे तु कुङ्कुमाभोऽश्मा ।**
**अपरस्यां दिशि च शिरा नश्यति वर्षत्रयेऽतीते ॥ २६ ॥**

तस्यैव विभीतकस्य पश्चिमायां दिशि वल्मीको यदा भवेत् स्यात् तदा तस्य विभीतकस्य उदगुत्तरस्यां दिशि हस्ते त्यक्ते अधश्चतुर्भिरर्धाधिकैः सार्धैश्चतुर्भिः पुरुषैः शिरा भवति ॥ २५ ॥

अत्रापि चिह्नानि । प्रथमे पुरुषे खाते श्वेतः श्वेतवर्णो विश्वम्भरकः प्राणिविशेषो दृश्यते । तदनन्तरं कुङ्कुमाभः कुङ्कुमकान्तिरश्मा पाषाणो दृश्यते । ततोऽनन्तरमपरस्यां पश्चिमायां दिशि शिरा वहति । सा च शिरा वर्षत्रये अतीते अतिक्रान्ते नश्यति क्षयं याति ॥ २६ ॥

अन्यदप्याह ।

**सकुशासित ऐशान्यां वल्मीको यत्र कोविदारस्य ।**
**मध्ये तयोर्नरैरर्धपञ्चमैस्तोयमक्षोभ्यम् ॥ २७ ॥**

**प्रथमे पुरुषे भुजगः कमलोदरसन्निभो मही रक्ता ।**
**कुरुविन्दः पाषाणश्चिह्नान्येतानि वाच्यानि ॥ २८ ॥**

यत्र यस्मिन् स्थाने कोविदारस्य कोविदारवृक्षस्य ऐशान्यां पूर्वोत्तरस्यां दिशि सकुशः दर्भयुक्तो वल्मीको भवति सच सितः श्वेतस्तत्र तयोः कोविदारवल्मीकयोर्मध्ये अन्तरे नरैः पुरुषैरर्धपञ्चमैः सार्धैश्चतुर्भिरधस्तोयं जलमक्षोभ्यं यत् क्षोभयितुं न शक्यते तद्भवति ॥ २७ ॥

अत्र चिन्हानि भवन्ति । प्रथमे पुरुषे खाते अधो भुजगः सर्पः कमलोदरसन्निभः पद्मगर्भाभो दृश्यते । ततोऽनन्तरं मही भू रक्ता लोहितवर्णा । तदनन्तरं कुरुविन्दः पाषाणः । एतानि चिन्हानि लक्षणानि अत्र वाच्यानि वक्तव्यानि ॥ २८ ॥

अन्यदप्याह ।

**यदि भवति सप्तपर्णो वल्मीकवृतस्तदुत्तरे तोयम् ।**
**वाच्यं पुरुषैः पञ्चभिरत्रापि भवन्ति चिह्नानि ॥ २९ ॥**
**पुरुषार्धे मण्डूको हरितो हरितालसन्निभा भूश्च ।**
**पाषाणोऽभ्रनिकाशः सौम्या च शिरा शुभाम्बुवहा ॥ ३० ॥**

सप्तपर्णो वृक्षविशेषः । सच यदि वल्मीकसंयुतो भवति तदुत्तरे तस्मात् सप्तपर्णादुत्तरे उत्तरस्यां दिशि हस्तात् परतः पञ्चभिः पुरुषैः । अधस्तोयं वाच्यम् । चिन्हानि वक्ष्यमाणानि भवन्ति ॥ २९ ॥

पुरुषेऽर्धे हरितः शुकवर्णो मण्डूको दर्दुरः । तथाऽत्र हरितालसन्निभा हरितालवर्णा भूरवनिर्भवति । अभ्रनिकाशोऽभ्रसदृशो मेघाभः कृष्णः पाषाणोऽश्मा । ततः सौम्योत्तरा च शिरा शुभाम्बुवहा मृष्टजलवाहिनी भवति ॥ ३० ॥

तथा च सारस्वतः ।

भुजङ्गगृहसंयुक्तो यत्र स्यात् सप्तपर्णकः ।
ततः सौम्ये हस्तमात्रात् पञ्चभिः पुरुषैरधः ॥
वाच्यं जलं नरार्धे तु मण्डूको हरितो भवेत् ।
हरितालनिभा भूश्च मेघाभोऽश्मा ततः शिरा ॥

अन्यदप्याह ।

सर्वेषां वृक्षाणामधः स्थितो दर्दुरो यदा दृश्यः ।
तस्माद्धस्ते तोयं चतुर्भिरर्धाधिकैः पुरुषैः ॥ ३१ ॥
पुरुषे तु भवति नकुलो नीला मृत् पीतिका ततः श्वेता ।
दर्दुरसमानरूपः पाषाणो दृश्यते चात्र ॥ ३२ ॥

सर्वेषां वृक्षाणामशेषाणां तरूणां येषां केषाञ्चिद्यदाधः स्थितः मूले समवस्थितो दर्दुरो मण्डूको दृश्यते ततस्तस्माद्वृक्षादुत्तरस्यां दिशि हस्ते तोयमधश्चतुर्भिरर्धाधिकैः पुरुषैः सार्धैश्चतुर्भिर्नरैर्भवति ॥ ३१ ॥

अथ चिन्हानि । पुरुषे खाते नकुलो भवति । ततो नीला मृत् । ततः पीता । ततः श्वेता मृत् । ततो दर्दुरसमानरूपो मण्डूकसदृशः पाषाणोऽत्र दृश्यते तदधस्तोयम् ॥ ३२ ॥

तथा च सारस्वतः ।

तरूणां यत्र सर्वेषामधःस्थो दर्दुरो भवेत् ।
वृक्षादुदग्दिशि जलं हस्तात् सार्धैर्नरैरधः ॥
चतुर्भिः पुरुषे खाते नकुलो नीलमृत्तिका ।
पीतश्वेता ततो भेकसदृशोऽश्मा प्रदृश्यते ॥

अन्यदप्याह ।

यद्यहिनिलयो दृश्यो दक्षिणतः संस्थितः करञ्जस्य ।
हस्तद्वये तु याम्ये पुरुषत्रितये शिरा सार्धे ॥ ३३ ॥
कच्छपकः पुरुषार्द्धे प्रथमं चोद्भिद्यते शिरा पूर्वा ।
उदगन्या स्वादुजला हरितोऽश्माधस्ततस्तोयम् ॥ ३४ ॥

यदि करञ्जवृक्षस्य दक्षिणतो दक्षिणस्यां दिशि संस्थितोऽहिनिलयः सर्पगृहं वल्मीको दृश्यते तदा याम्ये दक्षिणे करञ्जाद्धस्तद्वये हस्तद्वयं त्यक्त्वा अधः सार्धे पुरुषत्रितये शिरा भवति ॥ ३३ ॥

अथ चिह्नानि । पुरुषार्धे खाते कच्छपकः कूर्मो दृश्यते । तत्र प्रथममादौ पूर्वा शिरा उद्भिद्यते दृश्यते । ततोऽन्या द्वितीया उदगुत्तरस्यां दिशि

शिरा स्वादुजला मृष्टोदका उद्भिद्यते। अथो हरित: शुकवर्णोऽश्मा भवति। तत: परं तोयं जलं भवति ॥ ३४ ॥

अन्यदप्याह।

**उत्तरतश्च मधूकादहिनिलयः पश्चिमे तरोस्तोयम्।**
**परिहृत्य पञ्च हस्तानर्धाष्टमपौरुषान् प्रथमम् ॥ ३५ ॥**
**अहिराजः पुरुषेऽस्मिन् धूम्रा धात्री कुलुत्थवर्णोऽश्मा।**
**माहेन्द्री भवति शिरा वहति सफेनं सदा तोयम् ॥ ३६ ॥**

मधूकान्मधूकवृक्षादुत्तरत उत्तरस्यां दिशि यद्यहिनिलयो वल्मीको दृश्यते तदा तरोर्मधूकात् पश्चिमे पश्चिमायां दिशि पञ्च हस्तान् परिहृत्य त्यक्त्वा ततोऽधोऽर्धाष्टमपौरुषान् खात्वा सार्धैः सप्तभिर्नरैरधस्तोयं जलं भवति ॥ ३५ ॥

प्रथममादावेकस्मिन् पुरुषे खाते अहिराज: सर्पराड् दृश्यते। ततो धूम्रा रक्तश्यामा धात्री भू:। तत: कुलुत्थवर्णोऽश्मा पाषाण:। तत्र च माहेन्द्री पूर्वा शिरा भवति। सा च सदा सर्वकालं सफेनं फेनसंयुक्तं तोयं जलं वहति ॥ ३६ ॥

अन्यदप्याह।

**वल्मीकः स्निग्धो दक्षिणेन तिलकस्य सकुशदूर्वश्चेत्।**
**पुरुषैः पञ्चभिरम्भो दिशि वारुण्यां शिरा पूर्वा ॥ ३७ ॥**

तिलकवृक्षस्य दक्षिणे वल्मीक: स्निग्ध: सकुशदूर्व: कुशैर्दर्भैर्दूर्वाभि: शाद्वलैश्च युक्तो यदि भवति तदा तिलकवृक्षस्य वारुण्यां पश्चिमायां दिशि पञ्चभिर्हस्तै: परतोऽध: पञ्चभि: पुरुषैरम्भो जलं भवति तत्र पूर्वा शिरा ॥ ३७ ॥

तथा च सारस्वत:।

तिलकाद्दक्षिणे स्निग्ध: कुशदूर्वासमायुत:।
वल्मीकात्त्वन्तरे पञ्च हस्तान् सन्त्यज्य पश्चिमे ॥
नरै: पञ्चभिरम्भोऽध: शिरा पूर्वाच विद्यते।

अन्यदप्याह।

**सर्पावासः पश्चाद्यदा कदम्बस्य दक्षिणेन जलम्।**
**परतो हस्तत्रितयात् षड्भिः पुरुषैस्तुरीयोनैः ॥ ३८ ॥**

**कौबेरी चात्र शिरा वहति जलं लोहगन्धि चाक्षोभ्यम् ।**
**कनकनिभो मण्डूको नरमात्रे मृत्तिका पीता ॥ ३९ ॥**

यदि कदम्बस्य वृक्षस्य पश्चात् पश्चिमायां दिशि सर्पावासो वल्मीको दृश्यते दक्षिणस्यां दिशि हस्तत्रितयात् परतोऽनन्तरमधः षड्भिः पुरुषैस्तुरीयोनैश्चतुर्भागरहितैरित्यर्थः ॥ ३८ ॥

तत्र जलं वहति । तत्र च कौबेरी उत्तरा शिरा भवति तस्यां च लोहगन्धि जलं लोहगन्धसदृशमुदकमक्षोभ्यं च वहति । अतिप्रभूतमित्यर्थः । नरमात्रे पुरुषमात्रे खाते कनकनिभः सुवर्णसदृशो मण्डूको भवति । पीता पीतवर्णा मृत्तिका ॥ ३९ ॥

अन्यदप्याह ।

**वल्मीकसंवृतो यदि तालो वा भवति नालिकेरो वा ।**
**पश्चात् षड्भिर्हस्तैर्नरैश्चतुर्भिः शिरा याम्या ॥ ४० ॥**

यदि वल्मीकसंवृतो वल्मीकयुक्तस्तालवृक्षो भवति नालिकेरो वा वल्मीकसंवृतो भवति, तदा तस्य तालस्य नालिकेरस्य वा पश्चात् पश्चिमायां दिशि षड्भिर्हस्तैः परतश्चतुर्भिर्नरैरधः शिरा याम्या दक्षिणा वहति ॥ ४० ॥

अन्यदप्याह ।

**याम्येन कपित्थस्याहिसंश्रयश्चेदुदग्जलं वाच्यम् ।**
**सप्त परित्यज्य करान् खात्वा पुरुषान् जलं पञ्च ॥ ४१ ॥**
**कर्बुरकोऽहिः पुरुषे कृष्णा मृत् पुटभिदपि च पाषाणः ।**
**श्वेता मृत् पश्चिमतः शिरा ततश्चोत्तरा भवति ॥ ४२ ॥**

याम्येनेति । कपित्थवृक्षस्य याम्येन दक्षिणस्यां दिशि यद्यहिसंश्रयो वल्मीको भवेत् तत उदगुत्तरस्यां दिशि कपित्थस्य सप्त करान् हस्तान् परित्यज्य पञ्च पुरुषान् खात्वाऽधो जलं वाच्यम् ॥ ४१ ॥

कर्बुरकोऽहिरिति । पुरुषे खाते, कर्बुरकः कृष्णशुक्लः कपिलवर्णोऽहिः सर्पो भवति । तथा कृष्णा कृष्णवर्णा मृत् । ततः पुटभित् पुटभेदकः पाषाणोऽश्मा । पुटैर्दलैर्भिद्यत इति पुटभित् । ततः श्वेता मृत् । तत्र च पश्चिमायां दिशि शिरा एका भवति । ततोऽनन्तरमुत्तरा शिरा च भवति ॥ ४२ ॥

अन्यदप्याह ।

अश्मन्तकस्य वामे बदरी वा दृश्यतेऽहिनिलयो वा ।
षड्भिरुदक् तस्य करैः सार्धे पुरुषत्रये तोयम् ॥ ४३ ॥
कूर्मः प्रथमे पुरुषे पाषाणो धूसरः ससिकता मृत् ।
आदौ च शिरा याम्या पूर्वोत्तरतो द्वितीया च ॥ ४४ ॥

अश्मंन्तकस्य वृक्षस्य वामे उत्तरस्यां दिशि बदरीवृक्षो दृश्यते । अहिनिलयो वल्मीको वा दृश्यते तदा तस्याश्मन्तकस्योदगुत्तरस्यां दिशि षड्भिः करैर्हस्तैः परतः सार्धे पुरुषत्रये अधस्तोयं जलं भवति ॥ ४३ ॥

तत्र चिह्नानि । पुरुषे खाते कूर्मो दृश्यते । ततः पाषाणो धूसरः कृष्णश्वेतः । ततः ससिकता मृत् । आदौ प्रथमं याम्या दक्षिणा शिरा भवति । द्वितीया पूर्वोत्तरा ऐशानी शिरा भवति ॥ ४४ ॥

अन्यदप्याह ।

वामेन हरिद्रतरोर्वल्मीकश्चेज्जलं भवति पूर्वे ।
हस्तत्रितये सत्र्यंशैः पुम्भिः पञ्चभिर्भवति ॥ ४५ ॥
नीलो भुजगः पुरुषे मृत् पीता मरकतोपमश्चाश्मा ।
कृष्णा भूः प्रथमं वारुणी शिरा दक्षिणेनान्या ॥ ४६ ॥

हरिद्रतरोर्वामेनोत्तरेण यदि वल्मीको दृश्यते तदा हरिद्रतरोः पूर्वं पूर्वस्यां दिशि हस्तत्रितये परतः पुम्भिः पुरुषैः पञ्चभिः सत्र्यंशैस्त्रिभागाधिकैरधो जलं भवति ॥ ४५ ॥

अथ प्रथमे पुरुषे खाते नीलो भुजगः सर्पो दृश्यते । ततो मृत् पीता । अश्मा पाषाणो मरकतोपमः । मरकतसदृशः । ततः कृष्णा भूः । प्रथममादौ वारुणी शिरा । अन्या द्वितीया दक्षिणेन भवति ॥ ४६ ॥

अन्यदप्याह ।

जलपरिहीने देशे दृश्यन्तेऽनूपजानि चेन्निमित्तानि ।
वीरणादूर्वा मृदवश्च यत्र तस्मिन् जलं पुरुषे ॥ ४७ ॥
भार्ङ्गी त्रिवृता दन्ती सूकरपादी च लक्ष्मणा चैव ।
नवमालिका च हस्तद्वयेऽम्बु याम्ये त्रिभिः पुरुषैः ॥ ४८ ॥

यत्र जलरहिते देशे अनूपजानि अनूपसम्भवानि निमित्तानि चिन्हानि दृश्यन्तेऽवलोक्यन्ते । अनूपे बहूदके स्थाने यानि यानि लक्षणानि भवन्ति तानि च तत्र दृश्यन्त इत्यर्थः । तथा वीरणस्तृणविशेषः । दूर्वा शाद्वलम् । एते यत्र मृदवोऽतिकोमलास्तत्राद्यपुरुषे जलं भवति ॥ ४७ ॥

अन्यदप्याह ।

भार्ङ्गी प्रसिद्धा । त्रिवृता त्रिवृत् । दन्ती । सूकरपादी । लक्ष्मणा । नवमालिका । एताः सर्वा एव स्वनामभिः सुप्रसिद्धाः । एता ओषधयो यत्र सन्ति तत्र याम्ये दक्षिणे हस्तद्वये त्यक्ते अधस्त्रिभिः पुरुषैरम्बु भवति ॥ ४८ ॥

अन्यदप्याह ।

**स्निग्धाः प्रलम्बशाखा वामनविकटद्रुमाः समीपजलाः ।**
**सुषिरा जर्जरपत्रा रूक्षाश्च जलेन सन्त्यक्ताः ॥ ४९ ॥**

स्निग्धाः प्रलम्बशाखा वामनविकटद्रुमाः समीपजलाः । ये द्रुमा वृक्षाः स्निग्धाः सस्नेहाः । प्रलम्बशाखा दीर्घलताः । वामना अतिह्रस्वाः विकटा विस्तीर्णाः । एते सर्व एव समीपजलाः सन्निकृष्टोदकाः । तथा ये द्रुमाः सुषिरा अन्तरसाराः । जर्जरपत्रा विवर्णपत्राः । ये च रूक्षा निःस्नेहाः । ते सर्वे जलेन उदकेन सन्त्यक्ता वर्जिताः । तत्र जलं न भवतीत्यर्थः ॥ ४९ ॥

अन्यदप्याह ।

**तिलकाम्रातकवरुणकभल्लातकबिल्वतिन्दुकाङ्कोलाः ।**
**पिण्डारशिरीषाञ्जनपरूषका वञ्जुलोऽतिबला ॥ ५० ॥**
**एते यदि सुस्निग्धा वल्मीकैः परिवृतास्ततस्तोयम् ।**
**हस्तैस्त्रिभिरुत्तरतश्चतुर्भिरर्धेन च नरेण ॥ ५१ ॥**

तिलकेति । तिलको वृक्षविशेषः । आम्रातकः । वरुणकः । भल्लातकः । बिल्वः । तिन्दुकः । अङ्कोलः । पिण्डारः । शिरीषः । अञ्जनम् । परूषकः । वञ्जुलः । अतिबला । एते सर्वे एव वृक्षविशेषाः केचिद्विटपप्रायाः । यदि च सुस्निग्धैर्वल्मीकैः परिवृता भवन्ति तदा तेषामेव तिलका-

दीनामुत्तरस्यां दिशि त्रिभिर्हस्तैः परतोऽधश्चतुर्भिर्नरैरर्धेन च नरेण सार्धैश्च- तुर्भिः पुरुषैस्तोयं जलं भवति ॥ ५१ ॥

अन्यदप्याह ।

**अतृणे सतृणा यस्मिन् सतृणे तृणवर्जिता मही यत्र ।**
**तस्मिन् शिरा प्रदिष्टा वक्तव्यं वा धनं चास्मिन् ॥ ५२ ॥**

अतृणे इति । यस्मिन् स्थाने अतृणे तृणवर्जिते सतृणा तृणसंयुता मही भूर्दृश्यते । तथा यस्मिन् देशे सतृणे मही तृणवर्जिता भवति तस्मिन् स्थाने अधःशिरा प्रदिष्टा । अतो जलं भवतीत्यर्थः । धनं वित्तं वा वक्तव्यम् । तस्मिन् स्थाने सार्धैश्चतुर्भिर्नरैरिति केचिदनुवृत्तिमिच्छन्ति ॥ ५२ ॥

अन्यदप्याह ।

**कण्टक्यकण्टकानां व्यत्यासेऽम्भस्त्रिभिः करैः पश्चात् ।**
**खात्वा पुरुषत्रितयं त्रिभागयुक्तं धनं वा स्यात् ॥ ५३ ॥**

यत्र कण्टकिवृक्षः खदिरादिकः । अकण्टकानां पलाशादीनां मध्ये भवति । व्यत्यासे वा सकण्टकानां मध्ये अकण्टको भवति तदा तस्माद्वृक्षात् पश्चात् पश्चिमायां दिशि त्रिभिः करैस्त्रिभिर्हस्तैः परतः पुरुषत्रितयं त्रिभागयुक्तं खात्वा ततोऽधोऽम्भो जलं भवति धनं वित्तं वा स्याद्भवेत् ॥ ५३ ॥

अन्यदप्याह ।

**नदति मही गम्भीरं यस्मिंश्चरणाहता जलं तस्मिन् ।**
**सार्धैस्त्रिभिर्मनुष्यैः कौबेरी तत्र च शिरा स्यात् ॥ ५४ ॥**

यस्मिन् स्थाने मही भूश्चरणाहता पादताडिता गम्भीरं मधुरं नदति शब्दं करोति तस्मिन्नेव स्थाने सार्धैस्त्रिभिर्मनुष्यैः कौबेरी उत्तरा च शिरा तत्र स्याद्भवेत् । जलं तत्र भविष्यतीत्यर्थः ॥ ५४ ॥

अन्यदप्याह ।

**वृक्षस्यैका शाखा यदि विनता भवति पाण्डुरा वा स्यात् ।**
**विज्ञातव्यं शाखातले जलं त्रिपुरुषं खात्वा ॥ ५५ ॥**

यदि वृक्षस्य तरोरेका शाखा विनता नम्रा भवति पाण्डुरा विवर्णा स्याद्भवेत् तत्र च तस्यां शाखायामेव तले अधस्त्रिपुरुषं पुरुषत्रयं खात्वा अधो जलमुदकं विज्ञातव्यं ज्ञेयमिति ॥ ५५ ॥

अन्यदप्याह ।

**फलकुसुमविकारो यस्य तस्य पूर्वे शिरा त्रिभिर्हस्तैः ।**
**भवति पुरुषैश्चतुर्भिः पाषाणोऽधः क्षितिः पीता ॥ ५६ ॥**

यस्य वृक्षस्य फलानां कुसुमानां पुष्पाणां च विकारो विकृतिरन्यसदृशत्वं तस्य वृक्षस्य पूर्वे पूर्वस्यां दिशि त्रिभिर्हस्तैः परतश्चतुर्भिः पुरुषैरधः शिरा भवति तथा चाधः पाषाणोऽश्मा क्षितिर्भूः पीता भवति ॥ ५६ ॥

अन्यदप्याह ।

**यदि कण्टकारिका कण्टकैर्विना दृश्यते सितैः कुसुमैः ।**
**तस्यास्तलेऽम्बु वाच्यं त्रिभिर्नरैरर्धपुरुषे च ॥ ५७ ॥**

यदि कण्टकारिका निदिग्धिका कण्टकैर्विना कण्टकवर्जिता भवति सा च सितैः श्वेतैः कुसुमैः पुष्पैस्तदा तस्याः कण्टकारिकायास्तले अधस्त्रिभिर्नरैरर्धपुरुषे च सार्धैस्त्रिभिर्नरैरम्बु जलं वाच्यं वक्तव्यमिति ॥ ५७ ॥

अन्यदप्याह ।

**खर्जूरी द्विशिरस्का यत्र भवेज्जलविवर्जिते देशे ।**
**तस्याः पश्चिमभागे निर्देश्यं त्रिपुरुषैर्वारि ॥ ५८ ॥**

यत्र यस्मिन् देशे जलविवर्जिते द्विशिरस्का द्विशीर्षा खर्जूरी भवेत् स्यात् । तस्याः खर्जूर्याः पश्चिमभागे पश्चिमायां दिशि हस्तद्वयात् परतस्त्रिपुरुषैस्त्रिभिर्नरैः खातैरधो वारि जलं वक्तव्यम् ॥ ५८ ॥

तथा च सारस्वतः ।

खर्जूरी द्विशिरस्का स्यान्निर्जले चेत् करद्वये ।
निर्देश्यं पश्चिमे वारि खात्वाऽधः पुरुषत्रयम् ॥

अन्यदप्याह ।

**यदि भवति कर्णिकारः सितकुसुमः स्यात् पलाशवृक्षो वा ।**
**सव्येन तत्र हस्तद्वयेऽम्बु पुरुषद्वये भवति ॥ ५९ ॥**

कर्णिकार: कर्णिकारवृक्षो यदि सितकुसुमः स्यात् श्वेतपुष्पो भवेत्। अथवा पलाशवृक्षः सितकुसुमः स्यात् तत्र तस्मिन् स्थाने सव्येन दक्षिणेन कर्णिकारपलाशयोर्हस्तद्वये परतोऽधः पुरुषद्वये नरयुगले अम्बु जलं भवति ॥ ५९ ॥

अन्यदप्याह।

यस्यामूष्मा धात्र्यां धूमो वा तत्र वारि नरयुगले।
निर्देष्टव्या च शिरा महता तोयप्रवाहेण ॥ ६० ॥

यस्यां धात्र्यां यत्र भूमौ ऊष्मा दृश्यते धूमो वा यत्र दृश्यते तत्र तस्यां नरयुगले पुरुषद्वये अधो महता तोयप्रवाहेण बहूदकयुक्ता शिरा निर्देष्टव्या वक्तव्या ॥ ६० ॥

अन्यदप्याह।

यस्मिन् क्षेत्रोद्देशे जातं सस्यं विनाशमुपयाति।
स्निग्धमति पाण्डुरं वा महाशिरा नरयुगे तत्र ॥ ६१ ॥

यस्मिन् यत्र क्षेत्रोद्देशे क्षेत्रस्थाने जातमुत्पन्नं सस्यं विनाशमुपयाति गच्छति। अथवा तत्रैव क्षेत्रोद्देशे स्निग्धं सस्यमतीव भवति। अतिपाण्डुरं वाऽतिपीतवर्णं वा भवति। तत्र तस्मिन् क्षेत्रे तस्मिन्नेव स्थाने नरयुगे पुरुषद्वये अधो महाशिरा भवति महाजलं तत्र वहतीत्यर्थः ॥ ६१ ॥

एवं जाङ्गलानूपभूम्योर्जलपरिज्ञानमभिधाय अधुना मरुभूमौ शिराविज्ञानं कथयामीत्याह।

मरुदेशे भवति शिरा यथा तथातः परं प्रवक्ष्यामि।
ग्रीवा करभाणामिव भूतलसंस्थाः शिरा यान्ति ॥ ६२ ॥

जलवर्जितो भूभागो मरुप्रदेशः। मरुदेशे मरुभूमौ यथा येन प्रकारेण शिरा भवति तथा तेन प्रकारेण अतोऽस्मात्परं प्रवक्ष्यामि कथयामि। करभाणामुष्ट्राणामिव यथा ग्रीवा येन प्रकारेण कन्धरा कुटिला तथा तेनैव प्रकारेण शिरा भूतलसंस्था यान्ति गच्छन्ति। अति निम्ना भवन्तीत्यर्थः ॥ ६२ ॥

तत्राह।

पूर्वोत्तरेण पीलोर्यदि वल्मीको जलं भवति पश्चात्।
उत्तरगमना च शिरा विज्ञेया पञ्चभिः पुरुषैः ॥ ६३ ॥

**चिह्नं दर्दुर आदौ मृत् कपिला तत्परं भवेद्धरिता ।**
**भवति च पुरुषेऽधोऽश्मा तस्य तलेऽम्भो विनिर्देश्यम् ॥ ६४ ॥**

पूर्वोत्तरेणेति । यदि पीलोः पीलुवृक्षस्य पूर्वोत्तरेणैशान्यां दिशि वल्मीको वल्मीकाकृतो मृत्स्तूपो भवति तदा पीलोरेव वृक्षात् पश्चिमायां दिशि सार्धैश्चतुर्भिर्हस्तैः परतः पञ्चभिः पुरुषैरधो जलं भवति । तच्च चोत्तरगमना । उत्तरस्यां दिशि या गच्छति सोत्तरगमना । शिरा विज्ञेया ज्ञातव्या ॥ ६३ ॥

चिह्नमिति । आदौ प्रथमे पुरुषे खाते दर्दुरो मण्डूकश्चिह्नम् । ततो मृत् कपिला । तत्परं तदनन्तरं हरिता शुक्ला भवति । अधः सर्वचिह्नानां तले अश्मा पाषाणो भवति । तस्याश्मनस्तले ऽधोऽम्भो जलं विनिर्देश्यं वक्तव्यम् ॥ ६४ ॥

तथा च सारस्वतः ।

ऐशान्यां पीलुवृक्षस्य वल्मीकश्चेज्जलं वदेत् ।
चतुर्भिः सरलैर्हस्तैः पश्चिमे नरपञ्चमे ॥
प्रथमे पुरुषे भेकः कपिला हरिता च मृत् ।
पाषाणस्य तले सौम्यां शिरां बहुजलां वदेत् ॥

अन्यदप्याह ।

**पीलोरेव प्राच्यां वल्मीकोऽतोऽर्धपञ्चमैर्हस्तैः ।**
**दिशि याम्यायां तोयं वक्तव्यं सप्तभिः पुरुषैः ॥ ६५ ॥**
**प्रथमे पुरुषे भुजगः सितासितो हस्तमात्रमूर्त्तिश्च ।**
**दक्षिणतो वहति शिरा सक्षारं भूरि पानीयम् ॥ ६६ ॥**

पीलोरेव पीलुवृक्षस्य प्राच्यां पूर्वस्यां दिशि यदि वल्मीको दृश्यते ततस्तस्मादेव पीलुवृक्षाद्याम्यायां दक्षिणस्यां दिशि अर्धपञ्चमैः सार्धचतुर्भिर्हस्तैः परतोऽधः सप्तभिः पुरुषैस्तोयं जलं वाच्यम् ॥ ६५ ॥

प्रथम इति । अथ चिह्नानि । प्रथमे पुरुषे खाते सितासितः श्वेतकृष्णवर्णो हस्तमात्रमूर्तिर्हस्तप्रमाणो भुजगः सर्पो दृश्यते । मूर्त्तिशब्देनाकार उच्यते । दक्षिणतो दक्षिणस्यां दिशि शिरा भूरि बहु सक्षारं पानीयं जलं वहति ॥ ६६ ॥

अन्यदप्याह ।

**उत्तरतश्च करीरस्याहिगृहं दक्षिणे जलं स्वादु ।**
**दशभिः पुरुषैर्ज्ञेयं पुरुषे पीतोऽत्र मण्डूकः ॥ ६७ ॥**

करीरस्य करीरवृक्षस्य उत्तरत उत्तरस्यां दिशि यद्यहिगृहं वल्मीको दृश्यते तदा करीरस्य दक्षिणे दक्षिणस्यां दिशि सार्धैश्चतुर्भिर्हस्तैः परतोऽधो दशभिः पुरुषैरधः स्वादु मृष्टं जलं ज्ञेयम् । अत्र प्रथमे पुरुषे खाते पीतः पीतवर्णो मण्डूको दृश्यते ॥ ६७ ॥

तथा च सारस्वतः ।

उदक्करीराद्वल्मीको दृश्यते चेज्जलं वदेत् ।
चतुर्भिर्दक्षिणेहस्तैः सार्धैर्दशनरादतः ॥
नरे भेकः पीतवर्णो दृश्यते चिह्नमत्र हि—इति ॥

अन्यदप्याह ।

**रोहीतकस्य पश्चादहिवासश्चेत्त्रिभिः करैर्याम्ये ।**
**द्वादश पुरुषान् खात्वा सक्षारा पश्चिमेन शिरा ॥ ६८ ॥**

रोहीतकस्य वृक्षस्य पश्चात् पश्चिमायां दिशि यद्यहिवासो वल्मीको दृश्यते तदा रोहीतकस्य याम्ये दक्षिणस्यां दिशि त्रिभिः करैस्त्रिभिर्हस्तैः परतो द्वादश पुरुषान् खात्वा अधस्तले शिरा सक्षारा पश्चिमेन वहति ॥ ६८ ॥

अन्यदप्याह ।

**इन्द्रतरोर्वल्मीकः प्राग्दृश्यः पश्चिमे शिरा हस्ते ।**
**खात्वा चतुर्दश नरान् कपिला गोधा नरे प्रथमे ॥ ६९ ॥**

इन्द्रतरोरिन्द्रवृक्षस्य प्राक् पूर्वस्यां दिशि यदि वल्मीको दृश्यते तदा तस्येन्द्रतरोः पश्चिमे पश्चिमायां दिशि हस्ते त्यक्ते चतुर्दश नरान् पुरुषान् खात्वा शिरा अधस्तले वहति । प्रथमे नरे कपिला कपिलवर्णा गोधा प्राणिविशेषो दृश्यते ॥ ६९ ॥

अन्यदप्याह ।

**यदि वा सुवर्णनाम्नस्तरोर्भवेद्वामतो भुजङ्गगृहम् ।**
**हस्तद्वये तु याम्ये पञ्चदशनरावसानेऽम्बु ॥ ७० ॥**

**क्षारं पयोऽत्र नकुलोऽर्धमानवे ताम्रसन्निभश्चाश्मा ।**
**रक्ता च भवति वसुधा वहति शिरा दक्षिणा तत्र ॥ ७१ ॥**

यदि वा सुवर्णनाम्न इति । यदि वायं निपातश्चार्थे । यदि च सुवर्णनाम्नस्तरोः सुवर्णवृक्षस्य वामत उत्तरस्यां दिशि भुजङ्गगृहं वल्मीको दृश्यते तदा याम्ये दक्षिणस्यां दिशि हस्तद्वये परतः पञ्चदशनरावसाने पञ्चदशभिः पुरुषैः खातैरधोऽम्बु जलं भवति ॥ ७० ॥

अथास्मिन् क्षारं पयो जलम् । अर्धमानवे अर्धपुरुषे खाते नकुलस्ताम्र-सन्निभस्ताम्रवर्णोऽश्मा पाषाणो भवति रक्ता च रक्तवर्णा वसुधा भूमिः । तत्र दक्षिणा शिरा वहति ॥ ७१ ॥

अन्यदप्याह ।

**बदरीरोहितवृक्षौ सम्पृक्तौ चेद्विनापि वल्मीकम् ।**
**हस्तत्रयेऽम्बु पश्चात् षोडशभिर्मानवैर्भवति ॥ ७२ ॥**
**सुरसं जलमादौ दक्षिणा शिरा वहति चोत्तरेणान्या ।**
**पिष्टनिभः पाषाणो मृत् श्वेता वृश्चिकोऽर्धनरे ॥ ७३ ॥**

बदरीति । बदरीरोहितवृक्षौ सम्पृक्तौ श्लिष्टौ भवतः । विनापि वल्मी-कम् । वल्मीकस्तत्र भवतु वा न । तदा पश्चात् पश्चिमायां दिशि ताभ्यामेव वृक्षाभ्यां हस्तत्रयपरतः षोडशभिर्मानवैः पुरुषैरम्बु जलमधो भवति ॥ ७२ ॥

अथ सुरसं शोभनरसं मृष्टं जलमादौ प्रथमं दक्षिणा शिरा वहति । अन्या द्वितीया चोत्तरेण । अथ पिष्टनिभः शालिचूर्णप्रख्यः पाषाणोऽश्मा भवति । मृत् श्वेता शुक्लमृत्तिका । अर्धनरे चार्धपुरुषे खाते वृश्चिको दृश्यत इति ॥ ७३ ॥

अन्यदप्याह ।

**सकरीरा चेद्बदरी त्रिभिः करैः पश्चिमेन तत्राम्भः ।**
**अष्टादशभिः पुरुषैरैशानी बहुजला च शिरा ॥ ७४ ॥**

चेच्छब्दो यद्यर्थे । यदि बदरी सकरीरा करीरवृक्षसहिता दृश्यते तदा तत्र पश्चिमेन पश्चिमायां दिशि त्रिभिः करैस्त्रिभिर्हस्तैः परतः अष्टादशभिः पुरुषैः खातैरधोऽम्भः पानीयं भवति । तत्र चैशानी शिरा बहु-जला प्रभूततोया च वहति ॥ ७४ ॥

अन्यदप्याह ।

**पीलुसमेता बदरी हस्तत्रयसम्मिते दिशि प्राच्याम् ॥**
**विंशत्या पुरुषाणामशोष्यमम्भोऽत्र सक्षारम् ॥ ७५ ॥**

यदि पीलुसमेता पीलुवृक्षसहिता बदरी दृश्यते तदा प्राच्यां पूर्वस्यां दिशि हस्तत्रयसम्मिते करत्रयपरिच्छिन्ने देशे विंशत्या पुरुषाणां अधोऽम्भो जलं भवति तच्चाशोष्यं प्रभूतम् । सक्षारं लवणसहितमित्यर्थः ॥ ७५ ॥

अन्यदप्याह ।

**ककुभकरीरावेकत्र संयुतौ यत्र ककुभबिल्वौ वा ।**
**हस्तद्वयेऽम्बु पश्चान्नरैर्भवेत् पञ्चविंशत्या ॥ ७६ ॥**

यत्र यस्मिन् प्रदेशे ककुभकरीरौ वृक्षौ एकत्र एकस्मिन् स्थाने संयुतौ समेतौ दृश्येते । अथवा यत्र ककुभबिल्वावेकत्र संयुतौ तत्र पश्चात् पश्चिमायां दिशि हस्तद्वये परतः पञ्चविंशत्या नरैरम्बु जलं भवति ॥ ७६ ॥

अन्यदप्याह ।

**वल्मीकमूर्धनि यदा दूर्वा च कुशाश्च पाण्डुराः सन्ति ।**
**कूपो मध्ये देयो जलमत्र नरैकविंशत्या ॥ ७७ ॥**

यदा वल्मीकमूर्धनि वल्मीकोपरि दूर्वा शाद्वलं कुशा वा दर्भाश्च पाण्डुराः सन्ति भवन्ति । तदा वल्मीकमूर्धनि मध्ये कूपो देयः । अत्रास्मिन् स्थाने नरैकविंशत्या एकविंशत्या पुरुषैर्जलमुदकं भवति ॥ ७७ ॥

अन्यदप्याह ।

**भूमिः कदम्बकयुता वल्मीके यत्र दृश्यते दूर्वा ।**
**हस्तद्वयेन याम्ये नरैर्जलं पञ्चविंशत्या ॥ ७८ ॥**

यत्र यस्मिन् स्थाने भूमिः कदम्बकयुता कदम्बवृक्षसंयुक्ता भवति तदा वल्मीके वल्मीकवृते मृत्स्तूपे दूर्वा शाद्वलं दृश्यते तत्र कदम्बाद्याम्ये दक्षिणस्यां दिशि हस्तद्वयेन परतः पञ्चविंशत्या पुरुषैर्जलमुदकं भवति ॥ ७८ ॥

अन्यदप्याह ।

**वल्मीकत्रयमध्ये रोहीतकपादपो यदा भवति ।**
**नानावृक्षैः सहितस्त्रिभिर्जलं तत्र वक्तव्यम् ॥ ७९ ॥**

**हस्तचतुष्के मध्यात् षोडशभिश्चाङ्गुलैरुदग्वारि ।**
**चत्वारिंशत् पुरुषान् खात्वाऽश्माऽधः शिरा भवति ॥ ८० ॥**

वल्मीकत्रयस्य शृङ्गाटकवत् स्थितस्य मध्ये अन्तर्यदा रोहीतकपादपो रोहीतकवृक्षो भवति स च त्रिभिर्वृक्षैर्नानाप्रकारैर्विजातीयैः सहितस्तत्र तस्मिन् स्थाने जलमुदकं वक्तव्यम् ॥ ७६ ॥

हस्तचतुष्के मध्यादिति । तत्र वल्मीकत्रितये मध्याद्रोहीतकपादपादुदगुत्तरस्यां दिशि हस्तचतुष्के करचतुष्टये षोडशभिश्चाङ्गुलैः परतश्चत्वारिंशत् पुरुषान् खात्वा अश्मा पाषाणो दृश्यते । तदधस्तस्य तले शिरा भवति ॥ ८० ॥

अन्यदप्याह ।

**ग्रन्थिप्रचुरा यस्मिन् शमी भवेदुत्तरेण वल्मीकः ।**
**पश्चात् पञ्चकरान्ते शतार्धसङ्ख्यैर्नरैः सलिलम् ॥ ८१ ॥**

यस्मिन् प्रदेशे ग्रन्थिप्रचुरा ग्रन्थिबहुला शमी स्याद्भवेत् । उत्तरेण च वल्मीकस्तत्र शमीवृक्षस्य पश्चात् पश्चिमायां दिशि पञ्चकरान्ते पञ्चभिर्हस्तैः परतः शतार्धसङ्ख्यैर्नरैः पुरुषाणां पञ्चाशताऽधः सलिलं जलं भवति ॥ ८१ ॥

अन्यदप्याह ।

**एकस्थाः पञ्च यदा वल्मीका मध्यमो भवेच्छ्वेतः ।**
**तस्मिन् शिरा प्रदिष्टा नरषष्ट्या पञ्चवर्जितया ॥ ८२ ॥**

यदा पञ्च वल्मीका एकस्था भवन्ति । तदा तेषां पञ्चमो मध्यमः । पञ्चसु मध्ये स्थितः । स च यदि श्वेतः शुक्लो भवति । तदा तस्मिन्नेव मध्य वल्मीके शिरा प्रदिष्टोक्ता । पञ्चवर्जितया नरषष्ट्या पञ्चपञ्चाशता नरैरित्यर्थः ॥ ८२ ॥

अन्यदप्याह ।

**सपलाशा यत्र शमी पश्चिमभागेऽम्बु मानवैः षष्ट्या ।**
**अर्धनरेऽहिः प्रथमं सवालुका पीतमृत् परतः ॥ ८३ ॥**

यत्र यस्मिन् प्रदेशे सपलाशा पलाशसहिता शमी भवति तत्र तस्याः शम्याः पश्चिमभागे हस्तपञ्चकात् परतः षष्ट्या मानवैः पुरुषैर्नरषष्ट्याऽधोऽम्बु

जलं भवति । प्रथममादावर्धनरे अर्धपुरुषे खाते अहिः सर्पो भवति ततः सवालुका वालुकासहिता । पीता पीतवर्णा मृद्भवति ॥ ८३ ॥

तथा च सारस्वतः ।

शमी पलाशसंयुक्ता यत्र स्यात् तत्र पश्चिमे ।
पञ्चहस्ताज्जलं वाच्यं सप्तभिश्च पुरुषैरधः ॥
अत्रार्धपुरुषे सर्पः पीता मृत् स्यात् सवालुका ।
तदधोऽम्भो विनिर्देश्यं दीर्घकालं प्रवाहितम् ॥

अन्यदप्याह ।

**वल्मीकेन परिवृतः श्वेतो रोहीतको भवेद्यस्मिन् ।**
**पूर्वेण हस्तमात्रे सप्तत्या मानवैरम्बु ॥ ८४ ॥**

यस्मिन् प्रदेशे श्वेतः शुक्लवर्णो रोहीतको वृक्षो वल्मीकेन परिवृतो भवति तत्र रोहीतकात् पूर्वेण पूर्वस्यां दिशि हस्तमात्रादनन्तरं सप्तत्या मानवैरधोऽम्बु जलं भवति ॥ ८४ ॥

अन्यदप्याह ।

**श्वेता कण्टकबहुला यत्र शमी दक्षिणेन तत्र पयः ।**
**नरपञ्चकसंयुतया सप्तत्याहिर्नरार्धे च ॥ ८५ ॥**

अथ यस्मिन् प्रदेशे श्वेता शुक्लवर्णा कण्टकबहुला प्रभूतकण्टका शमी भवति । तत्र शम्या दक्षिणेन हस्तमात्रात् परतो नरपञ्चकसंयुतया सप्तत्या पञ्चसप्तत्या पुरुषैरधो जलं पयो भवति । नरार्धे पुरुषार्धे च खाते अहिः सर्पो भवति ॥ ८५ ॥

तथा च सारस्वतः ।

श्वेतातिकण्टका यत्र शमी स्यात् तत्र दक्षिणे ।
हस्तेन पञ्चसप्तत्या नराणां निर्दिशेज्जलम् ॥
खातेऽर्धपुरुषे सर्पो दृश्यतेऽञ्जनसप्रभः ।
सुरसं च जलं ज्ञेयं चिरकालप्रवाहितम् ॥

अत्रैव विशेषान्तरमाह ।

**मरुदेशे यच्चिह्नं न जाङ्गले तैर्जलं विनिर्देश्यम् ।**
**जम्बूवेतसपूर्वैर्ये पुरुषास्ते मरौ द्विगुणाः ॥ ८६ ॥**

यच्चिह्नं यल्लक्षणं मरुदेशे कथितं तैश्चिह्नैर्जाङ्गले स्वल्पोदके देशे जलमुदकं न विनिर्देश्यं न वक्तव्यम् । जम्बूवेतसपूर्वैरिति । यदि [1]"वेतसोऽम्बुरहिते देशे" तथा [2]"जम्ब्वाश्चोदग्घस्ते"रित्यादिकैर्जम्बूवेतसपूर्वैर्लक्षणैर्ये पुरुषाः कथितास्तैरेव चिह्नैः मरौ मरुभूमौ दृष्टैर्द्विगुणास्त एव पुरुषा वाच्या इति ॥ ८६ ॥

अन्यदप्याह ॥

**जम्बूस्त्रिवृता मौर्वी शिशुमारी सारिवा शिवा श्यामा ।**
**वीरुधयो वाराही ज्योतिष्मती गरुडवेगा च ॥ ८७ ॥**
**सूकरिकमाषपर्णीव्याघ्रपदाश्चेति यद्यहेर्निलये ।**
**वल्मीकादुत्तरतस्त्रिभिः करैस्त्रिपुरुषे तोयम् ॥ ८८ ॥**

जम्बूर्वृक्षविशेषः । त्रिवृता । मौर्वी । शिशुमारी । सारिवा । शिवा । श्यामा । एता वीरुधय ओषधयः । तथा वक्ष्यमाणाश्च वीरुधय एव । कास्ताः । वाराही ज्योतिष्मती गरुडवेगा च ॥ ८७ ॥

सूकरिकमाषपर्णीव्याघ्रपदाश्चैता ओषधयः । यद्यहेर्निलये सर्पगृहे वल्मीके भवन्ति तदा वल्मीकादुत्तरत उत्तरस्यां दिशि त्रिभिः करैस्त्रिभिर्हस्तैः परतः पुरुषत्रये खाते अधस्तोयं वक्तव्यम् ॥ ८८ ॥

किं सर्वत्र न—इत्याह ।

**एतदनूपे वाच्यं जाङ्गलभूमौ तु पञ्चभिः पुरुषैः ।**
**एतैरेव निमित्तैर्मरुदेशे सप्तभिः कथयेत् ॥ ८९ ॥**

एतद्यदुक्तं तदनूपे बहूदके वाच्यं वक्तव्यम् । बहूदको देशोऽनूपः । जाङ्गलभूमौ तु स्वल्पोदके एभिरेव लक्षणैः पञ्चभिः पुरुषैर्वाच्यम् । एतैरेव प्रागुक्तैर्निमित्तैश्चिह्नैर्मरुभूमौ सप्तभिः पुरुषैः कथयेद्वदेत् ॥ ८९ ॥

---

[1] अस्यैवाध्यायस्य ६ श्लोकः ।
[2] अस्यैवाध्यायस्य ८ श्लोकः ।

अन्यदप्याह ।

**एकनिभा यत्र मही तृणतरुवल्मीकगुल्मपरिहीना ।**
**तस्यां यत्र विकारो भवति धरित्र्यां जलं तत्र ॥ ९० ॥**

यत्र यस्मिन् स्थाने मही भूरेकनिभा एकवर्णा सा च तृणतरुवल्मीकगुल्मपरिहीना । तृणैः । तरुभिः । वल्मीकैः । गुल्मैरेकमूलैः । शाखासमूहो गुल्मः । एतैः परिहीना वर्जिता तस्यां मह्यां यत्र यस्मिन् स्थाने विकारोऽन्यसदृशत्वम् । तत्र तस्मिन् धरित्र्यां भूमौ पञ्चभिः पुरुषैर्जलं भवति ॥ ९० ॥

तथा च सारस्वतः ।

एकवर्णा मही यत्र वृक्षगुल्मतृणादिभिः ।
वल्मीकैश्चापि रहिता तस्यां तत्र विपर्ययः ॥
पञ्चभिः पुरुषैस्तत्र जलं भूमावधः स्थितम् ।

अन्यदप्याह ।

**यत्र स्निग्धा निम्ना सवालुका सानुनादिनी वा स्यात् ।**
**तत्रार्धपञ्चकैर्वारि मानवैः पञ्चभिर्यदि वा ॥ ९१ ॥**

यत्र यस्मिन् देशे स्निग्धा सस्नेहा मही निम्नाऽनुन्नता सवालुका वालुकासहिता सानुनादिनी सशब्दा वा भूः स्याद्भवेत् तत्र तस्मिन् स्थाने अर्धपञ्चकैः सार्धैश्चतुर्भिः पुरुषैः पञ्चभिर्वा पुरुषैरधो जलं भवति ॥ ९१ ॥

अन्यदप्याह ।

**स्निग्धतरूणां याम्ये नरैश्चतुर्भिर्जलं प्रभूतं च ।**
**तरुगहनेऽपि हि विकृतो यस्तस्मात् तद्वदेव वदेत् ॥ ९२ ॥**

यत्र स्निग्धाः सस्नेहास्तरवो वृक्षा भवन्ति तत्र तेषां स्निग्धतरूणां याम्ये दक्षिणे चतुर्भिर्नरैः पुरुषैरधः प्रभूतं बहु जलं भवति । तरुगहने वृक्षगहनेऽपि यो वृक्षो बहूनां मध्ये विकृतः सविकारो दृश्यते पुष्पफलानां स्वरूपान्यत्वं दृश्यते । तस्माद्वृक्षादुदकं तद्वत् तेनैव प्रकारेण वदेत् । याम्ये नरैश्चतुर्भिरित्यर्थः ॥ ९२ ॥

अन्यदप्याह ।

**नमते यत्र धरित्री सार्धे पुरुषेऽम्बु जाङ्गलानूपे ।**
**कीटा वा यत्र विनालयेन बहवोऽम्बु तत्रापि ॥ ९३ ॥**

यत्र यस्मिन् प्रदेशे धरित्री भूः । नमते । पादपीडिता सत्यधो याति जाङ्गलानूपे जाङ्गले अनूपे वा । तत्र सार्धे पुरुषे अम्बु जलं भवति । कीटा वा कृमयो यत्र यस्मिन् प्रदेशे आलयेन विना दृश्यन्ते । बहवः प्रभूताः । तत्राम्बु जलं भवति । अपिशब्दात् सार्धे पुरुषे ॥ ६३ ॥

अन्यदप्याह ।

**उष्णा शीता च मही शीतोष्णाम्भस्त्रिभिर्नरैः सार्धैः ।**
**इन्द्रधनुर्मत्स्यो वा वल्मीको वा चतुर्हस्तात् ॥ ६४ ॥**

यत्र सर्वत्रोष्णा मही भूः । एकस्मिन् देशे शीता भवति । अथवा सर्वत्र शीता एकस्मिन् देशे उष्णा भवति । तत्र त्रिभिर्नरैः सार्धैरम्भो जलं भवति । इन्द्रधनुस्त्रिदशचापं तच्च सूर्यरश्मिसम्बन्धाद्यत्रोत्पद्यते मत्स्यो वा मत्स्यो दारकत्वाद्भवो वल्मीको वा यस्यां भूमौ जाङ्गलानूपयोर्दृश्यते तत्र चतुर्हस्तात् परतोऽधोऽम्भो जलं भवति ॥ ६४ ॥

अन्यदप्याह ।

**वल्मीकानां पङ्क्त्यां यद्येकोऽभ्युच्छ्रितः शिरा तदधः ।**
**शुष्यति न रोहते वा सस्यं यस्यां च तत्राम्भः ॥ ६५ ॥**

वल्मीकानां पङ्क्त्यां स्थितानां मध्याद्यद्येको वल्मीकोऽभ्युच्छ्रित उन्नततरो भवति । तदा तदधस्तस्योच्छ्रितस्य वल्मीकस्याधस्तले चतुर्भिर्हस्तैः शिरा जलं भवति । यस्यां भूमौ जातं सस्यं शुष्यति शोषं प्राप्नोति । उप्तं वा न रोहते न जायते । तस्यां भूमौ चतुर्भिर्हस्तैरधो जलं भवति । एतज्जाङ्गलानूपयोः ॥ ६५ ॥

तथा च सारस्वतः ।

वल्मीकपङ्क्त्यां यद्येकोऽभ्युच्छ्रितस्तदधो जलम् ।
न रोहते शुष्यते वा यत्र सस्यं चतुष्करात् ॥
जलं तत्रैव निर्देश्यं भूमौ निःसंशयं तदा ।

अन्यदप्याह ।

**न्यग्रोधपलाशोदुम्बरैः समेतैस्त्रिभिर्जलं तदधः ।**
**वटपिप्पलसमवाये तद्वद्वाच्यं शिरा चोदक् ॥ ६६ ॥**

न्यग्रोधपलाशोदुम्बरैः समेतैस्त्रिभिर्जलं तदधः। वटपलाशोदुम्बरैस्त्रिभिर्वृक्षैः समेतैरेकत्र संयुक्तैस्तदधस्तेषामेवाधस्त्रिभिर्हस्तैर्जलं भवति शिरा च तत्रोदगुत्तरा भवति। तथा वटपिप्पलसमवाये वटपिप्पलयोगे तद्वत् तेनैव प्रकारेणाधो जलं वाच्यं त्रिभिः करैः शिरा चोदक् इति ॥ ९६ ॥

तथा च सारस्वतः।

पलाशोदुम्बरौ यत्र स्यातां न्यग्रोधसंयुतौ।
वटपिप्पलकौ वाथ समेतौ तदधो जलम् ॥
करैस्त्रिभिरुदक् चाम्भः शिरां शुभजलां वदेत्।

अथ कूपलक्षणमाह।

**आग्नेये यदि कोणे ग्रामस्य पुरस्य वा भवेत् कूपः।**
**नित्यं स करोति भयं दाहं च समानुषं प्रायः ॥ ९७ ॥**
**नैर्ऋतकोणे बालक्षयं च वनिताभयं च वायव्ये।**
**दिक्त्रयमेतत्त्यक्त्वा शेषासु शुभावहाः कूपाः ॥ ९८ ॥**

ग्रामस्य पुरस्य वा यद्याग्नेयकोणे पूर्वदक्षिणस्यां दिशि कूपो भवेत् स्यात् तदा स कूपः तस्मिन् ग्रामे पुरे वा नित्यं सर्वकाले भयं करोतीत्यर्थः। प्रायो बाहुल्येन। समानुषं दाहं च करोति। मनुष्यादि दहति अग्निभयं करोतीत्यर्थः ॥ ९७ ॥

ग्रामस्य पुरस्य वा नैर्ऋतकोणे दक्षिणपश्चिमायां दिशि कूपो भवति तदा बालानां शिशूनां क्षयं करोति। वायव्यकोणे पश्चिमोत्तरस्यां दिशि च वनितानां स्त्रीणां भयं करोति। एतद्यथोक्तं दिक्त्रयं त्यक्त्वा यथान्यासु पञ्चसु पूर्वदक्षिणपश्चिमोत्तरैशानीषु शुभावहाः शुभप्रदाः कूपा इति ॥ ९८ ॥

एतद्युक्तं दकार्गलं तत्सारस्वतं दृष्ट्वेदानीं मानवं वक्ष्यामीत्याह।

**सारस्वतेन मुनिना दकार्गलं यत् कृतं तदवलोक्य।**
**आर्याभिः कृतमेतद्वृत्तैरपि मानवं वक्ष्ये ॥ ९९ ॥**

सारस्वतेन मुनिना कृतं रचितं तदवलोक्य दृष्ट्वा एतदार्याभिः कृतम्। मानवं मनुना विरचितं दकार्गलमिदानीं वृत्तैर्वक्ष्ये कथयिष्ये ॥ ९९ ॥

तत्राह ।

स्निग्धा यतः पादपगुल्मवल्ल्यो
निश्छिद्रपत्राश्च ततः शिरास्ति ।
पद्मक्षुरोशीरकुलाः सगुण्ड्राः
काशाः कुशा वा नलिका नलो वा ॥ १०० ॥
खर्जूरजम्ब्वर्जुनवेतसाः स्युः
क्षीरान्विता वा द्रुमगुल्मवल्ल्यः ।
छत्रेभनागाः शतपत्रनीपाः
स्युर्नक्तमालाश्च ससिन्दुवाराः ॥ १०१ ॥
विभीतको वा मदयन्तिका वा
यत्रास्ति तस्मिन् पुरुषत्रयेऽम्भः ।
स्यात् पर्वतस्योपरि पर्वतोऽन्य-
स्तत्रापि मूले पुरुषत्रयेऽम्भः ॥ १०२ ॥

स्निग्धा यत इति । यत इति निपातः सप्तम्यन्ते । यतो यस्यां भूमौ पादपा वृक्षाः । गुल्मा एकमूलाः शाखासमूहाः । वल्ली व्रततिः । एताः सर्वा यत्र स्निग्धाः सस्नेहाः । तथा निश्छिद्रपत्राश्च । निश्छिद्राणि पत्राणि च यासाम् । ततस्तस्मिन्नेव स्थाने अधः पुरुषत्रये शिरा अस्ति विद्यते । अथवा पद्मं स्थलपद्मम् । क्षुरो गोक्षुरः । उशीरः । कुलः । एते द्रव्यविशेषाः । सगुण्ड्रा गुण्ड्रसहिताः । गुण्ड्रस्तृणविशेषः । काशाः कुशा नलिका नलो वा । एते सर्व एव तृणविशेषाः ॥ १०० ॥

खर्जूरः । जम्बूः । अर्जुनः । वेतसः । एते सर्वे वृक्षविशेषाः । यत्र स्युर्भवेयुः । अथवा क्षीरान्विताः सक्षीरा द्रुमा वृक्षाः । गुल्म एकमूलः शाखासमूहः । वल्ल्यो व्रतत्यः । एते यत्र सक्षीराः । छत्रः प्रसिद्धः । इभो हस्तिकर्णी । नागो नागकेसरं यस्मादुत्पद्यते । शतपत्रं पद्मम् । नीपो वृक्षविशेषः । नक्तमालाः करञ्जाः । एते पूर्वोक्ताः ससिन्दुवाराः सिन्दुवारै-र्वृक्षविशेषैः सहिता यत्र स्युः ॥ १०१ ॥

विभीतको वृक्षविशेषः । मदयन्तिका द्रव्यविशेषः । एते यत्र यस्मिन् प्रदेशे भवन्ति तत्र अधस्तले पुरुषत्रये अम्भो जलं स्यात् । पर्वत-

स्योपरि पर्वतोऽन्यस्तत्रापि मूले, पुरुषत्रये वेति। अथवा पर्वतस्योपर्यन्यो द्वितीयः पर्वतो यत्र स्याद्भवेत् तत्रोपरिष्ठस्य मूले पुरुषत्रये वा अम्भो जलमस्ति विद्यते ॥ १०२ ॥

तथा च मनुः।

गुल्मपादपवल्ल्यः स्युः पत्रैश्चाखण्डितैर्युताः।
तदधो विद्यते वारि खाते तु पुरुषत्रये ॥
पद्मक्षुरोशीरकुला गुण्ड्रा काशः कुशोऽथवा।
नलिकानलखर्जूरजम्बूवेतसकार्जुनाः ॥
यत्र स्युर्द्रुमवल्ल्यश्च क्षीरयुक्ताः फलान्विताः।
छत्रेभनागनीपाश्च शतपत्रविभीतकाः ॥
सिन्दुवारा नक्तमालाः सुगन्धा मदयन्तिकाः।
यत्रैते स्युस्तत्र जलं खातेऽम्भः पुरुषत्रये ॥
गिरेरुपरि यत्रान्यः पर्वतः स्यात् ततो जलम्।
तस्यैव मूले पुरुषैस्त्रिभिर्वाऽधो विनिर्दिशेत् ॥

अन्यदप्याह।

**या मौञ्जिकैः काशकुशैश्च युक्ता**
**नीला च मृद्यत्र सशर्करा च।**
**तस्यां प्रभूतं सुरसं च तोयं**
**कृष्णाथवा यत्र च रक्तमृद्वा ॥ १०३ ॥**

या भूर्मौञ्जिकैः काशैः कुशैश्च तृणविशेषैर्युक्ता। यत्र यस्यां भूमौ नीला नीलवर्णा मृत् सशर्करा सकणिका च भवति। तस्यां भूमौ प्रभूतं बहु सुरसं मृष्टं च तोयं जलं भवति। यत्र कृष्णा कृष्णवर्णा रक्ता रक्तवर्णा वा मृत्। तत्र च प्रभूतं बहु सुरसं तोयं भवेदिति ॥ १०३ ॥

अथ भूगुणानाह।

**सशर्करा ताम्रमही कषायं**
**क्षारं धरित्री कपिला करोति।**

आपाण्डुरायां लवणं प्रदिष्टं
मृष्टं पयो नीलवसुन्धरायाम् ॥ १०४ ॥

या मही भूः सशर्करा सकणिका ताम्रवर्णा च सा कषायं पयः पानीयं करोति । कपिला कपिलवर्णा च धरित्री भूः क्षारं पयः करोति । आपाण्डुरायां धरित्र्यां लवणं पयः प्रदिष्टमुक्तम् । नीलवसुन्धरायां नीलायां भूमौ मृष्टं पयो भवति ॥ १०४ ॥

अन्यदप्याह ।

शाकाश्वकर्णार्जुनबिल्वसर्जाः
श्रीपर्ण्यरिष्टाधवशिंशपाश्च ।
छिद्रैश्च पत्रैर्द्रुमगुल्मवल्ल्यो
रूक्षाश्च दूरेऽम्बु निवेदयन्ति ॥ १०५ ॥

शाकः । अश्वकर्णः । अर्जुनः । बिल्वसर्जः । श्रीपर्णी । अरिष्टा । धवः । शिंशपः । एते सर्व एव वृक्षविशेषाः । यच्छिद्रैः पत्रैः । छिद्रसंयुक्तैः पर्णैर्भवन्ति । तथा द्रुमगुल्मवल्ल्यः । छिद्रैश्च पत्रै रूक्षाश्च निःस्नेहाः । दूरे अनिकटे । अम्बु जलं निवेदयन्ति । तत्रातिदूरे जलं भवतीत्यर्थः ॥ १०५ ॥

अन्यदप्याह ।

सूर्याग्निभस्मोष्ट्रखरानुवर्णा
या निर्जला सा वसुधा प्रदिष्टा ।
रक्ताङ्कुराः क्षीरयुताः करीरा
रक्ता धरा चेज्जलमश्मनोऽधः ॥ १०६ ॥

या वसुधा भूः सूर्यस्यादित्यस्याग्नेर्वह्नेर्भस्मन उष्ट्रस्य करभस्य खरस्य गर्दभस्य एषाममुवर्णा सदृशप्रभा सा निर्जला जलरहिता प्रदिष्टोक्ता । तथा करीरवृक्षा यत्र रक्ताङ्कुरा लोहितैरङ्कुरैः संयुक्ताः क्षीरयुताः क्षीरसंयुक्ताः । धरा भूर्यदि च रक्ता लोहितवर्णा भवति तत्राश्मनोऽधः पाषाणस्य तले जलमुदकं भवति ॥ १०६ ॥

अन्यदप्याह ।

वैदूर्यमुद्गाम्बुदमेचकाभा
पाकोन्मुखोदुम्बरसन्निभा या ।
भृङ्गाञ्जनाभा कपिलाथवा या
ज्ञेया शिला भूरिसमीपतोया ॥ १०७ ॥

या शिला वैदूर्यमणेः मुद्गानामम्बुदस्य मेघस्य मेचकस्य कृष्णवर्णस्य सदृशवर्णा । तथा या शिला पाकोन्मुखस्य सुपरिपक्वस्योदुम्बरस्य फलस्य सन्निभा सदृशी । या च शिला भृङ्गे स्फोटने अञ्जनाभा अञ्जनसदृशी । अथवा कपिलवर्णा या च शिला सा भूरिसमीपतोया । भूरि प्रभूतं समीपे निकटे तोयं जलं यस्यां तथा भूता सापि शिला ज्ञेया ज्ञातव्या ॥ १०७ ॥

अन्यदप्याह ।

पारावतक्षौद्रघृतोपमा या
क्षौमस्य वस्त्रस्य च तुल्यवर्णा ।
या सोमवल्ल्याश्च समानरूपा
साप्याशु तोयं कुरुतेऽक्षयं च ॥ १०८ ।

या च शिला पारावतस्य पक्षिणः सदृशी । क्षौद्रं माक्षिकं घृतमाज्यं तदुपमा तत्सदृशी या च । सोमवल्ल्याः समानरूपा सदृशवर्णा । सोमयाज्ञिकस्य वल्लीव । सापि शिला या आशु शीघ्रमेव अक्षयं स्थिरं तोयमुदकं कुरुते ॥ १०८ ॥

अन्यदप्याह ।

ताम्रैः समेता पृषतैर्विचित्रै-
रापाण्डुभस्मोष्ट्रखरानुरूपा ।
भृङ्गोपमाङ्गुष्ठिकपुष्पिका वा
सूर्याग्निवर्णा च शिला वितोया ॥ १०९ ॥

या च शिला ताम्रैस्ताम्रवर्णैः पृषतैस्तिलकैः । तथा विचित्रैर्नानावर्णैस्तिलकैः समेता संयुक्ता । तथा चापाण्डुरा पाण्डुवर्णा । भस्मन उष्ट्रस्य करभस्य खरस्य गर्दभस्य चानुरूपा तत्सदृशवर्णा । भृङ्गोपमा भ्रमरसदृशवर्णा ।

अङ्कुष्ठिका विटपविशेषः । तत्पुष्पसदृशी वा । नीललोहितेत्यर्थः । सूर्यस्यादित्यस्याग्नेश्च सदृशवर्णा या शिला सा विज्ञेया जलरहिता भवति ॥ १०६ ॥

अन्यदप्याह ।

**चन्द्रातपस्फटिकमौक्तिकहेमरूपा**
**याश्चेन्द्रनीलमणिहिङ्गुलुकाञ्जनाभाः ।**
**सूर्योदयांशुहरितालनिभाश्च याः स्यु-**
**स्ताः शोभना मुनिवचोऽत्र च वृत्तमेतत् ॥ ११० ॥**

याः शिलाश्चन्द्रातपस्य चन्द्रप्रभायाः स्फटिकस्य स्फटिकमणेः । मौक्तिकस्य च मुक्ताहारस्य च वा । हेम्नः सुवर्णस्य च याः समानरूपाः सदृशवर्णाः । याश्च शिला इन्द्रनीलस्य मणेः । हिङ्गुलुकस्य । हिङ्गुलुकमिति रक्तवर्णमिति यत् प्रसिद्धम् । अञ्जनं कज्जलमतिकृष्णः । एतेषां सदृशी आभा कान्तिर्यासां तथा । याश्च सूर्योदयांशुनिभाः । सूर्यस्यादित्यस्योदयकाले यादृशा अंशवो रश्मयो दृश्यन्ते तत्तुल्यवर्णा अतिरोहिता इत्यर्थः । याश्च हरितालनिभाः स्युर्भवेयुः । ताः सर्वाः शोभनाः । अत्रास्मिन् प्रकरणे एतद्वक्ष्यमाणं वृत्तं मुनिवचः ऋषेर्वाक्यमित्यनेनागममनुसृतं भवतीति ॥ ११० ॥

ततश्च मुनिवचनमाह ।

**एता ह्यभेद्याश्च शिलाः शिवाश्च**
**यक्षैश्च नागैश्च सदाभिजुष्टाः ।**
**येषां च राष्ट्रेषु भवन्ति राज्ञां**
**तेषामवृष्टिर्न भवेत् कदाचित् ॥ १११ ॥**

एताः शिलाः सर्वा अभेद्या निर्विदार्याः । यतः शिवाः श्रेयस्कर्यः सदा सर्वकालं यक्षैर्देवयोनिभिर्नागैश्चाभिजुष्टाः सेविता येषां राज्ञां नृपाणां राष्ट्रेषु देशेषु भवन्ति तेषां कदाचिदप्यवृष्टिर्न भवेत् नित्यमेवेन्द्रस्तेषु वर्षतीत्यर्थः ॥ १११ ॥

अधुना शिलानां विदारणार्थमाह ।

**भेदं यदा नैति शिला तदानीं**
**पलाशकाष्ठैः सह तिन्दुकानाम् ।**

प्रज्वालयित्वानलमग्निवर्णा
सुधाम्बुसिक्ता प्रविदारमेति ॥ ११२ ॥

शिला विदार्यमाणा यदा भेदं नैति न याति तदानीं तस्मिन् काले किं कुर्यात् । उच्यते । पलाशकाष्ठैः सह तिन्दुकानां वृक्षविशेषाणां काष्ठानि दारूणि प्रज्वालयित्वाऽनलमग्निं शिलापृष्ठगतं शिलां हुताशनवर्णामग्निवर्णां कृत्वा सुधाम्बुसिक्ता सुधा क्षीरं तत्संयुक्तेनाम्बुना जलेन सिक्ता संसेचिता प्रविदारमेति भेदमेति भेदमायाति ॥ ११२ ॥

अन्यदप्याह ।

तोयं श्रितं मोक्षकभस्मना वा
यत् सप्तकृत्वः परिषेचनं तत् ।
कार्यं शरक्षारयुतं शिलायाः
प्रस्फोटनं वह्निवितापितायाः ॥ ११३ ॥

मोक्षको वृक्षः । यश्च मणीवकमिति प्रसिद्धः । तोयं जलम् । मोक्षकभस्मना यत्तोयं जलं श्रितं क्वथितं तच्छरक्षारयुतं शरभस्मना संयुक्तं कृत्वा तेन वह्निवितापितायाः पूर्वोक्तविधानेनाग्निसन्तप्तायाः सप्तकृत्वः सप्तवारं परिषेचनं कार्यं सन्ताप्य ततः परिषेचनं कार्यम् । ततस्तस्याः प्रस्फोटनं भेदनं भवति ॥ ११३ ॥

अन्यदपि शिलाभेदनमाह ।

तक्रकाञ्जिकसुराः सकुलत्था
योजितानि बदराणि च तस्मिन् ।
सप्तरात्रमुषितान्यभितप्तां
दारयन्ति हि शिलां परिषेकैः ॥ ११४ ॥

तक्रं मथितं काञ्जिकं सौवीरम् । सुरा प्रसिद्धा । एताः सकुलत्थाः कुलत्थसहिताः । तस्मिन् बदराणि बदरिफलानि च योजितानि मध्ये प्रक्षिप्तानि । एतानि सर्वाणि सप्तरात्रमुषितानि परिषेकैः प्रसेकैरभितप्तामभिसन्तापितां प्राग्विधिना शिलां विदारयन्ति स्फोटयन्ति ॥ ११४ ॥

अन्यदप्याह ।

नैम्बं पत्रं त्वक् च नालं तिलानां
सापामार्गं तिन्दुकं स्याद्गुडूची ।
गोमूत्रेण स्रावितः क्षार एषां
षट्कृत्वोऽतस्तापितो भिद्यतेऽश्मा ॥ ११५ ॥

नैम्बमिति। पत्रं त्वक् च नैम्बमेव। तिलानां नालं यस्मिन्नभ्यन्तरे कोशाकारे तिला भवन्ति। सापामार्गमपामार्गसहितं तिन्दुकफलं स्याद्भवेत्। गुडूची अमृता। एषामेकीकृतानां क्षारो भस्म गोमूत्रेण स्रावितः परिस्रावितः। तेनाश्मा पाषाणस्तापितः प्राग्विधिना षट्कृत्वः षड्वारं परिषेचनं कृत्वा भिद्यते ॥ ११५ ॥

अधुना शस्त्रपानमाह ।

आर्कं[1] पयो हुडुविषाणमषीसमेतं
पारावताखुशकृता च युतः प्रलेपः ।
टङ्कस्य तैलमथितस्य ततोऽस्य पानं
पश्चाच्छितस्य न शिलासु भवेद्विघातः ॥ ११६ ॥

टङ्कं शस्त्रम् । एषः श्लोकः खड्गलक्षणे व्याख्यातः ॥ ११६ ॥

अन्यदप्याह ।

क्षारे[2] कदल्या मथितेन युक्ते
दिनोषिते पायितमायसं यत् ।
सम्यक् शितं चाश्मनि नैति भङ्गं
न चान्यलोहेष्वपि तस्य कौण्ठ्यम् ॥ ११७ ॥

एषोऽपि खड्गलक्षणे व्याख्यातः ॥ ११७ ॥

अथ वापीलक्षणमाह ।

पाली प्रागपरायताम्बु सुचिरं धत्ते न याम्योत्तरा
कल्लोलैरवदारमेति मरुता सा प्रायशः प्रेरितैः ।

---

१ द्रष्टव्योऽस्य ग्रन्थस्य ६१५ पृष्ठे २५ श्लोकः ।
२ द्रष्टव्योऽस्य ग्रन्थस्य ६१५-६१६ पृष्ठयो २६ श्लोकः ।

तां चेदिच्छति सारदारुभिरपां सम्पातमावारयेत्
पाषाणादिभिरेव वा प्रतिचयं क्षुण्णं द्विपाश्वादिभिः ॥ ११८ ॥

पाली वापी प्रागपरायता या पूर्वपश्चिमयोर्दिशोरायता दीर्घा सा सुचिरं बहुकालं अम्बु जलं धत्ते धारयति । याम्योत्तरा या पाली दक्षिणोत्तरयोर्दिशोरायता सा सुचिरं चिरमम्बु न धत्ते यतः सा महता वायुना प्रायशो बाहुल्येन प्रेरितैः कल्लोलैर्जलसङ्घोभिरवदारं विनाशमेत्यायाति । तां याम्योत्तरायतां पालीं यदीच्छति कर्ता कर्तुं तदापां सम्पातं सारदारुभिरावारयेत् । पाल्यां जलेन सह यत्र सम्पर्कस्तत्र भित्तौ सारैर्दृढैर्दारुभिः काष्ठैरावरणं कुर्यात् । पाषाणादिभिरेव । पाषाणैरश्मभिर्वा अपां सम्पातमावारयेत् । आदिग्रहणात् पक्वेष्टकादिभिः स्थूलैः शर्करैश्च तत्र च प्रतिचयं चयं चयं प्रति द्विपैर्गजैरश्वैस्तुरगैरादिग्रहणादुष्ट्रमहिषबलीवर्दैः क्षुण्णं मर्दितं कार्यं येन सुदृढं भवति ॥ ११८ ॥

कीदृशं वाप्यास्तीरं कारयेदित्याह ।

ककुभवटाम्रप्लक्षकदम्बैः सनिचुलजम्बूवेतसनीपैः ।
कुरबकतालाशोकमधूकैर्बकुलविमिश्रैश्चावृततीराम् ॥ ११९ ॥

ककुभादयः सर्वे एव वृक्षविशेषाः । ककुभः । वटः । आम्रः । प्लक्षः । कदम्बः । एतैः किंभूतैः सनिचुलजम्बूवेतसनीपैः । निचुलेन । जम्ब्वा । वेतसेन । नीपेन । एभिः सहितैः संयुक्तैः । तथा कुरबकः । तालः । अशोकः । मधूकः । एतैरपि किंभूतैः । बकुलविमिश्रैर्बकुलसंयुक्तैः । एतैरावृता व्याप्तस्तीरस्तटो यस्याः पाल्यास्तां तथाभूतां कारयेदिति ॥ ११९ ॥

अथ नैर्वाहिकद्वारलक्षणमाह ।

द्वारं च नैर्वाहिकमेकदेशे
कार्यं शिलासञ्चितवारिमार्गम् ।
कोशस्थितं निर्विवरं कपाटं
कृत्वा ततः पांशुभिरावपेत् तम् ॥ १२० ॥

एकदेशे एकस्मिन् स्थाने जलस्य नैर्वाहिकं द्वारं निर्गमनद्वारं कार्यम् कीदृशं शिलासञ्चितवारिमार्गम् । शिलाभिः सञ्चितं पाषाणैश्चितं वारिमा

यच तत् तथाभूतम् । तच्च कोशस्थितं तले व्यवस्थितम् । तच च कपाटं निर्विवरं विवररहितं कृत्वा फलकमाच्छादनायोपरि दत्वा ततस्तं पांशुभिरावपेत् मृत्तिकाभिः स्थगयेदित्यर्थः ॥ १२० ॥

अधुना द्रव्ययोगमाह ।

**अञ्जनमुस्तोशीरैः सराजकोशातकामलकचूर्णैः ।**
**कतकफलसमायुक्तैर्योगः कूपे प्रदातव्यः ॥ १२१ ॥**

अञ्जनं प्रसिद्धं वृक्षविशेषः । सौवीरक इति केचित् । मुस्ता भद्राः । उशीरं प्रसिद्धम् । एतैः किम्भूतैः । सराजकोशातकामलकचूर्णैः । सह राजकोशातकेन आमलकचूर्णेन च । एतैरपि कतकफलसमायुक्तैः । कतकफलेन सहितैः । ईदृशैर्योगो द्रव्यसंयोगः । सच द्रव्यसमायोगश्चूर्णीकृतः कूपे प्रदातव्यो देयः ॥ १२१ ॥

अस्य गुणानाह ।

**कलुषं कटुकं लवणं विरसं**
**सलिलं यदि वाशुभगन्धि भवेत् ।**
**तदनेन भवत्यमलं सुरसं**
**सुसुगन्धि गुणैरपरैश्च युतम् ॥ १२२ ॥**

यत् सलिलं जलं कलुषमनिर्मलम् । कटुकं तिक्तम् । लवणम् । विरसं विगतरसममृष्टम् । यदि वा अशुभगन्धि दुर्गन्धि भवेत् स्यात् । तत् सलिलमनेन योगेनामलं निर्मलम् । सुरसं मृष्टम् । सुसुगन्धि शोभनगन्धि भवति । तथा अपरैश्चान्यैर्गुणैर्युतम् । अकटुकालवणपरिणामकरैर्युतं संयुक्तं भवति ॥ १२२ ॥

अधुना नक्षत्राण्याह ।

**हस्तो मघानुराधापुष्यधनिष्ठोत्तराणि रोहिण्यः ।**
**शतभिषगित्यारम्भे कूपानां शस्यते भगणः ॥ १२३ ॥**

हस्तः । मघा । अनुराधा । पुष्यः । धनिष्ठा । उत्तरास्तिस्रः उत्तरफल्गुन्युत्तराषाढोत्तरभद्रपदा चेति एतानि । तथा रोहिण्यः । शतभि

वकुलश्चेो ज्यवच्छेदाय । अयं भगणो नवचसमूहः कूपानामारम्भे शस्यते वृष्यते ॥ १२३ ॥

अधुना प्रतिष्ठाविधानमाह ।

**कृत्वा वरुणस्य बलिं वटवेतसकीलकं शिरास्थाने ।**
**कुसुमैर्गन्धैर्धूपैः सम्पूज्य निधापयेत् प्रथमम् ॥ १२४ ॥**

वरुणस्यापाम्पतेर्बलिमुपहारं कृत्वा विधाय वटवेतसकीलकं वटकीलकं वेतसकीलकं च कुसुमैः पुष्पैर्गन्धैर्गन्धद्रव्यैर्धूपैर्गुग्गुलप्रभृतिभिः सम्पूज्याभ्यर्च्य प्रथममादो शिरास्थाने शिराप्रदेशे विनिधापयेन्निखनेत् स्थिरं स्थापयेदिति ॥ १२४ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतो दकार्गलं नाम त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

## अथ वृक्षायुर्वेदाध्यायो व्याख्यायते ।

तत्रादावेव प्रयोजनप्रदर्शनार्थमाह ।

**प्रान्तच्छायाविनिर्मुक्ता न मनोज्ञा जलाशयाः ।**
**यस्मादतो जलप्रान्तेष्वारामान् विनिवेशयेत् ॥ १ ॥**

यस्माज्जलाशया उदकाधारा वापीकूपतडागाः । प्रान्तच्छायाविनिर्मुक्ताः पर्यन्तच्छायाविरहिता मनोज्ञाश्चित्ताह्लादका न भवन्ति । अतस्तस्माज्जलप्रान्तेषूदकपर्यन्तेष्वारामान् विशेषेण विनिवेशयेत् कारयेत् । आरमन्तेऽस्मिन्नित्यारामो वृक्षवाटिकेत्यर्थः ॥ १ ॥

अथ तत्र भूलक्षणमाह ।

**मृद्वी भूः सर्ववृक्षाणां हिता तस्यां तिलान् वपेत् ।**
**पुष्पितांस्तांश्च मृद्नीयात् कर्मैतत् प्रथमं भुवः ॥ २ ॥**

सर्ववृक्षाणां मृद्वी मधुरा कोमला । भूः अवनिः । हिता हितवहा शोभनेत्यर्थः । तस्यां भूमो प्रथमं तिलान् वपेत् उप्यात् । तांस्तिलान् पुष्पितान् सञ्जातकुसुमान् मृद्नीयादुपमर्दयेत् । एतद्भुवो भूमेः प्रथममादो कर्म कार्यम् ॥ २ ॥

तथा च काश्यपः ।

दूर्वावीरणसंयुक्ताः सानूपा मृदुमृत्तिकाः ।

तत्र वाप्याः शुभा वृक्षाः सुगन्धिफलशाखिनः ॥

अधुना प्रथमरोप्यान् वृक्षानाह ।

**अरिष्टाशोकपुन्नागशिरीषाः सप्रियङ्गवः ॥**

**मङ्गल्याः पूर्वमारामे रोपणीया गृहेषु वा ॥ ३ ॥**

अरिष्टः । अशोकः । पुन्नागः । शिरीषः । एते वृक्षविशेषाः किम्भूताः । सप्रियङ्गवः । प्रियङ्गुवृक्षेण सहिताः । मङ्गल्याः प्रशस्ताः । पूर्वं प्रथममारामे रोपणीयाः । गृहेषु वा । पूर्वं प्रथमं गृहेषु रोपणीयाः ॥ ३ ॥

तथा च काश्यपः ।

अशोकचम्पकारिष्टपुन्नागाश्च प्रियङ्गवः ।

शिरीषोदुम्बराः श्रेष्ठाः पारिजातकमेव च ॥

एते वृक्षाः शुभा ज्ञेयाः प्रथमं तांश्च रोपयेत् ।

देवालये तथोद्याने गृहेषूपवनेषु च—इति ॥

अधुना काण्डरोप्याणां विधानमाह ।

**पनसाशोककदलीजम्बूलकुचदाडिमाः ।**

**द्राक्षापालीवताश्चैव बीजपूरातिमुक्तकाः ॥ ४ ॥**

**एते द्रुमाः काण्डरोप्या गोमयेन प्रलेपिताः ।**

**मूलोच्छेदेऽथवा स्कन्धे रोपणीयाः परं ततः ॥ ५ ॥**

पनसः । अशोकः । कदली । जम्बूः । लकुचः । दाडिमः । द्राक्षा मृद्वी । पालीवतश्चोचः । बीजपूरो मातुलुङ्गः । अतिमुक्तकः ॥ ४ ॥

एते पनसादयो द्रुमा वृक्षाः काण्डरोप्याः । काण्डाः शाखास्तान् गोमयेन प्रलिप्य रोपयेत् । ततोऽनन्तरं परं प्रकृष्टं मूलोच्छेदे अथवा स्कन्धे रोपणीयाः । अन्यवृक्षस्य मूलोच्छेदं कृत्वा तस्य छिन्नमूलस्योपरि विजातीयो वृक्षो रोपणीयः । अथवा स्कन्धादूर्ध्वादन्यवृक्षं छित्त्वा तस्य स्कन्धमुत्कीर्य विजातीयो वृक्षो रोपणीयः । तत्र मृत्तिकाश्लेषं दापयेदिति ॥ ५ ॥

तथा च काश्यपः ।

द्राक्षातिमुक्तको जम्बूबीजपूरकदाडिमाः ।
कदलीबहुलाशोकाः काण्डरोप्याश्च वापयेत् ॥
अन्येऽपि शाखिनो ये च पुष्पिताः फलितास्तथा ।
गोमयेन प्रलिप्ताश्च रोपणीया विवृद्धये ॥

अथ वृक्षाणां कालनियमार्थमाह ।

**अजातशाखान् शिशिरे जात[1]शाखान् हिमागमे ।**
**वर्षागमे[2] च सुस्कन्धान् यथादिक्स्थान् प्ररोपयेत् ॥ ६ ॥**

अजातशाखानजातलताङ्कुरान् वृक्षान् शिशिरे माघे फाल्गुने च रोपयेत् । जातशाखान् हिमागमे हेमन्ते मार्गशीर्षे पौषे च रोपयेत् । सुस्कन्धान् महाशाखायुक्तान् वर्षागमे प्रावृट्काले श्रावणे भाद्रपदे च रोपयेत् । केचित् "जातशाखान् घनागमे वर्षागर्भे च सुस्कन्धान्" इति पठन्ति । घनागमे वर्षाप्रारम्भे । वर्षागर्भे वर्षामध्यभागे इति । तांश्च यथादिक्स्थान् । पूर्वमन्यस्थानतस्तस्य तरोर्या पूर्वा दिगाशा सान्यत्र रोपितस्य पूर्वैव कार्या । एवं सर्वासां दिशामानुलोम्यं वाच्यम् ॥ ६ ॥

तथा च काश्यपः ।

अजातशाखा ये वृक्षाः शिशिरे तांश्च रोपयेत् ।
जातशाखाश्च हेमन्ते रोपणीया विधानतः ॥
सुस्कन्धाः शाखिनो ये तान् प्रावृट्काले तु रोपयेत्—इति ।

अन्यदप्याह ।

**घृतोशीरतिलक्षौद्रविडङ्गक्षीरगोमयैः ।**
**आमूलस्कन्धलिप्तानां सङ्क्रामणविरोपणम् ॥ ७ ॥**

घृतमाज्यम् । उशीरं प्रसिद्धम् । तिलाः । क्षौद्रं माक्षिकम् । विडङ्गः । क्षीरं गोक्षीरम् । गोमयं गोशकृत् । एतैर्घृतादिभिरामूलस्कन्धलिप्तानां मूलात् प्रभृति शाखान्तं यावत् लिप्तानां वृक्षाणां सङ्क्रामणविरोपणम् । सङ्क्रामणं देशान्तरनयनम् । अन्यदेशे नीत्वा रोपयेदित्यर्थः ।

---

१ जातशाखान् घनागमे-इति पाठान्तरम् ।
२ वर्षागर्भे च सुस्कन्धान्-इति पाठान्तरम् ।

तथा च ।

घृतं क्षीरं तथा क्षौद्रमुशीरतिलगोमयैः ।

विडङ्गलेपनं मूलात् सङ्क्रामणविरोपणम् ॥

सङ्क्रामे रोपणं शुभमित्यर्थः ॥ ७ ॥

अथ रोपणविधानमाह ।

**शुचिर्भूत्वा तरोः पूजां कृत्वा स्नानानुलेपनैः ।**

**रोपयेद्रोपितश्चैव पत्रैस्तैरेव जायते ॥ ८ ॥**

शुचिः समाहितो भूत्वा तरोर्वृक्षस्य स्नानानुलेपनैः । स्नानेनानुलेपनेन पूजामर्चां कृत्वा विधाय रोपयेत् । एवमनेन प्रकारेण रोपितश्च तैरेव पत्रैर्युक्तो रोपितस्तैः सह जायते न शुष्यति ॥ ८ ॥

अधुना रोपितानां सेकविधानमाह ।

**सायं प्रातश्च घर्मर्त्तौ शीतकाले दिनान्तरे ।**

**वर्षासु च भुवः शोषे सेक्तव्या रोपिता द्रुमाः ॥ ९ ॥**

रोपिता द्रुमा वृक्षा घर्मर्त्तौ ग्रीष्मे सायं प्रातश्च सेक्तव्याः । सायमपराह्णे प्रातः पूर्वाह्णे । शीतकाले हेमन्ते शिशिरे च दिनान्तरे च । दिनं दिनमन्तरे मध्ये कृत्वा सेक्तव्याः । वर्षासु च वर्षासमये । भुवः शोषे । यदा यदा भूः शुष्यति तदा तदा च सेक्तव्याः ॥ ९ ॥

अथानूपजान् वृक्षानाह ।

**जम्बूवेतसवानीरकदम्बोदुम्बरार्जुनाः ।**

**बीजपूरकमृद्वीकालकुचाश्च सदाडिमाः ॥ १० ॥**

**वञ्जुलो नक्तमालश्च तिलकः पनसस्तथा ।**

**तिमिरोऽम्रातकश्चेति षोडशानूपजाः स्मृताः ॥ ११ ॥**

जम्बूः । वेतसः । वानीरः । कदम्बः । उदुम्बरः । अर्जुनः । बीजपूरको मातुलुङ्गः । मृद्वीका द्राक्षा । लकुचः । एते सदाडिमाः । दाडिमेन सहिताः ॥ १० ॥

वञ्जुलः । नक्तमालश्च । तिलकः । पनसः । तथा तेनैव प्रकारेण । तिमिरः । अम्रातकः । चशब्दः समुच्चये । इत्येवंप्रकाराः षोडश वृक्षा अनूपजाः । अनूपे बहूदके जायन्ते ॥ ११ ॥

अथ वृक्षाणां रोपितानां किंप्रमाणमन्तरं कार्यमित्येतत्प्रतिपादनायाह ।

**उत्तमं विंशतिर्हस्ता मध्यमं षोडशान्तरम् ।**
**स्थानात् स्थानान्तरं कार्यं वृक्षाणां द्वादशावरम् ॥ १२ ॥**

वृक्षाणां स्थानात् स्थानात् प्रदेशात् प्रदेशाद्यदन्तरं विंशतिर्हस्ता वृक्षस्य समन्ततस्तदुत्तमं प्रमाणम् । यच्चान्तरं षोडशहस्तान्तरं तन्मध्यमम् । यदनन्तरं द्वादशहस्तान्तरं तदवरं निकृष्टमित्यर्थः । एतदुक्तं भवति । यत्रैको वृक्षो रोपितस्तस्माद्विंशतिकेऽन्तरे षोडशके वा अन्यद्रोपणीयमिति ॥ १२ ॥

तथा च काश्यपः ।

अन्तरं विंशतिर्हस्ता वृक्षाणामुत्तमं स्मृतम् ।
मध्यमं षोडश ज्ञेयमधमं द्वादश स्मृतम् ॥

किमिति तेषां मध्येऽन्तरं क्रियत इति तदर्थमाह ।

**अभ्यासजातास्तरवः संस्पृशन्तः परस्परम् ।**
**मिश्रैर्मूलैश्च न फलं सम्यग्यच्छन्ति पीडिताः ॥ १३ ॥**

ये तरवो वृक्षा अभ्यासजाताः सन्निकर्षसम्भूताः परस्परमन्योन्यं संस्पृशन्तः । मिश्रैश्च परस्परं संलग्नैर्मूलैः पीडिता भवन्ति । अतस्ते सम्यक् फलं न यच्छन्ति न ददति ॥ १३ ॥

अथ तेषां रोगज्ञानमाह ।

**शीतवातातपै रोगो जायते पाण्डुपत्रता ।**
**अवृद्धिश्च प्रवालानां शाखाशोषो रसस्रुतिः ॥ १४ ॥**

शीतेन वातेनातपेन च रोगस्तेषां जायत उत्पद्यते । तथा पाण्डुपत्रता पर्णानां पाण्डुत्वम् । प्रवालानामङ्कुराणामवृद्धिरसमृद्धिः । शाखानां शोषो नीरसता । रसस्य च स्रुतिः स्रावः । एतैश्चिह्नैस्तरुः सरोगो ज्ञेयः ॥ १४ ॥

अथैतेषां चिकित्सितमाह ।

**चिकित्सितमथैतेषां शस्त्रेणादौ विशोधनम् ।**
**विडङ्गघृतपङ्काक्तान् सेचयेत् क्षीरवारिणा ॥ १५ ॥**

अथानन्तरमेतेषां वृक्षाणां चिकित्सितं भवति। आदौ प्रथमं शस्त्रेण व्रणादिविशोधनं कार्यम् । यद्विवर्णं छिद्रमवयवं तच्छस्त्रेण निवर्तयेत् । विडङ्गः । घृतमाज्यम् । पङ्कः कर्दमः । एतैरेकीकृतैः आक्तानत्यन्तं लिप्तान् कुर्यात् । ततः क्षीरवारिणा क्षीरसंयुक्तेन जलेन सेचयेत् । एवं कृते नीरुजा भवन्ति ॥ १५ ॥

तथा च काश्यपः ।

शाखाविटपपत्रैश्च छायया विहिताश्च ये ।
येऽपि पर्णफलैर्हीना वृक्षाः पत्रैश्च पाण्डुरैः ॥
शीतोष्णवर्षवाताद्यैर्मूलैर्व्यामिश्रितैरपि ।
शाखिनां तु भवेद्रोगो द्विपानां लेखनेन च ॥
चिकित्सितेषु कर्तव्या ये च भूयः पुनर्नवाः ।
शोधयेत् प्रथमं शस्त्रैः प्रलेपं दापयेत्ततः ॥
कर्दमेन विडङ्गैश्च घृतमिश्रैश्च लेपयेत् ।
क्षीरतोयेन सेकः स्याद्रोहणं सर्वशाखिनाम् ॥

अथ फलनाशचिकित्सितमाह ।

**फलनाशे कुलत्थैश्च माषैर्मुद्गैस्तिलैर्यवैः ।**
**शृतशीतपयःसेकः फलपुष्पसमृद्धये ॥ १६ ॥**

वृक्षाणां यदा फलनाशो भवति तदा कुलत्थैर्माषैर्मुद्गैस्तिलैर्यवैः । एतैः सह शृतशीतपयः शृतं क्वथितं तदेव पश्चाच्छीतं पयः क्षीरं कृत्वा तेन पयसा फलानां पुष्पाणां चातिवृद्धये सेकः कार्य इति ॥ १६ ॥

अथ वृद्ध्यर्थप्रयोगमाह ।

**अविकाजशकृच्चूर्णस्याढके द्वे तिलाढकम् ।**
**सक्तुप्रस्थो जलद्रोणो गोमांसतुलया सह ॥ १७ ॥**
**सप्तरात्रोषितैरेतैः सेकः कार्यो वनस्पतेः ।**
**वल्लीगुल्मलतानां च फलपुष्पाय सर्वदा ॥ १८ ॥**

अविका प्रसिद्धा मेषजातिः । अजश्छागः । अविकाजयोः शकृत् पुरीषः । तच्चूर्णस्य द्वे आढके । अविकशकृच्चूर्णस्याढकमजशकृच्चूर्णस्याढकम् ।

आढकश्चतुःषष्टिपलानि । तिलानामाढकम् । सक्तुप्रस्थः । प्रस्थः षोडशपलानि । जलस्य द्रोणः । द्रोणः पलशतद्वयं षट्पञ्चाशदधिकम् । एतत्सर्वं गोमांसतुलया सह । तुला पलशतम् ।

उक्तं च ।

षियवं कृष्णलं विन्द्यान्माषलः पञ्चकृष्णलः ।
ते स्युर्द्वादश लक्षाख्यं सुवर्णमथ षोडश ॥
पञ्चलवैश्चतुर्भिस्तु सुवर्णैर्निष्क उच्यते ।
चतुष्पलोऽथ कुडवः प्रस्थः स्यात् तच्चतुष्टयम् ॥
आढकस्तु चतुष्प्रस्थो द्रोणस्तु चतुराढकः ।
मानिका तु चतुर्द्रोणा खारी स्यात् तच्चतुष्टयम् ॥
तुला पलशतं चेयं भारः स्याद्विंशतिस्तुलाः ।
शुष्कद्रव्येषु सञ्ज्ञेयं चार्द्रेषु द्विगुणा भवेत् ॥

एवं तन्मध्ये गोमांसस्य गोपिशितस्य तुला देया । पलशतमित्यर्थः ॥ १७ ॥

एतैः सर्वैरेकीकृतैः सप्तरात्रोषितैः सप्ताहमुषितैः । वनस्पतेर्वृक्षस्य वल्लीनां लतानां च फलानां चातिवृद्ध्यर्थं सर्वदा सर्वकालं सेकः कार्यः । एतत् प्रमाणमेकस्य वृक्षस्यानेनानुसारेण बहूनां कार्यम् ॥ १८ ॥

तथा च काश्यपः ।

अजाविकानां द्वौ प्रस्थौ शकृच्चूर्णं च कारयेत् ।
तिलानामाढकं दद्यात् सक्तूनां प्रस्थमेव च ॥
गोमांसशतमेकं स्याद्द्रोणे सार्धे सलिलस्य च ।
सप्ताहमुषितैरेतैः सेकं दद्याद्वनस्पतेः ॥
स भवेत् फलपुष्पैश्च पत्रैश्चाङ्कुरितैर्वृतः ।

अधुना बीजानां वापनविधानमाह ।

**वासराणि दश दुग्धभावितं**
**बीजमाज्ययुतहस्तयोजितम् ।**
**गोमयेन बहुशो विरूक्षितं**
**क्रौडमार्गपिशितैश्च धूपितम् ॥ १९ ॥**

**मांससूकरवसासमन्वितं रोपितं च परिकर्मितावनौ ।**
**क्षीरसंयुतजलावसेचितं जायते कुसुमयुक्तमेव तत् ॥ २० ॥**

यस्य कस्यचिद्वृक्षस्य बीजं दश वासराणि दश दिनानि दुग्धभावितं दुग्धेन सिक्तं कार्यम् । कीदृशम् । आज्ययुतहस्तयोजितम् । आज्ययुतेन घृतेनाभ्यक्तेन हस्तेन करेण योजितं क्षीरमध्ये क्षिप्तम् । पुनर्गृहीत्वा घृताभ्यक्तेन करेणैकीभूतं पृथक्कार्यम् । एवं प्रत्यहं कर्म कार्यम् । यावद्दश दिनानि । ततो गोमयेन गोशकृता बहुशो बहून् वारान् विरूक्षितं मर्दितम् । क्रोडः सूकरः । मृगो हरिणः । क्रोडस्येदं क्रौडम् । मृगस्येदं मार्गम् । क्रौडमार्गपिशितैर्मांसैर्धूपितम् । भाण्डान्तरस्थं धूपयेत् ॥ १९ ॥

ततो मांसेनामिषेण सूकरवसया वराहमज्जया समन्वितं संयुतं परिकर्मितायामवनौ भूमौ रोपितम् । परिकर्मिता तिलवपनेन । ततः क्षीरसंयुतेन जलेनोदकेनावसेचितं सुतृप्तं तद्बीजम् । एवं कृते कुसुमयुक्तं पुष्पसंयुतमेव जायत उत्पद्यते ॥ २० ॥

अधुना तिन्तिडीविधानमाह ।

**तिन्तिडीत्यपि करोति वल्लरीं व्रीहिमाषतिलचूर्णसक्तुभिः ।**
**पूतिमांससहितैश्च सेचिता धूपिता च सततं हरिद्रया ॥ २१ ॥**

अपिशब्दः सम्भावनायाम् । तिन्तिडीत्यपि वल्लरीं करोति अभिनवाङ्कुरा सम्पद्यते यतः सा अतिकठिना । कैः । व्रीहिमाषतिलचूर्णसक्तुभिः । व्रीहिचूर्णैः शालिचूर्णैः । माषचूर्णैः । तिलचूर्णैः । सक्तुभिश्च । कीदृशैः । पूतिमांससहितैः । क्लिन्नमांसयुतैः । एतैश्च सेचिता सिक्ता सततं सर्वकालं हरिद्रया च धूपिता । एतदुक्तं भवति । तिन्तिडीबीजं व्रीहिचूर्णमाषचूर्णतिलचूर्णसक्तुभिरेकीकृतैः पूतिमांससहितैः सिक्तं कृत्वा हरिद्रया धूपयेत् । वल्लरीं करोति । अपिशब्दादन्यबीजस्य वल्लरीकरणे कः सन्देहः ॥ २१ ॥

अधुना कपित्थबीजरोपणमाह ।

**कपित्थवल्लीकरणाय मूला-**
**न्यास्फोतधात्रीधववासिकानाम् ।**

पलाशिनी वेतससूर्यवल्ली
श्यामातिमुक्तैः सहिताष्टमूली ॥ २२ ॥
क्षीरे शृते चाप्यनया सुशीते
ताला[1]शतं स्था[2]प्य कपित्थबीजम् ।
दिने दिने शोषितमर्कपादै-
र्मासं विधिस्त्वेष ततोऽधिरोप्यम् ॥ २३ ॥
हस्तायतं तद्द्विगुणं गभीरं
खात्वावटं प्रोक्तजलावपूर्णम् ।
शुष्कं प्रदग्धं मधुसर्पिषा तत्
प्रलेपयेद्भस्मसमन्वितेन ॥ २४ ॥
चूर्णीकृतैर्माषतिलैर्यवैश्च
प्रपूरयेन्मृत्तिकयान्तरस्थैः ।
मत्स्यामिषाम्भस्सहितं च हन्या-
द्यावद्घनत्वं समुपागतं तत् ॥ २५ ॥
उप्तं च बीजं चतुरङ्गुलाधो
मत्स्याम्भसा मांसजलैश्च सिक्तम् ।
वल्ली भवत्याशु शुभप्रवाला
विस्मापनी मण्डपमावृणोति ॥ २६ ॥

कपित्थवल्लीकरणायेति । कपित्थबीजस्य वल्लीकरणाय वल्लीजननाय मूलान्येतानि । केषाम् । आस्फोतधात्रीधववासिकानाम् । आस्फोतः सारिवा । धात्री आमलकी । धवो वृक्षः । वासिका प्रसिद्धा । एषां चतुर्णां चत्वारि च मूलानि । तथा वेतसो वृक्षः । वेतसस्य वृक्षस्य वल्ली व्रततिः । समूला पलाशिनी पर्णयुक्ता । एवमेव सूर्यवल्ली । श्यामा प्रसिद्धा । केचित् त्रिवृदितीच्छन्ति । अतिमुक्तः स्यन्दनकः । एषां मूलैः सहिता । अष्टमूली भवति । अष्टानां मूलानां समाहारः अष्टमूली ॥ २२ ॥

१ तालस्थाने तला-इतिप्रयोग आर्षः ।
२ संस्थाप्य-इत्यस्य स्थाने स्थाप्य-इति प्रयोग आर्षः ।

क्षीरे शृते चेति । अनया अष्टमूल्या सह क्षीरे शृते क्वथिते ततः सुशीते कृते तन्मध्ये कपित्थबीजं तालशतं संस्थाप्य । तालो हस्तशब्दः । एतावन्तं कालं संस्थाप्य ततो गृह्णीयात् । अनन्तरमर्कपादैः सूर्यरश्मिभिः शोषितं कार्यम् । एवं दिने दिने यावन्मासं त्रिंशद्दिनानि तावदेवं विधिः । ततोऽनन्तरमधिरोप्यं रोपणीयम् ॥ २३ ॥

हस्तायतमिति । अवटं गर्तं हस्तायतं हस्तप्रमाणमायतम् । समन्ततः समं वृतम् । तद्द्विगुणं गभीरं हस्तद्वितयं गम्भीरं तथाभूतं खात्वा तत्र प्रोक्तजलावपूर्णम् । प्रोक्तेन कथितेन जलेन क्षीरोदकेनावपूरितं कृत्वा ततस्तं शोषयेत् । ततः शुष्कमग्निना प्रदहेत् । शुष्कं प्रदग्धं च मधुसर्पिषा मधुना माक्षिकेण सर्पिषा घृतेन च भस्मसमन्वितेन भस्मना युक्तेन प्रलेपयेत् लिम्पेत् ॥ २४ ॥

चूर्णीकृतैरिति । ततो माषैस्तिलैर्यवैश्चूर्णीकृतैः सञ्चूर्णितैः प्रपूरयेत् तमवटं मृत्तिकया पूरयित्वा ततोऽन्तरस्थैः । अन्तरे मध्ये स्थिता ये तैर्मृत्तिकयान्तरस्थैः । अयमर्थः । मृदाङ्गुलचतुष्कमात्रं पूरयित्वा ततो माषादिभिः पूरयेत् । पुनरपि तावन्मात्रं मृत्तिकया पूरयित्वा पुनरपि माषादिभिः पूरयेत् । ततस्तं मत्स्यामिषाम्भःसहितं च हन्यात् । मत्स्यामिषेण मत्स्यमांसेन युक्तं यदम्भो जलं तेन सहितं तदवटं हन्यात् पुनः पुनः चोदयेत् । यावत् तदवटं घनत्वं काठिन्यं समुपागतं प्राप्तम् ॥ २५ ॥

उप्तमिति । ततस्तत्र चतुरङ्गुलाधश्चतुर्णामङ्गुलानामधस्तद्वृक्षबीजमुप्तं वापितं मत्स्याम्भसा मत्स्ययुक्तेन जलेन मांसयुक्तैर्जलैश्चादकैः सिक्तं सेचितमाशु क्षिप्रमेव शुभप्रवाला शोभनपल्लवा वल्ली भवति सम्पद्यते । कीदृशी । विस्मापनी विस्मयजननी । मण्डपमाधारमावृणोति आच्छादयति ॥ २६ ॥

अथान्येषां रोपणमाह

**शतशोऽङ्कोलसम्भूतफलकल्केन भावितम् ।**
**एतत्तैलेन वा बीजं श्लेष्मातकफलेन वा ॥ २७ ॥**
**वापितं करकोन्मिश्रमृदि तत्क्षणजन्मकम् ।**
**फलभारान्विता शाखा भवतीति किमद्भुतम् ॥ २८ ॥**

अङ्कोलो वृक्षस्तत्सम्भूतफलकल्केन । एतत्फलस्य यः कल्को द्रव्यभागो विज्जलाद्रूपस्तेन यस्य कस्यचिद्वृक्षस्य बीजं शतशः शतवारं भावितं सिक्तम् । एततैलेन वा अङ्कोलफलतैलेन वा शतशो भावितम् । तदेव बीजं श्लेष्मातकवृक्षफलेन वा तस्य कल्केन तैलेन वा शतशो भावितम् ॥ २७ ॥

तच्च वापितं करकोन्मिश्रमृदि । करका अशनिपातस्तेनोन्मिश्रा च या मृत् तस्यां वापितमुप्तं तद्बीजं तत्क्षणजन्मकं यस्मिन्नेव क्षणे मुहूर्ते उप्तं तस्मिन्नेव जायते। शाखा लता फलभाराम्विता फलान्येव भारस्तेनान्विता । आनता वा भवतीति किमद्भुतं किमाश्चर्यम् । अवश्यमेव तद्भवतीत्यर्थः॥ २८ ॥

अथ श्लेष्मातकरोपणमाह ।

**श्लेष्मातकस्य बीजानि निष्कुलीकृत्य भावयेत् प्राज्ञः ।**
**अङ्कोलविज्जलाद्भिश्छायायां सप्त[1]कृत्वैवम् ॥ २९ ॥**
**माहिषगोमयघृष्टान्यस्य करीषे च तानि निक्षिप्य ।**
**करकाजलमृद्योगे न्युप्तान्यह्ना फलकराणि ॥ ३० ॥**

प्राज्ञो मेधावी श्लेष्मातकस्य वृक्षस्य बीजानि निष्कुलीकृत्य कृत्रिमतुषमपास्य ततोऽङ्कोलफलानां या विज्जलाः पिच्छिला आपस्ताभिरङ्कोलविज्जलाद्भिश्छायायां भावयेत् । एवमनेन प्रकारेण सप्तकृत्वः सप्तवारं भावयेत् । अङ्कोलविज्जलाद्भिर्भावयित्वा छायायां शोषयेत् पुनर्भावयित्वा शोषयेत् सप्तवारं यावत् ॥ २९ ॥

ततस्तानि बीजानि माहिषगोमयेन महिषशकृता घृष्टानि शक्तानि कृत्वा ततोऽस्य महिषस्य करीषे गोमयराशौ तानि बीजानि निक्षिप्य संस्थापयेत् तत्र च तावत् स्थाप्यानि भाण्डान्तर्गतानि यावत् करकाजलेन युक्ता मृद्भवति करकाजलेनाशनिपातपानीयेन या युक्ता मृत् तया युक्ते स्थाने न्युप्तानि वापितानि अह्ना दिवसेन फलकराणि भवन्ति। एकेनैवाह्ना फलन्तीत्यर्थः ॥ ३० ॥

अथ वृक्षाणां रोपणनक्षत्राण्याह ।

**ध्रुवमृदुमूलविशाखा गुरुभं श्रवणस्तथाश्विनी हस्तः ।**
**उक्ता[2]नि दिव्यदृग्भिः पादपसंरोपणे भानि ॥ ३१ ॥**

---

१ सप्तकृत्यः-इत्यस्य स्थाने सप्तकृत्व-इति प्रयोग आर्षः । २ शस्तानि-इति पाठान्तरम्।

च्युतरा रोहिणी चेति ध्रुवाणि । अनुराधाचित्रामृगशिरोरेवत्य-श्चेति मृदूनि । मूलम् । विशाखा । तिष्यः । श्रवणः । अश्विनी । हस्तः । एतानि नक्षत्राणि पादपानां वृक्षाणां संरोपणे वपनकर्मणि दिव्यदृग्भिर्दिव्या सूक्ष्मार्थदर्शिनी दृग्येषां ते दिव्यदृशो मुनयो गर्गादयस्तैरुक्तानि कथितानि । केचिच्छस्तानि प्रशंसितानीति पठन्तीति ॥ ३१ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ वृक्षायुर्वेदो नाम चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

## अथ प्रासादलक्षणं व्याख्यायते ।

तत्रादावेव प्रयोजनप्रदर्शनार्थमाह ।

**कृत्वा प्रभूतं सलिलमारामान् विनिवेश्य च ।**
**देवतायतनं कुर्याद्यशोधर्माभिवृद्धये ॥ १ ॥**

प्रभूतं पर्याप्तं सलिलं जलं कृत्वा तत्र चारामान् वृक्षवाटिका विनिवेश्य वेशयित्वा यशोधर्माभिवृद्धये यशसः कीर्तेर्धर्मस्य चाभिवृद्ध्यर्थं देवतायतनं देवतागृहं कुर्याद्विदध्यात् ॥ १ ॥

अत्रैव प्रशंसनार्थमाह ।

**इष्टापूर्त्तेन लभ्यन्ते ये लोकास्तान् बुभूषता ।**
**देवानामालयः कार्यो द्वयमप्यत्र दृश्यते ॥ २ ॥**

इष्टं यज्ञादिकम् । पूर्तं वापीकूपतडागादिकम् ।

तथा चोक्तम् ।

इष्टं यज्ञेषु यद्दानं ततोऽन्यत् पूर्तमिष्यते ।
इष्टाभिः पशुबन्धैश्च चातुर्मास्यैर्यजेद्द्विजः ॥
अग्निष्टोमादिभिर्यज्ञैर्यो यजेत स इष्टवान् ।
वापीकूपतडागादिदेवतायतनानि च ॥
अन्नप्रदानमाचार्यैः पूर्तं इत्यभिधीयते ।

इष्टापूर्तेन ये लोकाः पुण्यस्थानानि लभ्यन्ते प्राप्यन्ते तान् बुभूषता भवितुमिच्छता प्राप्तुमिच्छतेत्यर्थः । देवानां सुराणामालयः कार्यः । गृहं

देवानां कर्तव्यमित्यर्थः । यतोऽत्र देवालये द्वयमपि दृश्यते । इष्टापूर्तेषु यत् फलं तदत्र दृश्यते प्राप्यत इत्यर्थः ॥ २ ॥

तथा च काश्यपः ।

इष्टापूर्त्तादिभिर्यच्चैर्यावत् कुर्वन्ति मानवाः ।
अग्निष्टोमादिपशुभिरिष्टं यज्ञं प्रकीर्तितम् ॥
वापीकूपतडागादिदेवतायतनानि च ।
स्वर्गस्थितिं सदा कुर्यात् तद्दानं पूर्तसंज्ञितम् ॥
देवानामालयः कार्यो द्वयमप्यत्र लभ्यते ।

कीदृशेषु स्थानेषु सुरा रज्यन्त इत्याह ।

**सलिलोद्यानयुक्तेषु कृतेष्वकृतकेषु च ।**
**स्थानेष्वेतेषु सान्निध्यमुपगच्छन्ति देवताः ॥ ३ ॥**

सलिलयुक्तेषु जलसंयुतेषु । उद्यानयुक्तेषूपवनसहितेषु च स्थानेषु । कृतेषु निष्पादितेषु । अकृतकेषु स्वयं निष्पन्नेषु । एतेषु स्थानेषु देवताः सान्निध्यं सन्निहितत्वमुपगच्छन्ति यान्ति ॥ ३ ॥

अन्यच्च कीदृशेष्वित्याह ।

**सरःसु नलिनीछत्रनिरस्तरविरश्मिषु ।**
**हंसांसाक्षिप्तकह्लारवीथीविमलवारिषु ॥ ४ ॥**
**हंसकारण्डवक्रौञ्चचक्रवाकविराविषु ।**
**पर्यन्तनिचुलच्छायाविश्रान्तजलचारिषु ॥ ५ ॥**

एवंविधेषु सरःसु नित्यं सर्वकालं देवता देवविशेषा रमन्ते क्रीडन्ति । कीदृशेषु । नलिनीछत्रनिरस्तरविरश्मिषु । नलिनी पद्मिनी सैव छत्रं तेन नलिनीछत्रेण पद्मिन्यातपत्रेण निरस्ता निराकृता रविरश्मयः सूर्यकिरणा येषु । हंसाः पक्षिविशेषास्तेषामंसाः स्कन्धास्तेभ्य आक्षिप्ता दूरे प्रेरितास्ते कह्लाराः पुष्पविशेषाः सितोत्पलास्तेषामावेष्टनाय या वीथी मार्गस्तत्र यद्विमलं निर्मलं वारि जलं येषु ॥ ४ ॥

हंसाः । कारण्डवाः । क्रौञ्चाः । चक्रवाकाः । एते सर्वे एव पक्षिविशेषाः । एषां विरावः शब्दो येषु सरःसु । तथा पर्यन्तेषूपान्तेषु ये निचुला

वृक्षविशेषास्तेषां याश्छायास्तासु छायासु विश्रान्ता जलचारिणो जलप्राणिनो येषु सरःसु तेषु नित्यं देवता रमन्ते ॥ ५ ॥

अन्यत्कीदृशेष्वित्याह।

**क्रौञ्चकाञ्चीकलापाश्च कलहंसकलस्वराः।**
**नद्यस्तोयांशुका यत्र शफरीकृतमेखलाः ॥ ६ ॥**
**फुल्लतीरद्रुमोत्तंसाः सङ्गमश्रोणिमण्डलाः।**
**पुलिनाभ्युन्नतोरस्या हंसवासाश्च निम्नगाः ॥ ७ ॥**

यत्र यस्मिन् स्थाने एवंविधा नद्यः सरितस्तत्र नित्यं देवता रमन्ते। कीदृश्यः। क्रौञ्चाः पक्षिविशेषास्त एव सशब्दत्वात् काञ्चीकलापो रशनाविस्तारो यासाम्। कलहंसा राजहंसास्तेषां यः कलो मधुरः स्वरः शब्दः संभाषणं यासाम्। तोयं जलं तदेवांशुकमम्बरं यासाम्। शफर्यः सूक्ष्ममत्स्यास्ता एव कृता मेखला याभिः। मेखला वस्त्रस्योपरि बध्यते। नीवीति लोकप्रसिद्धा ॥ ६ ॥

तथा च।

नीविरावन्धने नार्या जघनस्थस्य वाससः—इति।

फुल्लतीरेति। यत्र ईदृश्यो निम्नगा नद्यस्तत्र नित्यं देवता रमन्ते। फुल्लाः पुष्पितास्तीरेषु प्रान्तेषु ये द्रुमा वृक्षास्त एवोत्तंसाः कर्णपुष्पाणि मुण्डमाला वा यासाम्। पुलिनेषु तीरेषु ये अभ्युन्नता उच्चाः प्रदेशास्त एवोरस्या उरसि भवाः स्तना यासाम्। हंसाः पक्षिविशेषास्त एव शुक्लत्वाद्वासो वसनं यासाम्। तास्तथाभूताः। तासु देवता रमन्ते ॥ ७ ॥

अन्यत्कीदृशेषु स्थानेषु रमन्त इत्याह।

**वनोपान्तनदीशैलनिर्झरोपान्तभूमिषु।**
**रमन्ते देवता नित्यं पुरेषूद्यानवत्सु च ॥ ८ ॥**

वनोपान्तेषु वनोपकण्ठेषु। उपान्तशब्दः प्रत्येकमभिसंबध्यते। नदीषु सरित्सु। शैलेषु पर्वतेषु। निर्झरोपान्तभूमिषु। निर्झरेण प्रपातपानीयेन ये युक्ता उपान्ता नदीप्रभृतीनां समीपास्तेषु भूमिषु। नियतं झरन्ति स्रवन्तीति निर्झराः।

तेषु नित्यं सर्वकालं देवता रमन्ते क्रीडन्ते । पुरेषु नगरेषु । उद्यानवत्सु येषूद्यानान्युपवनानि विद्यन्ते तेषु नित्यं रमन्त इति ॥ ८ ॥

तथा च काश्यपः ।

हरितोज्ज्वलतोयाढ्या वाप्यः पक्षिभिरावृताः ।
वनोपवनमालिन्यो नित्यमुत्फुल्लितद्रुमाः ॥
हंसकारण्डवाकीर्णाः कोकिलालापनादिताः ।
षट्पदागीतमधुरा नृत्यद्भिः शिखिभिर्युताः ॥
तत्र देवा रतिं यान्ति सान्निध्यान्नित्यसंस्थिताः ।

अधुना प्रतिष्ठाकरणे भूमिगुणानाह ।

**भूमयो ब्राह्मणादीनां याः प्रोक्ता वास्तुकर्मणि ।**
**ता एव तेषां शस्यन्ते देवतायतनेष्वपि ॥ ९ ॥**

ब्राह्मणादीनां ब्राह्मणक्षत्रियवैश्यशूद्राणां या भूमयो वास्तुकर्मणि प्रोक्ताः कथिताः । तद्यथा ।

सि[1]तरक्तपीतकृष्णा विप्रादीनां प्रशस्यते भूमिः ।
गन्धश्च भवति यस्यां घृतरुधिरान्नाद्यमद्यसमः ॥
कुशयुक्ता शरबहुला दूर्वाकाशावृता क्रमेण मही ।
अनुवर्णं वृद्धिकरी मधुरकषायाम्लकटुका च ॥

इत्यादिना ज्ञेयाः । विप्रादीनां ता एव भूमयो देवताप्रासादेषु शस्यन्ते शोभन्त इति ॥ ९ ॥

अधुना देवतागृहे वास्तुपुरुषलक्षणं द्वारप्रविभागं चाह ।

**चतुःषष्टिपदं कार्यं देवतायतनं सदा ।**
**द्वारं च मध्यमं तस्मिन् समदिक्स्थं प्रशस्यते ॥ १० ॥**

सदा सर्वकालं देवतायतनं सुरगृहं चतुःषष्टिपदं कार्यम् । "अ[2]ष्टाष्टकपदमथवे"ति पूर्वमेव प्रदर्शितम् । तस्मिन् देवतायतने मध्यमं द्वारं मध्यवर्तिनं समदिक्स्थं समायां दिशि यथा तिष्ठति तथा प्रशस्यते इष्यते ॥ १० ॥

१ द्रष्टव्यावस्य ग्रन्थस्य ५२ अध्याये ९४-९५ श्लोकौ ।
२ द्रष्टव्योऽस्यैव ग्रन्थस्य ५२ अध्याये ५५ श्लोकः ।

अथ प्रासादानां विधानमाह ।

यो विस्तारो भवेद्यस्य द्विगुणा तत्समुन्नतिः ।
उच्छ्रायाद्यस्तृतीयांशस्तेन तुल्या कटिः स्मृता ॥ ११ ॥
विस्तारार्धं भवेद्गर्भो भित्तयोऽन्याः समन्ततः ।
गर्भपादेन विस्तीर्णं द्वारं द्विगुणमुच्छ्रितम् ॥ १२ ॥
उच्छ्रायात् पादविस्तीर्णा शाखा त[1]द्वदुदुम्बरः ।
विस्तारपादप्रतिमं बाहुल्यं शाखयोः स्मृतम् ॥ १३ ॥
त्रिपञ्चसप्तनवभिः शाखाभिस्तत् प्रशस्यते ।
अधःशाखाचतुर्भागे प्रतीहारौ निवेशयेत् ॥ १४ ॥
शेषं मङ्गल्यविहगैः श्रीवृक्षैः स्वस्तिकैर्घटैः ।
मिथुनैः पत्त्रवल्लीभिः प्रमथैश्चोपशोभयेत् ॥ १५ ॥
द्वारमानाष्टभागोना प्रतिमा स्यात् सपिण्डिका ।
द्वौ भागौ प्रतिमा तत्र तृतीयांशश्च पिण्डिका ॥ १६ ॥

यो विस्तार इति । तस्य देवगृहस्य यो विस्तारो विष्कम्भो भवेत् स्यात् तद्द्विगुणा विस्ताराद्द्विगुणा समुन्नतिरुच्छ्रायो भवति । यथा मेरुप्रासादस्य द्वात्रिंशद्विस्तारः । विस्ताराद्द्विगुणा समुन्नतिश्चतुःषष्टिर्हस्ताः । उच्छ्रायाद्यस्तृतीयांशस्तृतीयभागस्तेन च तुल्या तत्समा देवगृहस्य कटिः स्मृतोक्ता । यथा मेरोश्चतुःषष्टिर्हस्ता उच्छ्रायः । तस्मात् त्रिभागे एकविंशतिर्हस्ताः अष्टावङ्गुलानि । अनेन प्रमाणेन कटिर्भवति । सोपानोपरि यतो देवगृहस्य प्रारम्भः सा कटिरुच्यते ॥ ११ ॥

विस्तारार्धमिति । देवगृहस्य यो विस्तार उक्तस्तदर्धं गर्भो भवति । यथा मेरोर्हस्तद्वात्रिंशद्विस्तारः । तदर्धं षोडश । अनेन प्रमाणेन मेरोर्गर्भः । अन्याः समन्ततः सर्वासु दिक्षु विदिक्षु भित्तयो भवन्ति । हस्तमात्रं भ्रमणाय सर्वासु दिक्ष्वनावृतं स्थापयित्वा शेषं हस्तत्रयं भित्त्यवष्टब्धं कुर्यात् । गर्भस्य यः पादश्चतुर्थांशस्तेन मानेन विस्तीर्णं द्वारं भवति । यथा मेरोर्गर्भः षोडश

---

[1] तद्वदुदुम्बरो—इति पाठान्तरम् ।

हस्ताः । तस्य चतुर्भागश्चत्वारो हस्ताः । एष द्वारस्य विस्तारः । विस्ताराद्द्विगुणमुच्छ्रितं कार्यम् । एवमष्टौ हस्ता मेरुद्वारोच्छ्रायः कार्यः ॥ १२ ॥

उच्छ्रायादिति । द्वारस्य य उच्छ्रायस्तस्य यः पादश्चतुर्भागस्तेन मानेन विस्तीर्णा शाखा द्वारिका कार्या । यथा मेरुद्वारस्योच्छ्रायोऽष्टौ हस्ताः । अस्य चतुर्भागो द्वौ हस्तौ । एष शाखाया विस्तारः । तद्वदुदुम्बरः । तद्वत् तेनैव प्रकारेणोदुम्बरः कार्यः । शाखयोरुपरि यत् काष्ठं दीयते यच्चाधः स उदुम्बर इत्युच्यते । तद्वदुदुम्बराविति केचित् पठन्ति । विस्तारपादप्रतिममिति । शाखाया यो विस्तारस्तस्य यः पादश्चतुर्भागस्तत्प्रतिमं तत्तुल्यं शाखयोर्बाहुल्यं घनत्वं स्मृतमुक्तम् । यथा मेरुद्वारशाखाविस्तारो द्वौ हस्तौ । विस्तारपादो द्वादशाङ्गुलानि । एतद्घनत्वम् ॥ १३ ॥

त्रिपञ्चसप्तनवभिरिति । तद्द्वारं तिसृभिः पञ्चभिर्नवभिश्च शाखाभिर्द्वारिकाभिः प्रशस्यते इष्यते । शाखाविस्तारस्तिसृभिर्यदि न पूर्यते तदा पञ्चभिः पूरणीयस्ताभिरपि न पूर्यते तदा नवभिः पूरणीय इति । शाखयोर्योऽधस्तलस्य चतुर्भागस्तुर्यांशस्तस्मिन् प्रतीहारौ नन्दिदण्डादिकौ निवेशयेत् कारयेत् ॥ १४ ॥

शेषमिति । शेषं भागत्रयं मङ्गल्यविहगैर्मङ्गल्यवद्भिः पक्षिभिः हंसकारण्डवचक्रवाकजीवकप्रभृतिभिः । श्रीवृक्षैः । स्वस्तिकश्चिह्नविशेषः । स्वस्तिकस्य वास्तुनरस्य सदृशैर्घटैः कलशैः । मिथुनैर्युग्मैः । पत्रवल्लीभिः । पत्रलताभिः । प्रमथैर्गणैश्चोपशोभयेत् शोभामुत्पादयेत् ॥ १५ ॥

द्वारमानाष्टभागोनेति । द्वारस्य यन्मानं प्रमाणमुच्छ्रायस्तस्य योऽष्टभागोऽष्टांशस्तेन द्वारप्रमाणादूना प्रतिमार्चा सपिण्डिका पीठसहिता कार्या । तत्र च द्वौ भागौ प्रतिमा कार्या तृतीयांशस्तृतीयो भागः पिण्डिका पीठिका कार्येति । यथा मेरुप्रासादस्य द्वारोच्छ्रायोऽष्टौ हस्ताः । अस्याष्टभाग एको हस्तः । अनेनोनं द्वारमानं सप्त हस्ताः । एतत् सपिण्डिकं कार्यमिति । अस्माद्भागद्वयं चत्वारो हस्ताः षोडशाङ्गुलानि । एतत् प्रतिमायाः प्रमाणम् । तृतीयो भागो हस्तद्वयमष्टावङ्गुलानि । एतत् पिण्डिकायाः प्रमाणमिति । एवं सर्वप्रासादेषूह्यम् ॥ १६ ॥

तथा च काश्यपः ।

पुरानुसारप्रासादाः कर्तव्याः शुभलक्षणाः ।
नात्युच्चा नातिनीचाश्च समदिक्सूत्रसूचिताः ॥
चतुःषष्टिं कोष्ठकानां मध्ये च तत्र विन्यसेत् ।
द्वारं च मध्यमं श्रेष्ठं समदिक्स्थं प्रशस्यते ॥
विस्ताराद्द्विगुणोत्सेधः कटिरंशे तृतीयके ।
विस्तारार्धेन तद्गर्भो भित्तयोऽन्यास्तथान्तरे ॥
गर्भाच्चतुर्थभागे च द्वारं तद्द्विगुणोच्छ्रितम् ।
द्वारोच्छ्रायचतुर्भागो विस्तारः शाखयोः स्मृतः ॥
उदुम्बरस्तथैवोक्तः शाखामानेन नित्यशः ।
घनत्वं पादमानेन शाखयोश्च प्रकीर्त्तितम् ॥
एकशाखास्त्रिशाखा वा पञ्च सप्त नवापि वा ।
द्वारिकास्तत्र शस्यन्ते द्वारिभिर्या अकुटिकाः ॥
शाखाचतुर्थभागेऽत्र प्रतीहारौ तु कारयेत् ।
प्रमथैर्विहगैश्चैव जीवजीवजलोद्भवैः ॥
श्रीवृक्षस्वस्तिकैः पद्मैर्हंसैश्चैव मनोरमैः ।
पत्रान्तरे लताशुभ्रैर्गृहैर्वैनायकादिभिः ॥
देवं सपिण्डिकं स्थाप्यं द्वाराष्टे शोभितं शुभम् ।
द्वौ भागौ प्रतिमा कार्या तृतीयश्चैव पिण्डिका ॥
प्रणद्रोणिकाभागो वामे पार्श्वे विधीयते ।
निर्माल्यञ्च निवेद्यं च बलिपूजापमार्जनम् ॥

अधुना प्रासादानां नामान्याह ।

**मेरुमन्दरकैलासविमानच्छन्दनन्दनाः ।**
**समुद्गपद्मगरुडनन्दिवर्धनकुञ्जराः ॥ १७ ॥**
**गुहराजो वृषो हंसः सर्वतोभद्रको घटः ।**
**सिंहो वृत्तश्चतुष्कोणः षोडशाष्टाश्रयस्तथा ॥ १८ ॥**
**इत्येते विंशतिः प्रोक्ताः प्रासादाः सञ्ज्ञया मया ।**
**यथोक्तानुक्रमेणैव लक्षणानि वदाम्यतः ॥ १९ ॥**

मेर्वाद्या यथापाठक्रमेण विंशतिः सञ्ज्ञाः प्रासादानाम् । मेरुः । मन्दरः । कैलासः । विमानच्छन्दः । नन्दनः । समुद्गः । पद्मः । गरुडः । नन्दिवर्धनः । कुञ्जरः ॥ १७ ॥

गुहराजः । वृषः । हंसः । सर्वतोभद्रकः । घटः । सिंहः । वृत्तः । चतुष्कोणः । षोडशाश्रिः । अष्टाश्रिः ॥ १८ ॥

इत्येवंप्रकारा एते विंशतिः प्रासादा मया संज्ञया प्रोक्ताः कथिताः । अतोऽस्मादनन्तरं यथानुक्रमेण । येनैवानुक्रमेणोक्ताः कथिताः तेनैवानुक्रमेण लक्षणानि वदामि कथयामि ॥ १९ ॥

तत्रादावेव मेरुप्रासादस्य लक्षणमाह ।

**तत्र षडश्रिर्मेरुर्द्वादशभौमो विचित्रकुहरश्च ।**
**द्वारैर्युतश्चतुर्भिर्द्वात्रिंशद्धस्तविस्तीर्णः ॥ २० ॥**

तत्र तस्मिन् प्रासादलक्षणे मेरुर्नाम प्रासादः । षडश्रिः षट् अश्रयः कोणा यस्य । द्वादशभौमः । उपर्युपरि तस्य द्वादश भूमिका भवन्तीत्यर्थः । विचित्रकुहरः । विचित्रा नानाप्रकाराः कुहराः अभ्यन्तरगवाक्षास्तत्र भवन्ति । चतुर्भिर्द्वारैर्युतः । चतसृषु दिक्षु तस्मिन् द्वाराणि भवन्ति । द्वात्रिंशद्धस्तविस्तीर्णः । विष्कम्भात् अर्थादेव चतुःषष्टिर्हस्तास्तस्योच्छ्रयम् ॥ २० ॥

तथा च काश्यपः ।

द्वात्रिंशद्धस्तविस्तीर्णं चतुर्द्वारं षडश्रिकम् ।
भूमिकास्तत्र कर्तव्या विचित्रकुहरान्विताः ॥
द्वादशोपर्युपरिगा वर्तुलाण्डैः समायुताः ।
प्रासादो मेरुसञ्ज्ञः स्यान्निर्दिष्टो विश्वकर्मणा ॥

अथ मन्दरकैलासयोर्लक्षणमाह ।

**त्रिंशद्धस्तायामो दशभौमो मन्दरः शिखरयुक्तः ।**
**कैलासोऽपि शिखरवानष्टाविंशोऽष्टभौमश्च ॥ २१ ॥**

तत्र षडश्रिरित्येतत् सर्वत्रानुवर्तते नन्दनलक्षणं यावत् । मन्दरसञ्ज्ञः प्रासादस्त्रिंशद्धस्तायामस्त्रिंशत् करा विस्तीर्णः । विष्कम्भात् षष्टिर्हस्तास्तस्योच्छ्रयम् । षडश्रिश्च । दशभौमो दशभिर्भूमिकाभिर्युक्तः शिखरैर्युक्तः ।

तथा च काश्यपः ।

> त्रिंशद्धस्तास्तु विस्तीर्णः प्रासादोऽयं द्वितीयकः ।

कैलासोऽपीति । अपिशब्दः सम्भावनायाम् ।

कैलासोऽपि षडश्रिः । शिखरवान् शिखरैर्युक्तः । अष्टाविंशः । अष्टाविंशतिर्हस्ता विस्तीर्णः । विष्कम्भात् षट्पञ्चाशद्धस्तास्तस्योच्च्यम् । अष्टभौमोऽष्टाभिर्भूमिकाभिर्युक्तः ॥ २१ ॥

तथा च काश्यपः ।

> अष्टभौमश्च कैलासो हस्ताष्टाविंशतिः स्मृतः ।
> षडश्रिः शिखरोपेतः प्रासादस्तु तृतीयकः ॥

अथ विमाननन्दनयोर्लक्षणमाह ।

**जालगवाक्षकयुक्तो विमानसञ्ज्ञस्त्रिसप्तकायामः ।**
**नन्दन इति षड्भौमो द्वात्रिंशः षोडशाण्डयुतः ॥ २२ ॥**

विमानच्छन्दसञ्ज्ञः षडश्रिः । जालगवाक्षकयुक्तः । जालकोपलक्षितैर्गवाक्षैश्च शारिकाभिर्युक्तः । त्रिसप्तकायामः एकविंशतिर्हस्ता आयामो विस्तीर्णः । विष्कम्भात् अर्थादेव द्वाचत्वारिंशद्धस्तास्तस्योच्च्यम् । अष्टभूमिकश्च ।

तथा च काश्यपः ।

> गवाक्षजालसंयुक्तो विमानश्चैकविंशतिः ।
> षडश्रिरष्टभौमश्च प्रासादः स्याच्चतुर्थकः ॥

नन्दन इति । नन्दनसञ्ज्ञः षडश्रिः । षड्भौमः षड्भिर्भूमिकाभिर्युक्तः । द्वात्रिंशो द्वात्रिंशद्धस्ता विस्तीर्णः । विष्कम्भात् चतुःषष्टिर्हस्तास्तस्योच्च्यम् । षोडशभिरण्डैर्युक्तः । अण्डः प्रासादस्योपरि भवति ॥ २२ ॥

तथा च काश्यपः ।

> नन्दनस्तु षडश्रिः स्यात् द्वात्रिंशद्धस्तविस्तृतः ।
> षड्भौमः षोडशाण्डस्तु प्रासादः पञ्चमो मतः ॥

अथ समुद्रपद्मयोर्लक्षणमाह ।

**वृत्तः समुद्रनामा पद्मः पद्माकृतिः शया अष्टौ ।**
**शृङ्गेणैकेन भवेदेकैव च भूमिका तस्य ॥ २३ ॥**

समुद्गनामा वृत्तः परिवर्तुलः । मुद्गाकारः । पद्मः पद्माकृतिः कमलाकारः । अष्टभिर्दलैर्युक्तः । एतौ द्वावपि प्रासादावष्टौ शयाः अष्टौ हस्ता विस्तीर्णाः । विष्कम्भात् षोडशहस्तास्तस्योच्चम् । शृङ्गेणैकेन भवेत् स्यात् । एकेन शृङ्गेणैकेनाण्डकेनोपलक्षितौ द्वावप्येतौ । तस्य च प्रासादद्वयस्यैकैव भूमिका भवति ॥ २३ ॥

तथा च काश्यपः ।

वर्तुलस्तु समुद्गः स्यात् पद्मः पद्माकृतिस्तथा ।
हस्ताष्टकं तु विस्तीर्णौ भूमिका शृङ्गभूषिता ॥

अथ गरुडनन्दिवर्धनयोर्लक्षणमाह ।

**गरुडाकृतिश्च गरुडो नन्दीति च षट्चतुष्कविस्तीर्णः ।**
**कार्यस्तु सप्तभौमो विभूषितोऽण्डैस्तु विंशत्या ॥ २४ ॥**

गरुडसञ्ज्ञो गरुडाकृतिर्गरुडाकारः पक्षी पक्षपुच्छयुक्तः । नन्दीति च । चशब्दः समुच्चये । नन्दिवर्धनसञ्ज्ञश्च गरुडाकार एव किन्तु पक्षपुच्छरहितः । षट्चतुष्कविस्तीर्णः । गरुडो नन्दिवर्धनश्च षट्चतुष्कश्चतुर्विंशतिहस्ता विस्तीर्णः । अष्टचत्वारिंशद्धस्तास्तस्योच्चम् । तथा सप्तभौमः । सप्तभिर्भूमिकाभिर्युक्तः । अण्डानां विंशत्या विभूषितौ गरुडो नन्दिवर्धनश्च ॥ २४ ॥

तथा च काश्यपः ।

गरुडो गरुडाकारः पक्षपुच्छविभूषितः ।
नन्दी तथाकृतिर्ज्ञेयः पक्षादिरहितः पुनः ॥
कराणां षट्चतुष्कास्तु विस्तीर्णौ सप्तभूमिकौ ।
दशभिर्द्विगुणैरण्डैर्भूषितौ कारयेत्तु तौ ॥

अथ कुञ्जरगुहराजयोर्लक्षणमाह ।

**कुञ्जर इति गजपृष्ठः षोडशहस्तः स[1]मन्ततो मूलात् ।**
**गुहराजः षोडशकस्त्रिचन्द्रशाला भवेद्वलभी ॥ २५ ॥**

कुञ्जरसञ्ज्ञो गजपृष्ठो हस्तिपृष्ठाकारः । षोडशहस्तः समन्ततो मूलात् मूलात् षोडशहस्तः समन्ततः चतुर्दिक्षु षोडश हस्ता विष्कम्भः । अन्येषां पाठः

---

१ सुविस्तरो मूलात्—इति पाठान्तरम् ।

षोडशहस्तः सुविस्तरो मूलात्। एवं द्वात्रिंशद्धस्तास्तस्योच्च्यम्। उत्थितगजाकार एकभूमिकः। गुहराजो गुहाकारः। षोडशकः षोडश हस्ता विस्तीर्णो द्वात्रिंशद्धस्तास्तस्योच्च्यम्। एकभूमिकश्च। अनयोर्द्वयोरपि वलभी कुहरैस्त्रिचन्द्रशाला भवेत् स्यात्। तिसृभिश्चन्द्रशालाभिर्युक्ता इत्यर्थः ॥२५॥

तथा च काश्यपः।

कुञ्जरो गजपृष्ठाभो हस्ताः षोडश विस्तृतः।
गुहराजो गुहाकारो विष्कम्भात् षोडश स्मृतः॥
त्रिचन्द्रशाला वलभी तयोः कार्या सुलक्षणा।
दशमेकादशावेतौ प्रासादौ द्वौ प्रकीर्तितौ॥

अधुना वृषहंसघटानां लक्षणमाह।

**वृष एकभूमिशृङ्गो द्वादशहस्तः समन्ततो वृत्तः।**
**हंसो हंसाकारो घटोऽष्टहस्तः कलशरूपः॥ २६॥**

वृषसञ्ज्ञ एकभूमिशृङ्गः। एकया भूमिकयैकेन शृङ्गेण शिखरेण युक्तः। द्वादशहस्तो द्वादश हस्ता विस्तीर्णः। विष्कम्भाच्चतुर्विंशतिर्हस्तास्तस्योच्च्यम्। समन्ततः सर्वासु दिक्षु वृत्तः परिवर्तुलः। हंसो हंसाकारो हंससदृशः। चञ्चुपक्षपुच्छयुक्तः। द्वादशहस्तविस्तीर्णः। चतुर्विंशतिर्हस्तास्तस्योच्च्यम्। एकभूमिकश्च। घटसञ्ज्ञः कलशरूपः कलशाकारः। अष्टहस्ता विस्तीर्णः। विष्कम्भात् षोडश हस्तास्तस्योच्च्यम्। एकभूमिकश्च। सर्वे एकशृङ्गाः॥२६॥

तथा च काश्यपः।

वृषो द्वादशहस्तस्तु समवृत्तैकभूमिकः।
शृङ्गेणैकेन संयुक्तः प्रासादः परिकीर्तितः॥
हंसो हंसाकृतिर्ज्ञेयो हस्ता द्वादश विस्तृतः।
एकभूमिकया युक्तः पक्षपुच्छाद्यलङ्कृतः॥
घटः कलशरूपस्तु विस्तीर्णोऽष्टकरः स्मृतः।

अधुना सर्वतोभद्रस्य लक्षणमाह।

**द्वारैर्युतश्चतुर्भिर्बहुशिखरो भवति सर्वतोभद्रः।**
**बहुरुचिरचन्द्रशालः षड्विंशः पञ्चभौमश्च॥ २७॥**

सर्वतोभद्रसञ्ज्ञः प्रासादश्चतुर्भिर्द्वारैर्युक्तः । चतसृष्वपि दिक्षु तस्मिन् द्वाराणि भवन्तीत्यर्थः । बहुशिखरो भवति । बहूनि प्रभूतानि तस्मिन् शिखराणि भवन्ति । बहुरुचिरचन्द्रशालः । बह्वीभिः प्रभूताभी रुचिराभिः सुशोभनाभिश्चन्द्रशालाभिर्युक्तः । षड्विंशः । षड्विंशतिर्हस्ता विस्तीर्णः । विष्कम्भात् अर्धादेव द्वापञ्चाशद्धस्तास्तस्योच्च्यम् । पञ्चभौमः पञ्चभिर्भूमिकाभिर्युक्तः । चतुरस्रः ॥ २७ ॥

तथा च काश्यपः ।

शिखरैर्बहुभिर्युक्तश्चतुर्द्वारविभूषितः ।
रुचिरैश्चन्द्रशालैश्च बहुभिः परिवारितः ॥
चतुरस्रः पञ्चभौमः षड्विंशद्धस्तविस्तृतः ।
सर्वतोभद्र इत्युक्तः प्रासादो दशपञ्चमः ॥

अथ सिंहवृत्तचतुष्कोणषोडशाश्यष्टाश्रीणां लक्षणमाह ।

**सिंहः सिंहाक्रान्तो द्वादशकोणोऽष्टहस्तविस्तीर्णः ।**
**चत्वारोऽञ्जनरूपाः पञ्चाण्डयुतस्तु चतुरस्रः ॥ २८ ॥**

सिंहः सिंहाक्रान्तः सिंहालङ्कृतः । द्वादशकोणो द्वादशाश्रिः । अष्टहस्तो विस्तीर्णः । अन्ये चत्वारः सर्व एव वृत्तचतुष्कोणषोडशाष्टाश्रयः सञ्ज्ञासदृशाकृतयः । वृत्तः परिवर्तुलः । चतुष्कोणश्चतुरस्रः । षोडशाश्रिः षोडशकोणः । अष्टाश्रिरष्टकोणः । एते अञ्जनरूपा अव्यक्तरूपाः सान्धकारा इत्यर्थः । बाह्यप्राकाश्यं तेषु न प्रविशत्ययमर्थः । देवप्रासादस्य सन्निकृष्टाश्चतसृष्वपि दिक्षु भित्तीः कृत्वा प्रासादस्य पश्चिमभागे द्वारं कार्यम् । ताश्च भित्तय ऊर्ध्वभागे तथा छेदनीया यथा प्रासादोत्पन्ना एव लक्ष्यन्ते न पृथक्स्थाः । तत्र बहिर्द्वारात् प्रविश्य प्रासादस्य वामभागेनागत्य पुरतः प्रासादस्य द्वारं कार्यम् । तत्र मणिमयी प्रतिमा तत्कान्त्या यत्र प्राकाश्यमुत्पद्यते । एते सर्व एकैकभूमिकाः कार्या एकाण्डाश्च । चतुरस्रः पुनः पञ्चाण्डयुतः कार्यः । पञ्चभिरण्डैः संयुक्तः ॥ २८ ॥

तथा च काश्यपः ।

सिंहः सिंहसमाक्रान्तः कोणैर्द्वादशभिर्युतः ।
विष्कम्भादष्टहस्तः स्यादेका तस्य च भूमिका ॥

वृत्ता वृत्ताकृतिः कार्याः सज्ञातुल्यास्तथापरे ।
सान्धकारास्तु सर्वे ते भूमिकैकाः समावृताः ॥
एकाण्डरूपिताः सर्वे पञ्चभिश्चतुरस्रकः ।

अथ मयविश्वकर्मणोर्मतेन भूमिकाप्रमाणमाह ।

**भूमिकाङ्गुलमानेन मयस्याष्टोत्तरं शतम् ।**
**सार्द्धं हस्तत्रयं चैव कथितं विश्वकर्मणा ॥ २९ ॥**

मयस्य मतेनाष्टोत्तरशतमङ्गुलानां मानेन भूमिका भवति ।

तथा च मयः ।

प्रासादभूमिकामानं शतमष्टोत्तरं स्मृतम् ।

अङ्गुलानाम्—इति ।

विश्वकर्मणा सार्धं हस्तत्रयं भूमिकामानं कथितमुक्तम् । चतुरशीत्यङ्गुलानीत्यर्थः ॥ २९ ॥

तथा च विश्वकर्म्मा ।

चतुर्भिरधिकाशीतिरङ्गुलानां तु भूमिका—इति ।

अत्रापि परमतेनैकवाक्यतां दर्शयितुमाह ।

**प्राहुः स्थपतयश्चात्र मतमेकं विपश्चितः ।**
**कपोतपालिसंयुक्ता न्यूना गच्छन्ति तुल्यताम् ॥ ३० ॥**

अत्रास्मिन्नर्थे विपश्चितः पण्डिताः स्थपतयो वार्धकिनः प्रतिष्ठातन्त्रज्ञा मयविश्वकर्मणोरेकमतं प्राहुरुक्तवन्तः । विश्वकर्मणो मतेन या न्यूनाः प्रमाणहीना भूमयस्ताः कपोतपालिसंयुक्ता मयमतेन तुल्यतां गच्छन्ति समत्वं यान्ति । कपोतपालिग्रहणेन बहिर्निर्गतानि सिंहमुखानि काष्ठान्युच्यन्ते ।

तथा चोक्तम् ।

कपोतपालिं ब्रुवते विटङ्कं च बहुश्रुताः ।

तथा च तन्त्रान्तरे पठ्यते ।

कपोतपालिरहितं मानं चतुरशीतिकम् ।
भूमिकानां सह तया शतमष्टोत्तरं स्मृतम् ॥
अङ्गुलानामतः साम्यं भूमिकासु प्रकीर्तितम् ।

एवं तुल्यता भवतीति ॥ ३० ॥

अथोपसंहारार्थमाह ।

प्रासादलक्षणमिदं कथितं समासाद्-
गर्गेण यद्विरचितं तदिहास्ति सर्वम् ।
मन्वादिभिर्विरचितानि पृथूनि यानि
तत्संस्पृशन् प्रति मयात्र कृतोऽधिकारः ॥ ३१ ॥

इदं मया प्रासादलक्षणं समासात् सङ्क्षेपात् कथितमुक्तम् । गर्गेण मुनिना विरचितं कृतं तत्सर्वं निरवशेषमिहास्मिन्नस्ति विद्यते । यानि च पृथूनि विस्तीर्णानि मन्वादिभिर्मनुवसिष्ठमयनग्नजिद्भिर्विरचितानि कृतानि प्रासादलक्षणानि तानि प्रति मया द्वारमानाष्टभागोनेत्यादिलक्षणलक्षितानि संस्पृशन्नत्राधिकारः कृतः । प्रासादलक्षणं कृतमित्यर्थः । अथवा तत्संस्पृशंस्तानि सर्वाणि लक्षणानि प्रतिसंस्पृशन् परामृशन्मयाधिकारः कृत इति ॥ ३१ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ प्रासादलक्षणं नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

## अथ वज्रलेपलक्षणं व्याख्यायते ।

तत्रादावेव वज्रलेपमाह ।

आमं तिन्दुकमामं कपित्थकं पुष्पमपि च शाल्मल्याः ।
बीजानि शल्लकीनां धन्वनवल्को वचा चेति ॥ १ ॥
एतैः सलिलद्रोणः क्वाथयितव्योऽष्टभागशेषश्च ।
अवतार्योऽस्य च कल्को द्रव्यैरेतैः समनुयोज्यः ॥ २ ॥
श्रीवासकरसगुग्गुलुभल्लातककुन्दुरूकसर्जरसैः ।
अतसीबिल्वैश्च युतः कल्कोऽयं वज्रलेपाख्यः ॥ ३ ॥

तिन्दुकं तिन्दुकफलम् । आममपक्वम् । कपित्थकं कपित्थकफलमाममेव । शाल्मल्याः शाल्मलिवृक्षस्य च पुष्पम् । शल्लकीनां शल्लकीवृक्षाणां बीजानि । धन्वनवल्को धन्वनवृक्षस्य वल्कस्त्वक् । वचा च । इत्येवंप्रकारः ॥ १ ॥

एतैर्द्रव्यैः सह सलिलद्रोणः क्काथयितव्यः । द्रोणः पलशतद्वयं षट्पञ्चाशदधिकम् । यावदष्टभागावशेषो भवति द्वात्रिंशत् पलानि अवशिष्यन्त इत्यर्थः । ततोऽष्टभागावशेषोऽवतार्योऽवतारणीयो ग्राह्य इत्यर्थः । अस्य चाष्टभागशेषस्यैतद्द्रव्यैर्वक्ष्यमाणैः कल्कश्चूर्णः समनुयोज्यो विधातव्यः । तच्चूर्णसंयुक्तः कार्य इत्यर्थः ॥ २ ॥

कैः । इत्याह श्रीवासकेति । श्रीवासकः प्रसिद्धो वृक्षनिर्यासः । रसो बोलः । गुग्गुलुः प्रसिद्धः । भल्लातकः प्रसिद्ध एव । कुन्दुरूको देवदारुवृक्ष-निर्यासः । सर्जरसः सर्जरसकवृक्षनिर्यासः । एतैः । तथा अतसी प्रसिद्धा । बिल्वं श्रीफलम् । एतैश्च युतः संमवेतः । अयं कल्को वज्रलेपाख्यः । वज्र-लेपेत्याख्या नाम यस्य ॥ ३ ॥

अथास्य गुणानाह ।

**प्रासादहर्म्यवलभीलिङ्गप्रतिमासु कुड्यकूपेषु ।**
**सन्तप्तो दातव्यो वर्षसहस्रायुतस्थायी ॥ ४ ॥**

प्रासादो देवप्रासादः । हर्म्यम् । वलभी वातायनम् । लिङ्गं शिवलि-ङ्गम् । प्रतिमार्चा । एतासु तथा कुड्येषु भित्तिषु । कूपेषूदकोद्गारेषु । सन्त-प्तोऽत्युष्णो दातव्यो देयः । वर्षसहस्रायुतस्थायी भवति । वर्षाणां सहस्रायुतं वर्षकोटिं तिष्ठतीत्यर्थः ॥ ४ ॥

अथान्यद्वज्रलेपमाह ।

**लाक्षाकुन्दुरुगुग्गुलुगृहधूमकपित्थबिल्वमध्यानि ।**
**नाग[1]फलनिम्बतिन्दुकमदनफलमधूकमञ्जिष्ठाः ॥ ५ ॥**
**सर्जरसरसामलकानि चेति कल्कः कृतो द्वितीयोऽयम् ।**
**वज्राख्यः प्रथमगुणैरयमपि तेष्वेव कार्येषु ॥ ६ ॥**

लाक्षा प्रसिद्धा वृक्षनिर्यासः । कुन्दुरुर्देवदारुवृक्षनिर्यासः । गुग्गुलुः प्रसिद्धः । गृहधूमोऽगारधूमः श्यामेति प्रसिद्धः । कपित्थः कपित्थवृक्षफलम् । बिल्वमध्यम् । एतानि । तथा नागफलम् । निम्बः प्रसिद्धः । तिन्दुकं

---

१ नागबलाफलतिन्दुक-इति पाठान्तरम्

तिन्दुकफलम्। केचिन्नागबलाफलतिन्दुकमदनफलेति पठन्ति। नागबला-फलं तिन्दुकफलं मदनफलं मधूकफलं मञ्जिष्ठा प्रसिद्धा ॥ ५ ॥

सर्जरसः सर्जवृक्षनिर्यासः। रसो बोलः। आमलकं धात्रीफलम्। एतानि च। इत्येवंप्रकारो द्वितीयः कल्कः कृतो वज्राख्यो वज्रलेपसञ्ज्ञः। प्रथमगुणैः पूर्वोक्तैर्गुणैरेतैः सलिलद्रोणः क्राथयितव्योऽष्टभागशेषश्चेति तथा सन्तप्तो दातव्य इति। अयमपि वज्रलेपस्तेष्वेव प्रागुक्तेषु कार्येषु प्रासादादिषु। स च वर्षसहस्रायुतं स्थायी भवति ॥ ६ ॥

अन्यदप्याह।

**गोमहिषाजविषाणैः खररोम्णां महिषचर्मगव्यैश्च।**
**निम्बकपित्थरसैः सह वज्रतलो नाम कल्कोऽन्यः ॥ ७ ॥**

गोमहिषौ प्रसिद्धौ। अजश्छागः। एषां सर्वेषां विषाणानि शृङ्गाणि तैः। तथा खररोम्णा गर्दभरोमभिः। महिषचर्मणा गव्यैश्च निम्बकपित्थरसैः सह। निम्बः। कपित्थफलम्। रसो बोलः। एतैः सहान्यः कल्कः प्राग्वत्कृतः। एतैः सलिलद्रोणः क्राथयितव्योऽष्टभागशेषश्चेत्यादि। वज्रतलो नाम अयमपि प्रथमगुणैस्तेष्वेव कार्येष्विति ॥ ७ ॥

अन्यदप्याह।

**अष्टौ सीसकभागाः कांसस्य द्वौ तु रीतिकाभागः।**
**मयकथितो योगोऽयं विज्ञेयो वज्रसङ्घातः ॥ ८ ॥**

अष्टौ भागाः सीसकस्य। कांसस्य द्वौ भागौ। रीतिकाभाग एकः। अयं योगो वज्रसङ्घातो नाम। मयकथितो मयेनोक्तो विज्ञेयो ज्ञातव्यः। अयमपि प्रथमगुणैस्तेष्वेव कार्येष्विति। अत्र प्रमाणानुसारेण नामपरिकल्पनोक्ता। अन्ये समभागाः कार्या इत्यागमः ॥ ८ ॥

तथा च मयः।

सङ्गृह्याष्टौ सीसभागान् कांसस्य द्वौ तथांशकम्।
रीतिकायास्तु सन्तप्तो वज्राख्यः परिकीर्तितः ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ वज्रलेपलक्षणं नाम षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

# अथ प्रतिमालक्षणं व्याख्यायते ।

तत्रादावेव परमाणुप्रमाणार्थमाह ।

**जालान्तरगे भानौ यदणुतरं दर्शनं रजो याति ।**
**तद्विन्द्यात् परमाणुं प्रथमं तद्धि प्रमाणानाम् ॥ १ ॥**

भानावादित्ये जालान्तरगे गवाक्षस्थलकमध्यवर्तिनि यद्रजो धूलिरणुतरं सूक्ष्मतरं दर्शनं याति दृष्टिपथमायाति तत् परमाणुं नाम प्रमाणं विन्द्याज्जानीयात् । हिर्यस्मादर्थे । प्रमाणानां सर्वेषां तत्प्रथममाद्यं प्रमाणं परमाणुसञ्ज्ञम् ॥ १ ॥

अथ परमाणो ज्ञातेऽङ्गुलप्रमाणज्ञानमाह ।

**परमाणुरजो वालाग्रलिक्षयूकं यवोऽङ्गुलं चेति ।**
**अष्टगुणानि यथोत्तरमङ्गुलमेकं भवति सङ्ख्या ॥ २ ॥**

एतानि परमाण्वादीनि यथोत्तरमष्टगुणान्यङ्गुलमेकं भवति । तद्यथा । अष्टभिः परमाणुभी रजो भवति । अष्टभी रजोभिर्वालाग्रम् । अष्टभिर्वालाग्रैर्लिक्षा । अष्टभिर्लिक्षाभिर्यूका । अष्टभिर्यूकाभिर्यवः । अष्टभिर्यवैरङ्गुलम् । एवं यथोत्तरं परमाण्वादीन्यष्टगुणान्यङ्गुलं सङ्ख्या भवति ॥ २ ॥

तथा च ।

जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणानां परमाणुं प्रचक्षते ॥
तस्माद्रजः कचाग्रं च लिक्षा यूका यवोऽङ्गुलम् ।
क्रमादष्टगुणं चेयं जिनसङ्ख्याङ्गुलैः करः ॥

अथ समस्तायाः प्रतिमायाः प्रमाणमाह ।

**देवागारद्वारस्याष्टांशोनस्य यस्तृतीयोऽंशः ।**
**तत्पिण्डिकाप्रमाणं प्रतिमा तद्द्विगुणपरिमाणा ॥ ३ ॥**

देवागारे देवगृहे यद्द्वारं तस्य य उच्छ्रायस्तस्य योऽष्टांशोऽष्टभागस्तेन हीनस्य यस्तृतीयोऽंशस्तृतीयभागः । तत्पिण्डिकाप्रमाणं पीठिकापरिमाणम् । तद्द्विगुणपरिमाणा पीठकाद्द्विगुणप्रमाणा प्रतिमा च भवति ॥ ३ ॥

अथ प्रतिमाया अवयवप्रमाणमाह ।

**स्वैरङ्गुलप्रमाणैर्द्वादश वीस्तीर्णमायतं च मुखम् ।**
**नग्नजिता तु चतुर्दश दैर्घ्येण द्राविडं कथितम् ॥ ४ ॥**

यस्मात् काष्ठात् पाषाणादिकाद्वा प्रतिमा क्रियते तद्दैर्घ्यं पीठप्रमाणविवर्जितं द्वादशभागविभक्तं कृत्वा तत्रैको भागो नवधा कार्यः सोऽङ्गुलसञ्ज्ञो भवति । यस्मादष्टाधिकमङ्गुलशतं प्रतिमाप्रमाणं वक्ष्यति । स्वैरङ्गुलप्रमाणैरिति । प्रतिमायाः स्वैरात्मीयैरङ्गुलप्रमाणैर्मुखं वदनं द्वादशाङ्गुलानि विस्तीर्णं विपुलमायतं च दीर्घं कार्यम् । नग्नजिता मुनिना द्वादशाङ्गुलानि विस्तीर्णं मुखं कथितं दैर्घ्येण च चतुर्दशाङ्गुलानि । एतद्द्राविडं द्रविडदेशजं मानम् ॥ ४ ॥

तथा च नग्नजित् ।

विस्तीर्णं द्वादश मुखं दैर्घ्येण च चतुर्दश ।
अङ्गुलानि तथा कार्यं तन्मानं द्राविडं स्मृतम्—इति ॥

अन्यदप्याह ।

**नासाललाटचिबुकग्रीवाश्चतुराङ्गुलास्तथा कर्णौ ।**
**द्वे अङ्गुले च हनुनी चिबुकं च द्व्यङ्गुलं विततम् ॥ ५ ॥**

नासा चतुरङ्गुला दैर्घ्येण कार्या । ललाटं मुखपृष्ठं चतुरङ्गुलमेव । चिबुकं चतुरङ्गुलमेव । चिबुकग्रहणेन नासायाश्चतुरङ्गुलो भाग उच्यते । ग्रीवा चतुरङ्गुला दीर्घा । तथा कर्णौ श्रोत्रौ चतुरङ्गुलौ दीर्घौ । हनुनी द्वे द्वे अङ्गुले च विस्तृते । मुखगलसन्धी हनुनी । चिबुकं च द्व्यङ्गुलं विततं विस्तीर्णं कार्यम् । चिबुकशब्देनात्र मुखस्याधोभाग उच्यते ॥ ५ ॥

अन्यदप्याह ।

**अष्टाङ्गुलं ललाटं विस्ताराद्द्व्यङ्गुलात् परे शङ्खौ ।**
**चतुरङ्गुलौ तु शङ्खौ कर्णौ तु द्व्यङ्गुलौ पृथुलौ ॥ ६ ॥**

ललाटं विस्तारादष्टाङ्गुलं कार्यं तस्मात् परे भागे उभयतो द्व्यङ्गुलप्रमाणौ शङ्खौ कार्यौ ललाटात् परतः कार्यावित्यर्थः । शङ्खौ चतुरङ्गुलावधोभागे दीर्घौ कार्यौ यतः शङ्खाधो गण्डभाग उच्यते । कर्णौ तु द्व्यङ्गुलौ पृथुलौ विस्तीर्णौ कार्यौ ॥ ६ ॥

अन्यदप्याह ।

**कर्णोपान्तः कार्योऽर्धपञ्चमे भ्रूसमेन सूत्रेण ।**
**कर्णस्रोतः सुकुमारकं च नेत्रप्रबन्धसमम् ॥ ७ ॥**

अर्द्धपञ्चमे अर्धपञ्चममङ्गुलं यस्मिन् भागे । सार्धानि चत्वार्यङ्गुलानि नेत्रान्तादारभ्य तस्मिन् भ्रूसमेन सूत्रेण नेत्रमध्यगेन कर्णोपान्तः कार्यः । कर्णस्योपान्तः समीपः । कर्णाग्रमित्यर्थः । कर्णस्रोतः कर्णच्छिद्रं सुकुमारकं च कर्णस्रोतःसमीपे उन्नतो मार्गस्तन्नेत्रप्रबन्धसमम् । नेत्रप्रबन्धशब्देन प्रदूषिकोच्यते । तत्समं तत्तुल्यं कार्यम् । अङ्गुलप्रमाणमित्यर्थः ॥ ७ ॥

अन्यदप्याह ।

**चतुरङ्गुलं वसिष्ठः कथयति नेत्रान्तकर्णयोर्विवरम् ।**
**अधरोऽङ्गुलप्रमाणस्तस्यार्धेनोत्तरोष्ठश्च ॥ ८ ॥**

वसिष्ठमुनिर्नेत्रान्तकर्णयोर्विवरमन्तरं चतुरङ्गुलं कथयति ।
तथा च वसिष्ठः ।

कर्णनेत्रान्तरं यच्च तद्विन्द्याच्चतुरङ्गुलम् ।

अधरोष्ठोऽङ्गुलप्रमाणेन विस्तीर्णः कार्यः ।
उत्तरोष्ठश्च तस्यार्धेनाधरोष्ठस्यार्धेनार्धाङ्गुलविस्तीर्णः कार्यः ॥ ८ ॥

अन्यदप्याह ।

**अर्धाङ्गुला तु गोच्छा वक्त्रं चतुरङ्गुलायतं कार्यम् ।**
**विपुलं तु सार्धमङ्गुलमव्यात्तं त्र्यङ्गुलं व्यात्तम् ॥ ९ ॥**

गोच्छा अर्धाङ्गुलविस्तीर्णा कार्या । वक्त्रं चतुरङ्गुलायतं कार्यम् । तथा सार्धमङ्गुलं विपुलं विस्तीर्णं कार्यं यदव्यात्तमविकसितम् । व्यात्तं विकसितं मर्त्यसिंहादेस्त्र्यङ्गुलं विस्तीर्णं कार्यम् ॥ ९ ॥

अन्यदप्याह ।

**द्व्यङ्गुलतुल्यौ नासापुटौ च नासा पुटाग्रतो ज्ञेया ।**
**स्याद्द्व्यङ्गुलमुच्छ्रायश्चतुरङ्गुलमन्तरं चाक्ष्णोः ॥ १० ॥**

नासापुटौ द्व्यङ्गुलतुल्यौ द्व्यङ्गुलप्रमाणौ कार्यौ । तथा नासा पुटाग्रतो

द्व्यङ्गुलतुल्यैव ज्ञेया ज्ञातव्या । नासाया द्व्यङ्गुलमुच्छ्राय औच्च्यं स्याद्भवेत् । अक्ष्णोर्नेत्रयोर्द्वयोर्मध्यं चतुरङ्गुलप्रमाणं भवति । एतदनुक्तमपि ज्ञायते ॥ १० ॥

अन्यदप्याह ।

**द्व्यङ्गुलमितोऽक्षिकोशो द्वे नेत्रे तत्त्रिभागिका तारा ।**
**दृक्तारा पञ्चांशो नेत्रविकाशोऽङ्गुलं भवति ॥ ११ ॥**

अक्षिकोशोऽक्षिपुटो द्व्यङ्गुलमितो द्व्यङ्गुलप्रमाणः । द्वे अङ्गुले नेत्रे नयने । तत्त्रिभागिका तारा । अङ्गुलद्वयत्रिभागप्रमाणा तारा नेत्रमध्ये कृष्णो भागः । दृक्तारा मध्यवर्तिनी कुमारी अङ्गुलद्वयपञ्चांशः पञ्चांशभागः । नेत्रविकाशो नयनवैपुल्यमङ्गुलं भवति ॥ ११ ॥

अन्यदप्याह ।

**पर्यन्तात् पर्यन्तं दश भ्रुवोऽर्धाङ्गुलं भ्रुवोर्लेखा ।**
**भ्रूमध्यं द्व्यङ्गुलकं भ्रूदैर्घ्येणाङ्गुलचतुष्कम् ॥ १२ ॥**

भ्रुवोः पर्यन्तात् पर्यन्तं दशाङ्गुलानि प्रमाणम् । वामभ्रूपर्यन्ताद्दक्षिण-भ्रूपर्यन्तं यावद्दशाङ्गुलानि । भ्रुवोर्लेखा भ्रूलेखा अर्धाङ्गुलं विस्तीर्णा । भ्रूमध्यं भ्रुवोरन्तरं द्व्यङ्गुलकं द्व्यङ्गुलप्रमाणविस्तीर्णं कार्यम् । भ्रूदैर्घ्येण भ्रूदीर्घत्वेनाङ्गुलचतुष्कं कार्यमिति ॥ १२ ॥

अन्यत् ।

**कार्या तु केशरेखा भ्रूबन्धसमाङ्गुलार्धविस्तीर्णा ।**
**नेत्रान्ते करवीरकमुपन्यसेदङ्गुलप्रमितम् ॥ १३ ॥**

केशरेखा ललाटपरिवृता च भ्रूबन्धसमा भ्रूबन्धतुल्या कार्या दशाङ्गुलप्रमाणा चेत्यर्थः । अङ्गुलार्धं विस्तीर्णा । नेत्रान्ते चक्षुष्पर्यन्ते । करवीरकं दूषिकेति प्रसिद्धम् । तदङ्गुलप्रमितमङ्गुलप्रमाणमुपन्यसेत् कारयेत् ॥ १३ ॥

अन्यदप्याह ।

**द्वात्रिंशत् परिणाहाच्चतुर्दशायामतोऽङ्गुलानि शिरः ।**
**द्वादश तु चित्रकर्मणि दृश्यन्ते विंशतिरदृश्याः ॥ १४ ॥**

शिरो द्वात्रिंशदङ्गुलानि परिणाहात् कार्यम् । चतुर्दशाङ्गुलान्यायामतो विष्कम्भादित्यर्थः । चित्रकर्मणि द्वादशाङ्गुलानि दृश्यन्ते विंशतिरदृश्याः ॥१४॥

अथान्यत् ।

**आस्यं सकेशनिचयं षोडश दैर्घ्येण नग्निजित्प्रोक्तम् ।**
**ग्रीवा दश विस्तीर्णा परिणाहाद्विंशतिः सैका ॥ १५ ॥**

नग्नजित्प्रोक्तं प्रतिमालक्षणे आस्यं मुखं सकेशनिचयं केशरेखया सहितं षोडशाङ्गुलानि । मुखं दीर्घं चतुर्दशाङ्गुलानि केशरेखा द्वे अङ्गुले एवं षोडश ।

तथा च नग्नजित् ।

द्व्यङ्गुला केशरेखैवं मुखं स्यात् षोडशाङ्गुलम्—इति ।

ग्रीवा शिरोधरा दशाङ्गुलानि विस्तीर्णा कार्या । विंशतिः सैका एकविंशतिः परिणाहात् ॥ १५ ॥

अन्यदप्याह ।

**कण्ठाद्द्वादश हृदयं हृदयान्नाभी च तत्प्रमाणेन ।**
**नाभीमध्यान्मेढ्रान्तरं च तत्तुल्यमेवोक्तम् ॥ १६ ॥**

कण्ठाधोभागादारभ्य हृदयं यावत् द्वादशाङ्गुलानि । हृदयात् प्रभृति नाभीं च यावत्तत्प्रमाणेन द्वादशाङ्गुलान्येव । नाभीमध्यान्मेढ्रान्तरं लिङ्गमध्यं च यावत् तत्तुल्यं तत्सममेवोक्तं कथितम् । द्वादशाङ्गुलानीत्यर्थः ॥ १६ ॥

अथान्यत् ।

**ऊरू चाङ्गुलमानैश्चतुर्युता विंशतिस्तथा जङ्घे ।**
**जानुकपिच्छे चतुरङ्गुले च पादौ च तत्तुल्यौ ॥ १७ ॥**

ऊरू दीर्घा चाङ्गुलमानैश्चतुर्युता विंशतिः । तथा जङ्घे चतुर्विंशतिरेव दीर्घा । जानुकपिच्छे चतुरङ्गुले च चतुरङ्गुलप्रमाणे कार्ये ये च लोके एकुलके इति प्रसिद्धे । पादौ च तत्तुल्यौ तत्समौ गुल्फादारभ्याधोभागश्चतुरङ्गुलः कार्यः ॥ १७ ॥

अथान्यदप्याह ।

**द्वादशदीर्घौ षट् पृथुतया च पादौ त्रिकायताङ्गुष्ठौ ।**
**पञ्चाङ्गुलपरिणाहौ प्रदेशिनी त्र्यङ्गुलं दीर्घा ॥ १८ ॥**

पादौ चरणौ पार्ष्ण्या आरभ्याङ्गुष्ठमूलं यावत् द्वादशाङ्गुलानि दीर्घौ कार्यौ पृथुतया विस्तारेण षडङ्गुलानि। अङ्गुष्ठौ त्रिकायतौ त्रीण्यङ्गुलानि दीर्घौ कार्यौ। पञ्चाङ्गुलपरिणाहौ परिणाहात् पञ्चाङ्गुलानि कार्यौ। प्रदेशिन्यङ्गुष्ठसमीपवर्तिन्यङ्गुली त्रीण्यङ्गुलानि दीर्घा कार्या॥ १८॥

अन्यदप्याह।

**अष्टांशाष्टांशोनाः शेषाङ्गुल्यः क्रमेण कर्त्तव्याः।**
**सचतुर्थभागमङ्गुलमुत्सेधोऽङ्गुष्ठकस्योक्तः॥ १९॥**

शेषास्तिस्रोऽङ्गुल्यः। क्रमेण परिपाट्या। अष्टांशेनाष्टांशेन ऊना कर्त्तव्याः। प्रदेशिनीतो मध्यमा अष्टांशोना कार्या। अङ्गुष्ठस्योत्सेध उच्छ्राय सचतुर्भागमङ्गुलमुक्तः कथितः। शेषाङ्गुलीनामष्टांशाष्टांशोनानामङ्गुष्ठप्रमाणात् प्रमाणं कार्यम्॥ १६॥

अन्यदप्याह।

**अङ्गुष्ठनखः कथितश्चतुर्थभागोनमङ्गुलं तज्ज्ञैः।**
**शेषनखानामर्धाङ्गुलं क्रमात् किञ्चिदूनं वा॥ २०॥**

तज्ज्ञैः प्रतिमालक्षणज्ञैः अङ्गुष्ठनखश्चतुर्थभागोनमङ्गुलं कथितः। शेषानामङ्गुलीनखानामर्धाङ्गुलं प्रमाणम्। अथवा क्रमात् परिपाट्या किञ्चिदूनमर्धाङ्गुलप्रमाणं कार्यं यथा शोभा जायत इति॥ २०॥

अन्यदप्याह।

**जङ्घाग्रे परिणाहश्चतुर्दशोक्तस्तु विस्तरात् पञ्च।**
**मध्ये तु सप्त विपुला परिणाहात् त्रिगुणिताः सप्त॥ २१॥**

जङ्घाग्रे जङ्घापर्यन्ते चतुर्दशाङ्गुलानि परिणाह उक्तः कथितः। विस्तरात् पञ्चाङ्गुलानि। जङ्घा मध्ये मध्यभागे सप्ताङ्गुलानि विपुला विस्तीर्णा। परिणाहात् सप्त त्रिगुणिताः। एकविंशत्यङ्गुलानीत्यर्थः॥ २१॥

अन्यदप्याह।

**अष्टौ तु जानुमध्ये वैपुल्यं त्र्यष्टकं तु परिणाहः।**
**विपुलौ चतुर्दशोरू मध्ये द्विगुणश्च तत्परिधिः॥ २२**

जानुमध्ये अष्टावङ्गुलानि वैपुल्यं पृथुत्वम् । चाष्टकं चतुर्विंशत्यङ्गुलानि परिणाहः । ऊरू मध्ये मध्यभागे चतुर्दशाङ्गुलानि विपुलौ विस्तीर्णौ । तत्परिधिस्तत्परिणाहस्तयोः पारिमाण्डल्यं द्विगुणोऽष्टाविंशत्यङ्गुलानि भवन्ति ॥ २२ ॥

अन्यदप्याह ।

**कटिरष्टादश विपुला चत्वारिंशच्चतुर्युता परिधौ ।**
**अङ्गुलमेकं नाभी वेधेन तथा प्रमाणेन ॥ २३ ॥**

कटिरष्टादशाङ्गुलानि विपुला विस्तीर्णा । परिधौ परिणाहे चत्वारिंशच्चतुर्युता चतुश्चत्वारिंशदङ्गुलानि । नाभी वेधेन गाम्भीर्येण तथा प्रमाणेन वैपुल्येन चाङ्गुलमेकं भवति ॥ २३ ॥

अन्यदप्याह ।

**चत्वारिंशद्द्वियुता नाभीमध्येन मध्यपरिणाहः ।**
**स्तनयोः षोडश चान्तरमूर्ध्वं कक्ष्ये षडङ्गुलिके ॥ २४ ॥**

नाभीमध्येन मध्यभागे परिणाहः चत्वारिंशद्द्वियुता द्वाचत्वारिंशदङ्गुलानि । स्तनयोर्द्वयोरन्तरं मध्यं षोडशाङ्गुलानि । स्तनयोरूर्ध्वं तिर्यक् कृत्वा षडङ्गुलिके षडङ्गुलप्रमाणे कक्ष्ये कार्ये ॥ २४ ॥

अन्यदप्याह ।

**अष्टावंसौ द्वादश बाहू कार्यौ तथा प्रबाहू च ।**
**बाहू षड्विस्तीर्णौ प्रतिबाहू त्वङ्गुलचतुष्कम् ॥ २५ ॥**

अंसौ स्कन्धौ ग्रीवापार्श्वादंसान्तं यावदष्टाङ्गुलं विस्तीर्णं कार्यम् । अंससमीपवर्तिनौ बाहू द्वादशाङ्गुलानि दीर्घौ कार्यौ । बाहुसमीपवर्तिनौ प्रतिबाहू तावेव द्वादशाङ्गुलानि दीर्घौ कार्यौ । बाहू षडङ्गुलानि विस्तीर्णौ । प्रतिबाहू त्वङ्गुलचतुष्कं विस्तीर्णौ ॥ २५ ॥

अन्यदप्याह ।

**षोडश बाहू मूले परिणाहाद्द्वादशाग्रहस्ते च ।**
**विस्तारेण करतलं षडङ्गुलं सप्त दैर्घ्येण ॥ २६ ॥**

बाहू मूले षोडशाङ्गुलानि परिणाहात् । अग्रहस्ते च प्रकोष्ठप्रदेशे द्वादशाङ्गुलानि परिणाहः । करतलं हस्ततलं विस्तारेण षडङ्गुलं कार्यं दैर्घ्येणायामेन सप्ताङ्गुलानि ॥ २६ ॥

अन्यदप्याह ।

**पञ्चाङ्गुलानि मध्या प्रदेशिनी मध्यपर्वदलहीना ।**
**अनया तुल्या चानामिका कनिष्ठा तु पर्वोना ॥ २७ ॥**

अङ्गुष्ठादनन्तरं या अङ्गुली सा मध्यमायाः पर्वदलेन पर्वणोऽर्धेन हीना कार्या । सार्धानि चत्वार्यङ्गुलानि पूर्वरेखायाः प्रभृति द्वितीयां रेखां यावत् पर्वोच्यते । अनया प्रदेशिन्या चानामिका कार्या । तस्या अनामिकायाः पर्वोना कनिष्ठिका कार्या ॥ २७ ॥

अन्यदप्याह ।

**पर्वद्वयमङ्गुष्ठः शेषाङ्गुल्यस्त्रिभिस्त्रिभिः कार्याः ।**
**नखपरिमाणं कार्यं सर्वासां पर्वणोऽर्धेन ॥ २८ ॥**

अङ्गुष्ठः पर्वद्वयं कार्यः । शेषाः परिशिष्टा अङ्गुल्यस्त्रिभिस्त्रिभिः पर्वभिः कार्याः । सर्वासामङ्गुलीनां पर्वणोऽर्धेन नखपरिमाणं कार्यम् ॥ २८ ॥

एवमवयवलक्षणमभिधायाधुना स्वरूपप्रदर्शनार्थमाह ।

**देशानुरूपभूषणवेषालङ्कारमूर्त्तिभिः कार्या ।**
**प्रतिमा लक्षणयुक्ता सन्निहिता वृद्धिदा भवति ॥ २९ ॥**

देशानुरूपैर्देशसदृशैर्भूषणैराभरणैर्हारकेयूरकटकादिभिः । वेषालङ्कारैः शरीरालङ्कारैः । यस्मिन् देशे यादृशाः पुरुषाणां वेषास्तादृशैः । मूर्तिभिर्देहैः स्थूलसूक्ष्मावयवत्वेन देशानुरूपेणैव कार्या । यतः प्रतिमा लक्षणैः शास्त्रोक्तैर्युक्ता सन्निहिता सर्वकालं वृद्धिदा भवति कर्तुर्वृद्धिं ददाति ॥ २९ ॥

तथा च काश्यपः ।

द्वादशाङ्गुलकं वक्त्रं ललाटं चतुरङ्गुलम् ।
नासा ग्रीवा तु कर्तव्या तुल्या चैतत्प्रमाणतः ॥
शङ्खान्तरं ललाटस्य चेयमष्टाङ्गुलं पृथु ।
हनुद्वयं तु चिबुकमङ्गुलद्वितयं स्मृतम् ॥
चतुरङ्गुलिकौ कर्णौ भ्रुवावेव तथा स्मृते ।
द्व्यङ्गुलौ पृथुलौ कर्णौ भ्रूमध्यं तत्प्रमाणतः ॥

कर्णनेत्रान्तरं कुर्यात् तत् सार्धं चतुरङ्गुलम् ।
अधरोऽङ्गुलमानं तु तदर्धेनोत्तरं स्मृतम् ॥
चतुरङ्गुलकं वक्त्रं नासाग्रं द्व्यङ्गुलं स्मृतम् ।
नेत्रे द्व्यङ्गुलके दीर्घे तत्त्रिभागेन तारकः ॥
दृक्तारा पञ्चमांशेन दूषिकाङ्गुलसम्मिता ।
द्व्यङ्गुलं चाक्षिपुटकं तथा नासापुटौ स्मृतौ ॥
कर्णस्रोतोऽङ्गुलमितं सुकुमारं तथैव च ।
गोच्छा चाङ्गुलिका कार्या तत्समा केशरेखिका ॥
द्व्यङ्गुलौ तु स्मृतौ शङ्खावायतौ चतुरङ्गुलौ ।
चतुर्दशाङ्गुलः शीर्षो द्वात्रिंशत् परिणाहतः ॥
एकविंशत् स्मृता ग्रीवा विस्तारात् स्याद्दशाङ्गुला ।
कण्ठाच्च हृदयं नाभीं मेढ्रं तद्द्वादशाङ्गुलम् ॥
ऊरू जङ्घे चतुर्विंशा जानुनी चतुरङ्गुले ।
द्वादशाङ्गुलिकौ पादौ विस्तारात् तु षडङ्गुलौ ॥
गुल्फादधोभागगतं चतुरङ्गुलमुन्नतम् ।
अङ्गुष्ठं त्र्यङ्गुलं दीर्घं पञ्चैव परिणाहतः ॥
शेषाः पादानुसारेण परिमाणं प्रकल्पयेत् ।
जङ्घाग्रे परिधिर्ज्ञेयो ह्यङ्गुलानि चतुर्दश ॥
ऊरू तद्द्विगुणौ प्रोक्तौ कटिस्तत्त्रिगुणा स्मृता ।
अङ्गुलं तु भवेन्नाभी वेधगाम्भीर्ययोरपि ॥
नाभीमध्ये परीणाहश्चत्वारिंशद्द्विसंयुतः ।
षोडश स्तनयोर्मध्यं कक्ष्ये ऊर्ध्वं षडङ्गुले ॥
अष्टाङ्गुलौ स्मृतौ स्कन्धौ बाहू विंशच्चतुर्युतौ ।
बाहू मूले षोडश स्याद्धस्ताग्रे द्वादश स्मृताः ॥
षडङ्गुलं हस्ततलं सप्त दैर्घ्येण च स्मृतम् ।
पञ्चाङ्गुला भवेन्मध्या तर्जन्यर्धाङ्गुलोनिता ॥
अनामिका च तत्तुल्या कनिष्ठा चाङ्गुलोनिता ।
सुवृत्तपास्ताश्च कर्तव्या द्विपर्वाङ्गुष्ठिका स्मृता ॥

चिपर्वाङ्गुलयः शेषा नखाः पर्वार्धविस्तृताः ।
द्वेशवेयुतान् हस्तान् सौम्यरूपांश्च कारयेत् ॥
स्वरूपा लक्षणोपेता प्रतिमा वृद्धिदा भवेत्—इति ।

अधुना प्रतिमानां विशेषलक्षणमाह ॥

**दशरथतनयो रामो बलिश्च वैरोचनिः शतं विंशम् ।**
**द्वादशहान्या शेषाः प्रवरसमन्यूनपरिमाणाः ॥ ३० ॥**

दशरथतनयो दशरथपुत्रो रामः । वैरोचनिर्विरोचनपुत्रश्च बलिः । शतं विंशं विंशत्यधिकमङ्गुलशतं कार्यमित्यर्थः । शेषा अन्याः प्रतिमा द्वादशहान्या द्वादशकद्वादशकहीनत्वेन प्रवरसमन्यूनपरिमाणा भवन्ति । विंशत्यधिकादङ्गुलशताद्द्वादशाङ्गुलान्यपास्याष्टाधिकं शतमङ्गुलानां प्रतिमा प्रधाना भवति । ततोऽपि द्वादशकमपास्य षण्णवत्यङ्गुलसमा मध्यमा भवति । ततोऽपि द्वादशकमपास्य चतुरशीत्यङ्गुला न्यूनपरिमाणा प्रतिमा भवति । "स्वैरङ्गुलप्रमाणैर्द्वादशविस्तीर्णमायतं च मुख"मित्यनेन न्यायेन या प्रतिमोक्ता साष्टाङ्गुलं शतमधिकं भवति यदुक्तं "दशरथतनयो रामो बलिश्च वैरोचनिः शतं विंश"मित्यस्मिन् द्वादशानामङ्गुलानामधिकानां तैरधिकेन परिमाणः कार्यः सर्वावयवानाम् । एवं हीनत्वेऽप्यनुपात एवेत्यनुक्तं ज्ञायत इति ॥ ३० ॥

अधुना भगवतो विष्णोः स्वरूपकथनमाह ।

**कार्योऽष्टभुजो भगवांश्चतुर्भुजो द्विभुज एव वा विष्णुः ।**
**श्रीवत्साङ्कितवक्षाः कौस्तुभमणिभूषितोरस्कः ॥ ३१ ॥**
**अतसीकुसुमश्यामः पीताम्बरनिवसनः प्रसन्नमुखः ।**
**कुण्डलकिरीटधारी पीनगलोरःस्थलांसभुजः ॥ ३२ ॥**
**खड्गगदाशरपाणिर्दक्षिणतः शान्तिदश्चतुर्थकरः ।**
**वामकरेषु च कार्मुकखेटकचक्राणि शङ्खश्च ॥ ३३ ॥**
**अथ च चतुर्भुजमिच्छति शान्तिद एको गदाधरश्चान्यः ।**
**दक्षिणपार्श्वे त्वेवं वामे शङ्खश्च चक्रं च ॥ ३४ ॥**

१ कर्मीकाध्ययस्य ४ श्लोकः ।

**द्विभुजस्य तु शान्तिकरो दक्षिणहस्तोऽपरश्च शङ्खधरः ।**
**एवं विष्णोः प्रतिमा कर्त्तव्या भूतिमिच्छद्भिः ॥ ३५ ॥**

कार्योऽष्टभुजो भगवानिति । भगवान् विष्णुर्नारायणोऽष्टभुजोऽष्टहस्तः कार्यः । चतुर्भुजो द्विभुज एव वा कार्यः । श्रीवत्साङ्कितवक्षाः । श्रीवत्सेन रोमावर्तेनाङ्कितं चिह्नितं वक्ष उरो यस्य । तथा कौस्तुभाख्येन मणिना भूषितमलङ्कृतमुरो वक्षो यस्य ॥ ३१ ॥

अतसीकुसुमवदतसीपुष्पवत् श्यामः । पीतान्यम्बराणि वसनं परिधानं यस्य । प्रसन्नमुखः सौम्यवदनः । कुण्डलं कर्णाभरणं किरीटं मुकुटं तद्धारणं शीलमस्य । पीनः पीवरो गलः कण्ठो यस्य । मांसल इत्यर्थः । तथा पीनोरःस्थलः । पीनांसः पीनस्कन्धः । पीनभुजः पीनबाहुः ॥ ३२ ॥

दक्षिणतो दक्षिणभागे अष्टभुजस्य ये चत्वारः पाणयो हस्तास्तेष्वेकस्मिन् खड्गो नन्दकः । द्वितीये गदा कौमुदी । तृतीये शरः । चतुर्थे शान्तिदः । द्रष्टुरभिमुख ऊर्ध्वाङ्गुलिः शान्तिदः करः । वामकरेषु वामहस्तेषु च कार्मुकं धनुः शार्ङ्गम् । खेटकं फरः । चक्रं सुदर्शनम् । शङ्खश्च पाञ्चजन्यः ॥ ३३ ॥

अथशब्दो विकल्पे । तुशब्दो विशेषद्योतकः । यदि चतुर्भुजं कर्तुमिच्छति तदा दक्षिणपार्श्वे भुजद्वये एकः शान्तिदः करः । द्वितीयो गदाधरः । वामपार्श्वे भुजद्वये एकस्मिन् शङ्खो द्वितीये चक्रम् ॥ ३४ ॥

द्विभुजस्य विष्णोर्दक्षिणहस्तः शान्तिदः । अपरो वामः शङ्खधरः एवमनेन प्रकारेण भूतिमिच्छद्भिः समृद्धिमभिलषद्भिर्विष्णोर्नारायणस्य प्रतिमाऽर्चा कार्या ॥ ३५ ॥

अथ हलधरस्य लक्षणमाह ।

**बलदेवो हलपाणिर्मदविभ्रमलोचनश्च कर्त्तव्यः ।**
**बिभ्रत् कुण्डलमेकं शङ्खेन्दुमृणालगौरतनुः ॥ ३६ ॥**

बलदेवो हलधरो हलपाणिर्लाङ्गलहस्तः । मदविभ्रमलोचनो मदिरापानेन यो मदस्तेन विभ्रमे चलिते लोचने नयने यस्य स तथाभूतः कर्तव्यः । एवं कुण्डलं कर्णाभरणं बिभ्रत् धारयन् । शङ्खेन्दुमृणालगौरतनुः ।

शङ्खः प्रसिद्धः । इन्दुश्चन्द्रः । मृणालो बिसम् । तद्वद्गौरी श्वेता तनुर्यस्य स तथाभूतः ॥ ३६ ॥

अथैकानंशाया लक्षणमाह ।

**एकानंशा कार्या देवी बलदेवकृष्णयोर्मध्ये ।**
**कटिसंस्थितवामकरा सरोजमितरेण चोद्वहती ॥ ३७ ॥**
**कार्या चतुर्भुजा या वामकराभ्यां सपुस्तकं कमलम् ।**
**द्वाभ्यां दक्षिणपार्श्वे वरमर्थिष्वक्षसूत्रं च ॥ ३८ ॥**
**वामेऽथाष्टभुजायाः कमण्डलुश्चापमम्बुजं शास्त्रम् ।**
**वरशरदर्पणयुक्ताः सव्यभुजाः साक्षसूत्राश्च ॥ ३९ ॥**

एकानंशेति । बलदेवकृष्णयोर्हलधरवासुदेवयोर्मध्ये अन्तरे एकानंशाभिधाना देवी देवता कार्या विधेया । कीदृशी । कटिसंस्थितवामकरा कटिसंस्थितो वामकरो वामहस्तो यस्याः । इतरेण दक्षिणेन सरोजं पद्ममुद्वहती धारयन्ती कार्या—इति ॥ ३७ ॥

अथ चतुर्भुजा क्रियते तदा तस्या वामकरयोरेकस्मिन् पुस्तकं द्वितीये कमलं पद्मम् । दक्षिणभागे द्वयोः करयोरेकस्मिन्नर्थिषु वरदो द्वितीयेऽक्षसूत्रम् । उत्तानोऽधोऽङ्गुलिर्हस्तो वरदः ॥ ३८ ॥

वामेऽथाष्टभुजाया इति । अथाष्टभुजा क्रियते तदा तस्या वामहस्तचतुष्के एकस्मिन् कमण्डलुः । द्वितीये चापं धनुः । तृतीये अम्बुजं पद्मम् । चतुर्थे शास्त्रं पुस्तकम् । सव्ये दक्षिणभागे एको हस्तो वरदः । द्वितीये शरः । तृतीये दर्पणमादर्शः । चतुर्थे अक्षसूत्रमिति ॥ ३९ ॥

अथ शाम्बप्रद्युम्नलक्षणमाह ।

**शाम्बश्च गदाहस्तः प्रद्युम्नश्चापभृत् सुरूपश्च ।**
**अनयोः स्त्रियौ च कार्ये खेटकनिस्त्रिंशधारिण्यौ ॥ ४० ॥**

शाम्बो द्विभुजो गदाहस्तश्च कार्यः । प्रद्युम्नः कामदेवश्चापभृद्धः शरहस्तः । सुरूपः शोभनरूपश्च । अनयोर्द्वयोः शाम्बप्रद्युम्नयोः स्त्रि कार्ये । कीदृश्यौ । खेटकनिस्त्रिंशधारिण्यौ । खेटकः फरः । निस्त्रिं खड्गः । तौ धारयन्त्यौ ॥ ४० ॥

अथ ब्रह्मणः कुमारस्य च लक्षणमाह ।

**ब्रह्मा कमण्डलुकरश्चतुर्मुखः पङ्कजासनस्थश्च ।**
**स्कन्दः कुमाररूपः शक्तिधरो बर्हिकेतुश्च ॥ ४१ ॥**

ब्रह्मा पितामहः कमण्डलुकरः कमण्डलुहस्तश्चतुर्मुखश्चतुर्वक्त्रश्च पङ्कजासनस्थश्च पङ्कजासने पद्मासने स्थितः । स्कन्दः कार्त्तिकेयः कुमाररूपो बालरूपः । शक्तिधरः शक्तिमायुधविशेषं धारयति । बर्हिकेतुर्मयूरध्वजः ॥ ४१ ॥

अथेन्द्रलक्षणमाह ।

**शुक्लश्चतुर्विषाणो द्विपो महेन्द्रस्य वज्रपाणित्वम् ।**
**तिर्यग्ललाटसंस्थं तृतीयमपि लोचनं चिह्नम् ॥ ४२ ॥**

महेन्द्रस्य द्विपो हस्ती ऐरावताख्यः शुक्लः श्वेतवर्णः । चतुर्विषाणश्चतुर्दन्तः स च कार्यः । वज्रपाणित्वं वज्रमायुधविशेषः कुलिशाख्यः स पाणौ यस्य स वज्रपाणिस्तस्य भावो वज्रपाणित्वम् । तृतीयं लोचनं नेत्रं तिर्यग्ललाटसंस्थं तिर्यक् कृत्वा ललाटे स्थितं चिह्नमपि कार्यम् ॥ ४२ ॥

अथ भगवतो महेश्वरस्य लक्षणमाह ।

**शम्भोः शिरसीन्दुकला वृषध्वजोऽक्षि च तृतीयमपि चोर्ध्वम् ।**
**शूलं धनुः पिनाकं वामार्धे वा गिरिसुतार्धम् ॥ ४३ ॥**

शम्भोर्महेश्वरस्य शिरसि मूर्धनि कला चन्द्रकला कार्या । वृषध्वजः वृषो दान्तः स एव ध्वजश्चिह्नं यस्य । ऊर्ध्वमूर्ध्वस्थितं तृतीयमपि अक्षि नेत्रं कार्यम् । शूलं त्रिशूलमेकस्मिन् हस्ते । धनुश्चापं तदेव पिनाकसञ्ज्ञमन्यस्मिन् । गिरिसुता गौरी वामेऽर्धे वा कार्या । अर्धगौरीश्वर इत्यर्थः ॥ ४३ ॥

अथ बुद्धस्य लक्षणमाह ।

**पद्माङ्कितकरचरणः प्रसन्नमूर्त्तिः सु[1]नीचकेशश्च ।**
**पद्मासनोपविष्टः पितेव जगतो भवति बुद्धः ॥ ४४ ॥**

बुद्धः पद्माङ्कितकरचरणः कार्यः । करौ हस्तौ चरणौ पादौ पद्मेन कमलेनाङ्कितौ चिह्नितौ कृताभौ रेखाभिरित्यर्थः । प्रसन्नमूर्तिः सौम्यदेहः

१ सुनीतकेशश्च—इति पाठान्तरम् ।

प्रसादपरः । सुनीचकेशश्च सुनीचा अत्यल्पाः केशा मूर्धजा यस्य । केचित् सुनीतकेशश्चेति पठन्ति । सुनीता अतिनियमिताः । पद्मासने कमलासने उपविष्टः स्थितः । पितेव जगतः । जगतो विश्वस्य पितेव जनक इति । शान्तिशील इत्यर्थः ॥ ४४ ॥

अथार्हतां देवस्य लक्षणमाह ।

**आजानुलम्बबाहुः श्रीवत्साङ्कः प्रशान्तमूर्तिश्च ।**
**दिग्वासास्तरुणो रूपवांश्च कार्योऽर्हतां देवः ॥ ४५ ॥**

अर्हतां देवो जिन आजानुलम्बबाहुः कार्यः । जानुसम्प्राप्तहस्तः । श्रीवत्साङ्कः श्रीवत्समङ्कं चिह्नविशेषो यस्य सः । प्रशान्तमूर्तिर्जितेन्द्रियो रागद्वेषरहितः । दिग्वासा नग्नः । तरुणो यौवनोपेतः । रूपवान् सुशोभनवपुः ॥ ४५ ॥

अथ भगवतो भास्करस्य लक्षणमाह ।

**नासाललाटजङ्घोरुगण्डवक्षांसि चोन्नतानि रवेः ।**
**कुर्यादुदीच्यवेषं गूढं पादादुरो यावत् ॥ ४६ ॥**
**बिभ्राणः स्वकररुहे बाहुभ्यां पङ्कजे मुकुटधारी ।**
**कुण्डलभूषितवदनः प्रलम्बहारो वियद्गवृतः ॥ ४७ ॥**
**कमलोदरद्युतिमुखः कञ्चुकगुप्तः स्मितप्रसन्नमुखः ।**
**रत्नोज्ज्वलप्रभामण्डलश्च कर्तुः शुभकरोऽर्कः ॥ ४८ ॥**

नासाललाटेति । रवेरादित्यस्य नासा नासिका । ललाटं मुखाग्रम् । जङ्घे ऊरू । गण्डो मुखगण्डः । वक्ष उरःप्रदेशः । एतान्युन्नतानि उच्चानि । उदीच्यवेषमुत्तरपथवेषं कुर्यात् । उदग्वेषमित्यर्थः । पादात् प्रभृत्युरो वक्षो यावत् । गूढं चोलकगुप्तम् ॥ ४६ ॥

बिभ्राण इति । स्वकररुहे स्वनखे बाहुभ्यां पङ्कजे कमले बिभ्राणः । सहजनखस्य करे लग्नत्वात् सपत्नभागस्य बाहोर्नीलत्वाच्च कमले बिभ्राणः । मुकुटधारी मुकुटं मौलिं तं च धारयति । कुण्डलभूषितवदनः । कुण्डलाभ्यां कर्णाभरणाभ्यां भूषितमलङ्कृतं वदनं मुखं यस्य । प्रलम्बोऽतिदीर्घो हारो मुक्ताहारो यस्य । वियद्गं सारसनं तेन वृतः संयुक्तः ॥ ४७ ॥

कमलं पद्मं तस्योदरमभ्यन्तरं तद्वद्द्युतिः कान्तिर्मुखे वदने यस्य । कञ्चुकः प्रसिद्धस्तेन गुप्त आच्छादितः । स्मितं हसितं प्रसन्नं सौम्यमतिशोभनं मुखं वक्त्रं यस्य । रत्नैर्मणिविशेषैरुज्ज्वलो दीप्यमानः प्रभामण्डलः कान्तिसमूहो यस्य । एवंविधोऽर्क आदित्यः कर्त्तुः शुभकरः । श्रेयःप्रदः ॥ ४८ ॥

अथार्कमुद्दिश्य सर्वप्रतिमानां शुभाशुभमाह ।

**सौम्या तु हस्तमात्रा वसुदा हस्तद्वयोच्छ्रिता प्रतिमा ।**
**क्षेमसुभिक्षाय भवेत् त्रिचतुर्हस्तप्रमाणा या ॥ ४९ ॥**
**नृपभयमत्यङ्गायां हीनाङ्गयामकल्यता कर्त्तुः ।**
**शातोदर्यां क्षुद्भयमर्थविनाशः कृशाङ्गायाम् ॥ ५० ॥**
**मरणं तु सक्षतायां शस्त्रनिपातेन निर्दिशेत् कर्त्तुः ।**
**वामावनता पत्नीं दक्षिणविनता हिनस्त्यायुः ॥ ५१ ॥**
**अन्धत्वमूर्ध्वदृष्ट्या करोति चिन्तामधोमुखी दृष्टिः ।**
**सर्वप्रतिमास्वेवं शुभाशुभं भास्करोक्तसमम् ॥ ५२ ॥**

सौम्या तु हस्तमात्रेति । हस्तमात्रा हस्तप्रमाणा दीर्घा प्रतिमा सौम्या शुभावहा भवति । हस्तद्वयोच्छ्रिता वसुदा धनप्रदा भवति । या त्रिचतुर्हस्तप्रमाणा सा यथासङ्ख्यं क्षेमसुभिक्षाय भवेत् । त्रिहस्ता क्षेमाय चतुर्हस्ता सुभिक्षाय भवेत् स्यात् ॥ ४९ ॥

नृपभयमिति । अत्यङ्गायामिति । स्थूलावयवायां नृपभयं राजभयं भवति । हीनाङ्गायां प्रमाणहीनावयवायां कर्त्तुरकल्यता अनारोग्यम् । शातोदर्यां तनूदरायां क्षुद्भयं भवति । कृशाङ्गायां दुर्बलावयवायामर्थविनाशो वित्तक्षयः ॥ ५० ॥

सक्षतायां क्षतसंयुक्तायां प्रतिमायां कर्त्तुः शस्त्रनिपातेन मरणं निर्दिशेद्वदेत् । वामे वामभागे अवनता प्रतिमा कर्त्तुः पत्नीं भार्यां हिनस्ति मारयति दक्षिणे विनता आयुर्जीवितं हिनस्ति मारयति । आयुषः क्षयं करोति ॥ ५१ ॥

अन्धत्वमूर्ध्वदृष्ट्या प्रतिमा नेत्रनाशं करोति । अधोमुखी दृष्टिश्चिन्तां शोकं करोति । एवं भास्करोक्तसमं सूर्यकथिततुल्यं शुभाशुभं सर्वासु प्रतिमास्वन्यासु ज्ञेयं ज्ञातव्यम् ॥ ५२ ॥

अधुना लिङ्गस्य लक्षणमाह ।

**लिङ्गस्य वृत्तपरधिं दैर्घ्येणासूत्र्य तत् त्रिधा विभजेत् ।**
**मूले तच्चतुरस्रं मध्ये त्वष्टास्रि वृत्तमतः ॥ ५३ ॥**
**चतुरस्रमवनिखाते मध्यं कार्यं तु पिण्डिकाश्वभ्रे ।**
**दृश्योच्छ्रायेण समा समन्ततः पिण्डिका श्वभ्रात् ॥ ५४ ॥**

लिङ्गस्य वृत्तभागे यः परिणाहस्तं सूत्रेण परिच्छिद्य तत् सूत्रं दैर्घ्येण दीर्घत्वेन आसूत्र्य मित्वा तत्प्रमाणं पाषाणं काष्ठं मणिं वा कृत्वा त्रिधा विभजेत् भागत्रयं कुर्यात् । ततो लिङ्गस्य मूले योऽसौ त्रिभागस्तं चतुरस्रं कार्यम् । मध्ये यस्तमष्टास्रिं कुर्यात् । अतः परं यस्तृतीयभागस्तं वृत्तं परिवर्तुलं कुर्यात् ॥ ५३ ॥

तत्र चतुरस्रं यद्भागं तदवनिखाते भूखाते कार्यं क्षेप्यम् । मध्यं यदष्टास्रि तत् पिण्डिकाश्वभ्रे पीठगर्ते क्षिपेत् । श्वभ्रात् पीठविवरात् समन्ततः सर्वासु दिक्षु पीठिका दृश्योच्छ्रायेण समा कार्या । दृश्यभागस्य परिवर्तुलस्य लभ्यो य उच्छ्रायस्तत्समः । एतदुक्तं भवति । यावत्प्रमाणं वृत्तभागस्य दैर्घ्यं तावत्प्रमाणं समन्ततः पीठिकापृथुत्वं कार्यमिति ॥ ५४ ॥

अन्यद्विशेषलक्षणमाह ।

**कृशदीर्घं देशघ्नं पार्श्वविहीनं पुरस्य नाशाय ।**
**यस्य क्षतं भवेन्मस्तके विनाशाय तल्लिङ्गम् ॥ ५५ ॥**

यल्लिङ्गं कृशं दुर्बलं दीर्घमभ्युच्छ्रितं तद्देशघ्नं देशं हन्ति । यत् पार्श्वाभ्यां विहीनं तत् पुरस्य नगरस्य नाशाय भवति । यस्य मस्तके मूर्धनि क्षतं छिद्रं भवेत् स्यात् तल्लिङ्गं विनाशाय भर्तुरेव भवति ॥ ५५ ॥

अथ मातृगण एवं तस्य लक्षणमाह ।

**मातृगणः कर्त्तव्यः स्वनामदेवानुरूपकृतचिह्नः ।**
**रेवन्तोऽश्वारूढो मृगयाक्रीडादिपरिवारः ॥ ५६ ॥**

मातृगणो मातृसमूहः स्वनामदेवानुरूपकृतचिह्नः कर्तव्यः । स्वनामा यो देवस्तदनुरूपं तादृक्कृतं चिह्नं लक्षणं यस्य । यथा ब्रह्मणो यल्लिङ्गं "ब्रह्मा[1] कमण्डलुकरश्चतुर्मुखः पङ्कजासनस्थश्च"ति ब्राह्मी कार्या । [2]"कार्योऽष्टभुजो

---

१ अस्यैवाध्यायस्य ४१ श्लोकः । २ अस्यैवाध्यायस्य ३१ श्लोकः

भगवा"निति वैष्णवी। [1]"शम्भोः शिरसीन्दुकले"ति रौद्रः कार्याः। "स्कन्दः [2]कुमाररूपे"ति कौमार्यः। [3]"शुक्रश्चतुर्विषाणो द्विपो महेन्द्रस्य वज्रपाणित्व"-मित्यैन्द्र्यः। [4]"दण्डी यमो महिषगो" इति याम्यः। "हंसारूढः पाशभृद्वरुणा" इति वारुण्यः। "नरवाहनः कुवेर" इति कौवेर्यः। एवमन्यासां नारसिंहिवाराहिवैनायकीनामप्यूह्यम्। किन्तु तासां स्तनशोभा मध्यक्षामता नितम्बवैपुल्यं कार्यं येन प्रकारेण स्त्रीरूपस्य शोभा जायते इति। रेवन्तोऽर्कतनयोऽश्वारूढः कार्यः। अश्वस्तुरगस्तत्रारूढस्तदुपरि स्थित इत्यर्थः। तथा मृगया मृगवधस्तत्क्रीडादिपरिवार इति। यः परिवारः स मृगयायुक्तः क्रीडायुक्तः आदिग्रहणादश्ववाहने तत्परीक्षणं तदन्वेषणादि ॥ ५६ ॥

अथ यमवरुणकुवेरलक्षणमाह।

**दण्डी यमो महिषगो हंसारूढश्च पाशभृद्वरुणः।**
**नर[5]वाहनः कुबेरो वामकिरीटी बृहत्कुक्षिः ॥ ५७ ॥**

यमः प्रेतपतिर्दण्डी दण्डहस्तो महिषारूढश्च कार्यः। वरुणोऽपाम्पतिः। हंसारूढो हंसः पक्षी तस्मिन्नारूढस्तस्योपरि स्थितः। पाशभृत् पाशहस्तः कार्यः। कुबेरो वैश्रवणो नरवाहनो मनुष्यारूढः। खरवाहन इति केचित् पठन्ति। वामकिरीटी वामभागे किरीटी मुकुटं यस्य। बृहत्कुक्षिर्विस्तीर्णकुक्षिः कार्यः। अत्र प्रतिमालक्षणं देवानां देवतानां यल्लक्षणमाचार्येणोक्तं तेषां लोकप्रसिद्धा यथा यथा शरीरशोभा भवति तथा तथोक्तवत्प्रतिमा कार्या लक्षणज्ञैः स्वैरङ्गुलप्रमाणैरित्यादि यदुक्तं तत्सर्वं कार्यमिति ॥ ५७ ॥

तथा च काश्यपः

एकदंष्ट्रो गजमुखश्चतुर्बाहुर्विनायकः।
लम्बोदरः स्थूलदेहो नेत्रत्रयविभूषितः ॥

[6]नवकुवलयकान्तिमक्षमालां कमलकमण्डलुदर्पणाग्रहस्ताम्।
प्रणमत वरपीनपीठपद्मासनसुखितां परमेश्वरीं वितस्ताम् ॥

ब्रह्मा चतुर्मुखो दण्डी कृष्णाजिनकमण्डली।

---

१ अस्यैवाध्यायस्य ४३ श्लोकः। २ अस्यैवाध्यायस्य ४१ श्लोकः।
३ अस्यैवाध्यायस्य ४२ श्लोकः। ४ अस्यैवाध्यायस्य ५७ श्लोकः।
५ खरवाहनः-इति पाठान्तरम्। ६ अन्येषु पुस्तकेष्वयं श्लोको नोपलभ्यते

विष्णुश्चतुर्भुजः शार्ङ्गी शङ्खचक्रगदाधरः ।
श्रीवत्साङ्कः पीतवासा वनमालाविभूषितः ॥
नरसिंहः स्थूलदेहो रोमावर्तविभूषितः ।
उद्घाटितमुखः स्रग्वी वह्निकान्तिर्बृहद्भुजः ॥
वराहः सूकरमुखश्चतुर्बाहुविभूषितः ।
नीलाञ्जनचयप्रख्यो ध्यानशक्तः सुलोचनः ॥
ईश्वरो जटिलस्त्र्यक्षो वृषचन्द्राङ्कभूषितः ।
उरगेन्द्रोपवीती च कृत्तिवासाः पिनाकधृक् ॥
चण्डिकाष्टादशभुजा सर्वप्रहरणान्विता ।
च्यक्षा सिंहरथा धन्या महिषासुरसूदिनी ॥
मयूरवाहनः स्कन्दः शक्तिकुक्कुटधारकः ।
सुरूपदेहो विक्रान्तो देवः सेनापतिः शिशुः ॥
आदित्यस्तरुणः स्रग्वी कवची खड्गधृत् तथा ।
तेजस्वी पङ्कजकरः षड्वर्गश्च किरीटवान् ॥
ऐरावतश्चतुर्दन्तः श्वेतगात्रो महागजः ।
तदारूढो महेन्द्रस्तु वज्रहस्तो महाबलः ॥
तिर्यग्ललाटगं नेत्रं तृतीयं तस्य कारयेत् ।
नीललोहितवर्णा च शची तस्य समीपगा ॥
एवं देवगणाः सर्वे स्वायुधाभरणोज्ज्वलाः ।
कर्तव्याः स्वस्वरूपाश्च सम्पूर्णाः शुभलक्षणाः ॥
हस्तमात्रा भवेत् सौम्या द्विहस्तात्रधनप्रदा ।
सुभिक्षक्षेमदा पुण्या त्रिहस्ता तु चतुष्करा ॥
वैकल्यं कुरुते हीना कृशाङ्गी देहनाशिनी ।
मरणं सक्षतायां तु सुदीर्घा वित्तनाशिनी ॥
वामे नता हन्ति पत्नीं कर्तुर्दक्षिणभागगा ।
ऊर्ध्वदृष्टिर्नेत्ररोगं गोकर्णा स्यादधोमुखी ॥
सुरूपा सुप्रभागेव सर्वाभरणभूषिता ।
स्वायुधैश्च समायुक्ता कर्तव्या प्रतिमा शुभा—इति ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ प्रतिमालक्षणं
नाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

# अथ वनसम्प्रवेशाध्यायो व्याख्यायते ।

तत्रादावेव विधानमाह ।

**कर्त्तुरनुकूलदिवसे दैवज्ञविशोधिते शुभनिमित्ते ।**
**मङ्गलशकुनैः प्रास्थानिकैश्च वनसम्प्रवेशः स्यात् ॥ १ ॥**

कर्त्तुः प्रतिमाकर्त्तुः । अनुकूलदिवसे उपचयकर्त्तृग्रहस्य दिने निरुपहते नक्षत्रे च । दैवज्ञविशोधिते शुभनिमित्ते । दैवज्ञेन कालविदा यज्ञ विशोधितं दत्तं शुभनिमित्तं शकुनं सुमुहूर्त्तादिकं च तस्मिन् । प्रास्थानिकैर्मङ्गलशकुनैः । प्रस्थाने भवाः प्रास्थानिकाः प्रस्थाने यात्रायां यानि मङ्गलशकुनानि उक्तानि तैः । सिद्धार्थकादर्शपयोऽञ्जनानीत्यादिकानि मङ्गलानि । अष्टौ हयषिते प्राच्या-मित्यादिकाः शकुनाः । एतैः प्रास्थानिकैर्मङ्गलशकुनैर्वनसम्प्रवेशः स्याद्भवेत् । वने वृक्षबहुले देशे प्रवेशः प्रतिमाकाष्ठार्थं कार्य इति ॥ १ ॥

अत्र च वर्जनीयान् वृक्षानाह ।

**पितृवनमार्गसुरालयवल्मीकोद्यानतापसाश्रमजाः ।**
**चैत्यसरित्सङ्गमसम्भवाश्च घटतोयसिक्ताश्च ॥ २ ॥**
**कुब्जानुजातवल्लीनिपीडिता वज्रमारुतोपहताः ।**
**स्वपतितहस्तिनिपीडितशुष्काग्निप्लुष्टमधुनिलयाः ॥ ३ ॥**
**तरवो वर्जयितव्याः शुभदाः स्युः स्निग्धपत्त्रकुसुमफलाः ।**
**अभिमतवृक्षं गत्वा कुर्यात् पूजां सबलिपुष्पाम् ॥ ४ ॥**

एवंविधास्तरवो वृक्षा वर्जयितव्याः । कीदृशाः । पितृवनं श्मशानम् । मार्गः पन्थाः । सुरालयं देवगृहम् । वल्मीको वल्मीककृतो मृत्स्तूपः । उद्या-नमुपवनम् । तापसाश्रमस्तपोवनम् । एतेषु ये जाता उत्पन्ना वृक्षाः । तथा चैत्यः प्रधानवृक्षः । सरितो नद्यस्तासां सङ्गमो मेलकस्तत्र येषां वृक्षाणां सम्भव उत्पत्तिः । तथा घटतोयेन कलशजलेन सिक्ताः सेचिता ये वृक्षाः । तेषां स्वयं रोपितत्वादच्छेदार्हत्वात् ॥ २ ॥

कुब्जोऽस्पष्टः । अनुजातो वृक्षस्य अनु पश्चादन्यो यो वृक्षो जात उत्पन्नस्तेन योगेन पीडितः । ये च वृक्षा वल्लीभिर्निपीडिताः । वज्रमश-

निर्मोहतो वायुस्ताभ्यां ये चोपहता भग्नाः । यश्च स्वपतितः स्वयमेव पतितः । हस्तिना गजेन निपीडितो यो भग्नः । शुष्को विगतरसः । अग्नि-प्लुष्टोऽग्निना दग्धः । मधुनिलयो मधुमाक्षिकाणामाश्रयः ॥ ३ ॥

एवमेते यथोक्तास्तरवो वर्ज्याः । अन्ये परिशिष्टा वृक्षाः शुभदाः । ते च स्निग्धपत्राः स्निग्धकुसुमाः सस्नेहपुष्पाः स्निग्धफलाश्च शुभदा एव । ततोऽभिमतमभीष्टं वृक्षं तरुं गत्वा आसाद्य तस्य सबलिपुष्पां बलिभिरुप-हारैः पुष्पैः कुसुमैः सहितां पूजामर्चां कुर्यात् ॥ ४ ॥

अथ वर्णानुक्रमेण वृक्षानाह ।

**सुरदारुचन्दनशमीमधूकतरवः शुभा द्विजातीनाम् ।**
**क्षत्रस्यारिष्टाश्वत्थखदिरबिल्वा विवृद्धिकराः ॥ ५ ॥**
**वैश्यानां जीवकखदिरसिन्धुकस्यन्दनाश्च शुभफलदाः ।**
**तिन्दुककेसरसर्जार्जुनाम्रशालाश्च शूद्राणाम् ॥ ६ ॥**

सुरदारुर्देवदारुः । चन्दनं मलयजम् । शमी प्रसिद्धा । मधूको वृक्षः प्रसिद्धः । एते तरवो वृक्षाः प्रतिमार्थं देवविग्रहार्थं च द्विजातीनां ब्राह्मणानां शुभदाः । अरिष्टः । अश्वत्थः । खदिरः । बिल्वश्च । एते सर्व एव वृक्ष-विशेषाः क्षत्रस्य क्षत्रियजातेर्विवृद्धिकराः ॥ ५ ॥

जीवकः । खदिरः । सिन्धुकः । स्यन्दनः । एते वृक्षविशेषा वैश्यानां शुभफलदाः । तिन्दुकः । केसरः । सर्जः । अर्जुनः । आम्रः । शालः । एते वृक्षाः शूद्राणां शुभदाः ॥ ६ ॥

तथा च काश्यपः ।

सुरदारुः शमीवृक्षो मधूकश्चन्दनस्तथा ।
प्रतिष्ठार्थं ब्राह्मणानामेते प्रोक्ताः शुभावहाः ॥
अरिष्टाश्वत्थखदिरबिल्वाः क्षत्रियजातिषु ।
जीवकः खदिरश्चैव सिन्धुकः स्यन्दनस्तथा ॥
वैश्यानां शुभदाः प्रोक्तास्तिन्दुकः केसरस्तथा ।
सर्जोऽर्जुनाम्रशालाश्च शूद्राणां शुभदाः स्मृताः ॥

अत्रैव विशेषमाह ।

**लिङ्गं वा प्रतिमा वा द्रुमवत् स्थाप्या यथा दिशं यस्मात् ।**
**तस्माच्चिह्नयितव्या दिशो द्रुमस्योर्ध्वमथवाधः ॥ ७ ॥**

लिङ्गं शिवलिङ्गं वा प्रतिमार्चा वा यस्माद्द्रुमवद्वृक्षवद्यथा दिशं स्थाप्याः । अयमर्थः । द्रुमस्य यः पूर्वाभिमुखो भागः स एव प्रतिमायाः पूर्वभागः कार्यः । एवं दक्षिणो दक्षिणः । पश्चिमः पश्चिमः । उत्तरभाग उत्तरभाग एव कार्यः । वृक्षस्य योऽधो भागः स एव प्रतिमाया अधोभागः कार्यः । वृक्षस्य य ऊर्ध्वभागः सोऽपि प्रतिमाया ऊर्ध्वभागः कार्यः । तस्माद्धेतोर्द्रुमस्य वृक्षस्य दिश आशाश्चिह्नयितव्याः । एवमूर्ध्वाधरौ भागावपि चिह्नयितव्यौ ॥ ७ ॥

तथा च काश्यपः ।

> वृक्षवत् प्रतिमा कार्या प्राग्भागाद्युपलक्षिता ।
> पादाः पादेषु कर्त्तव्याः शीर्षमूर्ध्वे तु कारयेत् ॥

अथ वृक्षच्छेदनविधानमाह ।

**परमान्नमोदकौदनदधिपललोल्लोपिकादिभिर्भक्ष्यैः ।**
**मद्यैः कुसुमैर्धूपैर्गन्धैश्च तरुं समभ्यर्च्य ॥ ८ ॥**
**सुरपितृपिशाचराक्षसभुजगासुरगणविनायकाद्यानाम् ।**
**कृत्वा रात्रौ पूजां वृक्षं संस्पृश्य च ब्रूयात् ॥ ९ ॥**

परमान्नं पायसम् । मोदकाः लड्डुकाः । ओदनं भक्तम् । दधि क्षीरविकारः । पललमर्धनिष्पीडितास्तिलाः । उल्लोपिकाः प्रसिद्धाः । आदिग्रहणाद्बहुभिर्भक्ष्यप्रकारैरपूपप्रभृतिभिर्लेह्यपेयचोष्यैः । मद्यैः । कुसुमैः पुष्पैः । धूपैर्गन्धैः सुगन्धद्रव्यैश्च तरुं वृक्षं समभ्यर्च्य सम्पूज्य ॥ ८ ॥

सुरा देवाः । पितरो देवयोनयः । पिशाचा देवयोनय एव । राक्षसा नक्तंचराः पिशिताशिनः । भुजगाः पन्नगाः । असुरा दैत्याः । गणाः प्रमथाः । विनायका विघ्नाः । आदिग्रहणाद्भूतप्रेतसिद्धविद्याधरगन्धर्वाः । एतेषां रात्रौ निशि पूजामर्चां कृत्वा विधाय वृक्षं तरुं पाणिना संस्पृश्य च इमं मन्त्रं ब्रूयाद्वदेत् ॥ ९ ॥

किं तदित्याह ।

अर्चार्थममुकस्य त्वं देवस्य परिकल्पितः ।
नमस्ते वृक्ष पूजेयं विधिवत् सम्प्रगृह्यताम् ॥१०॥
यानीह भूतानि वसन्ति तानि
बलिं गृहीत्वा विधिवत् प्रयुक्तम् ।
अन्यत्र वासं परिकल्पयन्तु
क्षमन्तु तान्यद्य नमोऽस्तु तेभ्यः ॥ ११ ॥

हे वृक्ष अमुकस्य अमुकनाम्नो देवस्य सुरस्यार्चार्थं पूजार्थं परिकल्पितो व्यवस्थापितः । नमस्ते तव नमस्कारं भवतु । इयं पूजा मयोपनीता विधिवद्विधानेन सम्प्रगृह्यताम् ॥ १० ॥

इहास्मिन् वृक्षे यानि भूतानि वसन्ति व्यवस्थितानि तान्यमुं बलिमुपहारं विधिवद्विधानेन प्रयुक्तमुपनीतं गृहीत्वा सङ्गृह्य अन्यत्रान्यस्मिन् वृक्षे वासं गृहं परिकल्पयन्तु व्यवस्थापयन्तु । तानि भूतान्यद्य क्षमन्तु क्षान्तिं कुर्वन्तु । तेभ्यो भूतेभ्यो नमोऽस्तु नमस्कारो भवतु ॥ ११ ॥

ततः किं कुर्यादित्याह ।

वृक्षं प्रभाते सलिलेन सिक्त्वा
पूर्वोत्तरस्यां दिशि सन्निकृत्य ।
मध्वाज्यदिग्धेन कुठारकेण
प्रदक्षिणं शेषमतो निहन्यात् ॥ १२ ॥

प्रभाते प्रभातकाले वृक्षं तरुं सलिलेनोदकेन सिक्त्वा संसिच्य कुठारकेण परशुना मध्वाज्यदिग्धेन मधुना माक्षिकेणाज्येन घृतेन दिग्धेनोपलिप्तेन प्रथमं पूर्वोत्तरस्यामैशान्यां सन्निकृत्य छित्त्वा ततः शेषं प्रदक्षिणेन पूर्वाग्नेययाम्यनैर्ऋतपश्चिमवायव्योत्तरासु दिक्षु निहन्याच्छिन्द्यात् ॥ १२ ॥

अथ पतितस्य तरोर्लक्षणमाह ।

पूर्वेण पूर्वोत्तरतोऽथवोदक्
पतेद्यदा वृद्धिकरस्तदा स्यात् ।
आग्नेयकोणात् क्रमशोऽग्निदाह-
रुग्रोगरोगास्तुरगक्षयश्च ॥ १३ ॥

पूर्वेण पूर्वस्यां दिशि । अथवा पूर्वोत्तरत ऐशान्याम् । उदगुत्तरस्यां दिशि । यदा पतेत् तदा वृद्धिकरः स्याद्भवेत् । आग्नेयकोणात् प्रभृति क्रमेण यदा पतति तदैतानि गर्गेण फलानि उक्तानि । तद्यथा । आग्नेयकोणे यदि पतति तदा अग्निदाहो भवति । दक्षिणे रुजो रोगा भवन्ति । नैर्ऋते रोगा भवन्ति । पश्चिमायां रोगा एव । वायव्ये तुरगत्रयोऽश्वविनाशः ॥ १३ ॥

अथ यन्नोक्तं तदपोह्यमित्याह ।

**यन्नोक्तमस्मिन् वनसम्प्रवेशे**
**निपातविच्छेदनवृक्षगर्भाः ।**
**इन्द्रध्वजे वास्तुनि च प्रदिष्टाः**
**पूर्वं मया तेऽत्र तथैव योज्याः ॥ १४ ॥**

अस्मिन्निह वनसम्प्रवेशे यन्नोक्तं यन्न कथितम् । किं तत् । निपातविच्छेदनवृक्षगर्भाः । निपातः पतनं वृक्षस्य ।

यथा ।

नृ[1]पजयदमविध्वस्तं पतनमनाकुञ्चितं च पूर्वोदक् ।
अविलग्नं चान्यतरौ विपरीतमतस्त्यजेत् पतितम् ॥

विच्छेदनं यथा ।

प[2]रशोर्जर्जरशब्दो नेष्टः स्निग्धो घनश्च हित इति ।

तथा वृक्षगर्भः । "पी[3]ते तु मण्डले निर्दिशेत्तरोर्मध्यगां गोधामि"-त्यादि । एते निपातविच्छेदनवृक्षगर्भाः । ते मया पूर्वमादाविन्द्रध्वजे । वास्तुनि च ये वास्तुविद्यायां प्रदिष्टा उक्तास्ते चाप्यस्मिन् वनसम्प्रवेशे तथैव तेनैव प्रकारेण योज्या योजनीया इति ॥ १४ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ वनसम्प्रवेशो नामाष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

---

१ द्रष्टव्योऽस्य ग्रन्थस्य ५०५ पृष्ठे २० श्लोकः ।
२ द्रष्टव्योऽस्य ग्रन्थस्य ५०५ पृष्ठे १९ श्लोकः ।
३ द्रष्टव्योऽस्य ग्रन्थस्य ७०३ पृष्ठे १२० श्लोकः ।

## अथ प्रतिमाप्रतिष्ठापनं व्याख्यायते ॥

तत्रादावेवाधिवासने मण्डपस्य लक्षणमाह ।

**दिशि याम्यायां कुर्या[1]दधिवासनमण्डपं बुधः प्राग्वा ।**
**तोरणचतुष्टययुतं शस्तद्रुमपल्लवच्छन्नम् ॥ १ ॥**
**पूर्वे भागे चित्राः स्रजः पताकाश्च मण्डपस्योक्ताः ।**
**आग्नेय्यां दिशि रक्ताः कृष्णाः स्युर्याम्यनैर्ऋत्योः ॥ २ ॥**
**श्वेता दिश्यपरस्यां वायव्यायां तु पाण्डुरा एव ।**
**चित्राश्चोत्तरपार्श्वे पीताः पूर्वोत्तरे कार्याः ॥ ३ ॥**

बुधः पण्डितो याम्यायां दक्षिणस्यां प्राक् पूर्वस्यां वा अधिवासनमण्डपं कुर्यात् । अधिवासनं संस्कारविशेषः । केचित् सौम्यायामिति पठन्ति । सौम्यायामुत्तरस्याम् । कीदृशं मण्डपं तोरणचतुष्टययुतं चतुर्दिशं चतुर्भिस्तोरणैर्युक्तम् । शस्तानां प्रशस्तानां द्रुमाणां याज्ञिकानां पल्लवैः पत्रैश्छन्नमाच्छादितं कुर्यात् ॥ १ ॥

मण्डपस्य पूर्वभागे पूर्वस्यां दिशि स्रजो मालाः पताकाश्च वैजयन्त्यश्चित्रा नानावर्णा उक्ताः कथिताः । आग्नेय्यां पूर्वदक्षिणस्यां दिशि स्रजः पताका रक्ता लोहिताः । याम्यं दक्षिणं नैर्ऋती दक्षिणपश्चिमा तयोर्याम्यनैर्ऋत्योः कृष्णाः कृष्णवर्णाः ॥ २ ॥

अपरस्यां पश्चिमायां दिशि श्वेताः शुक्लवर्णाः कार्याः । वायव्यायां पश्चिमोत्तरस्यां दिशि पाण्डुरा ईषच्छुक्लाः । एवमुत्तरपार्श्वे उत्तरस्यां दिशि चित्रा नानावर्णाः । पूर्वोत्तरे ऐशाने स्रजः पताकाश्च पीतवर्णाः कार्या इति ॥ ३ ॥

अधुना प्रतिमायाः प्रविभागेन फलमाह ।

**आयुःश्रीबलजयदा दारुमयी मृन्मयी तथा प्रतिमा ।**
**लोकहिताय मणिमयी सौवर्णी पुष्टिदा भवति ॥ ४ ॥**
**रजतमयी कीर्त्तिकरी प्रजाविवृद्धिं करोति ताम्रमयी ।**
**भूलाभं तु महान्तं शैली प्रतिमाथवा लिङ्गम् ॥ ५ ॥**

[1] सौम्यायाम्-इति पाठान्तरम् ।

प्रतिमा दारुमयी काष्ठनिर्मिता तथा मृन्मयी पार्थिवी । आयुर्जीवितम् । श्रियं लक्ष्मीम् । बलं वीर्यम् । जयं विजयम् । च ददाति । मणिमयी रत्ननिर्मिता प्रतिमा लोकानां जनानां हिताय भवति । सौवर्णी काञ्चननिर्मिता पुष्टिदा शरीरपुष्टिं ददाति ॥ ४ ॥

रजतमयी रौप्यनिर्मिता कीर्ति यशः करोति । ताम्रमयी प्रजानां पुत्रादीनां विवृद्धिं करोति । शैली शिलामयी प्रतिमार्चाऽथवा लिङ्गं शैलं शिलामयं महान्तमतिप्रभूतं भूलाभं करोति ॥ ५ ॥

तथा च काश्यपः ।

याची मृद्दारुसम्भूता सायुःश्रीबलदा मता ।
सौवर्णी पुष्टिदा ज्ञेया रत्नजा हितकारिणी ॥
राजती कीर्तिदा ज्ञेया ताम्रजा जनवर्धिनी ।
महत् करोति भूलाभं यार्चा पाषाणनिर्मिता ॥

पुनरपि विशेषमाह ।

**शङ्कूपहता प्रतिमा प्रधानपुरुषं कुलं च घातयति ।**
**श्वभ्रोपहता रोगानुपद्रवांश्च क्षयं कुरुते ॥ ६ ॥**

शङ्कुस्तिर्यग्निर्गतः कीलकः । अङ्ग इति प्रसिद्धो लोके । तेनोपहता प्रतिमार्चा प्रधानपुरुषं नायकं कुलं वंशं च घातयति । श्वभ्रं गर्तस्तेनोपहता प्रतिमा रोगान् गदानुपद्रवान् दोषान् क्षयं च करोति ॥ ६ ॥

तथा च काश्यपः ।

यार्चा शङ्कुहता सा तु प्रधानकुलनाशिनी ।
छिद्रेणोपहता या तु बहुदोषकरी मता ॥

अथाधिवासनलक्षणमाह ।

**मण्डपमध्ये स्थण्डिलमुपलिप्यास्तीर्य सिकतयाथ कुशैः ।**
**भद्रासनकृतशीर्षोपधानपादां न्यसेत् प्रतिमाम् ॥ ७ ॥**

अधिवासनमण्डपस्य मध्येऽन्तः स्थण्डिलं भूभागमुपलिप्य ततः सिकतया वालुकया कुशैर्दर्भैश्चास्तीर्य । अथशब्दोऽत्र चार्थे । आस्तरणमाच्छादनं वालुकां प्रसार्य तदुपरि दर्भैराच्छादनं कुर्यात् । तत्र प्रतिमां भद्रा-

सनकृतशीर्षोपधानपादां न्यसेत् । भद्रासनं राजासनं तत्र कृतशीर्षां स्थित-मस्तकां तथोपधानपादामुपधानं शीर्षोपधानं तत्र कृतपादां न्यसेत् ॥ ७ ॥

अन्यद्विधानमाह ।

प्लक्षाश्वत्थोदुम्बरशिरीषवटसम्भवैः कषायजलैः ।
मङ्गल्यसञ्ज्ञिताभिः सर्वौषधिभिः कुशाद्याभिः ॥ ८ ॥
द्विपवृषभोद्धृतपर्वतवल्मीकसरित्समागमतटेषु ।
पद्मसरःसु च मृद्भिः सपञ्चगव्यैश्च तीर्थजलैः ॥ ९ ॥
पूर्वशिरस्कां स्नातां सुवर्णरत्नाम्बुभिश्च ससुगन्धैः ।
नानातूर्यनिनादैः पुण्याहैर्वेदनिर्घोषैः ॥ १० ॥

प्लक्षः । अश्वत्थः । उदुम्बरः । शिरीषः । वटः । एते सर्वे एव वृक्षविशेषाः । एषां सम्भवैः कषायजलैरेतत्प्रवक्वथितपानीयैः । तथा मङ्गल्यसञ्ज्ञिताभिः सर्वौषधिभिः । मङ्गल्यसञ्ज्ञिताः प्रशस्तनाम्न्यो याश्चौषध्यः । यथा । जया । जयन्ती । जीवन्ती । जीवपुत्री । पुनर्नवा । विष्णुक्रान्ता । अभया । विश्वम्भरी । महामोदा । सहदेवी । पूर्णकोशा । शतावरी । सहस्रवीर्या लक्ष्मणा चेति ताभिः । तथा कुशाद्याभिः । कुशा दर्भाः आद्याः प्रथमा यासामोषधीनां ताः कुशाद्याः । आदिग्रहणाच्छाद्वलाङ्कुरा ज्ञेयाः । एताभिरौषधिभिः ॥ ८ ॥

द्विपो हस्ती । तेनोद्धृता या मृत् । वृषभो दान्तः । तेनोद्धृता या मृत् । पर्वतमृत् । वल्मीकमृत् । सरिन्नदी द्वयोर्द्वयोः नद्योर्यत्र समागमः संयोगो मेलकस्तत्र तटेषु या मृत् । पद्मसरःसु च मृद्भिः । पद्मैः कमलैः संयुक्तानि यानि च सरांसि तेषु या मृदस्ताभिः । तीर्थजलैः पुण्यतीर्थजलैः सपञ्चगव्यैः । पञ्चगव्यसहितैः । गोमयम् । गोमूत्रम् । क्षीरम् । दधि । सर्पिः । कुशोदकमिति ॥ ९ ॥

एतैः प्रागुक्तैः प्रतिमां स्नाताम् । तथा ससुगन्धैः शोभनगन्धसंयुतैः सुवर्णरत्नाम्बुभिः सुवर्णरत्नगर्भतोयैः स्नातां कृतस्नातां पूर्वशिरस्कां पूर्वस्यां दिशि शिरः कृत्वा न्यसेत् स्थापयेत् । तथा नानाविधानां तूर्याणां निनादैः शब्दैः सह तथा पुण्याहैः पुण्याहशब्दैर्वेदनिर्घोषैर्वेदपदोद्गारैश्च सह ॥ १० ॥

ततः किं कुर्यादित्याह ।

**ऐन्द्र्यां दिशीन्द्रलिङ्गा मन्त्राः प्राग्दक्षिणेऽग्निलिङ्गाश्च ।**
**व[1]क्तव्या द्विजमुख्यैः पूज्यास्ते दक्षिणाभिश्च ॥ ११ ॥**

ऐन्द्र्यां पूर्वस्यां दिशीन्द्रलिङ्गा मन्त्रा इन्द्रदैवत्या ऐन्द्रा मन्त्रा द्विजमुख्यैर्ब्राह्मणश्रेष्ठैर्वक्तव्याः पाठनीयाः । केचित् जप्तव्या इति पठन्ति । तथा प्राग्दक्षिणे आग्नेय्यां दिशि । अग्निलिङ्गा अग्निदैवत्या मन्त्रा वक्तव्याः । ते च द्विजमुख्या दक्षिणाभिः पूज्या अर्च्याः ॥ ११ ॥

ततः किं कुर्यादित्याह ।

**यो देवः संस्थाप्यस्तन्मन्त्रैश्चानलं द्विजो जुहुयात् ।**
**अग्निनिमित्तानि मया प्रोक्तानीन्द्रध्वजोत्थाने ॥ १२ ॥**
**धूमाकुलोऽपसव्यो मुहुर्मुहुर्विस्फुलिङ्गकृन्न शुभः ।**
**होतुः स्मृतिलोपो वा प्रसर्पणं चाशुभं प्रोक्तम् ॥ १३ ॥**

यो देवः संस्थाप्यः प्रतिष्ठापनीयः । तन्मन्त्रैस्तद्दैवत्यैर्वैदिकैर्मन्त्रैर्द्विजो ब्राह्मणोऽनलमग्निं जुहुयात् । मया अग्निनिमित्तानि अग्निलक्षणानि इन्द्रध्वजोत्थाने उक्तानि कथितानि । "[2]स्वाहावसानसमये स्वयमुज्ज्वलार्चि"-रित्यादि । अग्निर्धूमाकुलो धूमेनाकूलीकृतः सधूमः । अपसव्यो वामावर्तः । मुहुर्मुहुः मुहुर्मुहुरिति शब्दं करोति । विस्फुलिङ्गकृद्विस्फुलिङ्गं करोति मुञ्चति तथा विधो न शुभः । अथवा होतुः पुरोहितस्य स्मृतिलोपो विस्मृतिर्भवति प्रसर्पणं च पश्चाद्गमनमशुभमनिष्टं प्रोक्तं कथितम् ॥ १३ ॥

ततः किं कुर्यादित्याह ।

**स्नातामभुक्तवस्त्रां स्वलङ्कृतां पूजितां कुसुमगन्धैः ।**
**प्रतिमां स्वास्तीर्णायां शय्यायां स्थापकः कुर्यात् ॥ १४ ॥**

तां प्रतिमां स्नातां कृतस्नानाम् । अभुक्तवस्त्रामभिनववस्त्रप्रावृताम् । स्वलङ्कृतां शोभनैरलङ्करणैरलङ्कृताम् । कुसुमैः पुष्पैः । गन्धैः सुगन्धद्रव्यैरगुरुप्रभृतिभिश्च । पूजितामर्चिताम् । स्थापकः प्रतिष्ठापकः । स्वास्तीर्णायां शोभनास्तृतायां शय्यायां कुर्यात् स्थापयेदित्यर्थः ॥ १४ ॥

---

१ जप्तव्याः-इति पाठान्तरम् ।   २ द्रष्टव्योऽस्य ग्रन्थस्य ५०६ पृष्ठे ३२ श्लोकः ।

ततस्तस्याः सुप्तायाः किं कुर्यादित्याह ।

**सुप्तां सगीतनृत्यैर्जागरणैः सम्यगेवमधिवास्य ।**
**दैवज्ञसम्प्रदिष्टे काले संस्थापनं कुर्यात् ॥ १५ ॥**

तां प्रतिमां सुप्तां सगीतनृत्यैर्गाननृत्यसहितैर्जागरणैरस्वापनिषेधणैः सम्यक् कृत्वैवमनेन प्रकारेणैवाधिवास्य ततो दैवज्ञेन कालविदा योऽसौ सम्प्रदिष्ट उक्तः कालः । उदगयने सितपक्ष इत्यनेन विधानेन तस्मिन् काले समये संस्थापनं प्रतिष्ठापनं कुर्यात् ॥ १५ ॥

कथं प्रतिष्ठापयेदित्याह ॥

**अभ्यर्च्य कुसुमवस्त्रानुलेपनैः शङ्खतूर्यनिर्घोषैः ।**
**प्रादक्षिण्येन नयेदायतनस्य प्रयत्नेन ॥ १६ ॥**
**कृत्वा बलिं प्रभूतं सम्पूज्य ब्राह्मणांश्च सभ्यांश्च ।**
**दत्त्वा हिरण्यशकलं विनिक्षिपेत् पिण्डिकाश्वभ्रे ॥ १७ ॥**
**स्थापकदैवज्ञद्विजसभ्यस्थपतीन् विशेषतोऽभ्यर्च्य ।**
**कल्याणानां भागी भवतीह परत्र च स्वर्गी ॥ १८ ॥**

तां प्रतिमाम् । कुसुमैः पुष्पैः । वस्त्रैरम्बरैः । अनुलेपनैः समालम्भनैर्गन्धैः । अभ्यर्च्य सम्पूज्य । ततः शङ्खानां तूर्याणां निर्घोषैः शब्दैः । आयतनस्य प्रासादस्य प्रयत्नेन प्रादक्षिण्येन नयेत् । अधिवासनमण्डपान्निष्क्राम्य प्रादक्षिण्येन प्रासादस्य गर्भगृहं प्रवेशयेदित्यर्थः ॥ १६ ॥

ततः प्रभूतं बहु बलिमुपहारं कृत्वा ब्राह्मणान् द्विजान् सभ्यान् सभागतांश्च जनान् सम्पूज्याभ्यर्च्य हिरण्यशकलं सुवर्णखण्डं पिण्डिकाश्वभ्रे पीठगर्ते दत्त्वा विनिक्षिप्य ततः प्रतिमां विनिक्षिपेत् न्यसेत् ॥ १७ ॥

स्थापकः प्रतिष्ठापकः । दैवज्ञः सांवत्सरः । द्विजा ब्राह्मणाः । सभ्याः सभागताः प्रधानपुरुषाः । स्थपतिः वर्धकिः । एतान् विशेषतोऽभ्यर्च्य । इहास्मिन् लोके कल्याणानां श्रेयसां भागी फलभाग्भवति । परत्र च परलोके स्वर्गी भवति । स्वर्गमधिवसतीत्यर्थः ॥ १८ ॥

अथ प्रतिष्ठापनलक्षणमाह ।

**विष्णोर्भागवतान् मगांश्च सवितुः शम्भोः सभस्मद्विजान्**
**मातॄणामपि मण्डलक्रमविदो विप्रान् विदुर्ब्रह्मणः ।**
**शाक्यान् सर्वहितस्य शान्तमनसो नग्नान् जिनानां विदु-**
**र्ये यं देवमुपाश्रिताः स्वविधिना तैस्तस्य कार्या क्रिया ॥ १९ ॥**

विष्णोर्नारायणस्य भागवतान् । सवितुरादित्यस्य मगान् मगब्राह्मणान् । शम्भोर्महादेवस्य । द्विजान् ब्राह्मणान् सभस्मसहितान् पाशुपतानित्यर्थः । मातॄणां ब्राह्म्यादीनाम् । मण्डलक्रमविदो ये मण्डलक्रमं पूजाक्रमं विदन्ति जानन्ति । तान् स्थापकान् विदुः । ब्रह्मणः पितामहस्य विप्रान् ब्राह्मणान् विदुः । सर्वहितस्य बुद्धस्य शान्तमनसो जितेन्द्रियस्य शाक्यान् रक्तपटान् विदुः । जिनानामर्हतां नग्नान्नग्नक्षपणकान् विदुः । ये नरा यं देवमुपाश्रिताः शरण्यं भक्तिभावेन प्राप्तास्तैर्नरैस्तस्य देवस्य स्वविधिना आत्मीयदर्शनोक्तेन विधानेन । पञ्चरात्रविधिना विष्णोः । सौरदर्शनविधानेन सवितुः । वातुलतन्त्रोक्तेनान्यतन्त्रोक्तविधिना वा शम्भोः । मातॄणां स्वकल्पविहितविधानेन ब्राह्मणैर्वेदविहितकर्मणा बुद्धस्य पारमिताक्रमेण । अर्हतां तद्दर्शनविधिना क्रिया कार्या—इति ॥ १९ ॥

अथ प्रतिष्ठाकाललक्षणमाह ।

**उदगयने सितपक्षे शिशिरगभस्तौ च जीववर्गस्थे ।**
**लग्ने स्थिरे स्थिरांशे सौम्यैर्धीधर्मकेन्द्रगतैः ॥ २० ॥**
**पापैरुपचयसंस्थैर्ध्रुवमृदुहरितिष्यवायुदेवेषु ।**
**विकुजे दिनेऽनुकूले देवानां स्थापनं शस्तम् ॥ २१ ॥**

उदगयने उत्तरायणे मकरादिराशिषट्कस्थे रवौ । सितपक्षे शुक्लपक्षे । तथैवोत्तरायणे शुक्लपक्षे शिशिरगभस्तौ चन्द्रे । शिशिराः शीतला गभस्तयो रश्मयो यस्य तस्मिन् जीववर्गस्थे बृहस्पतिवर्गस्थे । वर्गो गृहहोराद्रेष्काणनवांशद्वादशांशत्रिंशद्भागाख्यः । तथा लग्ने स्थिरे वृषसिंहकुम्भानामन्यतमे । तथान्यस्मिन् मिथुनकर्कटकन्यातुलधन्विमीनानामन्यतमे स्थिरनवांशकोदये । यतोऽन्यराशयोऽनेनैव प्रकारेणान्तरे निषिद्धाः ।

सद्वर्गे स्थिरभोदये च भवनं कार्यं प्रवेशोऽपि वेति ।

सौम्यैर्बुधजीवशुक्रैर्धीधर्मकेन्द्रगतैः । धीस्थानं पञ्चमम् । धर्मस्थानं नवमम् । केन्द्राणि लग्नचतुर्थसप्तमदशमानि । एतेषामन्यतमस्थानस्थैः पापैरादित्याङ्गारकशनैश्चरैरुपचयसंस्थैः । त्रिषडेकादशदशमस्थानानामन्यतमस्थानस्थैः । तथा ध्रुवमृदुहरितिष्यवायुदेवेषु नक्षत्रेषु । उत्तरात्रितयं रोहिणी चेति ध्रुवाणि । मृगशिरश्चित्रानुराधा रेवती चेति मृदूनि । हरिः श्रवणः । तिष्यः । वायुदेवः स्वातिः । एतेषु नक्षत्रेषु । विकुजे अङ्गारकविवर्जिते दिने वासरे । रविशशिबुधगुरुसितासितानां दिने । तस्मिंश्चानुकूले कर्तुः शुभकरे देवानां सुराणां स्थापनं प्रतिष्ठापनं शस्तं शोभनमिति ॥ २०–२१ ॥

एतत् प्रतिष्ठापनं सर्वदेवानां सामान्यं मया कृतमित्येतदाह ।

**सामान्यमिदं समासतो लोकानां हितदं मया कृतम् ।**
**अधिवासनसन्निवेशने सावित्रे पृथगेव विस्तरात् ॥ २२ ॥**

इदं प्रतिष्ठापनं समासतः सङ्क्षेपतः सामान्यमविशेषं वैदिकेन विधानेन सर्वेषां जनानां हितमनुकूलमनायासकरं मया कृतं रचितम् । सावित्रे शास्त्रे प्रत्येकस्य देवस्याधिवासनसन्निवेशने । अधिवासनं प्रतिष्ठापनं निवेशनं च ते पृथक्पृथग्विस्तराद्विस्तारेण तत्र भवतः । अथवा सावित्रे सवितुरादित्यस्य ये अधिवासनसन्निवेशने पृथगेव विस्तारात् तच्छास्त्रे सौरे भवत इति ॥ २२ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ प्रतिमाप्रतिष्ठापनं नाम नवपञ्चाशत्तमोऽध्यायः ॥ ५९ ॥

# अथ गोलक्षणं व्याख्यायते ।

तत्रादावेवागमप्रदर्शनार्थमाह ।

पराशरः प्राह बृहद्रथाय
गोलक्षणं यत् क्रियते ततोऽयम् ।
मया समासः शुभलक्षणास्ताः
सर्वास्तथाप्यागमतोऽभिधास्ये ॥ १ ॥

पराशराख्यो मुनिर्बृहद्रथाय शार्ङ्गरवनाम्नि स्वशिष्याय यद्गोलक्षणं प्राहोक्तवान् ततस्तस्माद्गोलक्षणान्मया आचार्येण समासः सङ्क्षेपः क्रियते । सर्वाः समस्ता गावः शुभलक्षणाः प्रशस्तलक्षणाः । अपिग्रहणादशुभलक्षणाः सर्वा निःशेषास्तथा तेनैव प्रकारेणागमत आगमान्मुनिप्रणीताच्छास्त्रादभिधास्ये कथयिष्ये ॥ १ ॥

तत्रादावेवाशुभलक्षणान्याह ।

साम्राविलरूक्षाक्ष्यो मूषकनयनाश्च न शुभदा गावः ।
प्रचलच्चिपिटविषाणाः करटाः खरसदृशवर्णाश्च ॥ २ ॥
दशसप्तचतुर्दन्त्यः प्रलम्बमुण्डानना विनतपृष्ठ्यः ।
ह्रस्वस्थूलग्रीवा यवमध्या दारितखुराश्च ॥ ३ ॥
श्यावातिदीर्घजिह्वा गुल्फैरतितनुभिरतिबृहद्भिर्वा ।
अतिककुदाः कृशदेहा नेष्टा हीनाधिकाङ्ग्यश्च ॥ ३ ॥

अक्षिशब्दः प्रत्येकमभिसंबध्यते । साम्राक्ष्यः साम्रे नित्यमश्रुणा संयुक्ते अक्षिणी यासां ताः साम्राक्ष्यः । आविले कलुषे अप्रसन्ने अक्षिणी यासां ताः । रूक्षे अस्निग्धे अक्षिणी यासां ताः । मूषकनयनाः मूषकसदृशनेत्रास्ता गावो न शुभदाः अप्रशस्ताः । तथा प्रचलच्चिपिटविषाणाः प्रचलन्ति कम्पमानानि चिपिटानि चर्पटानि विषाणानि शृङ्गाणि यासां ता अप्यशुभाः । याश्च करटकाः । करटो वर्णः कृष्णलोहित इत्यर्थः । खरसदृशवर्णाश्च न शुभदाः ॥ २ ॥

या गावो दशदन्त्यः। सप्तदन्त्यः। चतुर्दन्त्यः। दश सप्त चत्वारो वा दन्ता यासां ताः। प्रलम्बं लम्बमानं मुण्डं शृङ्गरहितमाननं मुखं यासाम्। विनतमस्पष्टं पृष्ठं मध्यं यासाम्। ह्रस्वानुच्चा स्थूला बृहती ग्रीवा शिरोधरा यासाम्। यवमध्या यवसदृशं मध्यं यासाम्। दारितखुराः प्रभग्नाः खुराः पादा यासाम्॥ ३॥

श्यावाः श्याववर्णा अतिदीर्घा अत्यायामिनी जिह्वा रसना यासाम्। गुल्फैरतितनुभिरत्यल्पैरतिबृहद्भिरतिस्थूलैर्वा अङ्घ्रैः। खुरोपरि गुल्फप्रदेशः। अतिककुदा बृहत्ककुदयुक्ताः। ककुदो ग्रीवान्ते पृष्ठभागेऽत्युच्चतरो भागः। कृशदेहा दुर्बलशरीराः। हीनाङ्गाः। अधिकाङ्ग्यो वा नेष्टा न शुभाः॥ ४॥

तथा च पराशरः।

साश्रुणी लोचने यासां रूक्षाल्पे च न ताः शुभाः।
चलच्चिपिटशृङ्गाश्च करटाः खरसन्निभाः॥
दशसप्तचतुर्दन्त्योऽलम्बवक्त्रा न ताः शुभाः।
विषाणवर्जिता ह्रस्वाः पृष्ठमध्यातिसन्नताः॥
ह्रस्वस्थूलगला याश्च यवमध्याः शुभा न ताः।
भिन्नपादा बृहद्गुल्फा याश्च स्युस्तनुगुल्फकाः॥
श्यावातिदीर्घजिह्वाश्च महत्ककुदसंयुताः।
याश्चातिकृशदेहाश्च हीना अवयवैश्च याः॥
न ताः शुभप्रदा गावो भर्तुर्यूथस्य नाशना—इति॥

अथ वृषभलक्षणमाह।

**वृषभोऽप्येवं स्थूलातिलम्बवृषणः शिराततक्रोडः।**
**स्थूलशिराचितगण्डस्त्रिस्थानं मेहते यश्च॥ ५॥**
**मार्जाराक्षः कपिलः करटो वा न शुभदो द्विजस्येव।**
**कृष्णोष्ठतालुजिह्वः श्वसनो यूथस्य घातकरः॥ ६॥**

वृषभो दान्तोऽप्येवं लक्षणसंयुक्तः पूर्वोक्तलक्षणैः साश्राविलरूक्षाल्प इत्यादिकैर्युक्तो न शुभः किन्तु विशेषलक्षणानि। स्थूलातिलम्बवृषणः स्थूलावतिप्रमाणौ वृषणौ मुष्कौ यस्य। शिराततक्रोडः शिराभिस्ततं व्याप्तं क्रोडं पूर्वपादद्वयमध्यं यस्य। तथा स्थूलाभिर्बृहतीभिः शिराभिश्चितो संयुक्तो

गण्डौ कपोलदेशौ यस्य । यश्च त्रिस्थानं मेहते विसृजते मूत्रपुरीषौ तुल्यकालं करोति । अक्षिभ्यां शिश्नेन च विसृजतीति केचित् । नित्यं गलदश्रुणी चक्षुषी भवत इत्यर्थः ॥ ५ ॥

मार्जाराक्षो विडालनेत्रसदृशे अक्षिणी यस्य । कपिलः कपिलवर्णः । करटः करटवर्णो वा नाललोहितवर्णः स तथाभूतो द्विजस्य ब्राह्मणस्यैव न शुभः किन्त्वन्यवर्णानाम् । यतोऽनिष्टलक्षणसंयुक्तो द्विजस्य देय इति लोकस्थितिः । तस्यापि न शुभः । यश्च कृष्णोष्ठतालुजिह्वः । ओष्ठतालुजिह्वाः कृष्णा यस्य । यः श्वसनस्त्रासयुक्तश्च यूथस्य वृन्दस्य घातकरो विनाशकरः क्षयकृदित्यर्थः ॥ ६ ॥

अन्यदप्याह ।

**स्थूलशकृन्मणिशृङ्गः सितोदरः कृष्णसारवर्णश्च ।**
**गृहजातोऽपि त्याज्यो यूथविनाशावहो वृषभः ॥ ७ ॥**

यश्च स्थूलशकृत् स्थूलं शकृद्गोमयं यस्य । मणिसदृशे च शृङ्गे विषाणे दृश्येते यस्य स तथाभूतः । केचित् स्थूलशकृत् स्थूलगोमयः । स्थूलमणिः स्थूललिङ्गप्रान्तः । स्थूलशृङ्ग इतीच्छन्ति । सितोदरः श्वेतजठरः । कृष्णसारवर्णः कृष्णोऽसितः सारः श्वेतश्च वर्णो यस्य । क्वचित् कृष्णः क्वचिच्छ्वेत इत्यर्थः । अपिशब्दः सम्भावनायां वर्तते । स वृषो दान्तो गृहजातो वेश्मसम्भूतोऽपि त्याज्यः परिहर्तव्यः । किं पुनस्तथाभूतो मूल्येन गृह्यते । ततः स यूथस्य विनाशावहः क्षयकरः । यस्मिन् यूथे स वसति तं क्षयं नयतीत्यर्थः ॥ ७ ॥

अन्यदप्याह ।

**श्यामकपुष्पचिताङ्गो भस्मारुणसन्निभो बिडालाक्षः ।**
**विप्राणामपि न शुभं करोति वृषभः परिगृहीतः ॥ ८ ॥**

यो वृषभो दान्तः श्यामकपुष्पचिताङ्गः । श्यामकैः श्यामवर्णैः पुष्पैः कुसुमैश्चितानि संयुक्तान्यङ्गान्यवयवानि यस्य । श्यामकश्चासौ पुष्पचिताङ्गश्चेति केचित् । श्यामकवर्णः श्वेतैस्तिलकैः कुसुमाकारैश्चिताङ्गः । भस्मारुणसन्निभो भस्मलोहितमिश्रवर्णः । बिडालाक्षो मार्जारनेत्रः । स

तथाभूतो विप्राणां ब्राह्मणानामपि प्रतिग्रहपरिगृहीतो न शुभं करोति किन्त्वन्येषामिति ॥ ८ ॥

अन्यदप्याह ।

**ये चोद्धरन्ति पादान् पङ्कादिव योजिताः कृशग्रीवाः ।**
**कातरनयना हीनाश्च पृष्ठतस्ते न भारसहाः ॥ ९ ॥**

ते न भारसहा भारोद्वहने न समर्था इति । ये च वृषभा योजिता भारादौ नियुक्ताः पङ्कात् कर्दमादिव पादान् खुरानुद्धरन्ति । कृशग्रीवा दुर्बलकन्धराः ॥ ९ ॥

तथा च पराशरः ।

आपादस्थारकपिलाः कृष्णपुष्पचिताश्च ये ।
मार्जारकपिलाक्षाश्च दुर्बला यूथघातिनः ॥
पङ्कादिवार्त्ताः पादानुद्धरन्तो व्रजन्ति ये ।
अधूर्वहा भवन्त्येते भाराध्वनि विगर्हिता इति ॥

अधुनाशुभलक्षणमाह ।

**मृदुसंहतताम्रोष्ठास्तनुस्फिजस्ताम्रतालुजिह्वाश्च ।**
**ह्रस्वतनूच्चश्रवणाः सुकुक्षयः स्पृष्टजङ्घाश्च ॥ १० ॥**
**आताम्रसंहतखुरा व्यूढोरस्का बृहत्ककुदयुक्ताः ।**
**स्निग्धश्लक्ष्णतनुत्वग्रोमाणस्ताम्रतनुशृङ्गाः ॥ ११ ॥**
**तनुभूस्पृग्वालधयो रक्तान्तविलोचना महोच्छ्वासाः ।**
**सिंहस्कन्धास्तन्वल्पकम्बलाः पूजिताः सुगमाः ॥ १२ ॥**

एवंविधा वृषभाः पूजिताः शोभनाः प्रशस्ता इत्यर्थः । कीदृशाः । मृदुसंहतताम्रोष्ठाः । मृदवः कोमलाः संहताः संलग्नास्ताम्रवर्णा ओष्ठा येषाम् । तनुस्फिजः तनवः स्वल्पमांसाः स्फिजः सृक्कण्यो येषाम् । ताम्रतालुजिह्वाः ताम्रवर्णाः तालुजिह्वाः । ताम्रवर्णे लोहितं ताल्वास्यपृष्ठभागो जिह्वा रसना च येषाम् । ह्रस्वे स्वल्पे तनुनी अघने उच्चे अविनते च श्रवणे कर्णौ येषाम् । सुकुक्षयश्च शोभनकुक्षयः । स्पृष्टजङ्घाः ॥ १० ॥

आताम्रास्ताम्रवर्णाः संहता अविरलाः खुराः पादा येषाम् । व्यूढोरस्काः सुदृढवक्षसः । बृहत्ककुदयुक्ता महाककुदेन संयुक्ताः । स्निग्धा सस्नेहा श्लक्ष्णा मृद्वी तन्वी चाघना त्वक् चर्म तथा रोमाणि येषाम् । ताम्रवर्णानि लोहितानि तनून्यघनानि शृङ्गाणि विषाणानि येषाम् ॥ ११ ॥

तनुभुवमघनां भुवं स्पृशन्ति वालधयः पुच्छवाला येषाम् । रक्तान्ते विलोचने नेत्रे येषाम् । महान्त उच्छ्वासा येषाम् । सिंहस्येव स्कन्धो येषाम् । तनवोऽघना अल्पाश्च कम्बला येषाम् । सुगताः शोभना गतिर्येषाम् । ते तथाभूता इति ॥ १२ ॥

अन्यदप्याह ।

**वामावर्त्तैर्वामे दक्षिणपार्श्वे च दक्षिणावर्त्तैः ।**
**शुभदा भवन्त्यन[1]डुहो जङ्घाभिश्चैणकनिभाभिः ॥ १३ ॥**

ये अनडुहो दान्ता वामे पार्श्वे वामावर्त्तै रोमभिर्युक्ता दक्षिणपार्श्वे दक्षिणावर्त्तैश्च ते च शुभदाः प्रशस्ता भवन्ति । तथा एणकनिभाभिरेणकसदृशीभिः परिपूर्णमांसाभिर्जङ्घाभिः शुभदा भवन्ति । एणकः प्राणिविशेषः । अविरिति केचित् ॥ १३ ॥

अन्यदप्याह ।

**वैदूर्यमल्लिकाबुद्बुदेक्षणाः स्थूलनेत्रपक्ष्माणः ।**
**पार्ष्णिभिरस्फुटिताभिः शस्ताः सर्वे च भारसहाः ॥ १४ ॥**

वैदूर्यः प्रसिद्धो मणिविशेषः श्यामवर्णः । मल्लिकेक्षणो मल्लिकाक्षस्तल्लक्षणम् । दृङ्मण्डलबाह्ये मल्लिकाकुसुमसदृश्यो राज्यो यस्य भवन्ति स मल्लिकाक्षः । एतल्लक्षणमश्वस्य पठ्यते ।

तथा च गाहा.।

[2]उज्जू अकिसणकन्ती तारन्ते हे समल्लिआकुसुमे ।
भाविज्जइ अच्छीइं जाणं ते मल्लिआअच्छा ॥

१ अनड्वाह इत्यस्य स्थाने अनडुह इति प्रामादिकः प्रयोगः ।

२ ऋजुनी अकृष्णकान्तिनी तारान्ते समल्लिकाकुसुमे ।
भाव्येते अक्षिणी येषां ते मल्लिकाक्षाः ॥

तथा च शालिहोत्रः ।

शुक्लराजिपरिक्षिप्ते यस्याक्षलोचने शुभे ।

मल्लिकाक्षो महाधन्यः स महाकृष्णतारकः—इति ॥

अनेन लक्षणेन युक्तो मल्लिकाक्षः । तथा बुद्बुदः प्रसिद्ध एव । एवं वैदूर्यमल्लिकाबुद्बुदेक्षणास्ततुल्यनेत्राः । नेत्रपक्ष्माण्यक्षिरोमाणि तानि स्थूलान्यतिघनानि येषाम् । पार्ष्णिभिः खुरपश्चिमभागैः । अस्फुटिताभिरभग्नाभिः । ते सर्वे निःशेषाः प्रशस्ता भारसहाश्च । भारं सहन्त इति ॥ १४ ॥

अन्यदप्याह ।

**घ्राणोद्देशे सवलिर्मार्जारमुखः सितश्च दक्षिणतः ।**

**कमलोत्पललाक्षाभः सुवालधिर्वाजितुल्यजवः ॥ १५ ॥**

**लम्बैर्वृषणैर्मेषोदरश्च संक्षिप्तवङ्क्षणक्रोडः ।**

**ज्ञेयो भाराध्वसहो जवेऽश्वतुल्यश्च शस्तफलः ॥ १६ ॥**

यश्च घ्राणोद्देशे नासायां सवलिर्वलियुक्तः । मार्जारमुखो बिडालतुल्यवदनः । दक्षिणतो दक्षिणभागे सितः शुक्लवर्णः । कमलोत्पललाक्षाभः । कमलं पद्मम् । उत्पलं नीलोत्पलम् । लाक्षा प्रसिद्धा लोहितवर्णा । आसां सदृशी आभा कान्तिर्यस्य । सुवालधिः शोभनपुच्छवालः । वाजितुल्यजवः । वाजी तुरगः । ततुल्यस्तत्सदृशो जवो वेगो यस्य । शीघ्रगतिरित्यर्थः ॥ १५ ॥

लम्बैः प्रलम्बमानैर्वृषणैरण्डैर्युक्तः । मेषोदरश्च । मेषोदराकारमुदरं यस्य । संक्षिप्तौ वङ्क्षणौ क्रोडं च यस्य । पश्चिमजङ्घावृषणान्तरं वङ्क्षणशब्देनोच्यते ।

अमुमेवार्थं शालिहोत्र आह ।

सक्थिजङ्घान्तरे पिण्डौ वङ्क्षणौ त्वभिनिर्दिशेत् ।

अग्रजङ्घान्तरं क्रोडं उच्यते वङ्क्षणाग्रगः ॥

वङ्क्षणौ च क्रोडश्च वङ्क्षणक्रोडानि संक्षिप्तानि यस्य स वृषभो भारोद्वहने अध्वनि पथि च सहः शक्तो ज्ञेयो ज्ञातव्यः । जवे वेगे अश्वतुल्यस्तुरगसमः । जवो वेगो गतिरिति पर्यायः । एवंविधः शस्तफलः शुभफलद इति ॥ १६ ॥

अन्यदप्याह ।

**सितवर्णः पिङ्गाक्षस्ताम्रविषाणेक्षणो महावक्त्रः ।**
**हंसो नाम शुभफलो यूथस्य विवर्धनः प्रोक्तः ॥ १७ ॥**

यश्च सितवर्णः श्वेतवर्णः । पिङ्गाक्षः कपिलनेत्रः । ताम्रविषाणेक्षणः । ताम्रवर्णे लोहितवर्णे विषाणे ईक्षणे नेत्रे च यस्य । महावक्त्रः स्थूलाननः । स हंसो नाम हंसाख्यः । शुभफलः प्रशस्तफलः । यूथस्य वृन्दस्य विवर्धनो वृद्धिकरः । कथितः प्रोक्तः ॥ १७ ॥

अन्यदप्याह ।

**भूस्पृग्वालधिराताम्रविषाणो रक्तदृक् ककुद्मांश्च ।**
**कल्माषश्च स्वामिनमचिरात् कुरुते पतिं लक्ष्म्याः ॥ १८ ॥**

यो वृषभो भूस्पृग्वालधिः पुच्छवाला भूस्पृशो यस्य । आताम्रविषाणो लोहितशृङ्गः । रक्तदृक् लोहितनेत्रः । ककुद्मान् ककुदयुक्तः । कल्माषश्च कल्माषवर्णः सितरक्तपीतव्यामिश्रवर्णः । स स्वामिनं पतिमचिराच्छीघ्रमेव च लक्ष्म्याः श्रियः पतिं प्रभुं कुरुते ॥ १८ ॥

अन्यदप्याह ।

**यो वा सितैः[1] कचरणैर्यथेष्टवर्णश्च सोऽपि शुभफलकृत् ।**
**मिश्रफलोऽपि ग्राह्यो यदि नैका[2]न्तप्रशस्तोऽस्ति ॥ १९ ॥**

यो वा वृषभः सितैः शुक्लैश्चरणैः पादैर्युक्तः । यथेष्टवर्णो यादृग्वर्णः शुभाशुभवर्णयुक्तोऽपि स शुभफलकृत् । केचिद्यो वा सितैकचरण इति पठन्ति । एकान्तप्रशस्तः सर्वलक्षणसम्पूर्णो यदि नास्ति न विद्यते । तदा मिश्रफलो व्यामिश्रफलोऽपि ग्राह्यः । अपिशब्दः सम्भावनायाम् । केचिद्यदि नैकान्ते प्रशस्तोऽस्तीति पठन्ति । मिश्रफलस्य शुभानामशुभानां च लक्षणानामन्तरं कृत्वा यद्येकान्तेऽशुभोऽन्तेऽवसाने नास्ति नातिरिच्यते । तदा शुभाशुभलक्षणोऽपि ग्राह्य इति ॥ १९ ॥

---

१ सितैकचरणः-इति पाठान्तरम् ।
२ नैकान्ते प्रशस्तोऽस्ति-इति पाठान्तरम् ।

तथा च पराशरः ।

मृदुसंहतताम्रोष्ठास्तनुजिह्वास्तनुस्फिजः ।
वैदूर्यमधुवर्णैश्च जलबुद्बुदसन्निभैः ॥
रक्तस्निग्धैश्च नयनैस्तथा रक्तकनीनिकैः ।
सिंहस्कन्धा महोरस्का दृढपृष्ठाः ककुद्मिनः ॥
भूमौ कर्षति लाङ्गूलं प्रलम्बस्थूलवालधिः ।
पुरस्तादुन्नता नीचाः पृष्ठतः सुसमाहिताः ॥
वृत्ताङ्गाः स्थूलगात्राश्च विस्तीर्णजघनाश्च ये ।
स्पष्टताम्रतनुश्लक्ष्णैः शफैरविरलैर्दृढैः ॥
समुद्गवरसंस्थानैः समास्फुटितपार्ष्णिभिः ।
वृत्तस्थूलोद्धतग्रीवाः ककुदैश्च समुच्छ्रितैः ॥
एते भारसहा ज्ञेया धुरि याने च पूजिताः
आवर्तैर्दक्षिणावर्तैर्युक्ता दक्षिणतश्च ये ॥
वामावर्तैर्वामतश्च संयुक्तास्तेऽपि पूजिताः ।
प्रलम्बवृषणोऽत्यर्थं सङ्क्षिप्तोदरवङ्क्षणः ॥
विस्तीर्णवक्षोजघनो भारे याने च पूजितः ।
स्निग्धपिङ्गेक्षणः श्वेतस्ताम्रशृङ्गो महानसः ॥
स तु गोः पद्मको नाम गोसहस्रप्रवर्धनः—इति ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ गोलक्षणं नाम षष्टितमोऽध्यायः ॥ ६० ॥

## अथ श्वलक्षणं व्याख्यायते ।

तत्रादावेव शुनो लक्षणमाह ।

**पादाः पञ्चनखास्त्रयोऽग्रचरणः षड्भिर्नखैर्दक्षिण-**
**स्ताम्रोष्ठाग्रनसो मृगेश्वरगतिर्जिघ्रन् भुवं याति च ।**
**लाङ्गूलं ससटं दृगृक्षसदृशी कर्णौ च लम्बौ मृदू**
**यस्य स्यात् स करोति पोष्टुरचिरात् पुष्टां श्रियं श्वा गृहे ॥१॥**

यस्य शुभस्त्रयः पादाश्चरणाः पञ्चनखाः पञ्चभिर्नखैः कररुहैर्युक्ताः । चतुर्थो दक्षिणोऽग्रचरणोऽग्रपादः षड्भिर्नखैर्युक्तः । ताम्रोष्ठाग्रनसः । ताम्रवर्णौ लोहितावोष्ठौ तथा नासिकाग्रं यस्य । मृगेश्वरः सिंहस्तत्सदृशी गतिर्गमनं यस्य स मृगेश्वरगतिः । भुवं भूमिं जिघ्रन् याति गच्छति । लाङ्गूलं पुच्छं ससटं सटाभिर्युक्तं जटिलमित्यर्थः । दृग्दृष्टिः । ऋक्षसदृशी । ऋक्षः प्राणी तत्सदृशी तत्तुल्या दृष्टिरित्यर्थः । कर्णौ श्रोत्रे । लम्बौ प्रलम्बौ । मृदू मार्दवयुक्तौ । यस्यैवं स्याद्भवेत् स श्वा कुक्कुरः । पोष्टुः पालयितुः । अचिरात् शीघ्रमेव । गृहे वेश्मनि । पुष्टां परिपूर्णाम् । श्रियं लक्ष्मीं करोति ॥ १ ॥

तथा च गर्गः ।

त्रयः पादाः पञ्चनखा अग्रगो दक्षिणस्तथा ।
षण्नखस्ताम्रनासो यस्ताम्रोष्ठः सिंहविक्रमः ॥
महीं जिघ्रन् मुदा याति लाङ्गूलं जटिलं तथा ।
ऋक्षाभे चक्षुषी कर्णौ मृदू चातिप्रलम्बितौ ॥
स श्वा नृपस्य महतीं श्रियं यच्छति पोषितुः ।

अथ कुक्कुरीलक्षणमाह ।

**पादे पादे पञ्च पञ्चाग्रपादे**
**वामे यस्याः षण्नखा मल्लिकाक्ष्याः ।**
**वक्रं पुच्छं पिङ्गलालम्बकर्णा**
**या सा राष्ट्रं कुक्कुरी पाति पुष्टा ॥ २ ॥**

यस्याः कुक्कुर्याः पादे पादे प्रतिचरणे पञ्च पञ्च नखाः कररुहाः । वामेऽग्रपादे चतुर्थचरणे यस्याः षण्नखा भवन्ति । या च मल्लिकाक्षी । दृङ्मण्डलबाह्ये मल्लिकाकुसुमसदृश्यो राज्यो यस्या भवन्ति सा मल्लिकाक्षी । एवंविधाया मल्लिकाक्ष्या यस्याः पुच्छं लाङ्गूलं वक्रं कुटिलं च । पिङ्गलालम्बकर्णा च या सा पुष्टा परिपोषिता राष्ट्रं पाति रक्षति ॥ २ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ श्वलक्षणं नामैकषष्टितमोऽध्यायः ॥ ६१ ॥

---

## अथ कुक्कुटलक्षणं व्याख्यायते ।

तत्रादावेव कुक्कुटलक्षणमाह ।

कुक्कुटस्त्वृजुतनूरुहाङ्गुलि-
स्ताम्रवक्त्रनखचूलिकः सितः ।
रौति सुस्वरमुषात्यये च यो
वृद्धिदः स नृपराष्ट्रवाजिनाम् ॥ १ ॥

यः कुक्कुटः कृकवाकुः । ऋजुतनूरुहाङ्गुलिः । ऋजवः स्पष्टास्तनूरुहाः पक्ष्माणि यस्य । ऋज्वङ्गुलिः स्पष्टाः करशाखाः । ताम्रवर्णं वक्त्रं मुखं यस्य । ताम्रनखः । ताम्रचूलिकस्ताम्रचूडः । सितः शुक्लः । उषात्यये रात्र्यवसाने सुस्वरं मधुरं रौति शब्दं करोति । स नृपस्य राज्ञो राष्ट्रस्य च जनपदस्य वाजिनामश्वानां वृद्धिदो वृद्धिं ददाति ॥ १ ॥

तथा च गर्गः ।

श्वेतस्ताम्रनखः शुक्लस्ताम्रास्यस्त्वृजुवालधिः ।
अनावृताङ्गुलिः स्वङ्गस्ताम्रचूडः प्रशस्यते ॥
अल्पालापी यवग्रीवो दधिवर्णः शुभाननः ।
प्रशस्तास्यः स्थूलशिरा हारिद्रवर्णो द्विजः ॥
अखञ्जास्ताम्रवक्त्राश्च स्निग्धवर्णाश्च पूजिताः ।
दीनाश्चैव विवर्णाश्च विस्वराश्च विगर्हिताः—इति ॥

अथान्यल्लक्षणमाह ।

यवग्रीवो यो वा बदरसदृशो वापि विहगो
बृहन्मूर्धा वर्णैर्भवति बहुभिर्यश्च रुचिरः ।
स शस्तः सङ्ग्रामे मधुमधुपवर्णश्च जयकृ-
न्न शस्तो योऽतोऽन्यः कृशतनुरवः खञ्जचरणः ॥ २ ॥

यो विहगः पक्षी यवग्रीवो यवसदृशग्रीवः । यवशिरा इति लोके प्रसिद्धः । यो वा बदरसदृशो लोहितवर्णः । सुपक्वबदरफलाभ इत्यर्थः । बृहन्मूर्धा विस्तीर्णशीर्षः । बहुभिर्नानाकारैः सितरक्तनीलपीतकृष्णैर्वर्णैर्युक्तः ।

रुचिरो निर्मलः । स कुक्कुटः सङ्ग्रामे युद्धे शस्तः प्रशस्तः । अथवा मधुवर्णः पीतवर्णो मधुपवर्णो भ्रमरवर्णः कृष्णः सोऽपि जयकृत् । अतोऽस्मादुक्तादन्योऽपरो न शस्तो न शुभः । यः कृशतनुरल्पः कृशः क्षामस्तनुरल्पो रवः शब्दो यस्य । खञ्जचरणो विकलपादः सोऽपि न शुभः ॥ २ ॥

अथ कुक्कुटीलक्षणमाह ।

कुक्कुटी च मृदुचारुभाषिणी
स्निग्धमूर्त्तिरुचिराननेक्षणा ।
सा ददाति सुचिरं महीक्षितां
श्रीयशोविजयवीर्यसम्पदः ॥ ३ ॥

या च कुक्कुटी मृदु मार्दवयुक्तं चारु शोभनं भाषते । स्निग्धमूर्तिर्निर्मलशरीरा । रुचिराननेक्षणा रुचिरं शोभनमाननं मुखं तथेक्षणे यस्याः । सा महीक्षितां राज्ञां सुचिरं चिरकालं श्रियं लक्ष्मीं यशः कीर्तिं विजयं विशेषेण जयं वीर्यसम्पदमैश्वर्यं च ददाति ॥ ३ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ कुक्कुटलक्षणं नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥

## अथ कूर्मलक्षणं व्याख्यायते ।

तत्राह ।

स्फटिकरजतवर्णो नीलराजीविचित्रः
कलशसदृशमूर्त्तिश्चारुवंशश्च कूर्मः ।
अरुणसमवपुर्वा सर्षपाकारचित्रः
सकलनृपमहत्त्वं मन्दिरस्थः करोति ॥ १ ॥

यः कूर्मः स्फटिकवर्णः स्फटिकोपलाभः । रजतवर्णो रूप्याकृतिः । नीलाभिर्नीलवर्णाभी राजीभिर्लेखाभिर्विचित्रो विचित्रितः । कलशसदृशमूर्तिः कुम्भतुल्यशरीरः । चारुवंशः । वंशः पृष्ठास्थि चारु शोभनं यस्य । नात्युन्नत इत्यर्थः । अथवारुणसमवपुर्लोहितशरीरः । सर्षपाकारैः श्वेतैर्बिन्दुभिश्चित्रश्चित्रितः । स मन्दिरस्थो गृहे समवस्थितः सकलनृपाणां समस्तराजानां महत्त्वं प्रभुत्वं महिमानं करोति । राजाधिराजतां करोतीत्यर्थः ॥ १ ॥

अन्यदप्याह ।

अञ्जनभृङ्गश्यामतनुर्वा
बिन्दुविचित्रोऽव्यङ्गशरीरः ।
सर्पशिरा वा स्थूलगलो यः
सोऽपि नृपाणां राष्ट्रविवृद्ध्यै ॥ २ ॥

अञ्जनं प्रसिद्धं कज्जलम् । भृङ्गो भ्रमरः । अञ्जनभृङ्गवत् श्यामा तनुः शरीरं यस्य । बिन्दुविचित्रो बिन्दुभिस्तिलकैर्विचित्रितः । अव्यङ्गशरीरः । अव्यङ्गं परिपूर्णावयवं शरीरं देहो यस्य । सर्पशिरा वा सर्पसदृशमूर्धा वा । यश्च स्थूलगलो विस्तीर्णकण्ठः । सोऽपि कूर्मो नृपाणां राज्ञां राष्ट्रस्य विवृद्ध्यै वर्धनाय भवति ॥ ३ ॥

अन्यदप्याह ।

वैदूर्यत्विट् स्थूलकण्ठस्त्रिकोणो
गूढच्छिद्रश्चारुवंशश्च शस्तः ।
क्रीडावाप्यां तोयपूर्णे मणौ वा
कार्यः कूर्मो मङ्गलार्थं नरेन्द्रैः ॥ ३ ॥

वैदूर्यत्विट् वैदूर्यसदृशकान्तिः । स्थूलकण्ठः पीनगलः । त्रिकोणः शृङ्गाटकाकृतिः । गूढच्छिद्रो गूढानि अदृश्यानि छिद्राणि रन्ध्राणि यस्य । चारुवंशः शोभनपृष्ठास्थि । स शस्तः शोभनः । य एवंविधः कूर्मः स नरेन्द्रै राजभिर्मङ्गलार्थं क्रीडावाप्यां क्रीडापुष्करिण्यां मणौ वा कूपाधोभागे तोयपूर्णे कार्यः ॥ ३ ॥

तथा च गर्गः ।

शङ्खदर्भप्रतीकाशश्छत्राभो रजतप्रभः ।
तथा वैदूर्यवर्णाभो यो भवेद्गौरसर्षपः ॥
यश्च वा कोकिलाभासो राजीवाभश्च यो भवेत् ।
पीतकाञ्चनवर्णस्तु पुण्डरीकसमप्रभः ॥
गोधामुखं त्रिकोणं च तथा मण्डलवर्धनम् ।
स्त्रीपुत्त्रमतिदं विन्द्यात् कूर्मं राष्ट्रविवर्धनम्—इति ।

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ कूर्मलक्षणं नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

## अथातश्छागलक्षणं व्याख्यायते।

तत्राह।

**छागशुभाशुभलक्षणमभिधास्ये नवदशाष्टदन्तास्ते।**
**धन्याः स्थाप्या वेश्मनि सन्त्याज्याः सप्तदन्ता ये॥ १॥**

छागानामजानां शुभाशुभलक्षणमभिधास्ये कथयिष्ये। ये च छागा नवदशाष्टदन्ता नवदन्ता दशदन्ता अष्टदन्ता वा ते धन्याः शोभना वेश्मनि गृहे स्थाप्याः। ये च सप्तदन्ताः सप्तरदास्ते सन्त्याज्याः॥ १॥

अन्यदप्याह।

**दक्षिणपार्श्वे मण्डलमसितं शुक्लस्य शुभफलं भवति।**
**ऋष्यनिभकृष्णलोहितवर्णानां श्वेतमतिशुभदम्॥ २॥**

शुक्लस्य छागस्य दक्षिणपार्श्वे मध्यभागे असितं कृष्णवर्णं मण्डलाकारं शुभफलं भवति। ऋष्यनिभस्य नीलवर्णस्य। ऋष्यो मृगजातिः। स च नीलवर्णो भवति। तथा कृष्णवर्णस्य लोहितवर्णस्य श्वेतं मण्डलं दक्षिणपार्श्वेऽतिशुभदं भवति॥ २॥

अन्यदप्याह।

**स्तनवदवलम्बते यः कण्ठेऽजानां मणिः स विज्ञेयः।**
**एकमणिः शुभफलकृद्धन्यतमा द्वित्रमणयो ये॥ ३॥**

कण्ठे गले। अजानां छागानाम्। स्तनवत् स्तन इव। स्तनो यथा योऽवलम्बते स मणिर्विज्ञेयो ज्ञातव्यः। एकमणिरेकेन मणिना युक्तो यश्छागः स शुभफलकृच्छुभफलं करोति। ये द्विमणयस्त्रिमणयो वा ते धन्यतमाः प्रशस्ततमा इत्यर्थः॥ ३॥

अन्यदप्याह।

**मुण्डाः सर्वे शुभदाः सर्वसिताः सर्वकृष्णदेहाश्च।**
**अर्धासिताः सितार्धा धन्याः कपिलार्धकृष्णाश्च॥ ४॥**

मुण्डाः शृङ्गरहिताः सर्वे निःशेषाश्छागाः शुभदाः। तथा सर्वसिताः सर्वशुक्लाश्च शुभदा एव। सर्वकृष्णदेहाश्च समस्तासितशरीराश्च शुभदा

एव। तथा अर्धासिता अर्धकृष्णाः। सितार्धा अर्धश्वेतास्ते सर्वे एव धन्याः प्रशस्ताः। तथा अर्धकपिलाः कृष्णाश्च धन्या एव ॥ ४ ॥

अधुना चतुर्णां कुट्टककुटिलजटिलवामनानां लक्षणं करोति।

तत्रादावेव कुट्टकस्याह।

**विचरति यूथस्याग्रे प्रथमं चाम्भोऽवगाहते योऽजः।**
**स शुभः सितमूर्धा वा मूर्धनि वा कृत्तिका यस्य ॥ ५ ॥**

योऽजश्छागो यूथस्य वृन्दस्याग्रे विचरति गच्छति प्रथममादौ वा योऽम्भो जलमवगाहते गृह्णाति पिबति स शुभः शस्तः। अथवा सितमूर्धा श्वेतशिरा यः सोऽपि शुभः। अथवा मूर्धनि मस्तके यस्य कृत्तिकास्तिलकाः भवन्ति। कृत्तिकानां षट्त्वात् षट्तिला इत्यर्थः। एषामन्यतमलक्षणयुक्तः कुट्टकाख्यः ॥ ५ ॥

तथा च गर्गः।

यूथाग्रे यश्च चरति यश्चादौ स्पर्शयेज्जलम्।
मूर्ध्नि षट्तिलका यस्य सोऽजो यूथविवर्धनः ॥

अथ कुटिलस्याह।

**सपृषतकण्ठशिरा वा तिलपिष्टनिभश्च ताम्रदृक् शस्तः।**
**कृष्णचरणः सितो वा कृष्णो वा श्वेतचरणो यः ॥ ६ ॥**

यश्च सपृषतकण्ठः पृषतास्तिलकास्ते कण्ठे गले यस्य। सपृषतशिरा वा तिलमूर्धा वा। तिलपिष्टनिभस्तिलपिष्टसदृशवर्णः। शुक्लपीतव्यामिश्रवर्ण इत्यर्थः। ताम्रदृग्लोहितनेत्रः स शस्तः शुभः। अथवा यः कृष्णचरणोऽसितपादः सितवर्णो वा यः सोऽपि शुभः। अथवा यः कृष्णवर्णः श्वेतचरणः सितपादः सोऽपि शुभः। एषामन्यतमलक्षणयुक्तः कुटिलाख्यः ॥ ६ ॥

तथा च गर्गः।

श्वेतो यः कृष्णचरणः कृष्णः श्वेतशफोऽपि वा।
पीतस्ताम्रेक्षणो मूर्ध्नि गले वा पृषतान्वितः ॥

अथ जटिललक्षणमाह।

**यः कृष्णाण्डः श्वेतो मध्ये कृष्णेन भवति पट्टेन।**
**यो वा चरति सशब्दं मन्दं च स शोभनश्छागः ॥ ७ ॥**

यश्छागः कृष्णाण्डोऽसितवृषणः । श्वेतः शुक्लवर्णः । मध्ये मध्यभागे कृष्णेन पट्टेन पर्याणाकृतिना युक्तो भवति स शुभः । यो वाऽजः सशब्दं शब्दसहितं मन्दमलसं च चरति गच्छति स छागः शोभनश्च शस्तः । एषां लक्षणानामन्यतमलक्षणयुक्तो जटिलाख्यः ॥ ७ ॥

तथा च गर्गः ।

मन्दं सशब्दं चरति श्वेतः कृष्णाण्डसंयुतः ।
मध्ये कृष्णेन पट्टेन युक्तो यः सोऽपि वृद्धिदः ॥

अथ वामनलक्षणमाह ।

**ऋष्यशिरोरुहपादो यो वा प्राक् पाण्डुरोऽपरे नीलः ।**
**स भवति शुभकृच्छागः श्लोकश्चाप्यत्र गर्गोक्तः ॥ ८ ॥**

ऋष्यशिरोरुहो नीलवर्णमूर्धा । ऋष्यः प्राणी सच लोके ऋक्ष इत्युच्यते । सच नीलवर्णो भवति ।

तथा च व्यासमुनिः ।

अश्वा[१]नृष्यसवर्णांस्तु हंसवर्णैर्हयोत्तमैः ।
व्यामिश्रयद्रणे कर्णः पाण्डवाञ्छादयन् शरैः ॥

तथा च ।

ते हया[२] बहुशोभन्त विमिश्रा वातरंहसः ।
सितासिता महाराज यथा व्योम्नि बलाहकाः ॥

तस्मान्नीलशिरा नीलपादश्च सोऽपि शुभकृत् । यो वा प्राक् पूर्वभागे पाण्डुर ईषच्छुक्लः । अपरे पश्चिमभागे नीलः सोऽपि शुभकृत् छागः । एषामन्यतमलक्षणयुक्तो वामनाख्यः ।

तथा च गर्गः ।

ऋष्यमूर्धा नीलपादो प्राग्भागे यश्च पाण्डुरः ।
पश्चिमे नीलवर्णः स्यात् सोऽपि भर्तुर्विवृद्धिदः ॥

अथास्मिन्नर्थे गर्गोक्तोऽयं श्लोको ज्ञापको यं साक्षात् पठति ॥ ८ ॥

---

१ महाभारते द्रोणपर्वणि १३२ अध्यायस्य २७ श्लोकः ।

२ महाभारते द्रोणपर्वणि १३२ अध्यायस्य २८ श्लोकः । तत्र मिश्रिता वातरंहसः–इति २ पादे सितासिता महाराज–इति ३ पादे च पाठः ।

तं चाह ।

कुट्टकः कुटिलश्चैव जटिलो वामनस्तथा ।
ते चत्वारः श्रियः पुत्रा नालक्ष्मीके वसन्ति ते ॥ ९ ॥

पूर्वलक्षणोक्तः कुट्टकः कुटिलो जटिलो वामनश्च तथा तेनैव प्रकारेणैते चत्वारश्छागाः श्रियः पुत्रा लक्ष्मीसुताः । अलक्ष्मीके लक्ष्मीरहिते स्थाने न वसन्ति न स्थितिं कुर्वन्ति । सलक्ष्मीके स्थाने निवसन्तीत्यर्थः ॥ ९ ॥

एवं शुभानां छागानां लक्षणमुक्त्वाऽधुनाऽप्रशस्तानां लक्षणमाह ।

अथाप्रशस्ताः खरतुल्यनादाः
प्रदीप्तपुच्छाः कुनखा विवर्णाः ।
निकृत्तकर्णा द्विपमस्तकाश्च
भवन्ति ये चासिततालुजिह्वाः ॥ १० ॥

अथानन्तरमप्रशस्ताश्छागा भवन्ति । कीदृशाः । खरतुल्यनादा गर्दभसदृशरवाः । प्रदीप्तपुच्छाः प्रदीप्तं पुच्छं लाङ्गूलं वक्रमत्युच्चं वा येषाम् । कुनखाः कुत्सितनखाः । विवर्णा विगतवर्णा अशुभवर्णाः । निकृत्तकर्णाः छिन्नश्रोत्राः । छिन्नानुरूपाभ्यां कर्णाभ्यां द्विपमस्तका गजसदृशमूर्धानः । ये चासिततालुजिह्वाः । कृष्णतालवः कृष्णरसना ये भवन्ति तेऽप्यप्रशस्ताः ॥ १० ॥

अथ शुभलक्षणान्याह ।

वर्णैः प्रशस्तैर्मणिभिः प्रयुक्ता
मुण्डाश्च ये ताम्रविलोचनाश्च ।
ते पूजिता वेश्मनि मानवानां
सौख्यानि कुर्वन्ति यशः श्रियं च ॥ ११ ॥

छागाः प्रशस्तैर्वर्णैः "दक्षिणपार्श्वे मण्डलमसितं शुक्लस्य शुभफलं भव"-त्येवंविधैर्वर्णैर्युक्ताः । मणिभिश्चैकेन द्वाभ्यां त्रिभिर्वा युक्ताः । ये च मुण्डा

१ अस्यैवाध्यायस्य ३ श्लोकः ।

विषाणरहिताः । ये च ताम्रविलोचना लोहितनयनास्ते छागा मानवानां मनुष्याणां वेश्मनि गृहे पूजिताः शुभाः सौख्यानि निर्दुःखतां यशः कीर्तिं श्रियं लक्ष्मीं च कुर्वन्ति विदधति ॥ ११ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ छागलक्षणं नाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

## अथाश्वलक्षणं व्याख्यायते ।

तत्र प्रदेशज्ञानं विना न किञ्चिज्ज्ञायते तस्मात् प्रदेशाध्यायः प्रथमत एव लिख्यते ।

अविज्ञाय प्रदेशांस्तु भिषक् कर्मसु मुह्यति ।
प्रदेशोद्देशविज्ञानमतो यत्नेन वाजिनाम् ॥
वक्ष्यते तेष्वधीना हि सिद्धिः कर्मसु सर्वदा ।
जिह्वा कण्ठे निबद्धा हि गलनालं च तत् स्मृतम् ॥
सूनाधस्तात् तु जिह्वायास्तालु तस्यास्तथोपरि ।
पीठ्यो हनुनिबद्धा हि दंष्ट्रे तासामथाग्रजे ॥
ततो द्विजा व्यञ्जनिनस्तेषामुपरि चोत्तराः ।
अधस्ताद्द्विजदंष्ट्राणां मध्ये तु चिबुकं स्मृतम् ॥
दशनाच्छादनावोष्ठौ तयोः पार्श्वे च सृक्किणी ।
प्रपाणमुत्तरौष्ठस्य स्यादूर्ध्वं प्रोथमेव च ॥
नासापुटौ प्रोथपार्श्वे घोणा प्रोथाक्षिमध्यतः ।
नासावंशोद्भवौ गल्लौ चीरिके च तथोपरि ॥
घोणाहन्वन्तरे गण्डौ तयोर्मध्येऽश्रुपातनम् ।
नेत्रे तथोपरि स्यातां तयोः प्रच्छादनं ततः ॥
अभ्यन्तरं सितं कृष्णं दृष्टिमण्डलमेव च ।
कनीनिके चान्तकोणे तथापाङ्गौ च बाह्यतः ॥
वर्त्मोपरि च पक्ष्माणि अक्षिकूटे तथोपरि ।
भ्रुवौ तथोपरिष्टात् तु ललाटं भ्रूभ्रुवान्तरम् ॥

भ्रुवं ललाटोपरि च शिरः कर्णान्तरं भवेत् ।
तदाश्रितो मस्तकश्च कर्णौ तस्यैव पार्श्वयोः ॥
कर्णमूले शष्कुली स्यात् कर्णशङ्खान्तरे कटः ।
कटापाङ्गान्तरे शङ्खो घटी बाह्ये च शङ्खयोः ॥
चिबुकस्योपरि हनू गण्डावुपरि चैतयोः ।
हन्वोश्च गलनाड्योश्च निगालो मध्य उच्यते ॥
निगालाधो गलः कण्ठो वक्षः क्रोडोऽथ हृत् ततः ।
विदुर्मन्दविदुश्चैव कर्णस्याधः षडङ्गुले ॥
विदुरोरुभयतोऽधस्तान्मध्ये कण्ठनिबन्धनम् ।
शिरोवाहान्तरे ग्रीवा जत्रुग्रीवान्तरे वहः ॥
स्कन्धस्य चोपरि ग्रीवा तस्याश्चोपरि केसरम् ।
वाहतो जत्रुनश्चोक्ताः काकसं ककुदं ततः ॥
आसनं चैव पृष्ठं च पृष्ठवंशस्ततः परम् ।
ककुदावस्थितावंसौ बाहू चांसनिबन्धनौ ॥
क्रोडाधस्तात् तथा बाहू बाह्वोर्बाह्ये षडङ्गुले ।
बाह्वोरभ्यन्तरे कक्ष्या पार्श्वतस्तौ च वक्षसः ॥
किणौ चाभ्यन्तरे विन्द्यादधस्ताज्जानुनी मते ।
जान्वोः कापालिके चापि मन्दिरं जानुपृष्ठतः ॥
जङ्घे च जानुनोऽधस्तात् पृष्ठतश्च कले मते ।
जङ्घाकलान्तरे द्वेषे परिहस्तस्तथाग्रतः ॥
पृष्ठतः परिहस्तस्य कूर्चौ तन्मध्यगौ किणौ ।
कूर्चाधस्तात् कुट्टिके च खुरग्रन्थिस्ततः खुरः ॥
पृष्ठतः पार्ष्णिशीर्षे च पार्ष्णी नखशिखातलम् ।
तलमध्ये तु मण्डूक्यौ चीरिके च तलान्तरे ॥
हृत्परो नाभिवंशश्च नाभेस्तु जठरं परम् ।
हृन्नाभिमूत्रकोशानां रोमराज्यन्तरे मता ॥
तदधो मेहनं कोशस्ततो मुष्कफलं ततः ।
अधस्तात् कटिसन्धेः स्यादूरुग्रन्थिस्तथोपरि ॥

सक्थिनी फलसन्धश्च ऊरुपार्श्वरिहोच्यते ।
ऊरोरूर्ध्वे पाण्डुपिण्डौ वक्रसन्धी ततः स्थुरम् ॥
स्थूराधो मन्दिरं प्रोक्तौ शङ्खू तन्मध्यजौ स्फिचौ ।
स्थूराधस्तात् पूर्वमुक्तं पृष्ठतश्च विभावयेत् ॥
गात्रद्वयं शिरोग्रीवं पूर्वकायः स उच्यते ।
जघनं त्रिकपुच्छं च गात्रे द्वे चापि पश्चिमे ॥
प्रदेशा मध्यमा ये च सोऽन्तःकायः प्रकीर्तितः ।
शरीराख्याश्च षट् प्रोक्ता मुखं गात्राणि वालधिः ॥
नखरोमाणि वालाश्च केशाश्चावयवाः स्मृताः ।
विन्यस्ता वक्रपुच्छान्तं मध्ये हीनाधिकं तथा ॥
अत्र नोक्तं तु यत्किञ्चिद्विन्द्यात् तदपि युक्तितः ।
इति प्रदेशा व्याख्याता वाजिनां देहसंश्रयाः ॥
तान् विज्ञाय भिषक् कर्म प्रयुञ्जन्नापराध्यति—इति ।

तत्रादावेवाश्वलक्षणमाह ।

**दीर्घग्रीवाक्षिकूटस्त्रिकहृदयपृथुस्ताम्रताल्वोष्ठजिह्वः**
**सूक्ष्मत्वक्केशवालः सुशफगतिमुखो ह्रस्वकर्णोष्ठपुच्छः ।**
**जङ्घाजानूरुवृत्तः समसितदशनश्चारुसंस्थानरूपो**
**वाजी सर्वाङ्गशुद्धो भवति नरपतेः शत्रुनाशाय नित्यम् ॥ १ ॥**

दीर्घग्रीवाक्षिकूटः । दीर्घा ग्रीवा शिरोधरा यस्य । तथा दीर्घाक्षिकूटः। अक्षिकूटं दृगाश्रयः । त्रिकहृदयपृथुः । त्रिकं कटिभारः । हृदयं हृत्स्थानं एते पृथुनी विस्तीर्णे यस्य । ताम्रताल्वोष्ठजिह्वः । ताम्रवर्णावोष्ठावधरौ यस्य ताल्वास्यपृष्ठं जिह्वा रसना च यस्य । सूक्ष्मत्वक्केशवालः । त्वक् चर्म । केशा मूर्धजाः । वालः पुच्छवालः । एते सूक्ष्मा यस्य । सुशफगतिमुखः शफाः खुराः । गतिर्गमनम् । मुखं वक्त्रमेतानि सुप्रमाणेन गतिलक्षणेन युक्तानि यस्य सुशोभनत्वात् । ह्रस्वकर्णोष्ठपुच्छः । कर्णौ श्रोत्रे । ओष्ठ उत्तरोष्ठः । पुच्छं पुच्छमूलं यत्रास्थिवाला लग्ना भवन्ति । एतानि ह्रस्वान्यदीर्घाणि यस्य । जङ्घाजानूरुवृत्तः । जङ्घे सुप्रसिद्धे । जानुनी ऊरू च

एतानि वृत्तानि परिवर्त्तुलानि यस्य । समसितदशनः । समास्तुल्याः सिताः श्वेतवर्णा दशना दन्ता यस्य । चारुसंस्थानरूपः । चारु दर्शनीयं संस्थानमाकारो रूपं शरीरशोभा यस्य । एवंविधो वाजी अश्वः सर्वाङ्गशुद्धः सर्वावयवलक्षणैर्निर्दोषैर्युक्तो नरपते राज्ञो नित्यं सर्वकालं शत्रुनाशाय रिपुबधाय भवतीत्यर्थः ॥ १ ॥

तथा च भगवान् पराशरः ।

जघन्यमध्यज्येष्ठानामश्वानामायतिर्भवेत् ।
अङ्गुलानां शतं ज्ञेयं विंशत्या दशभिस्त्रिभिः ॥
परिणाहाङ्गुलानि स्यात् सप्ततिः सप्तसप्ततिः ।
एकाशीतिः समासेन त्रिविधः स्याद्यथाक्रमम् ॥
तथा षष्टिश्चतुःषष्टिरष्टषष्टिः समुच्छ्रयः ।
द्विपञ्चसप्तकयुता विंशतिः स्यान्मुखायतिः ॥
श्मश्रुहीनं मुखं कान्तं प्रगल्भं तुङ्गनासिकम् ।
ह्रस्वप्रोथं तनुश्रोत्रं रक्तगम्भीरतालुकम् ॥
षडब्दमाद्वादशकं मृदुनासापुटं दृढम् ।
दीर्घोद्गतमुखं ग्रीवं ह्रस्वकुक्षिखुरं तथा ॥
विवर्णं चण्डवेगं च हंसमेघसमस्वनम् ।
हरितं शुक्रवर्णं वा श्वेतं कृष्णसमण्डलम् ॥
अश्वमीदृशमारोहेद्धस्तेन श्रवणेन वा ।
आश्विने नोदनाभिज्ञा वाहयेयुर्द्विजातयः ॥
तथा च वर्णेनैकेन स्निग्धवर्णो भवेद्यदि ।
स हन्याद्दुर्णजान् दोषान् देहः सर्वत्र शस्यते इति ॥

तथा च वररुचिः ।

ज्ञानं त्रैलोक्यविद्भिर्मुनिभिरभिहितं लक्षणं यद्विशालं
दुर्ज्ञेयं तद्बहुत्वादपि विमलधिया किं पुनर्बुद्धिहीनैः ।
तस्मादेतत् समासात् स्फुटमधुरपदं श्रूयतामश्वसंस्थं
वर्णावर्तप्रभाङ्गस्वरगतिसहितैः सत्त्वगन्धैरुपेतम् ॥

रोमत्वक्केशवालैरसितहरिसितैस्ताम्रहेमप्रभैश्च
कृष्णः शोणोपलक्षो हरिरिति कथिता मूलवर्णास्तुरङ्गाः ।
ते चान्योन्यानुषङ्गात् पवनवशगता यान्ति भूयो बहुत्वं
निर्देशस्तेषु वाच्यो विमलपटुधिया द्रव्यसत्त्वानुरूपः ॥

अथाशुभानां रोमावर्त्तानां लक्षणमाह ।

**अश्रुपातहनुगण्डहृद्गलप्रोथशङ्खकटिबस्तिजानुनि ।**
**मुष्कनाभिककुदे तथा[1] गुदे सव्यकुक्षिचरणे तथाशुभाः ॥२॥**

अश्रुणः पातो यत्र सोऽश्रुपातः । चक्षुषोरधोभागः । हनुनी प्रसिद्धे । गण्डौ मुखगण्डौ । हृत् हृदयम् । गलो हृत्कण्ठसन्धिः । प्रोथो नासाधोभागः । शङ्खौ कर्णनिकटे । कटिः प्रसिद्धा । बस्तिर्नाभिलिङ्गयोरन्तरम् । जानुर्जङ्घासन्धिः । एष्ववयवेषु स्थिता आवर्त्ताः । तथा मुष्कौ वृषणौ । नाभिः प्रसिद्धा । ककुदं बाहुपृष्ठभागे कृकाटिकानिकटम् । गुदमपानस्थानम् । अन्ये अलुप इति पठन्ति । अलुपं जत्रुगलसन्धिः । सव्यकुक्षिर्दक्षिणकुक्षिः । चरणाः सर्व एव पादाः । एषु स्थानेषु ये आवर्त्ता गतास्ते सर्व एवाशुभाः । अत्र प्राण्यवयवत्वात् सर्वत्र समाहारः ॥ २ ॥

तथा च वररुचिः ।

शङ्खभ्रूगण्डनासाहनुकटिककुदक्रोडकक्षासनस्थै-
र्मन्याहृज्जानुकूर्चश्रवणगलगुदप्रोथकुक्ष्यश्रुपातैः ।
स्थूरास्फिक्काकसाधस्त्रिकवृषणवहस्कन्धनाभ्यूरुजातै-
रावर्त्तैरेवमेतैरशुभफलकरैर्वर्जनीयास्तुरङ्गाः ॥

अथ शुभावर्त्तानाह ।

**ये प्रपाणगलकर्णसंस्थिताः**
**पृष्ठमध्यनयनोपरि स्थिताः ।**
**ओष्ठसक्थिभुजकुक्षिपार्श्वगा-**
**स्ते ललाटसहिताः सुशोभनाः ॥ ३ ॥**

१ तथाऽलुपे-इति पाठान्तरम् ।

प्रपाण उत्तरोष्ठतलम् । गलः कण्ठं निगालाधः । कर्णौ श्रवणौ । एतेष्ववयवेषु संस्थिताः । पृष्ठमध्यं पर्याणस्थानम् । नयनोपरि भ्रुवोः समीपे । ओष्ठौ दशनाच्छादनौ । सक्थिनी पश्चाद्भागः । खुरोपरि भुजौ प्राग्भागे । जानूपरि कुक्षिर्वामभागे यतः सव्यस्य गर्हितत्वमुक्तम् । पार्श्वौ प्रसिद्धौ । एतेष्वपि ये गता आवर्तास्ते ललाटसहिताः सुशोभना अतिशुभफलदा इत्यर्थः । ललाटं भ्रूमध्यभागः ॥ ३ ॥

तथा च वररुचिः ।

सक्थिप्रपाणश्रवबाहुकण्ठकेशान्तवक्षःश्रवणोपरन्ध्रे ।
रन्ध्रे निगाले च ललाटदेशे ये रोमजास्ते श्रियमावहन्ति ॥

तथा च विशेषलक्षणानि ।

बालार्काग्निप्रवालद्रुतकनकनिभा वह्निजैश्वर्यवृद्ध्यै
नीलाम्भोजाभवर्णा भवति सलिलजा सर्वदुःखापहर्त्री ।
गम्भीरानेकवर्णा दिशति च तुरगे पार्थिवी सर्वकामान्
वायव्या रूक्षवर्णा त्वशुभफलकरी निन्दिता व्योमजा च ॥

इति कान्तिलक्षणम् ॥

अथ स्वरलक्षणम् ।

भेरीशङ्खाब्दसिंहद्विपपणववृषस्निग्धगम्भीरनादा
वीणापुंस्कोकिलानां मधुरपटुरवा वाजिनो राजवाह्याः ।
काकोलूकोष्ट्रभासः श्वखरवृषरवा रूक्षविच्छिन्नघोषा
अन्ये चेत्थंप्रकारास्त्वशुभफलकरा हानिशोकप्रदाश्च ॥

अथ गतिलक्षणम् ।

त्वरितगतिविलासैर्विक्षिपन् पादमुच्चै-
र्व्रजति नकुलगामी कम्पयन् कं शिखायम् ।
अथ विकटखुराग्रैर्दह्यमानां यथोर्वी
स्पृशति चरणपातैस्तैत्तिरं तस्य यातम् ॥
स्थिरपदविततांशो दूरमुन्नम्य वक्त्रं
व्रजति हि सुविलासैर्बर्हिवद्बर्हिगामी ।

सुगतमथ तुरङ्गं योऽधिरुह्यात् तदेव
स भवति सुखगामी शत्रुनाशं च कुर्यात् ॥
अजमहिषवराहश्वोष्ट्रमार्जारगामी
कपिवृषभशृगालैस्तुल्यगामी च योऽश्वः ।
स दिशति धननाशं शत्रुवृद्धिं च कुर्याद्-
भवति च न सुखाय स्वामिनः शोकदाता ॥

अथ सत्त्वगन्धलक्षणमाह ।

वर्णावर्तप्रभाङ्गस्वरगतिसहितः सत्त्वगन्धैरुपेतः
शौचाचाराभिजातिः स्मृतिविनयगुणैरन्वितो देवसत्त्वः ।
गन्धर्वैर्यातुधानैर्मुनिवरपतिभिस्तुल्यसत्त्वाः प्रशस्ता
ये चान्ये हीनसत्त्वास्त्वशुचिमलरता भीरवस्ते विवर्ज्याः ॥
मैरेयाम्भोजसर्पिःचितिमधुमदिराचन्दनोशीरलाजा-
कल्हाराशोकजातीवरतरुकुसुमैस्तुल्यगन्धाः प्रशस्ताः ।
ये चान्ये क्षारमूत्रक्षतजमलवसाबस्तिनिर्मोकगन्धाः
सन्त्याज्यास्तेऽपि नित्यं त्वशुभफलकरा हानिशोकप्रदाश्च ॥
उरो विस्तीर्णं पृथु च जघनं नेत्रयुग्मं सुबद्धं
ग्रीवा वाच्या सुदीर्घा सभुजयुगलकं कण्ठपृष्ठं च ह्रस्वम् ।
स्वरो गम्भीरस्तनुरविरलं चेष्टितं चारु नित्यं
शोभा शारीरिकी स्याद्यदि च तुरगे दीर्घमायुः स जीवेत् ॥
व्यूढोरस्कप्रबाङ्गस्तनपृथुजघना दीर्घहस्वाविघोषा
दुर्गन्धाः सर्वगात्रैस्तनुगतिविषमा लम्बकर्णाष्ठपुच्छाः ।
दुर्गन्धा दुष्टशीला विनिपतितमना भीरवो नष्टसञ्ज्ञाः
सर्वाचारैश्च हीना यदि खलु तुरगाः सन्ति ह्रस्वायुषस्ते ॥

अथाश्वानां ध्रुवावर्तानाह ।

**तेषां प्रपाण एको ललाटकेशेषु च ध्रुवावर्त्ताः ।**
**रन्ध्रोपरन्ध्रमूर्धनि वक्षसि चेति स्मृतौ द्वौ द्वौ ॥ ४ ॥**

तेषां ध्रुवावर्त्तानां दशानां मध्यात् प्रपाण उत्तरोष्ठाधोभागे एको भवति ध्रुवावर्तः । अवश्यं भाविनः स्थिरा ध्रुवावर्ताः । ललाटकेशेषु च केशाधो-

ललाटस्थाने एक एव ध्रुवावर्त्तो भवति । कुक्षिनाभिमध्यभागे रन्ध्रस्थानम् । तत उपरिभागे उपरन्ध्रस्थानम् ।

उक्तं च ।

कुक्षिनाभ्यन्तरे रन्ध्रमुपरन्ध्रं तथोपरि ।

एवं रन्ध्रे एको भवति । उपरन्ध्रे एक एव । द्वयोः पार्श्वयोस्ते चत्वारः । मूर्धनि शिरसि द्वौ । वक्षसि चोरःप्रदेशे द्वौ स्मृतावुक्तौ । एवमेते दशाश्वानां ध्रुवावर्त्ताः ॥ ४ ॥

तथा च पराशरः ।

दश ध्रुवावर्त्ताः । प्रपाणे एको ललाटे एक एव मूर्धनि द्वौ द्वौ वक्षसि रन्ध्रोपरन्ध्रयोर्द्वौ द्वाविति ॥

अधुनाश्वानां वयोज्ञानमाह ।

**षड्भिर्दन्तैः सिताभैर्भवति हयशिशुस्तैः कषायैर्द्विवर्षः**
**सन्दंशैर्मध्यमान्त्यैः पतितसमुदितैस्त्र्यब्दिपञ्चाब्दिकाश्वः ।**
**सन्दंशानुक्रमेण त्रिकपरिगणिताः कालिका पीतशुक्लाः**
**काचा मक्षीकशङ्खावटचलनमतो दन्तपातं च विद्धि ॥ ५ ॥**

अश्वानामधो दन्तपाल्यां दंष्ट्राद्वयमध्ये षड्दन्ता व्यञ्जनिनो भवन्ति षड्भिर्दन्तैरग्रवर्त्तिभिर्द्वयोरपि दन्तपाल्योः सिताभैः श्वेतच्छविभिर्हयशिशुर्बालोऽश्वो भवति । एकवर्ष इत्यर्थः । तैरेव षड्भिर्दन्तैः कषायैः कृष्णलोहितवर्णैर्द्विवर्षोऽश्वो भवति । द्वयोरपि दन्तपाल्योः सममध्यवर्त्तिनौ द्वौ द्वौ दन्तौ सन्दंशावुच्येते । तत्पार्श्ववर्त्तिनमेकैकं मध्यमम् । द्वयोरपि पार्श्वद्वयवर्त्तिनमेकैकमन्त्यसञ्ज्ञम् । एवं सन्दंशैः पतितसमुदितैः पतित्वा पुनरप्युत्थितैस्त्र्याब्दिकोऽश्वः । त्रीणि वर्षाणि प्रमाणमस्य त्र्याब्दिकः । एवं मध्यमैर्दन्तैः पतितसमुदितैरब्दसङ्ख्यानि वर्षाणि प्रमाणमस्य । अन्त्यैः समुदितैः पञ्चाब्दिकः । सन्दंशानुक्रमेण सन्दंशपरिपाट्या कालिकाद्या व्यञ्जनिनस्त्रिकपरिगणिताः कार्याः । त्रिभिस्त्रिभिर्वर्षैर्गणनीयाः । एतदुक्तं भवति । यदा सन्दंशदन्तयोः कालिका कृष्णो विन्दुर्भवति तदा षडब्दाः । ताम्रसदृशाकृतिराणां विज्ञेया । एवं मध्यमैः सकालिकैः सप्ताब्दाः । अन्त्यैरष्टाब्दाः । एवं

प्रतिचिह्नं सन्दंशानुक्रमेण चिवर्णगणितं कार्यम् । तेन सन्दंशानुक्रमेण पीतायामेकादशाब्दाः । पीताः पीतवर्णाः । एवं शुक्लायां चतुर्दशाब्दाः । शुक्लाः शुक्लवर्णाः । काचायां सप्तदशाब्दाः । काचाः काचवर्णाः । मक्षीकायां विंशत्यब्दाः । मक्षीका तदाकृतिः । शङ्खायां त्रयोविंशत्यब्दाः । शङ्खा शङ्खाकृतिरेव । अवटं छिद्रम् । तेन षड्विंशत्यब्दाः । चलनं कम्पनं तेनैकोनत्रिंशदब्दाः । अतोऽनन्तरं दन्तपातः पतनं तेन द्वात्रिंशदब्दाः । एवं क्रमेण विद्धि जानीहि ॥ ५ ॥

तथा च वररुचिः ।

सन्दंशं मध्यमन्त्यं दशनयुगमधः सोत्तरं वर्षजाते

स्फीतं द्व्यब्दे कषायं पतितसमुदितं त्रिश्चतुष्पञ्चकेषु ।

पीतस्त्रीनेकैकमब्दानसितहरिसिताकाचमाक्षीकशङ्खा-

छिद्रं चालं च्युतिश्च प्रभवति तुरगे लक्षणं वक्त्रजानाम्—इति ॥

पराशरमहर्षिणा अश्वानामायुःप्रमाणपरिज्ञानमभिहितम् ।

तद्यथा ।

अथ रेखा दीर्घा गम्भीरा अविच्छिन्नास्तिस्रः प्रोथे यस्य तस्यायुर्वर्षाणि त्रिंशत् । द्वाभ्यां विंशतिः । दशैकया च । दक्षिणेनाभिवृतया द्वादश । वंशायमनुगतया अष्टादश । ह्रस्वजिह्मवक्रविच्छिन्नाव्यक्तहलकबन्धकाकपादाकारया जघन्यमायुरिति ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतावश्वलक्षणं नाम पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

## अथ हस्तिलक्षणं व्याख्यायते ।

तत्र गजानां चतस्रो जातयो भवन्ति भद्रमन्दमृगमिश्राख्याः । तत्रादावेव भद्रलक्षणमाह ।

**मध्वाभदन्ताः सुविभक्तदेहा**
**न चोपदिग्धा न कृशाः क्षमाश्च ।**
**गात्रैः समैश्चापसमानवंशा**
**वराहतुल्यैर्जघनैश्च भद्राः ॥ १ ॥**

ये गजा मध्वाभदन्ता मधुसदृशी आभा कान्तिर्येषाम्। सुविभक्तदेहाः शोभनं कृत्वा विभक्तो देहः शरीरं येषाम्। अवयवप्रविभागसम्पन्ना इत्यर्थः। न चोपदिग्धा नातिस्थूलाः। न कृशा नातिदुर्बलदेहाः। समाश्च कार्ययोग्याः। गात्रैश्च शरीरावयवैः समैस्तुल्यैर्युक्ताः। चापसमानवंशाः चापं शराशनं तत्समाना वंशास्तत्तुल्यपृष्ठाः। वराहतुल्यैः सूकरप्रतिमैश्च जघनैः कटिभागैरेभिः परिवर्तुलैस्तैर्भद्रा गजाः॥ १॥

अथ मन्दलक्षणमाह।

**वक्षोऽथ कक्षावलयः श्लथाश्च लम्बोदरस्त्वग्बृहती गलश्च।**
**स्थूला च कुक्षिः सह पेचकेन सैंही च दृङ्मन्दमतङ्गजस्य॥२॥**

वक्ष उरः। अथशब्दश्चार्थे। कक्षावलयः। कक्षाग्रहणेन कक्षास्थानं शरीरमध्यमुच्यते। तत्र या वलयः। अथवा कक्षा तथा वलय एताः श्लथाः शिथिलाः। लम्बोदरः प्रलम्बजठरः। त्वक् बृहती स्थूलं चर्म। गलः कण्ठश्च स्थूल एव। कुक्षिः स्थूला बृहती। सह पेचकेन पेचकं पुच्छमूलं तेन सह साकं स्थूलकुक्षिः। सैंही दृक् सिंहसदृशी दृष्टिः। तस्यैतल्लक्षणं मन्दमतङ्गजस्य मन्दसञ्ज्ञगजस्य॥ २॥

अथ मृगसङ्कीर्णयोर्लक्षणमाह।

**मृगास्तु ह्रस्वा[1]धरवालमेढ्रा-**
**स्तन्वङ्घ्रिकण्ठद्विजहस्तकर्णाः।**
**स्थूलेक्षणाश्चेति यथोक्तचिह्नैः**
**सङ्कीर्णनागा व्यतिमिश्रचिह्नाः॥ ३॥**

ये गजा ह्रस्वाधरवालमेढ्राः। ह्रस्वाधरा अल्पोष्ठाः। केचिद्ध्रस्वोदरा इति पठन्ति। ह्रस्वा वाला वालाः पुच्छस्थाः। ह्रस्वा अदीर्घाः। ह्रस्वमेढ्रा अदीर्घलिङ्गाः। तन्वङ्घ्रिकण्ठद्विजहस्तकर्णाः। अङ्घ्री पादौ। कण्ठो गलः। द्विजा दन्ताः। हस्तः करः। कर्णौ श्रोत्रे। चैतानि तनूनि स्वल्पमांसानि येषाम्। स्थूलेक्षणा विस्तीर्णनयनाः। अथवा स्थूलतारकाः स्थूले-

---

१ ह्रस्वोदर-इति पाठान्तरम्।

क्षणाः । एते गजा मृगाः । एतैर्लक्षणैर्युक्ताः । यथोक्तचिह्नैः सङ्कीर्णनागा व्यतिमिश्रचिन्हाः । यथोक्तैर्यथानिर्दिष्टैश्चिह्नैर्लक्षणैर्भद्रमन्दमृगाणां संबन्धिभिर्यै व्यामिश्रैर्युक्तास्ते नागा गजाः सङ्कीर्णाः ॥ ३ ॥

अधुनैतेषामुन्नतिदैर्घ्यपरिणाहानां प्रमाणमाह ।

**पञ्चोन्नतिः सप्त मृगस्य दैर्घ्य-**
**मष्टौ च हस्ताः परिणाहमानम् ।**
**एकद्विवृद्धावथ मन्दभद्रौ**
**सङ्कीर्णनागोऽनियतप्रमाणः ॥ ४ ॥**

मृगाख्यस्य गजस्य पञ्चोन्नतिः पञ्च हस्ता औरच्यम् । पुच्छमूलात् कुम्भान्तं यावत् सप्तहस्ता दैर्घ्यम् । अष्टौ च हस्ताः परिणाहमानं परिणाहो मध्यपरिधिः । तस्य मानमष्टहस्तप्रमाणम् । एकद्विवृद्धाविति । एकवृद्ध्या मन्दः । द्विवृद्ध्या भद्रः । एतदुक्तं भवति । मन्दस्य षडुन्नतिः । अष्टौ दैर्घ्यम् । नव परिणाहः । भद्रस्य सप्तोन्नतिः । नव दैर्घ्यम् । दश परिणाहः । सङ्कीर्णनागः सङ्कीर्णाख्यो गजः । अनियतप्रमाणोऽनिश्चितपरिमाण इत्यर्थः । व्यामिश्रप्रमाणो भवति । त्रयाणां भद्रादीनां यल्लक्षणमुक्तं तन्मिश्रितस्य भवति ॥ ४ ॥

तथा च पराशरः ।

परिणाहो दशसमो नवायामः स उच्छ्रयः ।
सप्त ज्येष्ठप्रमाणस्य नागस्य समुदाहृतः ॥
ज्येष्ठात् सप्तमभागोनो मध्यमो मध्यमाद्गजः ।
अन्त्यः षड्भागहीनः स्यादतोऽन्यो न स पूजितः ॥
मुखादापेचकं दैर्घ्यं पृथु पार्श्वोदरान्तरम् ।
आनाह उच्छ्रयः पादाद्विज्ञेयो यावदासनम् ॥

अथ तेषां वर्णमदलक्षणमाह ।

**भद्रस्य वर्णो हरितो मदश्च**
**मन्दस्य हारिद्रकसन्निकाशः ।**

कृष्णो मदश्चाभिहितो मृगस्य
सङ्कीर्णनागस्य मदो विमिश्रः ॥ ५ ॥

भद्राख्यस्य गजस्य वर्णो हरितः शुकवर्णः । मदश्च हरितः । मन्दगजस्य मदो वर्णश्च हारिद्रसन्निकाशः । हरिद्रया रक्तं हारिद्रकं तत्सन्निकाशस्तत्सदृशः । पीताभो वर्णो मदश्च । मृगाख्यस्य गजस्य कृष्णवर्णाभो मदः चशब्दाद्वर्णोऽभिहित उक्तः । सङ्कीर्णनागस्य सङ्कीर्णाख्यस्य गजस्य मदो वर्णश्च विमिश्रो व्यामिश्रवर्णो भवति ॥ ५ ॥

अथ गजानां शुभानि लक्षणान्याह ॥

ताम्रोष्ठतालुवदनाः कलविङ्कनेत्राः
स्निग्धोन्नताग्रदशनाः पृथुलायतास्याः ।
चापोन्नतायतनिगूढनिमग्नवंशा-
स्तन्वेकरोमचितकूर्मसमानकुम्भाः ॥ ६ ॥
विस्तीर्णकर्णहनुनाभिललाटगुह्याः
कूर्मोन्नतद्विनवविंशतिभिर्नखैश्च ।
रेखात्रयोपचितवृत्तकराः सुवाला
धन्याः सुगन्धिमदपुष्करमारुताश्च ॥ ७ ॥

ये गजास्ताम्रोष्ठतालुवदनाः । ताम्रवर्णानि लोहितान्योष्ठतालुवदनानि येषाम् । ओष्ठमधरोष्ठम् । ताल्वास्यपृष्ठम् । वदनं मुखम् । कलविङ्कनेत्राः कलविङ्का ग्रामचटकास्तन्नेत्रतुल्ये नेत्रे येषाम् । स्निग्धोन्नताग्रदशनाः । स्निग्धाः सस्नेहा उन्नताग्रा उच्चप्रान्ता दशना दन्ता येषाम् । पृथुलायतास्याः । पृथुलं विस्तीर्णमायतं दीर्घं चास्यं मुखं येषाम् । चापोन्नतायतनिगूढनिमग्नवंशाः । चापवच्छरासनवत् क्रमेणोन्नत उच्च आयतो दीर्घो निगूढोऽनुल्बणः सुश्लिष्टः सन्धिनिमग्नो नात्युन्नतो वंशः पृष्ठास्थि येषाम् । तन्वेकरोमचितकूर्मसमानकुम्भाः । तनुभिरघनैरेकरोमचितैरेकैककूपस्थै रोमभिश्चितः कूर्मसमानः कूर्मसदृशो मध्योन्नतो कुम्भो येषां ते गजा धन्याः ॥ ६ ॥

विस्तीर्णकर्णेति । कर्णौ श्रोत्रे । हनुनी प्रसिद्धे । नाभी देहमध्यभागः । ललाटं मुखपृष्ठम् । गुह्यं लिङ्गम् । एतानि विस्तीर्णानि येषाम् ।

तथा कूर्मोन्नतैः कूर्मवदुन्नतैर्मध्योच्चैर्द्विनवविंशतिभिर्नखैः कररुहैः । द्विनव-सङ्ख्यैरष्टादशभिर्विंशत्या चोपलक्षिताः ।

तथा च पराशरः ।

विंशत्यष्टौ दश नखाः स्थिराः कूर्मसमाहिताः ।
गजानां पूजिताः पादा ये च स्युरक्तचाविलाः—इति ॥

रेखात्रयोपचितवृत्तकराः । रेखात्रयेण दैर्घ्यस्थितो युक्तो वृत्तो वर्त्तुलः करो हस्तो येषाम् । सुवालाः शोभनतनूरुहाः । सुगन्धिमदपुष्करमारुताश्च । सुगन्धिः । शोभनगन्धिः । मदो मदाम्बु तथा पुष्करमारुतः करप्रान्तवातो येषां ते गजा धन्या इति ॥ ७ ॥

अन्यदप्याह ।

**दीर्घाङ्गुलिरक्तपुष्कराः सजलाम्भोदनिनादबृंहिणः ।**
**बृहदायतवृत्तकन्धरा धन्या भूमिपतेर्मतङ्गजाः ॥ ८ ॥**

गजानां करप्रान्ता मांसपेश्योऽङ्गुलिशब्दवाच्याः । करप्रान्ते सकलं पुष्करमुच्यते । तच दीर्घा अङ्गुलयो रक्तं च पुष्करं येषाम् । तथा सजलस्य जलसंयुक्तस्याम्भोदस्य यो निनादः शब्दस्तद्वद्बृंहणं गलगर्जितं येषाम् । बृहती विस्तीर्णा आयता दीर्घा वृत्ता परिवर्तुला कन्धरा ग्रीवा येषाम् । ते मतङ्गजा हस्तिनो भूमिपते राज्ञो धन्याः शुभा इति ॥ ८ ॥

अथाशुभलक्षणान् गजानाह ।

**निर्मदाभ्यधिकहीननखाङ्गान् कुब्जवामनकमेषविषाणान् ।**
**दृश्यकोशफलपुष्करहीनान् श्यावनीलशबलासिततालून् ॥ ९ ॥**
**स्वल्पवक्त्ररुहमत्कुणषण्ढान् हस्तिनीं च गजलक्षणयुक्ताम् ।**
**गर्भिणीं च नृपतिः परदेशं प्रापयेदतिविरूपफलास्ते ॥ १० ॥**

ये गजा निर्मदा मदरहिता न कदाचिदपि प्रमत्ता भवन्ति तान् । यांश्चाभ्यधिकहीननखाङ्गान् । अभ्यधिका हीनाश्च वा नखाः कररुहाः अङ्गान्यवयवा येषाम् । नखा अष्टादशभ्य ऊना त्रिंशतेरधिकाः । अङ्गानामूनाधिकत्वं तथानुसारेण परिकल्पनीयम् । तथा यश्च कुब्जो गजस्तस्य च लक्षणम् ।

सङ्क्षिप्तवक्षोजघनः पृष्ठमध्यसमुन्नतः ।
प्रमाणहीनस्तन्नाभिः स कुब्जो वारणाधमः ॥

तथा यश्च वामनकस्तस्य लक्षणम् ।

अनाहायामसंयुक्तो योऽतिह्रस्वो भवेद्गजः ।
वामनः स समाख्यातो भर्तुर्नार्थयशःप्रदः ॥

तथा यश्च मेषविषाणो मेषोऽजस्तस्य विषाणे शृङ्गे तत्तुल्ये विषाणे दन्तौ यस्य ।

तथा च ।

विषाणं ब्रुवते शृङ्गं विषाणं दन्त उच्यते ।

तान् कुब्जवामनकमेषविषाणान् । दृश्ये दृश्यमाने कोशफले वृषणौ येषाम् । पुष्करं करप्रान्तः पद्माकारं तेन हीनान् रहितान् । श्यावं मलिनं नीलं नीलाकारं शबलं व्यामिश्रं शुक्लकृष्णवर्णम् । असितं कृष्णं वा तालु येषां तानपि ॥ ६ ॥

तथा स्वल्पा वक्ररुहा दन्ता मुखलोमानि वा येषाम् । मत्कुणो यश्च दन्तरहितः ।

तथा च लक्षणम् ।

सर्वलक्षणसम्पूर्णो दन्तैस्तु परिवर्जितः ।
मत्कुणः स समाख्यातः सङ्ग्रामे प्राणघातकः ॥

यश्च षण्ढः । तस्य लक्षणम् ।

पादयोः सन्निकर्षः स्याद्यस्य नागस्य गच्छतः ।
स षण्ढोऽध्वनि युद्धे च लक्षणज्ञैर्न पूजितः ॥

तथा च ।

अनन्त्याभ्यधिकं यस्य विस्तारेण स्तनान्तरम् ।
विकटः स च निर्दिष्टो दुर्गतिर्निन्दितो गजः ॥

एवंविधा ये गजास्तान् नृपती राजा परदेशमन्यदेशं प्रापयेन्नयेत् । तथा हस्तिनीं करिणीं च गजलक्षणयुक्तां स्थूलदन्तां समदामित्यर्थः । गर्भिणीं तद्राष्ट्रस्थितां गर्भसंयुक्तां च नृपतिः परदेशं प्रापयेत् । यतस्ते गजा अतिविरूपफला अतिविरूपं दुष्टफलं येषां ते तथाभूता इति ॥ १० ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ हस्तिलक्षणं नाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥

# अथ पुरुषलक्षणं व्याख्यायते ।

तत्रादावभिधेयार्थस्य सङ्ग्रहमाह ।

उन्मानमानगतिसंहतिसारवर्ण-
स्नेहस्वरप्र[1]कृतिसत्त्वमनूकमादौ ।
क्षेत्रं मृजां च विधिवत् कुशलोऽवलोक्य
सामुद्रविद्वदति यातमनागतं वा ॥ १ ॥

उन्मानं च मानं च गतिश्च संहतिश्च सारश्च वर्णश्च स्नेहश्च स्वरं च प्रकृतिश्च सत्त्वं च तदुन्मानमानगतिसंहतिसारवर्णस्नेहस्वरप्रकृतिसत्त्वम् । न केवलमुन्मानमानाद्यं यावदनूकं क्षेत्रं मृजां च । आदौ प्रथमं विधिवद्यथावत् कुशलः शिक्षितोऽवलोक्य निरूप्य विचार्य । कोऽसौ सामुद्रवित् समुद्रे प्रोक्तं पुरुषलक्षणं सामुद्रम् । तद्वेत्ति जानातीति सामुद्रवित् । वदति कथयतीति । यातमतिक्रान्तमिष्टानिष्टफलम् । न केवलं यावदनागतमेष्यद्वेति । अत्र केचिन्मन्यन्ते । प्रकृतिपर्यायं सत्त्वमाचार्येण व्याख्यातम् । "एवं[2] नराणां प्रकृतिः प्रदिष्टा यल्लक्षणज्ञाः प्रवदन्ति सत्त्व"मिति तस्मात् सत्त्वशब्दमत्रातिरिच्यते । नातिरिच्यत इत्युच्यते । सत्त्वं नाम चेतोधर्मो यस्मिन् सति न कुतश्चिद्भयमुत्पद्यते न कस्यामप्यवस्थायां विषादः समुपजायते तत्समाचक्षते कुशलाः ।

एकाकिनि वनवासिनि अराजलक्ष्मणि अनीतिशास्त्रज्ञे ।
सत्त्वोच्छ्रिते मृगपतौ राजेऽतिगिरः परिणमन्ति ।

तथा चाचार्येणानन्तरमेव पञ्चपुरुषलक्षणे सत्त्वमन्यदेव दर्शितं "त[3]द्वातुमहाभूतप्रकृतिद्युतिवर्णसत्त्वरूपाद्यै"रिति ।

"सत्त्वमहीनं सूर्या"दि[4]ति । तथा "भौ[5]मात् सत्त्वं गुरुता बुधा"दिति यस्मादुक्तं तस्मात् सत्त्वमिति नातिरिच्यते । अपरे अन्यथा पठन्ति । प्रकृतयश्च ततो ह्यनूकमिति । प्रकृतयश्च न जायन्ते । यतोऽवलोक्यास्याः

---

१ प्रकृतयश्च ततो ह्यनूकम् इति–पाठान्तरम् । २ अस्यैवाध्यायस्य ११४ श्लोकः ।
३ बृहत्संहितायाम् ६९ अध्याये ४ श्लोकः । ४ बृहत्संहितायाम् ६९ अध्याये ३ श्लोकः ।
५ बृहत्संहितायाम् ६९ अध्याये ५ श्लोकः ।

क्रियाया उन्मानादिप्रकृतिपर्यन्तं सामासिकं पदं कर्म। कर्मत्वे च प्रकृतिं प्रकृतीरिति वा भवितव्यम्। सत्त्वमित्येतच्च न सङ्गृहीतं स्यादिति स्पष्टीक्रियते ॥ १ ॥

उन्मानमिति। ऊर्द्धमङ्गुलादिकं मानमुन्मानम्।

तथा कात्यायनः।

ऊर्ध्वमानं किलोन्माने मानं तु तुलया धृतम्।

उन्मानमितिः।

अ[1]ष्टशतं षण्णवतिः परिमाणं चतुरशीतिरिति पुंसाम्।
उत्तमसमहीनानामङ्गुलसङ्ख्या स्वमानेन—इति।

मानं तुलामानम्।

भा[2]रार्द्धतनुः सुखभाक् तुलितोऽतो दुःखभाग्भवत्यूनः।
भारोऽतीवाढ्यानामध्यर्द्धः सर्वधरणीशः—इति ॥

गतिर्गमनम्।

शा[3]र्दूलहंससमदद्विपगोपतीनां
तुल्या भवन्ति गतिभिः शिखिनां च भूपाः।
येषां च शब्दरहितं स्तिमितं प्रयातं
तेऽपीश्वरा द्रुतपरिप्लुतगा दरिद्राः—इति ॥

संहतिरिति। संहतिर्घनता।

तथा च।

सू[4]क्ष्माणि पञ्च दशनाङ्गुलिपर्वकेशाः
साकं त्वचा कररुहाश्च न दुःखितानाम्।

तथा।

सं[5]हात इति च सुश्लिष्टसन्धिता सुखभुजो ज्ञेया—इति।

सार इति।

सप्त[6] भवन्ति च सारा मेदोमज्जात्वगस्थिशुक्राणि।
रुधिरं मांसं चेति प्राणभृतां तत्समानफलम्—इति ॥

---

१ अस्यैवाध्यायस्य १०५ श्लोकः।
२ अस्यैवाध्यायस्य १०६ श्लोकः।
३ अस्यैवाध्यायस्य ११५ श्लोकः।
४ अस्यैवाध्यायस्य ८७ श्लोकः।
५ अस्यैवाध्यायस्य १०० श्लोकः।
६ अस्यैवाध्यायस्य ९८ श्लोकः।

वर्ण इति ।

नेत्रा[1]न्तपादकरताल्वधरोष्ठजिह्वा

रक्ता नखाश्च खलु सप्त सुखावहानि ।

तथा ।

[2]द्युतिमान् वर्णः स्निग्धः क्षितिपानां मध्यमः सुतार्थवताम् ।

रूक्षो धनहीनानां शुद्धः शुभदो न सङ्कीर्णः ।

स्नेहः स्निग्धता ।

स्नेहः[3] पञ्चसु लक्ष्यो वाग्जिह्वादन्तनेत्रनखसंस्थः ।

सुतधनसौभाग्ययुताः स्निग्धैस्तैर्निर्धना रूक्षैः—इति ॥

स्वरः शब्दः ।

[4]करिवृषरथौघभेरीमृदङ्गसिंहाब्दनिःस्वना भूपाः ।

गर्दभजर्जररूक्षस्वराश्च धनसौख्यसन्त्यक्ताः—इति ॥

प्रकृतिः ।

भूजल[5]शिख्यनिलाम्बरसुरनररक्षःपिशाचकतिरश्चाम् ।

सत्त्वेन भवति पुरुषो लक्षणमेतद्भवत्येषाम् ॥

"महीस्वभावः शुभपुष्पगन्धः" इत्याद्यो"वं नराणां प्रकृतिः प्रदिष्टा यल्लक्षणज्ञाः प्रवदन्ति सत्त्व"मिति । सत्त्वं पञ्चपुरुषलक्षणोक्तं प्राक् प्रतिपादितमेव । अनूकमित्येतज्जन्मान्तरादागतिरनूकाख्या ।

स्म[6]ध्यमनूकं वक्राद्गोवृषशार्दूलसिंहगरुडमुखाः ।

अप्रतिहतप्रतापा जितरिपवो मानवेन्द्राश्च ॥

अनूकं प्रकृतितो विशेषेणैव गम्यते । प्रकृतिश्चानन्तरं प्रदर्शिता ।

क्षेत्रमिति ।

[7]पादौ सगुल्फौ प्रथमं प्रदिष्टौ जङ्घे द्वितीयं च सजानुचक्रे ।

मेढ्रोरुमुष्कं च ततस्तृतीयं नाभिः कटिश्चेति चतुर्थमाहुः ॥

---

१ अस्यैवाध्यायस्य ८७ श्लोकः । २ अस्यैवाध्यायस्य १०२ श्लोकः ।
३ अस्यैवाध्यायस्य १०१ श्लोकः । ४ अस्यैवाध्यायस्य ९५ श्लोकः ।
५ अस्यैवाध्यायस्य १०८–११४ श्लोकाः । ६ अस्यैवाध्यायस्य १०३ श्लोकः ।
७ बृहत्संहितायाम् ७० अध्यायस्य २४–२६ श्लोकाः ।

उदरं कथयन्ति पञ्चमं हृदयं षष्ठमतः स्तनान्वितम् ।
अथ सप्तममंसजत्रुणी कथयन्त्यष्टममोष्ठकन्धरे ॥
नवमं नयने च सभ्रुणी सललाटं दशमं शिरस्तथा ।

इति दश क्षेत्राणि ।

मृजा चेति ।

मृजा पञ्चमहाभूतमयी ।

[1]छाया शुभाशुभफलानि निवेदयन्ती लक्ष्या मनुष्यपशुपक्षिषु लक्षणज्ञैः ।
तेजोगुणान् बहिरपि प्रविकाशयन्ती दीपप्रभा स्फटिकरत्नघटस्थितेव ॥

तथा ऋषिपुत्रेण महाणां षड्विधा छाया प्रोक्ता ।

या च च्छाया प्रभा सैव षड्विधा सा प्रकीर्तिता ।
स्वच्छा स्निग्धा प्रसन्ना च कान्ता दीप्ता विदीपिनी ॥

अथाचार्याः पादात् प्रभृति केशान्तं यावल्लक्षणानि वक्ष्यन्ति ।

तत्रादावेव पादयोर्लक्षणमाह ।

**अस्वेदनौ मृदुतलौ कमलोदराभौ**
**श्लिष्टाङ्गुली रुचि[2]रताम्रनखौ सुपार्ष्णी ।**
**उष्णौ शिराविरहितौ सुनिगूढगुल्फौ**
**कूर्मोन्नतौ च चरणौ मनुजेश्वरस्य ॥ २ ॥**

एवंविधौ चरणौ पादौ मनुजेश्वरस्य राज्ञः । कीदृशौ । अस्वेदनौ स्वेदवर्जितौ । मृदुतलौ मृदुनी मार्दवयुक्ते तले ययोः । कमलोदराभौ कमलं पद्मं तस्योदरं तत्सदृशी आभा कान्तिर्ययोः । श्लिष्टाङ्गुली घनाङ्गुलियुक्तौ । रुचिरताम्रनखौ रुचिरास्तेजस्विनस्ताम्रवर्णा लोहिता नखाश्च ययोः । केचि द्रुचिरपार्श्वनखाविति पठन्ति । रुचिरौ पार्श्वौ ययोः । सुपार्ष्णी शोभनपार्ष्णी । पार्ष्णिशब्देन पश्चात्पादभाग उच्यते । उष्णावुष्णयुक्तौ । शिराविरहितौ शिराभिर्वर्जितौ । सुनिगूढगुल्फौ निगूढौ निमग्नावनुल्बणौ गुल्फौ ययोः । कूर्मोन्नतौ कूर्मपृष्ठाकारौ । तथाभूतौ चरणौ मनुजेश्वरस्य । मनुजा मनुष्यास्तेषामीश्वरः प्रभुरिति ॥ २ ॥

---

१ अस्यैवाध्यायस्य ८९ श्लोकः । २ रुचिरपार्श्वनखौ—इति पाठान्तरम् ।

तथा च समुद्रः ।

पादैः समांसैः सुस्निग्धैः सोष्णैः श्लिष्टैः सुशोभनैः ।
उन्नतैः स्वेदरहितैः शिराहीनैश्च पार्थिवः ॥

तथा च गर्गः ।

पद्मरक्तोत्पलनिभैस्तथा चनजसन्निभैः ।
नृपाः पादतलैर्ज्ञेया ये चान्ये सुखभागिनः ॥

अथाथैवाशुभलक्षणान्याह ।

**शूर्पाकारविरूक्षपाण्डुरनखौ वक्रौ शिरासन्ततौ**
**संशुष्कौ विरलाङ्गुली च चरणौ दारिद्र्यदुःखप्रदौ ।**
**मार्गायोत्कटकौ कषायसदृशौ वंशस्य विच्छेददौ**
**ब्रह्मघ्नौ परिपक्वमृद्द्युतितलौ पीतावगम्यारतौ ॥ ३ ॥**

एवंविधौ चरणौ पादौ । शूर्पाकारावग्रविस्तीर्णौ । विरूक्षावस्निग्धौ । पाण्डुरनखौ पाण्डुराः शुक्लाभा नखा ययोः । वक्रावस्पृष्टौ दीर्घौ वा । शिरासन्ततौ शिराबहुलौ । संशुष्कौ मांसरहितौ । विरलाङ्गुली च विरला विश्लिष्टा अङ्गुल्यः पादशाखा ययोः । तौ तथाभूतौ । दारिद्र्यदुःखप्रदौ निर्धनत्वं दुःखं च ददतः ।

तथा च समुद्रः ।

शूर्पाकारास्तथा भग्नैर्वक्रैः शुष्कैः शिराततैः ।
सस्वेदैः पाण्डुरै रूक्षैश्चरणैरतिदुःखिताः ॥

मार्गायोत्कटकाविति । उत्कटकौ मध्यादुन्नतौ पाण्डुराकारौ । मार्गायाध्वनि रतौ भवतः । तथा कषायसदृशौ कृष्णलोहितौ । वंशस्य कुलस्य विच्छेददौ विनाशकरौ । परिपक्वया दग्धया मृदा तुल्या द्युतिः कान्तिस्तलयोर्ययोस्तौ ब्रह्मघ्नौ ब्रह्महत्याकरौ । पीतौ पीतवर्णावगम्यासु स्त्रीषु रतौ शक्तावित्यर्थः ॥ ३ ॥

तथा च समुद्रः ।

उत्कटावध्वनि रतौ कषायौ कुलनाशनौ ।
ब्रह्मघ्नौ दग्धमृद्वर्णावानिपीतावगम्यदौ ॥

अथ जङ्घोरुजानूनां लक्षणमाह ।

**प्रविरलतनुरोमवृत्तजङ्घा**
**द्विरदकरप्रतिमैर्वरोरुभिश्च ।**
**उपचितसमजानवश्च भूपा**
**धनरहिताः श्वसृगालतुल्यजङ्घाः ॥ ४ ॥**

प्रविरलैरघनैस्तनुभिः सूक्ष्मै रोमभिर्युते वृत्ते परिवर्तुले जङ्घे येषां ते तथाभूताः । तथा वरोरुभिः श्रेष्ठैरुरुभिर्द्विरदकरप्रतिमैर्गजहस्तसदृशैरुपलक्षिताः । उपचितौ समांसलौ समावविषमौ जानुनी येषां ते । भूपा राजानः । श्वसृगालतुल्यजङ्घाः । शुनां सृगालानां च तुल्याः सदृश्यो जङ्घा येषां ते धनरहिता दरिद्रा भवन्ति ॥ ४ ॥

तथा च समुद्रः ।

जङ्घाभिरभिवृत्ताभिरैश्वर्यमभिनिर्दिशेत् ।
सृगालजङ्घा दुःखान्ताः श्वजङ्घा नित्यमध्वगाः ॥

अथ जङ्घयोर्लोमलक्षणमाह ।

**रोमैकैकं कूपके पार्थिवानां**
**द्वे द्वे ज्ञेये पण्डितश्रोत्रियाणाम् ।**
**त्र्याद्यैर्निःस्वा मानवा दुःखभाजः**
**केशाश्चैवं निन्दिताः पूजिताश्च ॥ ५ ॥**

एकैकं रोम कूपके पार्थिवानां राज्ञां भवेत् । द्वे द्वे रोमणी कूपके पण्डितानां विदुषां श्रोत्रियाणां नियमिनां च भवतः । त्र्याद्यै रोमभिस्त्रिभिश्चतुर्भिर्वा कूपके मानवा मनुष्या निःस्वा निर्धना दुःखभाजश्च भवन्ति । एवमनेन प्रकारेण केशा मूर्धजा निन्दिता गर्हिताः पूजिताः शुभाश्च भवन्ति ॥ ५ ॥

तथा च ।

रोमशाभिस्तु जङ्घाभिर्दुःखदारिद्र्यभागिनः ।
एकरोमा भवेद्राजा द्विरोमा च महायशाः ॥
त्रिरोमा बहुरोमा च नरो भाग्यविवर्जितः ॥

अथ जानुलक्षणमाह ।

निर्मांसजानुर्म्रियते प्रवासे
सौभाग्यमल्पैर्विकटैर्दरिद्राः ।
स्त्रीनिर्जिताश्चैव भवन्ति निम्नै
राज्यं समांसैश्च महद्भिरायुः ॥ ६ ॥

निर्मांसे मांसरहिते जानुनी यस्य स प्रवासे पथि म्रियते । अल्पैः सूक्ष्मैर्जानुभिः सौभाग्यम् । विकटैरतिविस्तीर्णैर्दरिद्रा निर्धना भवन्ति । निम्नैर्जानुभिः खेदयुक्तैः स्त्रीनिर्जिताः स्त्रीभिर्निर्जिता भवन्ति । समांसैर्मांसयुक्तै राज्यं नृपत्वं भवति । महद्भिरतिस्थूलैरायुर्जीवितं बहु भवति ॥ ६ ॥

तथा च समुद्रः ।

निर्मांसे जानुनी यस्य प्रवासे म्रियते तु सः ।
अल्पैर्भवति सौभाग्यं विकटैश्च दरिद्रता ॥
स्त्रीजितः स्यात् तथा निम्नैर्मांसयुक्तैर्नराधिपः ।
अतिस्थूलैश्चिरं कालं जीवेदैश्वर्यसंयुतः ॥

अथ लिङ्गलक्षणमाह ।

लिङ्गेऽल्पे धनवानपत्यरहितः स्थूलेऽपि हीनो धनै-
र्मेढ्रे वामनते सुतार्थरहितो वक्रेऽन्यथा पुत्रवान् ।
दारिद्र्यं विनते त्वधोऽल्पतनयो लिङ्गे शिरासन्तते
स्थूलग्रन्थियुते सुखी मृदु करोत्यन्तं प्रमेहादिभिः ॥ ७ ॥

अल्पे लिङ्गे मेढ्रे धनवान् वित्तवान् भवति । अपत्यरहितश्च पुत्रवर्जितः । अतिस्थूले लिङ्गे धनैर्हीनो दरिद्रो भवति । मेढ्रे लिङ्गे वामनते वामभागविनते सुतैः पुत्रैरर्थैर्धनै रहितो वर्जितः । अन्यथा वक्रे दक्षिणविनते पुत्रवान् भवति । अधोभागे विनते लिङ्गे दारिद्र्यं निर्धनत्वं भवति । शिरासन्तते शिराबहुलेऽल्पतनयः स्वल्पपुत्रः । स्थूलेन ग्रन्थिना युते सुखी सुखितो भवति । मृदु लिङ्गं मनुष्यं प्रमेहादिभिः कमलामूत्रकृच्छ्रगुह्यरोगैरन्तं करोति । म्रियत इत्यर्थः ॥ ७ ॥

अथैवान्यलक्षणमाह ।

**कोशनिगूढैर्भूपा दीर्घैर्भग्नैश्च वित्तपरिहीनाः ।**
**ऋजुवृत्तशेफसो लघुशिरालशिश्नाश्च धनवन्तः ॥ ८ ॥**

कोशेन चर्मणा भस्त्राकृतिना निगूढैराचितैर्लिङ्गैर्भूपा राजानो भवन्ति । दीर्घैर्लिङ्गैर्भग्नैः स्फुटितैश्च वित्तपरिहीना निर्धना भवन्ति । ऋजुवृत्तशेफसः । ऋजु स्पष्टं वृत्तं परिवर्तुलं शेफो लिङ्गं येषां ते ऋजुवृत्तशेफसः । तथा लघुशिरालशिश्नाः । लघु स्वल्पं शिरालं शिरासन्ततं शिश्नं येषां ते धनवन्तो वित्तयुक्ताः ॥ ८ ॥

तथा च समुद्रः ।

दक्षिणावर्तलिङ्गो यः स भवेत् पुत्रवान् नरः ।
वामावर्ते तथा कन्याः सुबह्वः सम्भवन्ति च ॥
स्थूलैः शिरालैः कठिनैर्नरा दारिद्र्यभाजनः ।
ऋजुभिर्वर्तुलैर्लिङ्गैः पुरुषाः सुखभागिनः ॥
यस्य पादोपविष्टस्य भूमिं स्पृशति मेहनम् ।
दुःखितः स तु विज्ञेयो नरो दारिद्र्यभाजनः ॥
स्थूलग्रन्थियुते लिङ्गे नरोऽतिसुखभाग्भवेत् ।
लिङ्गेन मृदुना मर्त्यो म्रियते कृच्छ्रपीडितः ॥

अथ वृषणलक्षणमाह ।

**जलमृत्युरेकवृषणो विषमैः स्त्रीचञ्चलः समैः क्षितिपः ।**
**ह्रस्वायुश्चोद्बद्धैः प्रलम्बवृषणस्य शतमायुः ॥ ९ ॥**

एकवृषण एकाण्डो जलमृत्युर्भवति । जलमध्ये म्रियते । विषमैरतुल्यैर्वृषणैः स्त्रीचञ्चलः स्त्रीष्वभिलाषुको भवति । समैस्तुल्यैर्वृषणैः क्षितिपो राजा भवति । उद्बद्धैरूर्ध्वसंलग्नैर्ह्रस्वायुः स्वल्पजीवितः । प्रलम्बौ वृषणौ यस्य स प्रलम्बवृषणस्तस्य शतमायुः । शतं वर्षाणां जीवितमिति ॥ ९ ॥

तथा च समुद्रः ।

एकाण्डो जलमृत्युः स्याद्विषमैः स्त्रीषु चञ्चलः ।
समाण्डो नरनाथश्च संलग्नैरल्पजीवितः ॥
प्रलम्बाण्डः समानां तु शतं जीवति मानवः ।

अधुना मणिमूत्रलक्षणमाह ।

**रक्तैराढ्या मणिभिर्निर्द्रव्याः पाण्डुरैश्च मलिनैश्च ।**
**सुखिनः सशब्दमूत्रा निःस्वा निःशब्दधाराश्च ॥ १० ॥**
**द्वित्रिचतुर्धाराभिः प्रदक्षिणावर्त्तवलितमूत्राभिः ।**
**पृथिवीपतयो ज्ञेया विकीर्णमूत्राश्च धनहीनाः ॥ ११ ॥**
**एकैव मूत्रधारा वलिता रूपप्रदा न सुतदात्री ।**[1]
**स्निग्धोन्नतसममणयो धनवनितारत्नभोक्तारः ॥ १२ ॥**
**मणिभिश्च मध्यनिम्नैः कन्यापितरो भवन्ति निःस्वाश्च ।**
**बहुपशुभाजो मध्योन्नतैश्च नात्युल्बणैर्धनिनः ॥ १३ ॥**

रक्तैराढ्या मणिभिरिति । लिङ्गस्याग्रं मणिशब्देनोच्यते । रक्तैर्लोहितैर्मणिभिराढ्या ईश्वरा भवन्ति । पाण्डुरैः शुक्लाभैर्मलिनैश्च कृष्णवर्णैर्निर्द्रव्या निर्धना भवन्ति । सशब्दं शब्दसहितं मूत्रं येषां ते सुखिनः । निःशब्दाः शब्दरहिता मूत्रधारा येषां ते निःस्वा निर्धना भवन्ति ॥ १० ॥

द्वित्रिचतुर्धाराभिरिति । द्वाभ्यां मूत्रधाराभ्यां तिसृभिर्वा चतसृभिर्मूत्रधाराभिः प्रदक्षिणावर्त्तवलितमूत्राभिः प्रदक्षिणेनावर्त्तेन वलितं वेष्टितं मूत्रं यासां ताभिः पृथिवीपतयो ज्ञेया राजानो वेदितव्याः । विकीर्णं विक्षिप्तं मूत्रं येषां ते विकीर्णमूत्रा धनहीना निर्धना भवन्ति ॥ ११ ॥

एकैवेति । एकैव मूत्रधारा सा च वलिता वेष्टिता रूपप्रदा शोभनं रूपं प्रददाति । न सुतदात्री सुतान् पुत्रान् न ददाति । केचिद्रूपप्रधानसुतदात्रीति पठन्ति । रूपप्रधानान् सुतान् ददाति । स्निग्धोन्नतसममणयः । स्निग्धाः सस्नेहाः । उन्नता उच्चाः । समास्तुल्या मणयो येषां ते धनानां वित्तानां वनितानां स्त्रीणां रत्नानां मणीनां च भोक्तारः स्वामिनो भवन्ति ॥ १२ ॥

मणिभिरिति । मध्यनिम्नैर्मध्यभागविनतैर्मणिभिः कन्यापितरः कन्याजनका निःस्वा निर्धनाश्च भवन्ति । मध्योन्नतैर्मध्यभागोच्चैर्मणिभिर्बहुपशुभाजो बहूनां पशूनां चतुष्पदानां भागिनो भवन्ति । अत्युल्बणैरतिस्थूलैर्मणिभिर्न धनिन ईश्वरा न भवन्ति ॥ १३ ॥

---

१ रूपप्रधानसुतदात्री-इति पाठान्तरम् ।

तथा च ।

रक्ताकृतिर्मणिर्यस्य समो मध्ये विराजते ।
पार्थिवः स तु विज्ञेयः समुद्रवचनं यथा ॥
सुपूर्णरजतप्रख्यैर्मणिमुक्तासमप्रभैः ।
प्रवालसदृशैः स्निग्धैर्मणिभिः पार्थिवो भवेत् ॥
पाण्डुरैर्मलिनै रूक्षैः श्यावैरल्पैश्च निर्धनः ।
मूत्रधारा पतेद्दीर्घा दक्षिणावलिता यदि ॥
पार्थिवः स तु विज्ञेयः समुद्रवचनं यथा ।
द्विधारं च पतेन्मूत्रं स्निग्धं शब्दविवर्जितम् ॥
भोगवान् स तु विज्ञेयो गवाढ्यो नात्र संशयः ।
बहुधारे तथा रूक्षे सशब्दे पुरुषाधमः ॥

अधुना बस्तिशुक्रमैथुनानां लक्षणमाह ।

**परिशुष्कबस्तिशीर्षैर्धनरहिता दुर्भगाश्च विज्ञेयाः ।**
**कुसुमसमगन्धशुक्रा विज्ञातव्या महीपालाः ॥ १४ ॥**
**मधुगन्धे बहुवित्ता मत्स्यसगन्धे बहून्यपत्यानि ।**
**तनुशुक्रः स्त्रीजनको मांससगन्धो महाभोगी ॥ १५ ॥**
**मदिरागन्धे यज्वा क्षारसगन्धे च रेतसि दरिद्रः ।**
**शीघ्रं मैथुनगामी दीर्घायुरतोऽन्यथाल्पायुः ॥ १६ ॥**

परिशुष्केति । नाभिलिङ्गयोरन्तरं बस्तिः । परिशुष्कं निर्मांसं बस्तिशीर्षं येषां ते धनरहिता दरिद्रा दुर्भगा जनानामप्रिया विज्ञेया विज्ञातव्याः । अर्थादेव सम्पूर्णबस्तिशीर्षाः सुभगाः ।

तथा च ।

विस्तीर्णमांसला स्निग्धा बस्तिः पुंसां प्रशस्यते ।
निर्मांसा कर्कशा रूक्षा दुःखदारिद्र्यदा स्मृता ॥
गोमायोः सदृशी यस्य खरोष्ट्रमहिषस्य च ।
स भवेद्दुःखितो नित्यं धनहीनश्च मानवः ॥

कुसुमसमं पुष्पतुल्यं शुक्रगन्धं रेतःसुरभिर्येषां ते महीपाला राजानो विज्ञातव्याः ॥ १४ ॥

मधु माक्षिकम् । मधुतुल्यगन्धे शुक्रे बहुवित्ताः प्रभूतधनाः । मत्स्यसगन्धे मीनसदृशगन्धे बहूनि प्रभूतानि अपत्यानि सुतादयो भवन्ति । तनुशुक्रोऽघनरेताः स्त्रीजनकः कन्यानां पिता भवति । मांससगन्धे मांससदृशगन्धे महाभोगी भोगवान् भवति ॥ १५ ॥

मदिरागन्धे मद्यगन्धे शुक्रे यज्वा याज्ञिको भवति । क्षारसगन्धे क्षारतुल्यगन्धे च रेतसि शुक्रे दरिद्रो निःस्वो भवति ।

तथा च ।

पुष्पगन्धो भवेद्राजा बहुस्वा मधुगन्धिनः ।
मत्स्यगन्धः पुत्रवान् स्यात् स्त्रीप्रजास्तनुरेतसः ॥
मांसगन्धो महाभोगी याज्ञिको मदिरासमः ।
गन्धो येषां क्षारसमस्ते निःस्वा मनुजाः स्मृताः ॥

शीघ्रमाश्वेव यो मैथुनगमनशीलः स दीर्घायुश्चिरजीवी भवति ।
अतोऽन्यथा चिरमैथुनगामी स्वल्पायुर्भवेत् नरः ।
चिरं मैथुनगामी यः स ह्रस्वायुर्भवेदिति ॥ १६ ॥

अथ स्फिजोर्लक्षणमाह ।

**निःस्वोऽतिस्थूलस्फिक् समांसलस्फिक् सुखान्वितो भवति ।**
**व्याघ्रान्तोऽध्यर्धस्फिग् मण्डूकस्फिग्नराधिपतिः ॥ १ ॥**

अतिस्थूलौ स्फिजौ यस्य स निःस्वो निर्धनो भवति । समांसलौ मांससंयुक्तौ स्फिजौ यस्य स सुखान्वितः सुखयुक्तो भवति । योऽध्यर्धस्फिक् स व्याघ्रान्तः । व्याघ्रः प्राणी तं मारयति । मण्डूको भेकस्तत्सदृशौ स्फिजौ यस्य स नराधिपती राजा भवति ॥ १७ ॥

तथा च ।

अतिस्थूलौ स्फिजौ यस्य निर्धनः स भवेन्नरः ।
समांसलस्फिक् सुखितो मण्डूकस्फिग्नराधिपः ॥
अध्यर्धस्फिग्नरो यस्तु व्याघ्रान्तः स तु कीर्तितः ।

अथ कटिजठरलक्षणमाह ।

**सिंहकटिर्मनुजेन्द्रः कपिकरभकटिर्धनैः परित्यक्तः ।**
**समजठरा भोगयुता घटपिठरनिभोदरा निःस्वाः ॥ १८ ॥**

सिंहसदृशी कटिर्यस्य स मनुजेन्द्रो राजा भवति । कपिर्वानरः । करभ उष्ट्रः । कपिकरभसदृशी कटिर्यस्य स धनैर्वित्तैः परित्यक्तो वर्जितः । समजठरास्तुल्योदरा न निम्नं नोन्नतं जठरं येषां ते भोगयुता भोगिनः । घटः कुम्भः । पिठरो भाण्डविशेषः । तन्निभमुदरं येषां ते निःस्वा निर्धनाः ॥ १८ ॥

तथा च ।

सिंहतुल्या कटिर्यस्य स नरेन्द्रो न संशयः ।
श्वशृगालखरोष्ट्राणां तुल्या यस्य स निर्धनः ॥
समोदरा भोगयुता विषमा निर्धनाः स्मृताः ।

अथ पार्श्वकुक्षोदरलक्षणमाह ।

**अविकलपार्श्वा धनिनो निम्नैर्वक्रैश्च भोगसन्त्यक्ताः ।**
**समकुक्षा भोगाढ्या निम्नाभिर्भोगपरिहीनाः ॥ १९ ॥**
**उन्नतकुक्षाः क्षितिपाः कुटिलाः स्युर्मानवा विषमकुक्षाः ।**
**सर्पोदरा दरिद्रा भवन्ति बह्वाशिनश्चैव ॥ २० ॥**

कट्या उपरि चतुरङ्गुलो भागः पार्श्वशब्दवाच्यः । अविकले परिपूर्णे समांसले पार्श्वे येषां ते धनिन ईश्वराः । निम्नैः पार्श्वैर्वक्रैश्च दीर्घैर्भोगसन्त्यक्ता भोगरहिताः । कुक्षाशब्देनोदरमध्यभाग उच्यते । समा तुल्या कुक्षा येषां ते भोगयुक्ताः । निम्नाभिः कुक्षाभिर्भोगपरिहीना भोगरहिता भवन्ति ॥ १९ ॥

उन्नता उच्चा कुक्षा येषां ते क्षितिपा राजानः । विषमा अतुल्या कुक्षा येषां ते मानवाः पुरुषाः कुटिलाः कठिनाः स्युर्भवेयुः । सर्पसदृशमतिदीर्घमुदरं येषां ते दरिद्रा निर्धना बह्वाशिनः प्रभूताहाराश्च भवन्ति ॥ २० ॥

तथा च ।

पार्श्वैः समांसोपचितैर्धनिनो मानवाः स्मृताः ।
निम्नैर्वक्रैश्च विषमैर्नरा भोगविवर्जिताः ॥

समकुक्षा भोगयुक्ता निम्नाभिर्भोगवर्जिताः ।
नृपाश्चोन्नतकुक्षाः स्युर्विषमाभिर्दुराशयाः ॥
सर्पोदरा नरा निःस्वाः स्मृता बह्वाशिनस्तथा–इति ।

अथ नाभिलक्षणमाह ।

**परिमण्डलोन्नताभिर्विस्तीर्णाभिश्च नाभिभिः सुखिनः ।**
**अल्पा त्वदृश्यनिम्ना नाभिः क्लेशावहा भवति ॥ २१ ॥**
**वलिमध्यगता विषमा शूलाद्बाधां करोति नैस्व्यं च ।**
**शाठ्यं वामावर्त्ता करोति मेधां प्रदक्षिणतः ॥ २२ ॥**
**पार्श्वायता चिरायुषमुपरिष्टाच्चेश्वरं गवाढ्यमधः ।**
**शतपत्त्रकर्णिकाभा नाभिर्मनुजेश्वरं कुरुते ॥ २३ ॥**

परिमण्डलाभिः परिवर्तुलाभिरुन्नताभिरुच्चाभिर्विस्तीर्णाभिः पृथुलाभिर्नाभिभिः सुखिनो भवन्ति । अल्पाऽसङ्कुला । अदृश्याऽलक्ष्या । निम्ना गम्भीरा नातिविस्तीर्णा नाभिः क्लेशावहा क्लेशप्रदा भवति ॥ २१ ॥

वलिमध्यगतेति । वलिमध्ये यस्य नाभी गता । तथा विषमा अतुल्या शूलाद्बाधां करोति शूलाद्विन्नतनोस्तस्य मृत्युर्भवति । नैःस्व्यं निर्धनत्वं च करोति । वामावर्त्ता नाभिः शाठ्यं शठभावं करोति । शठः परकार्यविमुखः ।

तथा च ।

वचसा मनसा यश्च दृश्यतेऽकार्यतत्परः ।
कर्मणा विपरीतश्च स शठः सद्भिरिष्यते ॥

प्रदक्षिणतः प्रदक्षिणावर्त्ता मेधां बुद्धिं शोभनां करोति ॥ २२ ॥

अष्टाङ्गगुणयुक्ता बुद्धिर्विवक्षिता ।

तथा च ।

शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा ।
ऊहाऽपोहार्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥

पार्श्वयोरायता विस्तीर्णा चिरायुषं चिरजीवितं कुरुते । उपरिष्टादायता चेश्वरं समृद्धम् । अध आयता गवाढ्यं गोबाहुल्यम् । शतपत्त्रं पद्मं तस्य

कर्णिका मध्यभागस्तदाभा तत्सदृशी नाभिर्मध्योन्नता । मध्येऽन्तः पद्मकर्णिकाकार उन्नभागो भवति । सा मनुजेश्वरं कुरुते ॥ २३ ॥

तथा च ।

वर्तुला विपुलात्युग्रा नाभिर्यदि नरेश्वरः ।
अल्पदृश्या तथा निम्ना नाभिः क्लेशावहा भवेत् ॥
वलिमध्यगता या च सा शूलाद्बधकारिणी ।
वामावर्ता शाठ्यभावं धिषणां च प्रदक्षिणा ॥
पार्श्वायता दीर्घजीवं धनयुक्तं तथोर्ध्वगा ।
अधो गोबाहुलं कुर्यान्नाभिर्भोगसमन्वितम् ॥
पद्मस्य कर्णिकातुल्या नाभिः कुर्यान्नरेश्वरम् ।

अथोदरवर्तिनीनां वलीनां लक्षणमाह ॥

**शस्त्रान्तं स्त्रीभोगिनमाचार्यं बहुसुतं यथासङ्ख्यम् ।**
**एकद्वित्रिचतुर्भिर्वलिभिर्विन्द्यान्नृपं त्ववलिम् ॥ २४ ॥**
**विषमवलयो मनुष्या भवन्त्यगम्याभिगामिनः पापाः ।**
**ऋजुवलयः सुखभाजः परदारद्वेषिणश्चैव ॥ २५ ॥**

शस्त्रान्तमिति । उदरमध्यगताभिरेकाद्याभिर्वलिभिर्यथासङ्ख्यं यथाक्रमं शस्त्रान्तादयो भवन्ति । तद्यथा । एकवलिर्यस्योदरे भवति स शस्त्रान्तम् । शस्त्रेण म्रियते । द्वाभ्यां स्त्रीभोगिनं स्त्रीबहुलम् । त्रिभिराचार्यमुपदेशकारिणम् । चतुर्भिर्बहुसुतं प्रभूतपुत्रम् । अवलिं वलिरहितं नृपं राजानं विन्द्याज्जानीयात् ॥ २४ ॥

ये मनुष्याः पुरुषा विषमवलयोऽसमवलयः । काश्चिद्दीर्घाः काश्चिद्ध्रस्वा येषां ते । अगम्याभिगामिनः । अगम्यागमनशीलाः पापाश्च भवन्ति । ये च ऋजुवलयः स्पष्टवलयस्ते सुखभाजः सुखिताः परदारद्वेषिणः परस्त्रीषु द्वेषशीला वैरिणो भवन्ति ॥ २५ ॥

तथा च ।

एकवलिः शस्त्रमृत्युः स्त्रीभोगी द्विवलिः स्मृतः ।
त्रिभिराचार्य इत्याहुश्चतुर्भिः स्याद्बहुप्रजः ॥

अवलिस्तु नृपः प्रोक्तो यज्वा दानैकतत्परः ।
विषमा वलयो येषु ते चागम्याभिगामिनः ॥
ऋज्व्यस्तु वलयो येषु ते नराः सुखभागिनः ।

अथ पार्श्वलक्षणमाह ।

**मांसलमृदुभिः पार्श्वैः प्रदक्षिणावर्त्तरोमभिर्भूपाः ।**
**विपरीतैर्निर्द्रव्याः सुखपरिहीनाः परप्रेष्याः ॥ २६ ॥**

कटेरुपरि चतुरङ्गुलो भागः पार्श्वशब्दवाच्यः । पार्श्वैर्मांसलैर्घनैः । मृदुभिः कोमलैः । प्रदक्षिणावर्त्तरोमभिः । प्रदक्षिणावर्त्तेन रोमाणि यानि तथाभूतैर्भूपा राजानो भवन्ति । विपरीतैरमांसलैः कठिनैर्वामावर्त्तरोमभिर्निर्द्रव्या निर्धनाः सुखैः परिहीना रहिताः परेषां प्रेष्याः कर्मकराश्च भवन्ति ॥ २६ ॥

तथा च मांसलैर्मृदुभिः पार्श्वैर्दक्षिणावर्त्तरोमभिः ।
नरा भूम्यधिपा ज्ञेया विपरीतैः सुदुःखिताः ॥

अथ चूचुकानां लक्षणमाह ।

**सुभगा भवन्त्यनुद्बद्धचूचुका निर्धना विषमदीर्घैः ।**
**पीनोपचितनिमग्नैः क्षितिपतयश्चूचुकैः सुखिनः ॥ २७ ॥**

चूचुकं स्तनाग्रम् । अनुद्बद्धैरनूर्ध्वप्रेक्षकैश्चूचुकैः सुभगा भवन्ति । विषमैरतुल्यैर्दीर्घैश्च चूचुकैर्निर्धना दरिद्रा भवन्ति । पीनैः कठिनैरुपचितैः समांसलैर्निमग्नैरनुद्बद्धैश्चूचुकैः क्षितिपतयो राजानो भवन्ति ते च सुखिनः सुखभाजः ॥ २७ ॥

तथा च ।

चूचुकैश्चाप्यनुद्बद्धैः सुभगाः सुखभागिनः ।
निर्धना विषमैर्दीर्घैर्मग्नैर्मांसयुतैर्नृपाः ॥

अथ हृदयलक्षणमाह ।

**हृदयं समुन्नतं पृथु न वेपनं मांसलं च नृपतीनाम् ।**
**अधनानां विपरीतं खररोमचितं शिरालं च ॥ २८ ॥**

हृदयं समुन्नतमुच्चं पृथु विस्तीर्णं न वेपनमकम्पनं मांसलं च नृपतीनां राज्ञां भवति । विपरीतं निम्नमविस्तीर्णं कम्पनममांसलमधनानां दरिद्राणां

भवति। तथा खररोमचितं कृशस्थूलरोमसंयुक्तं शिरालं शिरासन्ततं च अधनानामेव ॥ २८ ॥

तथा च।

अचलं च पृथूच्चं च नृपाणां हृदयं स्मृतम्।
विपरीतं शिरालं च रोमशं दुःखभागिनम् ॥

अथ वक्षोलक्षणमाह।

**समवक्षसोऽर्थवन्तः पीनैः शूरा ह्यकिञ्चनास्तनुभिः।**
**विषमं वक्षो येषां ते निःस्वाः शस्त्रनिधनाश्च ॥ २९ ॥**

समं न निम्नं नात्युच्चं वक्ष उरो येषां ते अर्थवन्तो धनिनः। पीनैर्मांसलैः कठिनैश्च वक्षोभिः शूरा भवन्ति। तनुभिरल्पमांसैर्हि। अकिञ्चना अकिञ्चित्कराः पुरुषकारहीनाः। येषां वक्षो विषममतुल्यं ते निःस्वा निर्धनाश्च शस्त्रनिधनाश्च शस्त्रमृत्यवो भवन्ति ॥ २९ ॥

तथा च।

अर्थवान् समवक्षाः स्यात् दीर्घैः शूरा धनान्विताः।
अल्पैश्च विकला दीना विषमैः शस्त्रमृत्यवः ॥

अथ जत्रुलक्षणमाह।

**विषमैर्विषमो जत्रुभिरर्थविहीनोऽस्थिसन्धिपरिणद्धैः।**
**उन्नतजत्रुर्भोगी निम्नैर्निःस्वोऽर्थवान् पीनैः ॥ ३० ॥**

जत्रुः कुक्षयोः सन्धिः। विषमैरतुल्यैर्जत्रुभिर्विषमः क्रूरो भवति। अस्थिसन्धिपरिणद्धैः। अस्थ्नां सन्धयोऽस्थिसन्धयः। तैः परिणद्धैर्नद्धैरर्थविहीनो निर्धनो भवति। उन्नत उच्चो जत्रुर्यस्य स भोगी भोगवान् भवति। निम्नैर्जत्रुभिर्निःस्वो दरिद्रो भवति। पीनैः पीवरैर्जत्रुभिरर्थवान् धनी भवति ॥ ३० ॥

तथा च।

जत्रुभिर्विषमैः क्रूरा दरिद्राः क्रूरसन्धिभिः।
भोगी चोन्नतजत्रुः स्यान्निम्नैर्निःस्वोऽन्यथा धनी ॥

अथ ग्रीवापृष्ठलक्षणमाह ।

**चिपिटग्रीवो निःस्वः शुष्का सशिरा च यस्य वा ग्रीवा ।**
**महिषग्रीवः शूरः शस्त्रान्तो वृषसमग्रीवः ॥ ३१ ॥**
**कम्बुग्रीवो राजा प्रलम्बकण्ठः प्रभक्षणो भवति ।**
**पृष्ठमभग्नमरोमशमर्थवतामशुभदमतोऽन्यत् ॥ ३२ ॥**

चिपिटा चर्पटाऽस्पष्टा ग्रीवा यस्य स निःस्वो निर्धनो भवति। यस्य च शुष्का निर्मांसा सशिरा शिरासन्तता ग्रीवा भवति स निःस्व एव निर्धन एव। महिषसदृशग्रीवः शूरो भवति। वृषसमग्रीवो दान्ततुल्यकन्धरः शस्त्रान्तो भवति शस्त्रेण म्रियते ॥ ३१ ॥

वलित्रयं ग्रीवायां यस्य भवति स कम्बुग्रीवः ।

तथा चोक्तम् ।

वलित्रयचितग्रीवः कम्बुग्रीवोऽभिधीयते—इति ।

यश्च कम्बुग्रीवः स राजा भवति । प्रलम्बकण्ठः । प्रलम्बः कण्ठो यस्य स प्रभक्षणो भवति । असङ्क्षयशीलः ।

तथा च ।

ग्रीवा च वर्तुला यस्य स नरो धनवान् स्मृतः ।
कम्बुग्रीवा नरा ये तु राजानस्ते न संशयः ॥
दीर्घग्रीवा नरा ये तु तेऽपि दुःखस्य भागिनः ।
वक्रग्रीवा नरा ये ते दाम्भिकाः पिशुनास्तथा ॥
निःस्वस्तु चिपिटग्रीवः शुष्कग्रीवस्तथैव च ।
शूरस्तु महिषग्रीवः शस्त्रान्तो वृषकन्धरः ॥

पृष्ठमभग्नमस्फुटितमरोमशं रोमवर्जितमर्थवतां सधनानां भवति । अतोऽस्मादन्यद्भग्नं रोमशमशुभदं निर्धनानां भवति ॥ ३२ ॥

तथा च ।

सुस्निग्धं मांसलं पृष्ठमभग्नं चाप्यरोमशम् ।
सधनानां विपर्यस्तं निर्धनानां प्रकीर्तितम् ॥

अथ कक्षालक्षणमाह ।

**अस्वेदनपीनोन्नतसुगन्धसमरोमसङ्कुलाः कक्षाः ।**
**विज्ञातव्या धनिनामतोऽन्यथार्थैर्विहीनानाम् ॥ ३३ ॥**

बाहुमूलतलं कक्षाशब्देनोच्यते । कक्षा अस्वेदनाः स्वेदरहिताः पीनाः समांसला उन्नता उच्चाः सुगन्धाः शोभनगन्धाः समास्तुल्या रोमसङ्कुला रोमभिर्युक्ताः । धनिनामीश्वराणां विज्ञातव्या ज्ञेयाः । अतोऽस्मादन्यथा विपरीतलक्षणाः सस्वेदना निर्मांसा निम्ना दुर्गन्धा विषमा रोमवर्जिता अर्थैर्विहीनानां धनरहितानां भवन्ति ॥ ३३ ॥

तथा च ।

निःस्वेदमांसलाः कक्षाः सुगन्धा रोमसङ्कुलाः ।
धनिनां तु विजानीयान्निर्धनानामतोऽन्यथा ॥

अथांसलक्षणमाह ।

**निर्मांसौ रोमचितौ भग्नावल्पौ च निर्धनस्यांसौ ।**
**विपुलावव्युच्छिन्नौ सुश्लिष्टौ सौख्यवीर्यवताम् ॥ ३४ ॥**

अंसौ स्कन्धौ निर्मांसौ मांसरहितौ रोमचितौ रोमव्याप्तौ भग्नौ स्फुटितावल्पौ निर्धनस्य दरिद्रस्य । विपुलावव्युच्छिन्नावभग्नौ सुश्लिष्टौ सुसंलग्नौ सौख्यवीर्यवतां सुखिनां बलिनां च भवतः ॥ ३४ ॥

तथा च ।

कदलीस्तम्भसङ्काशा अजस्कन्धाश्च ये नराः ।
राजानस्ते विजानीयुर्महाकोशा महाबलाः ॥
निर्मांसरोमबहुला निर्धनस्य प्रकीर्तिताः ।

अथ बाहुलक्षणमाह ।

**करिकरसदृशौ वृत्तावाजान्ववलम्बिनौ समौ पीनौ ।**
**बाहू पृथिवीशानामधनानां रोमशौ ह्रस्वौ ॥ ३५ ॥**

बाहू भुजौ करिकरसदृशौ गजहस्ततुल्यौ वृत्तौ परिवर्तुलौ । आजान्ववलम्बिनौ जानुसम्प्राप्तौ समौ तुल्यौ पीनौ समांसलौ पृथिवीशानां राज्ञां विज्ञातव्यौ । रोमशौ रोमयुक्तौ ह्रस्वावदीर्घावधनानां निर्धनानां विज्ञेयौ ॥ ३५ ॥

तथा च ।

उद्वृत्तबाहुः पुरुषो बधबन्धमवाप्नुयात् ।
दीर्घबाहुर्भवेद्राजा समुद्रवचनं यथा ॥
प्रलम्बबाहुरैश्वर्यं प्राप्नुयाद्गुणसंयुतम् ।
ह्रस्वबाहुर्भवेद्दासः परप्रेष्यकरस्तथा ॥
वामावर्तभुजा ये तु ये तु दीर्घभुजा नराः ।
सम्पूर्णबाहवो ये तु राजानस्ते प्रकीर्तिताः ॥

इदानीं हस्तलक्षणान्याह ।

**हस्ताङ्गुलयो दीर्घाश्चिरायुषामवलिताश्च सुभगानाम् ।**
**मेधाविनां च सूक्ष्माश्चिपिटाः परकर्मनिरतानाम् ॥ ३६ ॥**
**स्थूलाभिर्धनरहिता बहिर्नताभिश्च शस्त्रनिर्याणाः ।**
**कपिसदृशकरा धनिनो व्याघ्रोपमपाणयः पापाः ॥ ३७ ॥**

दीर्घा अह्रस्वा हस्ताङ्गुलयः करशाखाः चिरायुषां दीर्घजीविनां भवन्ति। अवलिता अवेष्टिताः सुस्पष्टाश्च सुभगानां सौभाग्ययुक्तानां भवन्ति। सूक्ष्मा अस्थूला मेधाविनां बुद्धिमतां भवन्ति । अत्र केचिन्मेधाबुद्धिप्रज्ञाणां विशेषमिच्छन्ति ।

तथा चोक्तम् ।

अतितानस्मृतिर्मेधा तत्कालग्राहिणी मतिः ।
शुभाशुभविचारज्ञा प्रज्ञा धीरैरुदाहृता ॥

परकर्मनिरतानां परप्रेष्याणां चिपिटाश्चपेटा भवन्ति ॥ ३६ ॥

स्थूलाभिरतिबृहतीभिरङ्गुलीभिर्धनरहिता निर्धना भवन्ति । बहिर्नताभिर्बाह्यविनताभिः शस्त्रनिर्याणाः शस्त्रेण निर्याणं मरणं येषाम् । कपिसदृशकरा वानरतुल्यहस्ता धनिन ईश्वरा भवन्ति । व्याघ्रोपमपाणयः । व्याघ्रः प्राणी । तत्सदृशहस्ताः पापा भवन्ति ॥ ३७ ॥

अन्यदप्याह ।

**मणिबन्धनैर्निगूढैर्दृढैश्च सुश्लिष्टसन्धिभिर्भूपाः ।**
**हीनैर्हस्तच्छेदः श्लथैः सशब्दैश्च निर्द्रव्याः ॥ ३८ ॥**

मणिबन्धनशब्देन हस्तमूलमुच्यते । निगूढैरनुल्बणैर्मणिबन्धनैर्दृढै-रशिथिलैः सुश्लिष्टसन्धिभिः सुसंलग्नमर्मभिर्भूपा राजानो भवन्ति । हीनैर्म-णिबन्धैर्हस्तच्छेदो भवति । श्लथैः शिथिलैः सशब्दैः शब्दयुक्तैर्निर्द्रव्या निर्धना भवन्ति ॥ ३८ ॥

अन्यदप्याह ।

**पितृवित्तेन विहीना भवन्ति निम्नेन करतलेन नराः ।**
**संवृतनिम्नैर्धनिनः प्रोत्तानकराश्च दातारः ॥ ३९ ॥**
**विषमैर्विषमा निःस्वाश्च करतलैरीश्वरास्तु लाक्षाभैः ।**
**पीतैरगम्यवनिताभिगामिनो निर्धना रूक्षैः ॥ ४० ॥**

नरा मनुष्या निम्नेन करतलेन पितृवित्तेन पैतृकेण धनेन विहीना रहिता भवन्ति । संवृतनिम्नैः समं परिवर्तुलं कृत्वा निम्नैर्धनिनः सधना भवन्ति । प्रोत्तानकराः प्रकर्षेणोत्तान उच्चः करो हस्तो येषां ते दातारो दानशीला भवन्ति ॥ ३६ ॥

विषमैरसमैः करतलैर्विषमाः क्रूरा निःस्वा निर्धनाश्च भवन्ति । लाक्षाभैरतिलोहितैः करतलैरीश्वराः सधना भवन्ति । पीतैर्हस्ततलैरगम्यानां वनितानां स्त्रीणामभिगामिनो गमनशीला भवन्ति । रूक्षैर्हस्ततलैर्निर्धना दरिद्राः ॥ ४० ॥

अन्यदप्याह ।

**तुषसदृशनखाः क्लीबाश्चिपिटैः स्फुटितैश्च वित्तसन्त्यक्ताः ।**
**कुनखविवर्णैः परतर्ककाश्च ताम्रैश्चमूपतयः ॥ ४१ ॥**

तुषैः सदृशाः सङ्कुलरेखान्विता रूक्षा नखा येषां ते क्लीबाः षण्ढा भवन्ति । चिपिटैश्चर्पटैः स्फुटितैर्भग्नैश्च वित्तसन्त्यक्ता धनरहिता भवन्ति । कुनखैः कुत्सितैर्नखैर्विवर्णैर्विगतवर्णैरपि परतर्ककाः परमुखप्रेक्षिणो भवन्ति । ताम्रैस्ताम्रवर्णैश्च नखैश्चमूपतयः सेनाधिपा भवन्ति ॥ ४१ ॥

अन्यदप्याह ।

**अङ्गुष्ठयवैराढ्याः सुतवन्तोऽङ्गुष्ठमूलजैश्च यवैः ।**
**दीर्घाङ्गुलिपर्वाणः सुभगा दीर्घायुषश्चैव ॥ ४२ ॥**

यवो यवाकार एव । अङ्गुष्ठमध्यगतैर्यवैराढ्या धनिनो भवन्ति । अङ्गुष्ठमूलजातैर्यवैः सुतवन्तः पुत्रवन्तः । दीर्घाङ्गुलिपर्वाणः । दीर्घाण्यङ्गुलिपर्वाणि येषां ते सुभगाः सौभाग्योपेता दीर्घायुषश्चिरजीविनश्च भवन्ति ॥ ४२ ॥

अन्यदप्याह ।

**स्निग्धा निम्ना रेखा धनिनां तद्व्यत्ययेन निःस्वानाम् ।**
**विरलाङ्गुलयो निःस्वा धनसञ्चयिनो घनाङ्गुलयः ॥ ४३ ॥**

स्निग्धा निर्मला निम्ना गम्भीरा रेखाः करगता धनिनामीश्वराणां भवन्ति । तद्व्यत्ययेन विपरीतेनास्निग्धा अनिम्ना निःस्वानां निर्धनानां भवन्ति । विरला विप्रकृष्टा अङ्गुलयः करशाखा येषां ते निःस्वा निर्धनाः । घनाङ्गुलयो धनसञ्चयिनो धनार्जनशीला भवन्ति ॥ ४३ ॥

अन्यदप्याह ।

**तिस्रो रेखा मणिबन्धनोत्थिताः करतलोपगा नृपतेः ।**
**मीनयुगाङ्कितपाणिर्नित्यं सत्रप्रदो भवति ॥ ४४ ॥**
**वज्राकारा धनिनां विद्याभाजां च मीनपुच्छनिभाः ।**
**शङ्खातपत्रशिविकागजाश्वपद्मोपमा नृपतेः ॥ ४५ ॥**
**कलशमृणालपताकाङ्कुशोपमाभिर्भवन्ति निधिपालाः ।**
**दामनिभाभिश्चाढ्याः स्वस्तिकरूपाभिरैश्वर्यम् ॥ ४६ ॥**
**चक्रासिपरशुतोमरशक्तिधनुःकुन्तसन्निभा रेखाः ।**
**कुर्वन्ति चमूनाथं यज्वानमुलूखलाकाराः ॥ ४७ ॥**
**मकरध्वजकोष्ठागारसन्निभाभिर्महाधनोपेताः ।**
**वेदीनिभेन चैवाग्निहोत्रिणो ब्रह्मतीर्थेन ॥ ४८ ॥**
**वापीदेवकुलाद्यैर्धर्मं कुर्वन्ति च त्रिकोणाभिः ।**
**अङ्गुष्ठमूलरेखाः पुत्राः स्युर्दारिकाः सूक्ष्माः ॥ ४९ ॥**
**रेखाः प्रदेशिनिगताः शतायुषं कल्पनीयमूनाभिः ।**
**छिन्नाभिर्द्रुमपतनं बहुरेखारेखिणो निःस्वाः ॥ ५० ॥**

तिस्रो रेखा इति । मणिबन्धनोत्थितास्तिस्रो रेखाः करतलोपगाः करतले हस्ततले उपगाः प्राप्ता नृपते राज्ञो भवन्ति । मीनयुगेन मत्स्यद्व-

येनाङ्कितश्चिह्नितः पाणिर्हस्तो यस्य स नित्यं सर्वकालं सत्त्रप्रदो भवति सत्त्रकृद्भवतीत्यर्थः ॥ ४४ ॥

वज्रं मध्यक्षाममुभयाग्रविस्तृतम् । तदाकारास्तत्सदृश्यः करतले रेखा धनिनामीश्वराणां भवन्ति । मीनपुच्छनिभा मत्स्यपुच्छाकारा विद्याभाजां भवन्ति । विद्यावन्तश्च ते भवन्तीत्यर्थः । शङ्खः प्रसिद्धः । आतपत्रं छत्रम् । शिबिका युग्यादिकम् । गजो हस्ती । अश्वस्तुरगः । पद्मं कमलम् । एषामुपमास्तदाकारा रेखा नृपते राज्ञो भवन्ति ॥ ४५ ॥

कलशः कुम्भः । मृणालं विसं स्पष्टं मध्यात् मध्याद्ग्रन्थियुक्तम् । पताका वैजयन्ती । अङ्कुशः प्रसिद्धः । एषामुपमाभिस्तदाकाराभिर्लेखाभिर्निधिपाला भूमावर्थस्थापनशीला भवन्ति । अतिधनिनश्च । दामनिभाभी रज्ज्वाभाभिश्चाढ्या ईश्वरा भवन्ति । स्वस्तिकश्चिन्हविशेषस्तद्रूपाभिस्तदाकाराभिरैश्वर्यं भवति ॥ ४६ ॥

. चक्रमायुधम् । असिः खड्गः । परशुरायुधविशेषः कुठारः । तोमरः प्रसिद्धः । शक्तिः प्रसिद्धा । धनुश्चापम् । कुन्त आयुधविशेषः । एषां सन्निभास्तदाकारा रेखाः करतलोपगाश्चमूनाथं सेनापतिं कुर्वन्ति । उलूखलाकारा रेखा यज्वानं याज्ञिकं कुर्वन्ति ॥ ४७ ॥

मकरो जलप्राणी । ध्वजश्चिह्नम् । विचित्रपटनिर्मितत्वाद्वैचित्र्यमस्य भवति पताकातः । कोष्ठागारं प्रसिद्धमेव । एषां सन्निभाभिः सदृशीभी रेखाभिर्महाधनोपेता अतिधनिनः । मणिबन्धनस्योपरि ब्रह्मतीर्थमङ्गुष्ठमूले । ब्रह्मतीर्थेन अङ्गुष्ठमूलतीर्थेन वेदीनिभेन वेद्याकृतिना अग्निहोत्रिणो यजमाना भवन्ति ॥ ४८ ॥

वापी प्रसिद्धा चतुरस्रा पुष्करिणी । देवकुलं देवप्रासादः । आदिग्रहणात् सिंहासनश्रीवृक्षयूपा गृह्यन्ते । तैर्धर्मं कुर्वन्ति धर्मिष्ठा भवन्ति । त्रिकोणाभिस्त्र्यस्राभिः शृङ्गाटकाकाराभिश्चशब्दात् धर्ममेव कुर्वन्ति । अङ्गुष्ठमूले यावत्यो रेखास्तान्यपत्यानि । तासां याः स्थूलास्ते पुत्राः सुताः । याश्च सूक्ष्मास्ता दारिका दुहितारः ॥ ४९ ॥

प्रदेशिनी अङ्गुष्ठानन्तरा । बहुवचननिर्देशात् तिस्रो रेखा अत्र ज्ञातव्याः । प्रदेशिनीगतास्तत्प्राप्तरेखाः शतायुषं शतजीवितं कुर्वन्ति । रेखा-

भिन्नाभिः स्वबुद्ध्या कल्पनीयम्। यथा हस्तमध्यप्राप्ताभिः पञ्चाशत्। अन्यथानुपातादायुषः परिकल्पना कार्या। रेखाभिश्छिन्नाभिर्मध्याच्छिन्नाभिर्द्रुमपतनं वृक्षपतनं भवति। बह्व्यो रेखा येषां ते बहुरेखाः। न विद्यन्ते रेखा येषां ते अरेखिणः। बहुरेखा अरेखिणश्च निःस्वा निर्धना भवन्ति॥ ५०॥

तथा च।

सुवर्तुलैर्निगूढैश्च मणिबन्धैः समन्विताः।
दृढैश्च शब्दरहितै राजानस्ते प्रकीर्तिताः॥
हीनैश्च छिन्नपाणिः स्यात् श्लथैर्दारिद्र्यभाजनः।
निम्ने करतले यस्य पितृवित्तविवर्जितः॥
निम्नेन संवृतेनैव वित्तवान् सौख्यसंयुतः।
समुत्तानकरा ये च दातारस्ते न संशयः॥
विषमैर्विषमा निःस्वा लाक्षाभैरीश्वराः करैः।
अगम्यागामिनः पीतैर्नखैर्हस्तैश्च निर्धनाः॥
शूर्पशुक्ती तुषनखा नैकवर्णा महानखाः।
स्फुटिताधनखाश्चैव स्मृता द्रव्यविवर्जिताः॥
निर्मलैर्लोहिताभैश्च नखैर्भवति पार्थिवः।
पाण्डुरा विरला ह्रस्वा अङ्गुल्यः करसंस्थिताः॥
येषां ते च नरा ज्ञेया दुःखदारिद्र्यभाजनाः।
यस्य मीनसमा रेखाः कर्मसिद्धिस्तु तस्य वै॥
धनवान् स तु विज्ञेयो बहुपुत्रश्च मानवः।
तुला यस्य तु वेदिर्वा करमध्ये प्रदर्शिता॥
वाणिज्यं सिद्ध्यते तस्य पुरुषस्य न संशयः।
वेदी पाणितले यस्य द्विजस्य तु विशेषतः॥
यज्ञयाजी भवेन्नित्यं बहुवित्तश्च मानवः।
श्रीवत्समथवा पद्मं वज्रं चामरमेव वा॥
यस्य हस्ते तु दृश्येत स भवेत् पृथिवीपतिः।
शक्तितोमरखड्गाभा रेखाश्चापसमास्तथा॥

यस्य हस्ते प्रदृश्यन्ते चमूनाथं च तं विदुः ।
वृक्षो वाप्यथवा शैलः करमध्ये तु दृश्यते ॥
अचलं प्राप्यते राज्यं मण्डले तु न संशयः ।
ध्वजं वाप्यथवा शृङ्गं दृश्यते करसंस्थितम् ॥
धनेशत्वं विजानीयात् समुद्रवचनं यथा ।
दक्षिणे तु कराङ्गुष्ठे यवो यस्य च दृश्यते ।
सर्वविद्याप्रवक्ताऽसौ भवतीति च निर्दिशेत् ॥
यस्य पाणितले रेखा कनिष्ठामूलसम्भवा ।
गता मध्ये प्रदेशिन्यां स जीवेच्छरदां शतम् ॥
अङ्गुष्ठमूले या रेखाः पुत्रास्ते परिकीर्तिताः ।
सूक्ष्माः कन्या विनिर्दिष्टाः समुद्रवचनं यथा ॥
छिन्नाभिर्वृक्षपतनं प्रभूताभिरनीश्वराः ।
अङ्गुष्ठमूलतीर्थेन यज्ञयाजी भवेन्नरः ॥

अथ चिबुकाधरदशनानां लक्षणमाह ।

**अतिकृशदीर्घैश्चिबुकैर्निर्द्रव्या मांसलैर्धनोपेताः ।**
**बिम्बोपमैरवक्रैरधरैर्भूपास्तनुभिरस्वाः ॥ ५१ ॥**
**ओष्ठैः स्फुटितविखण्डितविवर्णरूक्षैश्च धनपरित्यक्ताः ।**
**स्निग्धा घनाश्च दशनाः सुतीक्ष्णदंष्ट्राः समाश्च शुभाः ॥ ५२ ॥**

चिबुकमधरस्याधोभागो मुखान्तम् । अतिकृशैर्निर्मांसैरतिदीर्घैश्च चिबुकैर्निर्द्रव्या दरिद्रा भवन्ति । मांसलैश्चिबुकैर्धनोपेताः सधनाः । अधरैरोष्ठैर्बिम्बोपमैरतिलोहितैरवक्रैः स्पष्टैर्भूपा राजानो भवन्ति । तनुभिरमांसलैरधरैरस्वा निर्धना भवन्ति ॥ ५१ ॥

ओष्ठैरुत्तरैः स्फुटितैर्भग्नैर्विखण्डितैर्दलितैर्विवर्णैर्विगतवर्णै रूक्षैः निःस्नेहैश्च धनपरित्यक्ता दरिद्रा भवन्ति । दशना दन्ताः स्निग्धा निर्मला घनाश्च संहताः । सुतीक्ष्णदंष्ट्रा येषां ते समाश्च सर्वे तुल्याः शुभाः । मध्यभागवर्तिनो दन्तचतुष्टयस्य पार्श्ववर्तिनौ दंष्ट्रे ।

१ अवक्रं-इति क॰ पु॰ पाठः ।

तथा च ।

निर्मांसैश्चिपिटैर्दीर्घैर्निर्द्रव्याश्चाशुवाचिनः ।
समांसलैर्धनोपेता बहुपुत्रसमावृताः ॥
रक्ताधरो नरपतिर्धनवान् कमलाधरः ।
स्थूलोष्ठा बहुलोमाश्च शुष्कैः खण्डैश्च दुःखिताः ॥
उत्तरोष्ठैर्लोहितैश्च धनिनः सौख्यसंयुताः ।
खण्डैर्विवर्णैर्निर्द्रव्या रूक्षैर्दुःखसमन्विताः ॥
कुन्दकुड्मलसङ्काशैः प्राकारैर्दशनैर्नृपः ।
श्ववानरदन्ताश्च नित्यं क्षुत्परिपीडिताः ॥
हस्तिदन्ताः खररदाः स्निग्धदन्ता गुणान्विताः ।
करालैर्विषमैर्दीर्घैर्दशनैर्दुःखजीविनः ॥
द्वात्रिंशद्दन्ता राजान एकोनश्चापि भोगवान् ।
त्रिंशद्दन्ता नरा ये ते सुखदुःखस्य भागिनः ॥
एकोनत्रिंशद्दशना: पुरुषा दुःखजीविनः ।
अष्टाविंशद्रदा येषां तेऽतिदुःखस्य भाजनाः ॥

अथ जिह्वातात्वोर्लक्षणमाह ।

**जिह्वा रक्ता दीर्घा श्लक्ष्णा सुसमा च भोगिनो[1] ज्ञेया ।**
**श्वेता कृष्णा परुषा निर्द्रव्याणां तथा तालु ॥ ५३ ॥**

जिह्वा रसना रक्ता लोहितवर्णा दीर्घा आयामिनी, श्लक्ष्णा तनुप्राया सुस्पर्शा सुसमा च तुल्या भोगिनो ज्ञेया । अथवा भोगिनामिति पाठः । भोगिनां जिह्वा ज्ञेया ज्ञातव्येत्यर्थः । श्वेता पाण्डुरा कृष्णा असिता निर्द्रव्याणां दरिद्राणां भवति । तथा तालु । तथा तेनैव प्रकारेण तालु ज्ञेयम् । यथा जिह्वा रक्ता श्लक्ष्णा सुसमा च शोभना तथा तात्वपि शोभनम् । श्वेतं कृष्णं परुषं तात्वप्यशोभनम् ॥ ५३ ॥

तथा च ।

कृष्णजिह्वा भवेद्यस्य समला यदि वा भवेत् ।
स पापवान् भवेन्मर्त्यः कृशा सूक्ष्मा तथा भवेत् ॥

---

१ भोगिनाम्-इति पाठान्तरम् ।

श्वेतजिह्वा नरा ज्ञेयाः शौचाचारविवर्जिताः ।
पद्मपत्रसमा जिह्वा सूक्ष्मा दीर्घा सुशोभना ।
न स्थूला नातिविस्तीर्णा येषां ते मनुजाधिपाः ॥
निम्ना दीर्घा च ह्रस्वा च रक्ताग्रा रसना यदि ।
सर्वविद्याप्रवक्ताऽसौ भवेन्नास्त्यत्र संशयः ॥
कृष्णतालुर्नरो यस्तु स भवेत् कुलनाशनः ।
विकृतं स्फुटितं यस्य तालु तस्य न शोभनम् ॥
सिंहतालुर्नृपतिर्गजतालुस्तथैव च ।
पद्मतालुर्भवेद्राजा श्वेततालुश्च निर्धनः ॥

अथास्यलक्षणमाह ।

**वक्त्रं सौम्यं संवृतममलं श्लक्ष्णं समं च भूपानाम् ॥**
**विपरीतं क्लेशभुजां महामुखं दुर्भगाणां च ॥ ५४ ॥**

वक्त्रं मुखं सौम्यमनाकुलं संवृतं परिवर्त्तुलमविकासितम् । अमलं निर्मलं श्लक्ष्णं नातिमांसलं सुपार्श्वम् । समं तुल्यम् । भूपानां राज्ञां ज्ञेयम् । विपरीतं व्यस्तलक्षणम् । असौम्यमसंवृतमनिर्मलमश्लक्ष्णमसमं क्लेशभुजां दरिद्राणां ज्ञेयम् । महामुखमतिविस्तीर्णमास्यं दुर्भगाणां भवति ॥ ५४ ॥

तथा च ।

सौम्यं च संवृतं वक्त्रममलं यस्य देहिनः ।
महाराजो भवेन्नित्यं विपरीते तु निर्धनः ॥

अथ मुखलक्षणमाह ।

**स्त्रीमुखमनपत्यानां शाठ्यवतां मण्डलं परिज्ञेयम् ।**
**दीर्घं निर्द्रव्याणां भीरुमुखाः पापकर्माणः ॥ ५५ ॥**
**चतुरस्रं धूर्त्तानां निम्नं वक्रं च तनयरहितानाम् ।**
**कृपणानामतिह्रस्वं सम्पूर्णं भोगिनां कान्तम् ॥ ५६ ॥**

स्त्रीसदृशं मुखं वदनमनपत्यानामपुत्राणां भवति । मण्डलं मण्डलाकारं परिवर्त्तुलं शाठ्यवतां शठभावसंयुक्तानां परिज्ञेयं ज्ञातव्यम् ।

शठः परकार्यविमुखः । दीर्घं मुखं निर्द्रव्याणां भवति । भीरुमुखा भीतस्येव मुखं येषां ते पापकर्माणः पापानुरता भवन्ति ॥ ५५ ॥

चतुरस्रं चतुष्कोणं मुखं धूर्त्तानां परवञ्चनदक्षाणां भवति । निम्नं हीनं वक्रमस्पष्टं च तनयरहितानामपुत्राणां भवति । अतिह्रस्वमत्यल्पं कृपणानां भवति । कृपणोऽर्थलुब्धः स्तोकार्थश्च । सम्पूर्णं समांसलं कान्तं दीप्तिमद्भोगिनां भोगवतां च भवति ॥ ५६ ॥

तथा च ।

स्त्रीमुखं निरपत्यानां मण्डलं शाठ्यसेविनाम् ।
दीर्घं मुखं च निःस्वानां भीरुवक्त्रा दुराशयाः ॥
चतुरस्रं तु धूर्त्तानां निम्नं सुतविवर्जितम् ।
कृपणानां तथा ह्रस्वं चिपिटं परजीविनाम् ॥
यन्मुखं मांसलं स्निग्धं सप्रभं प्रियदर्शनम् ।
पर्णाढ्यसन्धिविश्लिष्टमजस्रं सुखभागिनाम् ॥

अथ श्मश्रुलक्षणमाह ।

**अस्फुटिताग्रं स्निग्धं श्मश्रु शुभं मृदु च सन्नतं चैव ।**
**रक्तैः परुषैश्चौराः श्मश्रुभिरल्पैश्च विज्ञेयाः ॥ ५७ ॥**

श्मश्रु कूर्चम् । अस्फुटिताग्रमभिन्नप्रान्तं स्निग्धं चाक्षुषं मृदु कोमलं सन्नतं सम्यङ्नतं शुभं प्रशस्तम् । केचिन्मृदुसमुन्नतं चैवेति पठन्ति । रक्तैर्लोहितैः परुषैः खरैरल्पैश्च श्मश्रुभिश्चौरास्तस्करा विज्ञेया ज्ञातव्याः ॥ ५७ ॥

तथा च ।

स्निग्धमस्फुटिताग्रं च सन्नतं श्मश्रु चेष्यते ।
रक्तैरल्पैस्तथा रूक्षैः श्मश्रुभिस्तस्कराः स्मृताः ॥

अथ कर्णलक्षणमाह ।

**निर्मांसैः कर्णैः पापमृत्यवश्चिपिटैः सुबहुभोगाः ।**
**कृपणाश्च ह्रस्वकर्णाः शङ्कुश्रवणाश्च भूपतयः ॥ ५८ ॥**

---

१ मृदुसमुन्नतं चैव—इति पाठान्तरम्

**रोमशकर्णा दीर्घायुषश्च धनभागिनो विपुलकर्णाः ।**
**क्रूराः शिरावनद्धैर्व्यालम्बैर्मांसलैः सुखिनः ॥ ५९ ॥**

निर्मांसैर्मांसरहितैः कर्णैः पापमृत्यवः पापेन कर्मणा म्रियन्ते । चर्पटैर्विकर्णैः सुबहुभोगा अतिभोगिनो भवन्ति । ह्रस्वकर्णा अल्पश्रोत्राः कृपणा अदानशीला भवन्ति । शङ्कुश्रवणास्तीक्ष्णाग्रकर्णाश्चभूपतयः सेनापतयो भवन्ति ॥ ५८ ॥

रोमशकर्णा लोमशश्रवणा दीर्घायुषश्चिरजीविनो भवन्ति । विपुलकर्णा विस्तीर्णश्रोत्रा धनभागिनो वित्तवन्तः । शिरावनद्धैः शिराबहुलैः कर्णैः क्रूरा विषमा भवन्ति । व्यालम्बैर्दीर्घैर्मांसलैश्च सुखिनो भवन्ति ॥ ५९ ॥

तथा च ।

ह्रस्वकर्णा महाभोगा महाकर्णाश्च ये नराः ।
आवर्तकर्णा धनिनः स्निग्धकर्णास्तथैव च ॥
दीर्घायुषः शङ्कुकर्णाः स्फुटकर्णा महाधनाः ।
सुखान्विता दीर्घकर्णा लम्बकर्णास्तपस्विनः ॥
निर्मांसैः पापमरणाश्चर्पटैर्भोगिनो नराः ।
दीर्घायुषो लोमकर्णा धनिनो विपुलैः स्मृताः ॥
शिरावनद्धैर्विषमा मांसलैः सुखभागिनः ।

अथ गण्डनासालक्षणमाह ।

**भोगी त्वनिम्नगण्डो मन्त्री सम्पूर्णमांसगण्डो य ।**
**सुखभाक् शुकसमनासश्चिरजीवी शुष्कनासश्च ॥ ६० ॥**
**छिन्नानुरूपयागम्यगामिनो दीर्घया तु सौभाग्यम् ।**
**आकुञ्चितया चौरः स्त्रीमृत्युः स्याच्चिपिटनासः ॥ ६१ ॥**
**धनिनोऽग्रवक्रनासा दक्षिणविनताः प्रभक्षणाः क्रूराः ।**
**ऋज्वी स्वल्पच्छिद्रा सुपुटा नासा सभाग्यानाम् ॥ ६२ ॥**

भोगीति । अनिम्नावुन्नौ गण्डौ मुखगण्डौ यस्य स भोगी भोगवान् भवति । यस्य सम्पूर्णौ मांसलौ गण्डौ स मन्त्री सचिवो भवति ।

तथा च ।

पुमान् सम्पूर्णगण्डो यः स मन्त्री समुदाहृतः ।
निम्नगण्डो भवेद्यस्तु स नरो भोगवान् स्मृतः ॥

सुखभागिति । शुकः पक्षी । शुकसमा तदाकारा नासा यस्य । अयः कुञ्चितलोहित–इति यावत् । स सुखभाग्भवति । शुष्का निर्मांसा नासा यस्य स चिरजीवी दीर्घायुर्भवति ॥ ६० ॥

छिन्नेव या नासा दृश्यते सा छिन्नानुरूपा तयागम्यगामिनोऽगम्यगमनशीला भवन्ति । दीर्घया नासया सौभाग्यं भवति । आकुञ्चितया नासयाऽस्पष्टया नासया चोरस्तस्करो भवति । चिपिटनासश्चर्पटघ्राणः स्त्रीमृत्युः स्याद्भवेत् । स्त्री तस्य मारयति–इत्यर्थः ॥ ६१ ॥

अग्रवक्रा प्रान्तकुटिला नासा येषां ते धनिनो वित्तान्विताः । दक्षिणभागे विनता वक्रा नासा येषां ते प्रभक्षणा अभक्ष्यशीलाः क्रूरा विषमाश्च भवन्ति । ऋज्वी स्पष्टा स्वल्पच्छिद्रा अल्परन्ध्रा सुपुटा शोभनपुटा सभाग्यानां भाग्यसंयुक्तानां नासा भवति ॥ ६२ ॥

तथा च ।

शुकनासः सौख्यभागी शुष्कनासश्चिरायुषः ।
छिन्नानुरूपा येषां स्यान्नासा तेऽगम्यगामिनः ॥
दीर्घनासा भोगयुक्ता अग्रवक्रा धनान्विताः ।
क्रूरा दक्षिणवक्राश्च स्पष्टनासा नृपोत्तमाः ॥
स्त्रीमृत्यवश्चर्पटाभिः कुटिलाभिश्च तस्कराः ।

अथ क्षुतलक्षणमाह ।

**धनिनां क्षुतं सकृद्द्वित्रिपिण्डितं ह्लादि सानुनादं च ।**
**दीर्घायुषां प्रमुक्तं विज्ञेयं संहतं चैव ॥ ६३ ॥**

धनिनामीश्वराणां क्षुतं नासाशब्दितं सकृदेकवारं द्वित्रिपिण्डितं द्विगुणितं त्रिगुणितम् । एवं केचित् । अन्ये पुनर्व्याचक्षते । धनिनामीश्वराणां क्षुतं सकृदेकवारमेव भवति । दीर्घायुषमुद्दिश्य द्वित्रिपिण्डितमेकीकृतं ह्लादि सानुनादं प्रमुक्तं संहतं चेति । ये दीर्घायुषः चिरञ्जीविनस्तेषां द्विपिण्डितं

द्विगुणितं चि.पाण्डुरं त्रिगुणितं भवति। तथा ह्रादि युगपद्बहूनां जल्पतामुपहत्य योऽधिकं श्रूयते स ह्रादि। तथा सानुनादं दूरादपि शनैः शनैरन्नायमानः श्रुतिपथं याति सोऽनुनादः। तथा प्रमुक्तमतिदीर्घम्। संहतं चैवमनेन प्रकारेण विज्ञेयं ज्ञातव्यम्। तथोदीरितः।

आदिमध्यावसानेषु तुल्यो यः स च संहतः।

क्रोधहर्षव्याधिभयादिष्वविकृतः श्रोत्रपथं याति यः स स्निग्धः। यतः सर्वजनमनोऽभिप्रेतः सरक्तः। एतदेव व्याख्यानं शोभनम्।

यस्मात् पराशरः।

सकृत् श्रुतं भोगवतां द्विर्धनाय चिरायुषे।
चतुः स्याद्रोगनाशाय परमस्मात् तदीरजाः—इति ॥ ६३ ॥

अथ लोचनलक्षणमाह।

**पद्मदलाभैर्धनिनो रक्तान्तविलोचनाः श्रियो भाजः।**
**मधुपिङ्गलैर्महार्था मार्जारविलोचनैः पापाः ॥ ६४ ॥**
**हरिणाक्षा मण्डललोचनाश्च जिह्मैश्च लोचनैश्चोराः।**
**क्रूराः केकरनेत्रा गजसदृशविलोचनाश्चमूपतयः ॥ ६५ ॥**
**ऐश्वर्यं गम्भीरैर्नीलोत्पलकान्तिभिश्च विद्वांसः।**
**अतिकृष्णतारकाणामक्ष्णामुत्पाटनं भवति ॥ ६६ ॥**
**मन्त्रित्वं स्थूलदृशां श्यावाक्षाणां भवति सौभाग्यम्।**
**दीना दृग्निःस्वानां स्निग्धा विपुलार्थभोगवताम् ॥ ६७ ॥**

पद्मदलाभैः कमलसदृशलोचनैर्धनिनो वित्तान्विता भवन्ति। रक्तान्तविलोचना रक्ता लोहितवर्णा अन्ताः पर्यन्ता विलोचनयोर्येषां ते रक्तान्तविलोचनास्ते च श्रियो भाजो लक्ष्मीवन्तः। मधुपिङ्गलैर्मधुवत् कपिलवर्णैर्नयनैर्महार्था महाधनाः। मार्जारो विडालस्तत्सदृशविलोचनास्तदाकाराक्षाः पापा भवन्ति ॥ ६४ ॥

हरिणाक्षा मृगलोचनास्तथा मण्डललोचनाः परिवर्तुलनेत्रा जिह्मैश्चरैश्च लोचनैश्चोरास्तस्करा भवन्ति। केकरनेत्रा तीनाक्षाः क्रूराः कराला विषमा भवन्ति। गजसदृशविलोचना हस्तितुल्यनेत्राश्चमूपतयः सेनापतयो भवन्ति ॥ ६५ ॥

गम्भीरैर्नेत्रैरैश्वर्यं भवति । नीलोत्पलकान्तिभिर्नेत्रैस्तत्सदृशतारकै-र्विद्वांसः पण्डिता भवन्ति । अतिकृष्णतारकाणामक्ष्णां नेत्राणामुत्पाटनं भवति । अत्यसिततारके अक्षिणी उत्पाट्येते ॥ ६६ ॥

स्थूला दृष्टिर्येषां ते स्थूलदृशस्तेषां मन्त्रित्वं भवति । मन्त्री भवती-त्यर्थः । श्यावाक्षाणां श्यावे मुद्गाभे अक्षिणी तारके येषां तेषां सौभाग्यं भवति । दीना दैन्यं गता दृग्दृष्टिर्येषां ते निःस्वा निर्धना भवन्ति । स्निग्धा निर्मला विपुला विस्तीर्णा च दृष्टिरर्थवतां धनिनां भोगवतां च भवति ॥ ६७ ॥

तथा च ।

समे गोक्षीरवर्णाभे रक्तान्ते कृष्णतारके ।
प्रसन्ने च विशाले च स्निग्धे चैवायते शुभे ॥
अतसी पुष्पसङ्काशे भवेतां यस्य लोचने ।
भूपतिः स तु विज्ञेयः समुद्रवचनं यथा ॥
व्याघ्रवभ्रुधनैर्युक्तः कर्कटाक्षः कलिप्रियः ।
बिडालहंसनेत्राश्च भवन्ति पुरुषाधमाः ॥
मयूरनकुलाक्षाश्च नरास्ते मध्यमाः स्मृताः ।
न श्रीस्त्यजति सर्वत्र पुरुषं मधुपिङ्गलम् ॥
आज्यपिङ्गलनेत्राश्च राजानो भोगसंयुताः ।
रोचनाहरितालाश्च गजपिङ्गा धनेश्वराः ॥
बलवन्तो गुणोपेताः पृथिव्यां चक्रवर्तिनः ।
तप्तहाटकवर्णाभे भवेतां यस्य लोचने ॥
भूपतिः स तु विज्ञेयः समुद्रवचनं यथा ।
द्विमासस्पन्दिनो ये तु धनिनस्ते प्रकीर्तिताः ॥
त्रिमासस्पन्दिनो ज्ञेयाः पुरुषाः सुखजीविनः ।
चतुर्मासनिमेषश्च धनवान् परिकीर्तितः ॥
दीर्घायुषो धर्मरताः पञ्चमासनिमेषिणः ।
अथ भ्रूलक्षणमाह ।

**अभ्युन्नताभिरल्पायुषो विशालोन्नताभिरतिसुखिनः ।**
**विषमभ्रुवो दरिद्रा बालेन्दुनतभ्रुवः सधनाः ॥ ६८ ॥**

**दीर्घासंसक्ताभिर्धनिनः खण्डाभिरर्थपरिहीनाः ।**
**मध्यविनतभ्रुवो ये ते सक्ताः स्त्रीष्वगम्यासु ॥ ६९ ॥**

अभ्युन्नताभिरपि मुख्येनोच्चाभिर्भ्रूभिरल्पायुषः स्वल्पजीविनो भवन्ति । विशालाभिर्विस्तीर्णाभिरुन्नताभिरुच्चाभिरतिसुखिनो भवन्ति । ये सर्वे विषम-भ्रुवोऽतुल्यभ्रुवस्ते दरिद्रा निर्धना भवन्ति । बालेन्दुसदृश्यो बालचन्द्रतुल्या नता भ्रुवो येषां ते सधनाः ॥ ६८ ॥

दीर्घाश्च ता असंसक्ता दीर्घासंसक्तास्ताभिर्दीर्घासंसक्ताभिर्भ्रूभिर्धनिनो भवन्ति । खण्डाभिरर्थपरिहीना दरिद्रा भवन्ति । ये मनुष्या मध्यविनतभ्रुवो मध्याद्विनता अस्पष्टा भ्रुवो येषां ते अगम्यासु स्त्रीषु सक्ता निरता भवन्ति ॥ ६९ ॥

तथा च ।

अभ्युन्नताभिः स्वल्पायुर्विशालाभिः सुखान्विताः ।
मध्योन्नतभ्रुवो ये च पापसक्ताश्च ते नराः ॥
बालेन्दुभ्रूसमाश्चाढ्या दरिद्रा विषमभ्रुवः ।
असंलग्नभ्रुवो ये तु धनिनस्ते नराः स्मृताः ॥
खण्डाभिर्निर्धना ज्ञेया विषमाभिर्नराधमाः ।

अथ शङ्खललाटलक्षणमाह ।

**उन्नतविपुलैः शङ्खैर्धनिनो निम्नैः सुतार्थसन्त्यक्ताः ।**
**विषमललाटा विधना धनवन्तोऽर्द्धेन्दुसदृशेन ॥ ७० ॥**
**शुक्तिविशालैराचार्यता शिरासन्ततैरधर्मरताः ।**
**उन्नतशिराभिराढ्याः स्वस्तिकवत् संस्थिताभिश्च ॥ ७१ ॥**
**निम्नललाटा बधबन्धभागिनः क्रूरकर्मनिरताश्च ।**
**अभ्युन्नतैश्चभूपाः कृपणाः स्युः संवृतललाटाः ॥ ७२ ॥**

उन्नतैरुच्चैर्विपुलैर्विस्तीर्णैः शङ्खैर्धनिन ईश्वरा भवन्ति । निम्नैरनुन्नैः शङ्खैः सुतैः पुत्रैरर्थैर्धनैः सन्त्यक्ता रहिता भवन्ति ।

तथा च ।

उन्नतैर्विपुलैः शङ्खैर्धनिनः सुखजीविनः ।
सुतार्थरहिता निम्नैर्मानवा दुःखभागिनः ॥

विषममसमं ललाटं मुखपृष्ठं येषां ते निर्धना दरिद्रा भवन्ति । अर्धेन्दुसदृशेनार्धचन्द्रतुल्येन ललाटेन धनवन्त ईश्वरा भवन्ति ॥ ७० ॥

शुक्तिविशालैः शुक्तिविस्तीर्णैर्ललाटैराचार्यता आचार्यत्वं भवति । परोपदेशक आचार्यः । शिरासन्ततैः शिराबहुलैर्ललाटैरधर्मरता भवन्ति । उन्नताभिः शिराभिर्ललाटगताभिराढ्या ईश्वरा भवन्ति । स्वस्तिकवत् स्वस्तिकाकारेण संस्थिताभिः शिराभिराढ्या भवन्ति ॥ ७१ ॥

निम्नं ललाटं येषां ते निम्नललाटा वधे कुट्टने बन्धे च भागिनो योग्याः क्रूरे विषमे च कर्मणि कार्ये निरताः सक्ता भवन्ति । अभ्युन्नतैरभिमुख्येनोन्नतैर्ललाटैश्चमूपाः सेनापतयो भवन्ति । संवृतं परिवर्तुलमल्पं च ललाटं येषां ते कृपणा अदानशीलाः स्युर्भवेयुः ॥ ७२ ॥

तथा च ।

ललाटेनार्धचन्द्रेण भवन्ति पृथिवीश्वराः ।
विपुलेन ललाटेन महाधनयुताः स्मृताः ॥
विषमेनाधमा ज्ञेयाः पापा मर्त्याः शिराततैः ।
निम्नेन तु ललाटेन क्रूरकर्मरता नराः ॥
अभ्युन्नतैश्चमूपाः स्युः संवृतैः कृपणाः स्मृताः ।

अथ रुदितलक्षणमाह ।

**रुदितमदीनमनस्रु स्निग्धं च शुभावहं मनुष्याणाम् ।**
**रूक्षं दीनं प्रचुरास्रु चैव न शुभप्रदं पुंसाम् ॥ ७३ ॥**

यद्रुदितमदीनं दैन्यरहितम् । अनस्रु बाष्परहितम् । स्निग्धमरूक्षमेवंविधं मनुष्याणां पुरुषाणां शुभावहं प्रशस्तम् । रूक्षं परुषम् । दीनं दैन्ययुक्तम् । प्रचुरास्रु बहुबाष्पम् । पुंसां नराणां न शुभदम् ॥ ७३ ॥

तथा च ।

अदीनाश्रुहतं स्निग्धं रुदितं च शुभावहम् ।
रूक्षं दीनं बाष्पयुतं पुरुषाणामनिष्टदम् ॥

अथ हसितलक्षणमाह ।

**हसितं शुभदमकम्पं सनिमीलितलोचनं तु पापस्य ।**
**दुष्टस्य हसितमसकृत् सोन्मादस्यासकृत् प्रान्ते ॥ ७४ ॥**

यत्तु हसितमकम्पं कम्परहितं तच्छुभदं प्रशस्तम्। शरीरस्य कम्पश्चलनमवयवानां येन नोत्पद्यते। सनिमीलितलोचनमतिसङ्कुचितनयनं हसितं पापस्य पापकर्मणः। असकृत् पुनः पुनर्दुष्टस्य सदोषस्य हसितम्। प्रान्ते हसमान्तेऽसकृद्धसितं सोन्मादस्योन्मादयुक्तस्य भवति॥ ७४॥

तथा च।

हसितं कम्परहितं नृपाणामन्यथाऽशुभम्।
असकृद्दोषयुक्तस्य मीलिताक्षस्य चाशुभम्॥

अथ ललाटरेखालक्षणमाह।

**तिस्रो रेखाः शतजीविनां ललाटायताः स्थिता यदि ताः।**
**चतसृभिरवनीशत्वं नवतिश्चायुः सपञ्चाब्दा॥ ७५॥**
**विच्छिन्नाभिश्चागम्यगामिनो नवतिरप्यरेखेण।**
**केशान्तोपगताभी रेखाभिरशीतिवर्षायुः॥ ७६॥**
**पञ्चभिरायुः सप्ततिरेकाग्रावस्थिताभिरपि षष्टिः।**
**बहुरेखेण शतार्धं चत्वारिंशच्च वक्राभिः॥ ७७॥**
**भ्रूलग्नाभिस्त्रिंशद्विंशतिकश्चैव वामवक्राभिः।**
**क्षुद्राभिः स्वल्पायुर्न्यूनाभिश्चान्तरे कल्प्यम्॥ ७८॥**

तिस्रो रेखा इति। ललाटे मुखपृष्ठे आयता दीर्घाः स्थिता रेखास्तिस्रः। शतजीविनां शतायुषां भवन्ति। चतसृभिर्ललाटायतरेखाभिरवनीशत्वं राज्यं भवति। नवतिः सपञ्चाब्दा पञ्चभिर्वर्षैर्युक्ता नवतिरायुर्जीवितं भवति॥ ७५॥

विच्छिन्नाभिश्छेदयुक्ताभिर्ललाटरेखाभिरगम्यगामिनोऽगम्यागमनशीला भवन्ति नवतिश्च वर्षाणां तेषामायुर्भवति। अरेखेण रेखावर्जितेन ललाटेन नवतिरपि वर्षाणामायुः। अपिशब्दोऽत्र चार्थे। अगम्यागामिनश्च भवन्ति। केशान्तो यतः प्रभृति केशानामुत्पत्तिः। केशान्तोपगताभिस्तत्र प्राप्ताभिर्लेखाभिरशीतिर्वर्षाणामायुर्भवति॥ ७६॥

पञ्चभिर्लेखाभिर्ललाटस्थिताभिः सप्ततिर्वर्षाणामायुः। एकस्मिन्नपे अवस्थिता एकाग्रावस्थितास्ताभिः सर्वाभिरेकाग्रावस्थिताभिर्मिलिताभिरविच्छि-

न्नाभिः षष्टिवर्षाणामायुः । चतुरेखेण चतुर्भी रेखाभिरुपलक्षितेन शतार्धं पञ्चाशद्वर्षाणामायुः । रेखाभिर्वक्राभिरस्पष्टाभिश्चत्वारिंशद्वर्षाण्यायुः ॥ ७७ ॥

रेखाभिर्भूलग्नाभिः त्रिंशद्वर्षाणि । वामभागवक्राभिः कुटिलाभिर्विंशतिकः विंशतिर्वर्षाणां जीवितपरिमाणं यस्य स विंशतिकः । क्षुद्राभिः सूक्ष्माभिरल्पायुर्विंशतेरूनमायुः । उक्तान्यूनाभी रेखाभिर्द्वाभ्यामेकया वा चशब्दात् स्वल्पायुरेव । अन्तरे मध्ये कल्प्यं कल्पनीयं स्वबुद्ध्योह्यम् । यथा तिस्रो रेखाः शतजीविनामिति चतसृभिर्नवतिश्चायुषः सपञ्चाब्दा इत्युक्तमन्तरे सार्धास्तिस्रो रेखा यस्य तस्य सार्धसप्तनवतिवर्षाण्यायुरित्याद्यन्तरे कल्पनीयम् ॥७८॥

तथा च ।

रेखाः पञ्च ललाटे तु यस्यासौ धनवान् स्मृतः ।
शतं जीवति वर्षाणामैश्वर्यमधिगच्छति ॥
चतूरेखो ह्यशीतिस्तु त्रिभिः सप्ततिरेव च ।
षष्टिर्द्वाभ्यां तु रेखाभ्यां चत्वारिंशत् तथैकया ।
अरेखेण ललाटेन भवन्ति निधिपालकाः ॥
रेखाच्छेदैस्तु विज्ञेयाः पापकर्मरता नराः ।
अल्पायुषस्तथाल्पासु व्याधियुक्ताश्च ते सदा ॥
त्रिशूलं पट्टिसं वापि ललाटे यस्य दृश्यते ।
ऐश्वर्यं तस्य विज्ञेयं सेनानां नायकश्च सः ॥

अथ शिरोलक्षणमाह ।

**परिमण्डलैर्गवाढ्याश्छत्राकारैः शिरोभिरवनीशाः ।**
**चिपिटैः पितृमातृघ्नाः करोटिशिरसां चिरान्मृत्युः ॥ ७९ ॥**
**घटमूर्धाध्वानरुचिर्द्विमस्तकः पापकृद्धनैस्त्यक्तः ।**
**निम्नं तु शिरो महतां बहुनिम्नमनर्थदं भवति ॥ ८० ॥**

परिमण्डलैः परिवर्तुलैः शिरोभिर्मस्तकैर्गवाढ्या गोबहुला भवन्ति । छत्राकारैश्छत्राकृतिभिरूर्ध्वभागविस्तृतैरवनीशा राजानः । चिपिटैश्चर्पटैः पितृमातृघ्नाः । पितृमातृहन्तारः । करोटि शिरस्त्राणं करोटिसदृशशिरसां चिराद्बहुकालेन मृत्युर्भवति ॥ ७९ ॥

घटमूर्धा कुम्भसदृशशिरा अध्वानरुचिरध्वशीलो भवति । द्विमस्तको द्विशीर्षः पापकृत् पापकर्ता धनैस्त्यक्तो निर्धनो भवति । महतां प्रधानानामेव निम्नं तु शिरो भवति । बहुनिम्नमतिनिम्नं शिरोऽनर्थदं दुःखदं भवति ॥ ८० ॥

तथा च ।

उत्क्रान्तिदो निम्नशिरा अल्पोपहत एव च ।
छत्राकारशिरा राजा गवाढ्यः परिमण्डलैः ॥
विषमं तद्दरिद्राणां शिरो दीर्घं चिरायुषाम् ।
नागकुम्भशिरा राजा समं सर्वेष भोगिनः ॥

अधुना मूर्धजलक्षणान्याह ।

**एकैकभवैः स्निग्धैः कृष्णैराकुञ्चितैरभिन्नाग्रैः ।**
**मृदुभिर्न चातिबहुभिः केशैः सुखभाग्नरेन्द्रो वा ॥ ८१ ॥**
**बहुमूलविषमकपिलाः स्थूलस्फुटिताग्रपरुषह्रस्वाश्च ।**
**अतिकुटिलाश्चातिघनाश्च मूर्धजा वित्तहीनानाम् ॥ ८२ ॥**

केशैरेकैकभवैः । एकैकस्मिन् रोमकूपे भवन्त्येकैकभवाः । तैस्तथाभूतैः । स्निग्धैरह्रूक्षैः । कृष्णैरसितैः । आकुञ्चितैः कुटिलैः । अभिन्नाग्रैरस्फुटितप्रान्तैः । मृदुभिः कोमलैः । न चातिबहुभिरघनैः । एवंविधैः केशैः सुखभाक् सुखितो भवति नरेन्द्रो वा राजा भवति ॥ ८१ ॥

बहुमूला एकैकस्मिन् रोमकोपे बहूनां सम्भवात् । विषमा असमाः । केचिद्ध्रस्वाः केचिद्दीर्घाः । कपिलाः कपिलवर्णाः । स्थूला असूक्ष्माः । स्फुटिताग्रा भिन्नभिन्नप्रान्ताः । परुषा रूक्षाः । ह्रस्वा अदीर्घाः । अतिकुटिला अतिकुञ्चिताः । अतिघनाः सन्तताः । मूर्धजाः केशाः । वित्तविहीनानां निर्धनानां भवन्ति ॥ ८२ ॥

तथा च ।

एकैकसम्भवाः स्निग्धाः कृष्णा नातिघनाः कचाः ।
पूजिता विपरीताश्च निर्धनानां प्रकीर्तिताः ॥

आचार्येणोक्तम् । सामुद्रविद्वदति यातमनागतं वेत्यतोऽस्माभिः सामुद्राणि पुरुषलक्षणान्युदाहृतानि यावदाचार्यस्य तेभ्योऽप्यधिकमस्तीति ज्ञेयम् ।

अधुनैतदेव सर्वं सङ्क्षेपेणाह ।

यद्यद्गात्रं रूक्षं मांसविहीनं शिरावनद्धं च ।
तत्तदनिष्टं प्रोक्तं विपरीतमतः शुभं सर्वम् ॥ ८३ ॥

यद्गात्रमवयवं रूक्षमस्निग्धं मांसविहीनं निर्मांसं शिरावनद्धं शिरासन्ततं तत्तद्गात्रमनिष्टमशुभं प्रोक्तं कथितम् । अतोऽस्माद्विपरीतं सर्वं निःशेषं शुभं स्निग्धं समांसमशिरालमित्यर्थः ॥ ८३ ॥

अधुना महापुरुषलक्षणमाह ।

त्रिषु विपुलो गम्भीरस्त्रिष्वेव षडुन्नतश्चतुर्ह्रस्वः ।
सप्तसु रक्तो राजा पञ्चसु दीर्घश्च सूक्ष्मश्च ॥ ८४ ॥

यस्त्रिष्वङ्गेषु विपुलो विस्तीर्णः । गम्भीरस्त्रिष्वेव । षडुन्नतः षट् उन्नतानि यस्य । चतुर्ह्रस्वश्चत्वारि ह्रस्वानि यस्य । सप्तसु रक्तो लोहितः । पञ्चसु दीर्घश्चायामी । पञ्चस्वेव सूक्ष्मश्च स राजा नृपो भवति ॥ ८४ ॥

अथैतेषामेव प्रविभागमाह ।

नाभी स्वरः सत्त्वमिति प्रशस्तं
गम्भीरमेतत् त्रितयं नराणाम् ।
उरो ललाटं वदनं च पुंसां
विस्तीर्णमेतत् त्रितयं प्रशस्तम् ॥ ८५ ॥

वक्षोऽथ कक्षा नखनासिकास्यं
कृकाटिका चेति षडुन्नतानि ।
ह्रस्वानि चत्वारि च लिङ्गपृष्ठं
ग्रीवा च जङ्घे च हितप्रदानि ॥ ८६ ॥

नेत्रान्तपादकरताल्वधरोष्ठजिह्वा
रक्ता नखाश्च खलु सप्त सुखावहानि ।
सूक्ष्माणि पञ्च दशनाङ्गुलिपर्वकेशाः
साकं त्वचा कररुहा न च दुःखितानाम् ॥ ८७ ॥

हनुलोचनबाहुनासिकाः स्तनयोरन्तरमत्र पञ्चमम्
इति दीर्घमिदं तु पञ्चकं न भवत्येव नृणामभूभृताम् ॥ ८८ ॥

नाभी शरीरमध्यस्थानम् । स्वरः शब्दः । सत्त्वं गुणभावः । तस्य लक्षणम् ।

अविकारकरं सत्त्वं व्यसनाभ्युदयागमे ।

एतत् त्रितयं नराणां पुरुषाणां गम्भीरं प्रशस्तम् । उरो वक्षः । ललाटं मुखपृष्ठम् । वदनं वक्त्रम् । सकलमेतत् त्रितयं पुंसां पुरुषाणां विस्तीर्णं प्रशस्तम् ॥ ८५ ॥

वक्ष उरः । अथशब्दश्चार्थे । कक्षाशब्देन शरीरमध्यभाग उच्यते । नखाः कररुहाः । नासिका घ्राणम् । आस्यं वक्त्रम् । कृकाटिका ग्रीवापश्चिमभागः । एतानि च षडुन्नतानि उच्चानि हितप्रदानि प्रशस्तानि ।

लिङ्गं मेढ्रम् । पृष्ठं शरीरपश्चिमभागः । ग्रीवा शिरोधरा । जङ्घे । चशब्दः सर्वत्र समुच्चये । एतानि चत्वारि ह्रस्वानि अदीर्घाणि हितप्रदानि प्रशस्तानि ॥ ८६ ॥

नेत्रान्तं चक्षुःपर्यन्तम् । पादौ चरणौ । करौ हस्तौ । ताल्वास्यपृष्ठम् । अधर ओष्ठः । जिह्वा रसना । नखाः कररुहाः । एतानि सप्त रक्तानि लोहितानि सुखावहानि सुखप्रदानि । दशना दन्ताः । अङ्गुलिपर्वाणि करशाखाश्रिता रेखाः । केशा मूर्धजाः । त्वचा चर्मणा साकं सह कररुहा नखाः । एतानि पञ्च सूक्ष्माणि न दुःखितानां भवन्ति । अपि तु सुखितानां भवन्तीत्यर्थः ॥ ८७ ॥

हनुनी प्रसिद्धे । लोचने नेत्रे । बाहू भुजौ । नासिका घ्राणम् । स्तनयोरन्तरं मध्यम् । अत्रास्मिन् वर्गे पञ्चममङ्गम् । इत्येतत् पञ्चकं दीर्घमह्रस्वं नृणां पुंसामभूभृतामराजानां न भवन्ति । येषां च भवन्ति ते राजानो भवन्तीत्यर्थः ॥ ८८ ॥

तथा च गर्गः ।

चतुर्दशसमो वृन्दश्चतुःकृष्णश्चतुःसमः ।
दशपद्मो दशबृहत् त्रिशुक्लः शस्यते नरः ॥

पादौ गुल्फौ स्फिचौ पार्श्वे वृषणौ चक्षुषी स्तनौ ।
स्कन्धोष्ठौ बङ्क्षणे जङ्घे हस्तौ बाहू सक्थी तथा ॥
चतुर्दशसमद्वन्द्वः समुद्रो नृषु शंसति ।
अविनारे भ्रुवौ श्मश्रुकेशाश्चैवासिताः शुभाः ॥
अङ्गुल्यो हृदयं नेत्रे दशनाश्च समा नृणाम् ।
चत्वारः सम्प्रशस्यन्ते सदैश्वर्यसुखावहाः ॥
जिह्वोष्ठतालु चास्यं च मुखं नेत्रे स्तनौ नखाः ।
हस्तौ पादौ च शस्यन्ते पद्माभा दश देहिनाम् ॥
पाणिपादमुरो ग्रीवा वृषणौ हृदयं शिरः ।
ललाटमुदरं पृष्ठं बृहन्तः पूजिता दश ॥
नेत्रे तारावियहिते दशनाश्चलिताः शुभाः ।
एतच्च लक्षणं कृत्स्नं नराणां समुदाहृतम् ॥
पञ्चदीर्घश्चतुर्ह्रस्वः पञ्चसूक्ष्मः षडुन्नतः ।
पञ्चरक्तस्त्रिविस्तीर्णस्त्रिगम्भीरः प्रशस्यते ॥
बाहू नेत्रान्तरे चापि हनुनी वृषणौ तथा ।
स्तनयोरन्तरं चैव पञ्चदीर्घः प्रशस्यते ॥
ग्रीवा प्रजननं श्रोणिर्ह्रस्वे जङ्घे च पूजिते ।
तथेतरेषु सर्वेषु सर्वमेव प्रशस्यते ॥
सूक्ष्माण्यङ्गुलिपर्वाणि दन्ता रोमाणि च च्छविः ।
तथा नखाश्च सर्वे च पञ्चसूक्ष्मः प्रशस्यते ॥
कक्षाविवक्षांसि तथा मुखं पृष्ठं कृकाटिका ।
सर्वभूतेषु निर्दिष्टः षडुत्सेधः प्रशस्यते ॥
पाणी पादौ तथा चास्यमुभे नेत्रे स्तनौ नखाः ।
पञ्च रक्तानि यस्याहुर्मनुजेन्द्रं तमादिशेत् ॥
उरो मुखं ललाटं च त्रिविस्तीर्णः प्रशस्यते ।
सत्त्वं स्वरश्च नाभिश्च त्रिगम्भीरः प्रशस्यते ॥

इति शेषम् ॥

अथ छायालक्षणमाह ।

छायाशुभाशुभफलानि निवेदयन्ती
लक्ष्या मनुष्यपशुपक्षिषु लक्षणज्ञैः ।
तेजोगुणान् बहिरपि प्रविकाशयन्ती
दीपप्रभा स्फटिकरत्नघटस्थितेव ॥ ८९ ॥

छाया शरीरकान्तिः । शुभानि अशुभानि च फलानि निवेदयन्ती कथयन्ती । लक्षणज्ञैश्छायाचिह्नज्ञैश्छाया लक्ष्या लक्षणीया । विचार्येत्यर्थः । केषु मनुष्यपशुपक्षिषु । मनुष्याः पुरुषाः । पशवश्चतुष्पदाः । पक्षिणो विहङ्गमाः । सा च शरीरान्तर्वर्तिनी बहिरपि शरीरबाह्येऽपि तेजोगुणान् तेजःसंबन्धिगुणान् प्रकर्षेणातिशयेन विकाशयन्ती प्रकाशयन्ती । कथम् । दीपप्रभा स्फटिकरत्नघटस्थितेव । स्फटिकश्चासौ रत्नं च तत् स्फटिकरत्नं स्फटिकरत्नस्य घटः स्फटिकरत्नघटः । स्फटिकरत्नघटाभ्यन्तरस्थिता दीपप्रभा दीपकान्तिर्यथा बहिरपि तेजोगुणान् प्रविकाशयति तथान्तरस्था छाया विकाशयतीत्यर्थः ॥ ८९ ॥

तत्र तावत् पञ्चानां महाभूतानां संबन्धिन्यः पञ्चच्छाया भवन्ति । प्रथमत एव जातक उक्तम् ।

छायां [1]महाभूतकृतां च सर्वे निव्यञ्जयन्ति स्वदशामवाप्य ।
क्ष्म्बग्निवाय्वम्बरजान् गुणांश्च नासास्यदृक्त्वक्श्रवणानुमेयान्–इति ॥

तत्रादावेव पार्थिवच्छायालक्षणमाह ।

स्निग्धद्विजत्वङ्नखरोमकेशा-
श्छाया सुगन्धा च महीसमुत्था ।
तुष्ट्यर्थलाभाभ्युदयान् करोति
धर्मस्य चा[2]हन्यहनि प्रवृत्तिम् ॥ ९० ॥

महीसमुत्था भूमिजा छाया यस्य जन्तोर्भवति यदा तदा तस्य द्विजा दन्ताः । त्वक् चर्म । नखाः कररुहाः । रोमाण्यङ्गजानि । केशा मूर्धजाः । एते सर्वे एव स्निग्धाः सस्नेहा भवन्ति । तथा सा छाया शरीरकान्तिः सुगन्धा शोभनगन्धा भवति । तस्य जन्तोः शरीरं शुभगन्धं भव-

१ बृहज्जातकस्य ८ अध्याये २१ श्लोकः । २ चाहन्यहनि प्रवृद्धिम्–इति पाठान्तरम् ।

तीत्यर्थः । सा चच्छाया तुष्टिश्चित्तपरितोषः । अर्थलाभो धनप्राप्तिः । अभ्युदयः कार्याणामभि मुख्येनोदयः प्रादुर्भावः । एतान् करोति । तथा अहन्यहनि प्रतिदिनं धर्मस्य प्रवृत्तिं प्रवर्तनं करोति । केचिद्धर्मस्य चाहन्यहनि प्रवृद्धिमिति पठन्ति ॥ ६० ॥

अधुनाऽऽप्यच्छायालक्षणमाह ।

**स्निग्धा सिताच्छहरिता नयनाभिरामा**
**सौभाग्यमार्दवसुखाभ्युदयान् करोति ।**
**सर्वार्थसिद्धिजननी जननीव चाप्या**
**छाया फलं तनुभृतां शुभमादधाति ॥ ६१ ॥**

आप्या वारुणी छाया स्निग्धा स्नेहसंयुक्ता विमलेत्यर्थः । सिता श्वेतवर्णा गौरप्राया । अच्छहरिता । अच्छा चासौ हरिता अच्छहरिता निर्मलनीलवर्णा । नयनाभिरामा नयनाभ्यामभि मुख्येन रमते यस्याम् । तुष्टिजननीत्यर्थः । सा च सौभाग्यं सर्वजनवाल्लभ्यं मार्दवमक्रूरतां सुखं शरीरसौख्यमभ्युदयं कार्याणामेतत् करोति । तथा सर्वार्थसिद्धिजननी सर्वार्थानां सिद्धिं जनयति । जननीव मातेव । यथा माता सर्वप्राणिनां हितकरी तथेति । सा च तनुभृतां शरीरिणां शुभं फलमादधाति करोति ॥ ६१ ॥

अधुनाऽऽग्नेयच्छायालक्षणमाह ।

**चण्डाधृष्या पद्महेमाग्निवर्णा**
**युक्ता तेजोविक्रमैः सप्रतापैः ।**
**आग्नेयीति प्राणिनां स्याज्जयाय**
**क्षिप्रं सिद्धिं वाञ्छितार्थस्य दत्ते ॥ ६२ ॥**

आग्नेयी छाया चण्डा क्रोधशीला । अधृष्या अनभिभवनीया । पद्महेमाग्निवर्णा । पद्मस्य कमलस्य हेम्नः सुवर्णस्याग्नेर्हुताशनस्य सदृशवर्णा तुल्यकान्तिः । तथा युक्ता तेजोविक्रमैः सप्रतापैः । तेजसा दीप्त्या विक्रमेण पराक्रमेण प्रतापेन शौर्येण शत्रूणां निग्रहेण च युक्ता समवेता । एतैस्तेजोविक्रमैः सप्रतापैर्युक्ता एषा आग्नेयी छाया । इतिशब्दः प्रकाराय । एवंप्रकारा प्राणिनां देहिनां जयाय स्याद्भवेत् । वाञ्छितस्याभिलषितस्यार्थस्य क्षिप्रमाश्वेव सिद्धिं दत्ते ददाति ॥ ६२ ॥

अधुना वायवीनाभस्योश्छाययोर्लक्षणमाह ।

मलिनपरुषकृष्णा पापगन्धानिलोत्था
जनयति बधबन्धव्याध्यनर्थार्थनाशान् ।
स्फटिकसदृशरूपा भाग्ययुक्तात्युदारा
निधिरिव गगनोत्था श्रेयसां स्वच्छवर्णा ॥ ९३ ॥

अनिलोत्था वायुसमुत्था वायुसम्भवा छाया मलिनवर्णा अप्रसन्ना । परुषा रूक्षा । कृष्णा असिता । पापगन्धा दुर्गन्धा । सा च जनयति उत्पादयति । बधो मरणम् । बन्धो बन्धनम् । व्याधयः पीडाः । अनर्थोऽलाभः । अर्थनाशः सञ्चितवित्तस्य क्षयः । एतान् ।

अथ नाभस्याश्छायाया लक्षणमाह ।

स्फटिकेति । गगनोत्था आकाशजा छाया नाभसी । स्फटिकसदृशरूपा स्फटिकमणेः सदृशं तुल्यं रूपं कान्तिर्यस्याः । अतिनिर्मलेत्यर्थः । भाग्ययुक्ता भाग्यैः समेता । अत्युदारा अतिशयेनोदारा दानशीला श्रेयसां सर्वेषां शुभकार्याणां निधिरिव । सर्वप्रदेत्यर्थः । सा च स्वच्छवर्णा निर्मलेति ॥ ९३ ॥

अत्रैव परमतेनान्याः पञ्चच्छाया आह ।

छायाः क्रमेण कुजलाग्न्यनिलाम्बरोत्थाः
केचिद्वदन्ति दश ताश्च यथानुपूर्व्या ।
सूर्याब्जनाभपुरुहूतयमोडुपानां
तुल्यास्तु लक्षणफलैरिति तत्समासः ॥ ९४ ॥

कुः पृथिवी । जलं वारुणम् । अग्निर्हुताशनः । अनिलो वायुः । अम्बरमाकाशम् । एभ्य उत्पन्नाश्छायाः क्रमेण परिपाट्या पञ्च । केचिन्मुनयो गर्गादयो दशच्छाया वदन्ति । उक्ताः पञ्च पञ्च चेदानीं वक्ष्यन्ते । ताश्चापि यथानुपूर्व्या क्रमपरिपाट्या सूर्याब्जनाभपुरुहूतयमोडुपानां संबन्धिन्यो भवन्ति । सूर्य आदित्यः । अब्जनाभो नारायणः । पुरुहूत इन्द्रः । यमः पितृपतिः । उडुपश्चन्द्रः । एताश्छाया लक्षणैः फलैश्च यथाक्रमेण प्रागुक्तानां पञ्चानां तुल्याः सदृश्यः । यतः सौरी एवाग्नेयी । आब्जनाभी नाभसी । पौरुहूती पार्थिवी । याम्या वायवी । औडुपी वाप्या । इति तत्स-

मासः । इति हेतोस्तासां दशानां छायानां समासः सङ्क्षेपः कृतः । फल-साम्यात् पञ्चैव छायाः कृताः ॥ ६४ ॥

तथा च गर्गः ।

भूम्यापोऽनलवाय्वभ्रसम्भूताः पञ्च कीर्तिताः ।
छायाभूविष्णुशक्रार्कचन्द्राणां च तथापराः ॥

इति मृजा ॥

अथ स्वरलक्षणमाह ।

**करिवृषरथौघभेरीमृदङ्गसिंहा[1]भ्रानःस्वना भूपाः ।**
**गर्दभजर्जररूक्षस्वराश्च धनसौख्यसन्त्यक्ताः ॥ ६५ ॥**

करी हस्ती । वृषो दान्तः । रथौघः स्यन्दनसमूहः । भेरी ढक्का । मृदङ्गो वादित्रो मण्डलेति प्रसिद्धः । सिंहो हरिः । अभ्रो मेघः । अब्देति पाठः । अब्दो मेघः । एतेषां सदृशनिःस्वनाः तुल्यशब्दा भूपा राजानो भवन्ति । गर्दभः खरः । जर्जरो विकृतस्वरः । रूक्षः परुषः । गर्दभादिसदृशस्वरा धनसौख्यसन्त्यक्ता धनैः सुखैश्च वर्जिता इत्यर्थः ॥ ६५ ॥

तथा च गर्गः ।

गम्भीरो दुन्दुभिः स्निग्धो महांश्चैवानुनादवत् ।
इति स्वरगुणान् पञ्च समुद्रः प्राह तत्त्ववित् ॥
एभिरायुर्यशो विद्या मानं सौख्यं धनागमः ।
वाहनानि सुता नार्यो राज्यभोगागमास्तथा ॥
भिन्नो जर्जरितश्चैव मिमिणो गद्गदस्तथा ।
क्षामस्वरस्तथैवोक्ताः समुद्रेणाभिनिन्दिताः ॥
स्वरैरेभिः कलिक्रोधलोभमोहतमोरजः ।
नैर्घृण्यमभिमानं च पारुष्यं शाठ्यमेव च ॥

इति स्वरः ॥

अथ सारानाह ।

**सप्त भवन्ति च सारा मेदोमज्जात्वगस्थिशुक्राणि ।**
**रुधिरं मांसं चेति प्राणभृतां तत्समासफलम् ॥ ६६ ॥**

---
१ सिंहाब्द-इति पाठान्तरम् ।

सप्त नराणां सारा भवन्ति । मेदोऽस्थ्यन्तरगतः स्नेहभागः । मज्जा कपालान्तरस्था । त्वक् चर्म । अस्थि प्रसिद्धम् । शुक्रं रेतः । रुधिरं रक्तम् । मांसं पलम् । चशब्दः समुच्चये । इत्येवंप्रकाराः सप्त साराः प्राणभृतां देहिनां भवन्ति । तत्समासफलं तेषां संक्षेपफलं कथ्यत इति ॥ ९६ ॥

तत्र तावद्रक्तसारस्य लक्षणमाह ।

**ताल्वोष्ठदन्तपालीजिह्वानेत्रान्तपायुकरचरणैः ।**
**रक्तै तु रक्तसारा बहुसुखवनितार्थपुत्त्रयुताः ॥ ९७ ॥**

ताल्वास्यपृष्ठभागः । ओष्ठौ दन्तच्छदौ । दन्तपाली दन्तमांसपङ्क्तिः । जिह्वा रसना । नेत्रान्तं चक्षुष्पर्यन्तम् । पायुर्गुह्यस्थानम् । करौ हस्तौ । चरणौ पादौ । अस्मिन्नष्टके रक्ते लोहिते सति रक्तसारा नरा भवन्ति । ते च बहुभिः सुखैर्वनिताभिः स्त्रीभिर्बहुभिरर्थैर्धनैर्बहुभिः पुत्त्रैः सुतैश्च युताः संयुक्ता भवन्ति ॥ ९७ ॥

अथ त्वङ्मज्जामेदःसारानाह ।

**स्निग्धत्वक्का धनिनो मृदुभिः सुभगा विचक्षणास्तनुभिः ।**
**मज्जामेदःसाराः सुशरीराः पुत्त्रवित्तयुताः ॥ ९८ ॥**

त्वक् चर्म । तच्च स्निग्धमरूक्षं येषां ते स्निग्धत्वक्कास्ते च धनिनो वित्तान्विता भवन्ति । मृदुभिः सुभगाः सौभाग्योपेता भवन्ति । तनुभिस्त्वग्भिर्विचक्षणाः पण्डिताः । ये मज्जासारा नरा मेदःसाराश्च ते सुशरीराः शोभनशरीरा भवन्तीति तल्लक्षणम् । ते च पुत्त्रवित्तयुताः सुतधनान्विता भवन्तीति ॥ ९८ ॥

अथास्थिशुक्रसारमाह ।

**स्थूलास्थिरस्थिसारो बलवान् विद्यान्तगः सुरूपश्च ।**
**बहुगुरुशुक्राः सुभगा विद्वांसो रूपवन्तश्च ॥ ९९ ॥**

स्थूलान्यस्थीनि यस्य सोऽस्थिसारः स च बलवान् प्राणी भवति । विद्यान्तगो विद्यास्वन्तगः शक्तः । सुरूपः शोभनरूपश्च भवति । बहुगुरुशुक्राः । बहु प्रभूतं गुरु घनं शुक्रं येषां ते शुक्रसारास्ते च सुभगाः । सौभाग्योपेता विद्वांसः पाठकाः पण्डिता रूपवन्तः सुरूपाश्च भवन्ति ॥ ९९ ॥

अथ मांससारलक्षणं संहतिलक्षणं चाह ।

**उपचितदेहो विद्वान् धनी सुरूपश्च मांससारो यः ।**
**सङ्घात इति च सुश्लिष्टसन्धिता सुखभुजो ज्ञेया ॥ १०० ॥**

उपचितदेहः स्थूलशरीरः । स मांससारः सच विद्वान् पण्डितः । धनी वित्तवान् सुरूपः शोभनरूपो भवति ।

इति सारः ॥

अथ संहतिलक्षणम् । सङ्घात इति । सुश्लिष्टसन्धिता सर्वाङ्गसन्धीनां सुश्लिष्टत्वं सङ्घातः । सा च सुश्लिष्टसन्धिता सुखभुजः सुखिनो ज्ञेया । सुश्लिष्टसन्धिता येषां ते सुखभुज इत्यर्थः ॥ १०० ॥

अथ स्नेहलक्षणमाह ।

**स्नेहः पञ्चसु लक्ष्यो वाग्जिह्वादन्तनेत्रनखसंस्थः ।**
**सुतधनसौभाग्ययुताः स्निग्धैस्तैर्निर्धना रूक्षैः ॥ १०१ ॥**

पञ्चसु स्नेहो लक्ष्यो विचार्यः । केषु । वाचि वचने । जिह्वायां रसनायाम् । दन्तेषु रदेषु । नेत्रयोश्चक्षुषोः । नखेषु कररुहेषु । एतेषु संस्थः । तैश्च वागादिभिः सर्वैः स्निग्धैः सस्नेहैः सुतधनसौभाग्ययुता नरा भवन्ति । सुतः पुत्रः । धनं वित्तम् । सौभाग्यं सर्वजनानां लभ्यम् । एतैर्गुणैः संयुक्ताः । तैरेव सर्वै रूक्षैरस्निग्धैर्निर्धना दरिद्रा भवन्ति ॥ १०१ ॥

अथ वर्णलक्षणमाह ।

**द्युतिमान् वर्णस्निग्धः क्षितिपानां मध्यमः सुतार्थवताम् ।**
**रूक्षो धनहीनानां शुद्धः शुभदो न सङ्कीर्णः ॥ १०२ ॥**

वर्णो गौरलोहितश्यामादिकः । वर्णः स्निग्धो यस्यासौ वर्णस्निग्धः स द्युतिमान् दीप्तिमान् भवति । सच क्षितिपानां राज्ञां भवति । मध्यमो वर्णो नातिरूक्षो नातिस्निग्धः स सुतार्थवतां पुत्रधनान्वितानां भवति । रूक्षो वर्णो धनहीनानां दरिद्राणां भवति । शुद्धो वर्णः स्निग्ध एव शुभदः प्रशस्तः । न सङ्कीर्णो व्यामिश्रवर्णः । क्वचित् स्निग्धः क्वचिद्रूक्षो न शुभद इति ॥ १०२ ॥

इति वर्णः ॥

अथानूकलक्षणमाह ।

**साध्यमनूकं वक्त्राद्गोवृषशार्दूलसिंहगरुडमुखाः ।**
**अप्रतिहतप्रतापा जितरिपवो मानवेन्द्राश्च ॥ १०३ ॥**
**वानरमहिषवराहाजतुल्यवदनाः श्रुतार्थसुखभाजः ।**
**गर्दभकरभप्रतिमैर्मुखैः शरीरैश्च निःस्वसुखाः ॥ १०४ ॥**

अनूकं प्राग्जन्म । तच्च वक्त्रान्मुखात् साध्यं कल्पनीयम् । गोः प्रसिद्धा । वृषो दान्तः । शार्दूलः सिंहसदृशः प्राणिविशेषः । सिंहो हरिः । गरुडो वैनतेयः । एतेषां ये सदृशमुखास्तुल्यवक्त्राः । तेषां प्राग्जन्म शुभम् । ते चाप्रतिहतप्रतापा भवन्ति । अप्रतिहतोऽनभिभवनीयः प्रतापो येषाम् । जितरिपवो निर्जितशत्रवः । मानवेन्द्राश्च राजानो भवन्ति ॥ १०३ ॥

वानरः कपिः । महिषः प्रसिद्धः । वराहः सूकरः । अजश्छागः । एतेषां तुल्यवदनाः सदृशमुखा नराः श्रुतार्थसुखभाजः । श्रुतं शास्त्रम् । अर्थो धनम् । सुखं प्रसिद्धम् । एषां भागिनो भवन्ति । एतेषां मध्यमं प्राग्जन्म । गर्दभः खरः । करभ उष्ट्रः । गर्दभकरभप्रतिमैस्तत्सदृशैर्मुखैर्वदनैः शरीरैश्च देहैर्निःस्वसुखा भवन्ति । निःस्वा निर्धनाः । निःसुखाः सुखरहिताश्च । तेषामशुभं प्राग्जन्म ॥ १०४ ॥

इत्यनूकम् ॥

अथोन्मानलक्षणमाह ।

**अष्टशतं षण्णवतिः परिमाणं चतुरशीतिरिति पुंसाम् ।**
**उत्तमसमहीनानामङ्गुलसङ्ख्या स्वमानेन ॥ १०५ ॥**

पुंसां पुरुषाणां स्वमानेनात्मीयप्रमाणेनाङ्गुलसङ्ख्याङ्गुलप्रमाणम् । अष्टगतमष्टाधिकं शतं स्वाङ्गुलैरुत्तमानां नराणां परिमाणं भवति । षण्णवतिरङ्गुलानि मध्यमानाम् । चतुरशीतिरङ्गुलानि हीनानां परिमाणं भवति । उत्थितस्य पुरुषस्य भूपादसंयोगाच्छिरोमध्यं यावत् सूत्रं दत्त्वा तन्मापयेत् स्वाङ्गुलैरिति स्थितिः ॥ १०५ ॥

इत्युन्मानम् ॥

अथ मानलक्षणमाह ।

**भारार्धतनुः सुखभाक् तुलितोऽतो दुःखभाग्भवत्यूनः ।**
**भारोऽतीवाढ्यानामध्यर्धः सर्वधरणीशः ॥ १०६ ॥**

भारः पलसहस्रद्वयम् । यः पुरुषस्तुलायां तुलितो भारार्धतनुर्भवति दशपलशतानीत्यर्थः । स सुखभाक् सुखितो भवति । अतोऽस्माद्भारार्धाद्य ऊनतनुः स दुःखभाक् दुःखितो भवति । भारप्रमाणतनुरतीवाढ्यानामतिधनिनां भवति । अध्यर्धभारतनुस्त्रिसहस्रपलानि यः स सर्वधरणीशः । सार्वभौमो राजा भवतीत्यर्थः ॥ १०६ ॥

कस्मिन् काले उन्मानमानेन मापयेदित्येतत्प्रतिपादयन्नाह ।

**विंशतिवर्षा नारी पुरुषः खलु पञ्चविंशतिभिरब्दैः ।**
**अर्हति मानोन्मानं जीवितभागे चतुर्थे वा ॥ १०७ ॥**

नारी स्त्री विंशतिवर्षा मानोन्मानमर्हति । मानं तुलामानम् । उन्मानमूर्ध्वमानमङ्गुलादि । एवं पुरुषो नरो वर्षपञ्चविंशत्या मानोन्मानमर्हति मानोन्मानयोग्यो भवति । खलुशब्दो वाक्यालङ्कारे । वर्षशतं जीवितप्रमाणं निश्चित्य विंशतिवर्षा नारीत्युक्तम् । जीवितभागे चतुर्थेऽतीते वा मानोन्मानमर्हति । वर्षशतादूने तु जीविते निश्चिते चतुर्थभाग इत्युक्तम् ॥ १०७ ॥

इति मानम् ॥

अथ प्रकृतिलक्षणमाह ।

**भूजलशिख्यनिलाम्बरसुरनररक्षःपिशाचकतिरश्चाम् ।**
**सत्त्वेन भवति पुरुषो लक्षणमेतद्भवति तेषाम् ॥ १०८ ॥**

भूः प्रसिद्धा । जलं वारुणम् । शिखी अग्निः । अनिलो वायुः । अम्बरमाकाशम् । सुरा देवाः । नरा मनुष्याः । रक्षो राक्षसः । पिशाचा देवयोनयः । तिर्यञ्चस्तिर्यग्जातयः । एतेषां सत्त्वेन प्रकृत्या पुरुषो नरो भवति । तेषां चेतद्वक्ष्यमाणं लक्षणं भवति । अत्र केचित् पठन्ति । भूजलशिख्यनिलाम्बरसुरनररक्षःपिशाचतिर्यञ्चमिति । तन्न । यस्मात् तिरश्चामिति भवितव्यम् । तस्मात् प्राक्तनः पाठः शोभनः ॥ १०८ ॥

तत्र भूजलस्वभावयोर्लक्षणमाह ।

महीस्वभावः शुभपुष्पगन्धः
सम्भोगवान् सुश्वसनः स्थिरश्च ।
तोयस्वभावो बहुतोयपायी
प्रियाभिभाषी [1]रसभाजनश्च ॥ १०९ ॥

महीस्वभावः भूप्रकृतिः पुरुषः । शुभपुष्पगन्धः शोभनानां चम्पकप्रभृतीनां पुष्पाणां कुसुमानां सदृशो गन्धो यस्य स सम्भोगवान् सम्भोगशीलः । सुश्वसनः शोभनः श्वसनो वातो यस्य । श्वसनशब्देनात्र मुखवहो वातः । सच सुगन्धस्तस्य भवतीत्यर्थः । स्थिरश्च स्थिरस्वभावः । तोयस्वभावो जलप्रकृतिर्बहुतोयपायी बहु प्रभूतं तोयं जलं पिबति तच्छीलः । प्रियाभिभाषी प्रियमनुकूलमभिभाषते वक्ति । रसभाजनश्च । रसा मधुरादयस्तेषां भाजनो योग्यस्तत्प्रियः । केचिद्रसंभोजनश्चेति पठन्ति ॥ १०९ ॥

अथाग्निमारुतयोर्लक्षणमाह ।

अग्निप्रकृत्या चपलोऽतितीक्ष्ण-
श्चण्डः क्षुधालुर्बहुभोजनश्च ।
वायोः स्वभावेन चलः कृशश्च
क्षिप्रं च कोपस्य वशं प्रयाति ॥ ११० ॥

अग्निप्रकृत्या नरश्चपलः क्रियास्वनवस्थितः । अतितीक्ष्णः खलः । चण्डः क्रूरः । क्षुधालुः क्षुधां न सहते । बहुभोजनश्च बह्वाशी ।

वायोः स्वभावेन पुरुषश्चलोऽस्थिरमतिः । कृशो दुर्बलः । कोपस्य क्रोधस्य क्षिप्रमाश्वेव वशं प्रयाति विधेयतां गच्छति ॥ ११० ॥

अथाकाशसुरसत्त्वयोर्लक्षणमाह ।

खप्रकृतिर्निपुणो विवृतास्यः
[2]शब्दगतेः कुशलः सुषिराङ्गः ।
त्यागयुतः पुरुषो मृदुकोपः
स्नेहरतश्च भवेत् सुरसत्त्वः ॥ १११ ॥

१ रसभोजनश्च- इति पाठान्तरम् । २ शब्दगती- इति पाठान्तरम् ।

खप्रकृतिराकाशस्वभावो नरो निपुणः कलासु सूक्ष्मदृष्टिः । विवृतास्य उद्घाटितमुखः । शब्दगतेः कुशलः शब्दानां संस्कृतपदानां गतिर्व्याप्तिस्तस्याः कुशलः शक्तः । अथवा शास्त्रे गतेर्गमनस्य कुशलः । केचिच्छब्दगतौ कुशल इति पठन्ति । शब्दगतौ गतिविषये कुशलः । सुशिराङ्गः सुशिरावयवः । सुरसत्त्वो देवप्रकृतिः पुरुषस्त्यागयुतस्त्यागी । मृदुकोपोऽल्पक्रोधः । स्नेहरतः प्रीतियुक्तश्च भवति ॥ १११ ॥

अथ पुरुषसत्त्वस्य लक्षणमाह ।

**मर्त्यसत्त्वसंयुतो गीतभूषणप्रियः ।**
**संविभागशीलवान् नित्यमेव मानवः ॥ ११२ ॥**

मर्त्यो नरः । तत्सत्त्वसंयुतो गीतभूषणप्रियः । गीतप्रियो भूषणप्रियः भूषणानि अलङ्करणानि प्रियाणि यस्य । सम्यग्विभजनं संविभागः । संविभागवान् बान्धवानामुपकर्त्ता । शीलवान् चरित्रयुक्तः । नित्यं सर्वकालम् । मानवो मनुष्यो भवति ॥ ११२ ॥

अथ रक्षःपिशाचानां लक्षणमाह ।

**तीक्ष्णप्रकोपः खलचेष्टितश्च**
**पापश्च सत्त्वेन निशाचराणाम् ।**
**पिशाचसत्त्वश्चपलो मलाक्तो**
**बहुप्रलापी च समुल्बणाङ्गः ॥ ११३ ॥**

निशाचराणां रक्षसां सत्त्वेन नरस्तीक्ष्णप्रकोपश्चण्डक्रोधः । खलचेष्टितः । खलस्य दुर्जनस्येव चेष्टितं यस्य । पापश्च । पापरतो भवति । पिशाचसत्त्वः पिशाचप्रकृतिर्नरश्चपलोऽनेकमतिः । मलाक्तो मलोपदिग्धशरीरः । बहुप्रलापी बहुविधं प्रलपति । समुल्बणाङ्गः स्थूलाङ्गो भवति ॥ ११३ ॥

अथ तिर्यक्सत्त्वस्य लक्षणमाह ।

**भीरुः क्षुधालुर्बहुभुक् च यः स्याज्-**
**ज्ञेयश्च सत्त्वेन नरस्तिरश्चाम् ।**
**एवं नराणां प्रकृतिः प्रदिष्टा**
**यल्लक्षणज्ञाः प्रवदन्ति सत्त्वम् ॥ ११४ ॥**

यो नरः पुरुषो भीरुर्भयार्तः । क्षुधालुः क्षुधां न सहते । बहुभुक् बह्वाशी च यः स्यात् स तिरश्चां तिर्यग्जातीनां सत्त्वेन ज्ञेयो ज्ञातव्यः । एवमनेन प्रकारेण नराणां पुंसां प्रकृतिः प्रदिष्टा उक्ता । लक्षणज्ञाः पुरुषलक्षणविदो यत् सत्त्वमिति प्रवदन्ति कथयन्ति ॥ ११४ ॥

तथा च गर्गः ।

धन्यधन्यतरो वर्णो वर्णाद्धन्यतरः स्वरः ।
स्वराद्धन्यतरं सत्त्वं सर्वं सत्त्वे प्रतिष्ठितम् ॥

इति प्रकृतिसत्त्वम् ॥

अथ गतिलक्षणमाह ।

**शा[1]र्दूलहंससमदद्विपगोपतीनां**
**तुल्या भवन्ति गतिभिः शिखिनां च भूपाः ।**
**येषां च शब्दरहितं स्तिमितं च यातं**
**तेऽपीश्वरा द्रुतपरिप्लुतगा दरिद्राः ॥ ११५ ॥**

शार्दूलः सिंहः । हंसः पक्षी । केचिच्छार्दूलसिंहेति पठन्ति । शार्दूलः प्राणिविशेषः । सिंहो हरिः । समदो मदसहितो द्विपो हस्ती । मत्तगज इत्यर्थः । गोपतिर्वृषः । तथा शिखी मयूरः । एषां गतिभिर्गमनैस्तुल्याः सदृशगतयो भूपा राजानो भवन्ति । येषां च यातं गमनं शब्दरहितं निःशब्दं स्तिमितमल्पं च तेऽपीश्वरा धनिनः । द्रुतपरिप्लुतगा दरिद्राः । द्रुतं त्वरितं परिप्लुतं मण्डूकवज्जातक्षेपं गच्छन्ति । ते दरिद्रा निर्धना भवन्ति ॥ ११५ ॥

इति गतिः ॥

सिद्धान्तमाह ।

**श्रान्तस्य यानमशनं च बुभुक्षितस्य**
**पानं तृषापरिगतस्य भयेषु रक्षा ।**
**एतानि यस्य पुरुषस्य भवन्ति काले**
**धन्यं वदन्ति खलु तं नरलक्षणज्ञाः ॥ ११६ ॥**

---

१ शार्दूलसिंह–इति पाठान्तरम् ।

यस्य नरस्य श्रान्तस्य खिन्नस्य यानं वाहनमश्वादिकं भवति । बुभुक्षितस्याशनं भोजनं भवति । तृषापरिगतस्य पिपासां गतस्य पानं जलं भवति । भयेषूत्पन्नेषु रक्षा परिपालनम् । एतानि काले यथोपयुज्यमानानि भवन्ति । तं नरं धन्यं शुभलक्षणं वदन्ति कथयन्ति । नरलक्षणज्ञाः पुरुषचिह्नविदः ॥ ११६ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ पुरुषलक्षणं नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

## अथ पञ्चमनुष्यविभागो व्याख्यायते ।

तत्रादावेव तदारम्भप्रयोजनप्रदर्शनार्थमाह ।

**ताराग्रहैर्बलयुतैः स्वक्षेत्रस्वोच्चगैश्चतुष्टयगैः ।**
**पञ्च पुरुषाः प्रशस्ता जायन्ते तानहं वक्ष्ये ॥ १ ॥**

ताराग्रहा बुधकुजजीवशुक्रसौराः । तैस्ताराग्रहैः सबलैः 'स्थानदिक्चेष्टाकालबलयुक्तैः' । स्वक्षेत्रगैः स्वराशाववस्थितैः । स्वोच्चगैः स्वोच्चात्मीयेषूच्चराशिषु व्यवस्थितैः । चतुष्टयगैर्लग्नचतुर्थसप्तमदशमानामन्यतमेष्ववस्थितैरित्यर्थः । पञ्च पुरुषाः प्रशस्ता जायन्ते । तान् पुरुषानहं वक्ष्ये कथयिष्ये ॥ १ ॥

अथैषां प्रविभागलक्षणमाह ।

**जीवेन भवति हंसः सौरेण शशः कुजेन रुचकश्च ।**
**भद्रो बुधेन बलिना मालव्यो दैत्यपूज्येन ॥ २ ॥**

जीवेन बृहस्पतिना बलयुतेन हंसो नाम पुरुषो भवति । एवं सौरेण शनैश्चरेण बलिना शशो भवति । कुजेनाङ्गारकेण बलिना रुचको नाम योगो भवति । बुधेन बलिना भद्रः । दैत्यपूज्येन शुक्रेण बलिना मालव्यो भवति ॥ २ ॥

तथा च सारावल्याम् ।

स्वक्षेत्रे तु चतुष्टयेऽथ बलिभिः स्वोच्चे स्थितैर्वा ग्रहैः
शुक्राङ्गारकमन्दजीवशशिजैरेतैर्यथाप्रक्रमम् ।
मालव्यो रुचकः शशोऽथ कथितो हंसश्च भद्रस्तथा
सर्वेषामतिविस्तरान्मुनिमतात् संक्षिप्यते लक्षणम् ॥

एतेषामर्कचन्द्रबलवशाद्विशेषमाह श्लोकद्वयेन ।

**सत्त्वमहीनं सूर्याच्छारीरं मानसं च चन्द्रबलात् ।**
**यद्राशिभेदयुक्तावेतौ तल्लक्षणः स पुमान् ॥ ३ ॥**
**तद्धातुमहाभूतप्रकृतिद्युतिवर्णसत्त्वरूपाद्यैः ।**
**अबलरवीन्दुयुतैस्तैः सङ्कीर्णा लक्षणैः पुरुषाः ॥ ४ ॥**

सत्त्वमहीनं सूर्यादिति । सत्त्वं गुणभागः । अहीनं परिपूर्णम् । सूर्यादादित्यात् तुल्यस्य पुरुषस्य भवति । बलवशात् शारीरं देहगुणस्तनोः कान्तिः । मानसं बलमवस्कन्दता तच्चन्द्रबलात् चन्द्रबलवशाद्भवति । कथमित्याह । यद्राशिभेदयुक्ताविति । एतावर्कचन्द्रौ यद्राशिभेदयुक्तौ यस्मिन् राशिभेदे होराद्रेष्काणनवांशद्वादशभागत्रिंशद्भागाख्ये कुजादिसंबन्धिनि स्वे वा युक्तौ स्थितौ तस्य राशिभेदस्य योऽधिपतिर्ग्रहस्तल्लक्षणस्तैर्लक्षणैर्युक्तः स पुमान् भवति । राशिभेदका जातके भेदाध्याये प्रोक्ताः ॥ ३ ॥

तद्धातुमहाभूतप्रकृतिरिति । यद्राशिभेदयुक्तावेतौ तल्लक्षणः स पुमानित्युक्तम् । तत्र तद्धातुस्तदीयस्तस्य धातुर्भवति । तद्यथा धातवः ।

[1]स्नाय्वस्थ्यसृक्त्वगथ शुक्रवसा च मज्जा ।
मन्दार्कचन्द्रबुधशुक्रसुरेज्यभौमाः इति ॥
महाभूतानि पृथिव्यादीनां भौमादीनां ग्रहाणामुक्तानि ।

तद्यथा । [2]शिखिभूखपयोमरुद्गणानामधिपा भूमिसुतादयः क्रमेणेति । अर्कचन्द्रयोर्वह्न्यम्बुप्रकृतिर्वातपित्तश्लेष्मात्मिका । अथवा महीस्वभा[3]वः शुभपुष्पगन्ध इत्याद्युक्तम् । द्युतिः कान्तिश्छाया । चण्डांशुभ्या पद्महेमाग्निवर्णा इति । द्युतिमान्[4] वर्णस्निग्ध इत्यादि वर्णः । यथा । रक्त[5]श्यामो भास्कर इत्यादि । सत्त्वं गुणभागः । सत्त्वग्रहणं गुणपदोपलक्षणार्थम् । त्रयो गुणाः सत्त्वरजस्तमांसि चन्द्रार्कजीवा इत्युक्ताः ।

रूपं यथा म[6]धुपिङ्गलदृगित्यादि । आदिग्रहणाच्चेष्टास्वभावकर्मकौशलाः । एतैर्युक्तो भवति । रविचन्द्रौ सबलौ गृहहोराद्रेष्काणनवांशकद्वादशभा-

१ बृहज्जातकस्य २ अध्याये ११ श्लोकः । २ बृहज्जातकस्य २ अध्याये ६ श्लोकः ।
३ द्रष्टव्योऽस्य ग्रन्थस्य ८७६ पृष्ठे १७८ श्लो० ।
४ द्रष्टव्योऽस्य ग्रन्थस्य ८७३ पृष्ठे १०२ श्लोकः । ५ बृहज्जातकस्य २ अध्याये ४ श्लोकः ।
६ बृहज्जातकस्य २ अध्याये ८ श्लोकः ।

त्रिंशद्भागेषु यस्य यस्य ग्रहस्य स्थितो तेषां ग्रहाणां तत्तन्महाभूतादिभिर्युक्तः पुमान् भवति । अबलरवीन्दुयुतैरिति । तै राशिभेदैरबलरवीन्दुयुतैर्बलरहितार्कचन्द्रयुक्तैर्लक्षणैः सङ्कीर्णा व्यामिश्रास्ते पुरुषा भवन्ति । एतदुक्तं भवति । चन्द्रार्कयोर्बली यो यस्मिन् राशिभेदे भवत्येकस्तल्लक्षणो भवति स पुरुषः । अथ तावबलौ भवतस्तदा यत्रार्कः स्थितो यत्र चन्द्रः स्थितस्तैर्व्यामिश्रैर्लक्षणैर्युक्तो भवति ॥ ४ ॥

तथा च सारावल्याम् ।

बलरहितेन्दुरविभ्यां युक्तैर्भौमादिभिर्मिश्राः ।
न भवन्ति भूमिपाला दशासु तेषां सुतार्थयुताः ॥

अथ कस्माद्ग्रहात् को गुणो भवत्येतदाह ।

**भौमात् सत्त्वं गुरुता बुधात् सुरेज्यात् स्वरः सितात् स्नेहः ।**
**वर्णः सौरादेषां गुणदोषैः साध्वसाधुत्वम् ॥ ५ ॥**

एषां पुरुषाणां भौमात् कुजात् सत्त्वं भवति । सत्त्वशब्दो विशिष्टगुणवाचकः । गुरुता गौरवं परिपुष्टता बुधात् । सुरेज्याद्गुरोः स्वरः शब्दः । सिताच्छुक्रात् स्नेहो निर्मलता । सौराच्छनैश्चराद्वर्णः कान्तिः । किमेतत् सर्वदा भवति नेत्याह । गुणदोषैः साध्वसाधुत्वम् । एषां ग्रहाणां गुणैः सबलवत्त्वेन साधुत्वं सत्त्वादीनां सम्पद्भवति । दोषैर्हीनबलसत्त्वेनासाधुत्वं सत्त्वानामापद्भवति ॥ ५ ॥

तथा च सारावल्याम् ।

महीसुतात् सत्त्वमुदाहरन्ति गुरुत्वमिन्दोस्तनयाद्गुरोश्च ।
स्वरः सितात् स्नेहमतोऽनुवर्णौ बलाबलैः पूर्णलघूनि चैषाम् ॥

अथ सङ्कीर्णानां विशेषमाह ।

**सङ्कीर्णाः स्युर्न नृपा दशासु तेषां भवन्ति सुखभाजः ।**
**रिपुगृहनीचोच्चच्युतसत्पापनिरीक्षणैर्भेदाः ॥ ६ ॥**

सङ्कीर्णाः पुरुषा नृपा राजानो न स्युर्न भवेयुः । तेषां ग्रहाणां भौमादीनां दशासु सुखभाजः सुखिता भवन्ति । रिपुगृहेति । रिपुगृहं शत्रुक्षेत्रम् । नीचगृहं प्रसिद्धम् । उच्चत्वं जातके प्रसिद्धम् । तस्माद्ये च्युताश्चलिता ग्रहास्तैरवलोकिता दृष्टाः । सन्तः शुभग्रहाः पूर्णचन्द्रबुधजीवशुक्राः । पापाः क्षीणचन्द्रभौमरवि-

शनयः। रिपुगृहनीचोच्चच्युतानां शुभानां पापानां च निरीक्षणैरवलोकनैर्भेदा भवन्ति। तैर्भेदैस्तेषां पुरुषाणां सङ्कीर्णता भवतीत्यर्थः॥ ६॥

तथा च सारावल्याम्।

बलरहितेन्दुरविभ्यां युक्ते भौमादिभिर्ग्रहैर्मिश्राः।

न भवन्ति भूमिपाला दशासु तेषां सुतार्थयुताः॥

अधुना तेषां भौमादियुक्तहंसजातीनां प्रमाणमाह।

**षण्णवतिरङ्गुलानां व्यायामो दीर्घता च हंसस्य।**

**शशरुचकभद्रमालव्यसञ्ज्ञितास्त्र्यङ्गुलविवृद्ध्या॥ ७॥**

हंसस्य षण्णवतिरङ्गुलानां व्यायामः पृथुता च भवति। प्रसारितभुजद्वयस्य प्रमाणमित्यर्थः। दीर्घता चोच्च्यं षण्णवतिरङ्गुलानामेव। शशरुचकभद्रमालव्यसञ्ज्ञितास्त्र्यङ्गुलविवृद्ध्या। त्रिभिस्त्रिभिरङ्गुलैस्तेषां वृद्धिर्व्यायामोच्चयोर्भवतीत्यर्थः। एतदुक्तं भवति। नवनवतिरङ्गुलानां व्यायामो दीर्घता च शशस्य भवति। द्व्यधिकं शतं रुचकस्य। पञ्चाधिकं शतं भद्रस्य। अष्टाधिकं मालव्यस्येति। एतदुत्तरत्र वक्ष्यमाणग्रन्थेन विवृण्यते॥ ७॥

तथा च पराशरः।

उच्छ्रायः परिणाहस्तु यस्य तुल्यं शरीरिणः।

स नरः पार्थिवो ज्ञेयो न्यग्रोधपरिमण्डलः—इति॥

अथ गुणलक्षणान्याह श्लोकद्वयेन।

**यः सात्त्विकस्तस्य दया स्थिरत्वं**

**सत्त्वार्जवं ब्राह्मणदेवभक्तिः।**

**रजोऽधिकः काव्यकलाक्रतुस्त्री-**

**संसक्तचित्तः पुरुषोऽतिशूरः॥ ८॥**

**तमोऽधिको वञ्चयिता परेषां**

**मूर्खोऽलसः क्रोधपरोऽतिनिद्रः।**

**मिश्रैर्गुणैः सत्त्वरजस्तमोभि-**

**र्मिश्रास्तु ते सप्त सह प्रभेदैः॥ ९॥**

यः सात्त्विकस्तस्य दयेति। यः सात्त्विकः पुरुषस्तस्य सर्वभूतेषु दया भवति। स्थिरत्वमेकचित्तता। सत्त्वार्जवं सत्त्वानां प्राणिनामार्जवम्।

ऋजोर्भाव आर्जवम् । ऋजुभावः स्पष्टता । ब्राह्मणानां देवानां च भक्तिः । यो रजोऽधिकः पुरुषः स काव्येषु कलासु गीतनृत्यवाद्येषु क्रतुषु च संसक्तचित्तो भवति । अतिशूरः सङ्ग्रामप्रियः ॥ ८ ॥

तमोऽधिक इति । यस्तमोऽधिकस्तामसः पुरुषः स परेषां वञ्चयिता वञ्चनशीलो मूर्खो जडः । अलस आलस्यसंसक्तः । क्रोधपरः क्रोधी । अतिनिद्रश्च भवति । सत्त्वरजस्तमोभिस्त्रिभिर्मिश्रैस्तु ते पुरुषा मिश्रा मिश्रगुणा भवन्ति । ते च गुणैः स्वभेदैः सह सप्त भवन्ति । तद्यथा । सत्त्वं रजस्तम इति त्रयो भेदाः । सत्त्वरजसी रजस्तमसी सत्त्वतमसी त्रयः । सत्त्वरजस्तमसां त्रयाणां योगात् सप्तमः । एतद्राशिभेदवशात् सङ्कीर्णवशाच्च सम्भवति ॥ ९ ॥

अथ मालव्यलक्षणमाह ।

**मालव्यो नागनासः[1] समभुजयुगलो जानुसम्प्राप्तहस्तो**
**मांसैः पूर्णाङ्गसन्धिः समरुचिरतनुर्मध्यभागे कृशश्च ।**
**पञ्चाष्टौ चोर्ध्वमास्यं श्रुतिविवरमपि त्र्यङ्गुलोनं च तिर्यग्-**
**दीप्ताक्षं सत्कपोलं समसितदशनं नातिमांसाधरोष्ठम् ॥ १० ॥**

मालव्यनामा शुक्रेण योऽसावुत्पद्यते योगस्तस्येदं लक्षणम् । यथा । स नरो नागनासो नागो हस्ती नागस्येव नासा यस्य । दीर्घनास इत्यर्थः । समभुजयुगलः । समं तुल्यं भुजयुगलं बाहुद्वयं यस्य । अथवा नागनासासमभुजयुगलः । नागनासासमं करिकरसदृशं बाहुद्वयं यस्य सः । जानुसम्प्राप्तहस्त आजानुलम्बबाहुः । मांसैः पूर्णाङ्गसन्धिः । मांसैः परिपूर्णाः सर्वाङ्गसन्धयो यस्य । अनुल्बणास्थिरित्यर्थः । समरुचिरतनुः । समा तुल्या रुचिरा श्रेष्ठा तनुः शरीरं यस्य । मध्यभागे कट्याप्रदेशे कृशो दुर्बलः । पञ्चाष्टौ चोर्ध्वमास्यम् । पञ्च च अष्टौ च पञ्चाष्टौ त्रयोदशाङ्गुलानि । ऊर्ध्वमास्यमूर्ध्वमानेनास्यं चिबुकाल्ललाटान्तं यावत् त्रयोदशाङ्गुलं भवति । चिबुकाच्छ्रवणविवरं यावत् त्र्यङ्गुलोनं तिर्यग्भवति । चिबुकमध्यात् कर्णविवरं यावत् तिर्यक् कृत्वा दशाङ्गुलानि भवन्तीत्यर्थः । दीप्ताक्षं दीप्ते स्फुटे अक्षिणी यस्य । सत्कपोलं शोभनकपोलम् । समसितदशनं समास्तुल्याः सिताः श्वेता दशना दन्ता यस्य । नातिमांसलमधरमोष्ठं यस्य ॥ १० ॥

[1] नागनासासमभुजयुगलः-इति पाठान्तरम् ।

अस्य च यथाविधिस्वरूपमाह ।

मालवान् स भरुकच्छसुराष्ट्रान्
लाटसिन्धुविषयप्रभृतींश्च ।
विक्रमार्जितधनोऽवति राजा
पारियात्रनिलयान् कृतबुद्धिः ॥ ११ ॥

मालवान् जनान् । भरुकच्छान् जनानेव । सुराष्ट्रान् जनान् । लाटदेशः प्रसिद्धः । सिन्धुविषयः प्रसिद्ध एव । एतत्प्रभृतींश्च देशानवति रक्षति । कीदृशः । विक्रमार्जितधनो विक्रमेण प्रतापेनार्जितं धनं वित्तं येन तथाभूतः । स राजा पारियात्रनिलयान् पारियात्रः पर्वतस्तत्र कृतं निलयं गृहं यैस्तान् । कृतबुद्धिः शोभनमतिः सन्नवति ॥ ११ ॥

अन्यदप्याह ।

सप्ततिवर्षो मालव्योऽयं त्यक्ष्यति सम्यक् प्राणांस्तीर्थे ।
लक्षणमेतत् सम्यक् प्रोक्तं शेषनराणां चातो वक्ष्ये ॥ १२ ॥

अयं मालव्यः सप्ततिवर्षः सप्ततिर्वर्षाणां जीवितपरिमाणं तस्य भवति । तीर्थेषु पुण्यस्थानेषु सम्यक् तपसा प्राणानसूंस्त्यक्ष्यति । म्रियत इति । एतत् सम्यक् मालव्यस्य लक्षणं प्रोक्तं कथितम् । शेषनराणां भद्रादीनां चातोऽनन्तरं वक्ष्ये कथयिष्ये ॥ १२ ॥

तथा च सारावल्याम् ।

न स्थूलोष्ठो न विषमवपुर्नातिरिक्ताङ्गसन्धि-
र्मध्यक्षामः शशधररुचिर्हस्तिनादः सुगण्डः ।
सन्दीप्ताक्षः समसितरदो जानुदेशाप्तबाहु-
र्मालव्योऽयं विलसति नृपः सप्ततिर्वत्सराणाम् ॥
वक्त्रं त्रयोदशमितानि तथाङ्गुलानि
दैर्घ्येण कर्णविवरादपि विस्तरेण ।
मालव्यसञ्ज्ञमनुजः स भुनक्ति नूनं
लाटं समालवससिन्धुसपारियात्रम्—इति ॥

इति मालव्यः ॥

अथ भद्रलक्षणमाह ।

**उपचितसमवृत्तलम्बबाहु-**
**र्भुजयुगलप्रमितः समुच्छ्रयोऽस्य ।**
**मृदुतनुघनरोमनद्धगण्डो**
**भवति नरः खलु लक्षणेन भद्रः ॥ १३ ॥**

अयं भद्रनामा बुधेन योऽसावुत्पद्यते योगस्तस्येदं रूपं भवति । उपचितौ मांसलौ समौ तुल्यौ वृत्तौ परिवर्तुलौ लम्बौ दीर्घौ बाहू यस्य । अस्य भद्रस्य भुजयुगलप्रमितः समुच्छ्रयो भवति । यावदस्य प्रसारितभुजद्वयस्य प्रमाणं तावदप्युच्छ्रायप्रमाणं भवति । मृदुतनुघनरोमनद्धगण्डः । मृदुभिः कोमलैस्तनुभिः सूक्ष्मैः घनैः सन्ततै रोमभिर्नद्धौ संयुक्तौ गण्डौ मुखगण्डौ यस्य । तथाभूतो नरः । लक्षणेन बुधाख्येन योगेन भद्रसञ्ज्ञो भवति । खल्वित्यव्ययं वाक्यालङ्कारे ॥ १३ ॥

अन्यदपि लक्षणं श्लोकद्वयेनाह ।

**त्वक्शुक्रसारः पृथुपीनवक्षाः**
**सत्त्वाधिको व्याघ्रमुखः स्थिरश्च ।**
**क्षमान्वितो धर्मपरः कृतज्ञो**
**गजेन्द्रगामी बहुशास्त्रवेत्ता ॥ १४ ॥**
**प्राज्ञो वपुष्मान् सुललाटशङ्खः**
**कलास्वभिज्ञो धृतिमान् सुकुक्षिः ।**
**सरोजगर्भद्युतिपाणिपादो**
**योगी सुनासः समसंहतभ्रूः ॥ १५ ॥**

त्वक्शुक्रसार इति । त्वक्सारः शोभनत्वक् । शुक्रसारो बहुगुरुशुक्रः । पृथुपीनवक्षाः । पृथु विस्तीर्णं पीनं मांसलं वक्षो यस्य सः । सत्त्वाधिकः । सत्त्वशब्दो गुणवाचकः । सुखशब्दैरभिभूत इत्यर्थः । व्याघ्रमुखो व्याघ्रस्येव मुखं यस्य स व्याघ्रमुखः । स्थिर एकमतिः । क्षमान्वितः क्षमायुक्तः । धर्मपरो धर्मानुरतः । कृतज्ञः कृतं जानाति । गजेन्द्रगामी गजेन्द्रो हस्तिप्रधान इव गच्छति । बहुशास्त्रवेत्ता बहूनां शास्त्राणामभिज्ञः ॥ १४ ॥

प्राज्ञ इति । प्राज्ञो मेधावी । वपुष्मान् शोभनशरीरः । सुललाटशङ्खः शोभनं ललाटं शङ्खौ च यस्य । कलासु गीतनृत्यवाद्येष्वभिज्ञः । अभि मुख्येन जानाति । धृतिमान् धैर्ययुक्तः । सुकुक्षिः शोभनकुक्षिः । सरोजं पद्मं तस्य गर्भोऽभ्यन्तरम् । सरोजगर्भस्य द्युतिः कान्तिस्तत्तुल्या तत्सदृशी पाणिपादयोः करचरणयोर्द्युतिर्यस्य । योगी योगज्ञः । सुनासः शोभनासः । समसंहतभ्रूः । समे तुल्ये संहते संलग्ने भ्रुवौ यस्येति ॥ १५ ॥

अन्यदपि विशेषलक्षणमाह ।

नवाम्बुसिक्तावनिपत्त्रकुङ्कुम-
द्विपेन्द्रदानागुरुतुल्यगन्धता ।
शिरोरुहाश्चैकजकृष्णकुञ्चिता-
स्तुरङ्गनागोपमगुह्यगूढता ॥ १६ ॥

नवेनाम्बुना जलेन सिक्ता याऽवनिर्भूमिस्तस्यां यादृशो गन्धः । पत्त्रं गन्धपत्त्रम् । कुङ्कुमं प्रसिद्धम् । द्विपेन्द्रदानं हस्तिमदः । अगुरुः प्रसिद्धः सुगन्धद्रव्यम् । एषां तुल्यगन्धता सदृशगन्धता । शिरोरुहाश्चैकजकृष्णकुञ्चितास्तुरङ्गनागोपमगुह्यगूढता इति । शिरोरुहाः केशास्ते चैकजाः । एकैकस्मिन् रोमकूपे जाताः । कृष्णकुञ्चिता असितकुटिलाः । तुरङ्गोऽश्वः । नागो हस्ती । गुह्यं लिङ्गम् । तुरङ्गनागोपमा तत्सदृशी गुह्ये गूढतास्य भवति । प्रच्छन्नलिङ्गो भवतीत्यर्थः ॥ १६ ॥

अन्यच्च रेखालक्षणमाह ।

हलमुशलगदासिशङ्खचक्र-
द्विपमकराब्जरथाङ्किताङ्घ्रिहस्तः ।
विभवमपि जनोऽस्य बोभुजीति
क्षमति हि न स्वजनं स्वतन्त्रबुद्धिः ॥ १७ ॥

हलं लाङ्गलम् । मुशल आयुधविशेषो मुशलाकारः । गदा प्रसिद्धा । असिः खड्गः । शङ्खः प्रसिद्धः । चक्रमायुधं प्रसिद्धम् । द्विपो हस्ती । मकरः प्राणिविशेषो जलजः । अब्जं पद्मम् । रथः प्रसिद्धः । एतैर्-

लादिभिरङ्कितौ चा[1]ङ्घ्रिहस्तौ पादपाणी यस्य । तदाकाराभी रेखाभिश्चिह्नितौ पादहस्तौ भवेतामित्यर्थः । अस्य भद्रस्य विभवमैश्वर्यं जनो लोको बोभुजीति अत्यर्थं भुङ्क्ते । स्वजनं बन्धुजनं प्रति न क्षमति न सहते । तं प्रतिक्षमाशीलो न भवति । स्वतन्त्रबुद्धिः । स्वतन्त्रा नापरतन्त्रा बुद्धिर्धीर्यस्येति । स्वाधीनबुद्धिरिति ॥ १७ ॥

मानलक्षणमाह ।

अङ्गुलानि नवतिश्च षडूना-
न्युच्छ्रयेण तुलयापि हि भारः ।
मध्यदेशनृपतिर्यदि पुष्टा-
स्त्वयादयोऽस्य सकलावनिनाथः ॥ १८ ॥

उच्छ्रयेणोच्च्येन षडूनानि नवतिरङ्गुलानि भवन्ति । चतुरशीतिरङ्गुलान्युच्छ्रितानि भवन्तीत्यर्थः । तुलयापि हि भारः । पलसहस्रद्वयमित्यर्थः । स च मध्यदेशनृपतिर्मध्यदेशे राजा भवति । यद्यस्य त्वचादयोऽङ्गानि पुष्टाः । त्विग्रहणेनाङ्गानि ज्ञापयति । तदुक्तमादौ शशकरुचकभद्रमालव्यसञ्ज्ञितास्त्र्यङ्गुलविवृद्धाति । यदि पञ्चोत्तरमङ्गुलशतं व्यायामेन दैर्घ्यं च भवति तदा सकलावनिनाथः सार्वभौमो राजा भवतीत्यर्थः ॥ १८ ॥

अन्यच्च वयोलक्षणमाह ।

भुक्त्वा सम्यग्वसुधां शौर्येणोपार्जितामशीत्यब्दः ।
तीर्थे प्राणांस्त्यक्त्वा भद्रो देवालयं याति ॥ १९ ॥

सम्यग् वसुधां भूमिं शौर्येण बलेनोपार्जितां भुक्त्वा । अशीतिरब्दानां जीवितप्रायो यस्यासावशीत्यब्दः । तीर्थे पुण्यस्थाने । प्राणानसून् त्यक्त्वा भद्रो देवालयं स्वर्गं याति गच्छति ॥ १९ ॥

तथा च सारावल्याम् ।

शार्दूलप्रतिमाननो द्विपगतिः पीनोरुवक्षःस्थलो
लम्बापीनसुवृत्तबाहुयुगलस्तत्तुल्यमानोच्छ्रयः ।

[1] अत्राङ्घ्रियुक्तौ हस्तौ-अङ्घ्रिहस्तौ पादयुक्तौ पाणी पादपाणी इति विग्रहः कर्तव्यः । अन्यथा अङ्घ्रिहस्तं पादपाणि-इति पाठः साधीयान् ।

कामी कोमलसूक्ष्मरोमनिकरैः संहृद्गगण्डः शठः
प्राज्ञः पङ्कजगर्भपाणिचरणः सत्त्वाधिको योगवित् ॥

शङ्खासिकुञ्जरगदाकुसुमेषुकेतुचक्राब्जलाङ्गलविचिह्नितपाणिपादः ।
पन्नागुरुद्विपमदप्रथमाम्बुसिक्तमृत्कुङ्कुमप्रतिमगन्धतनुः सुघोणः ॥
शास्त्रार्थविद्धृतियुतः समसंहतभ्रूर्नागोपमो भवति चापि निगूढगुह्यः ।
सत्कुक्षिधर्मनिरतः सुललाटशङ्खो धीरः स्थिरस्त्वसितकुञ्चितकेशपाशः ॥

स्वतन्त्रः सर्वकार्येषु स्वजनं प्रति न क्षमः ।
भुज्यते विभवश्चास्य नित्यं बन्धुजनैः परैः ॥

भारस्तुलायास्तुलितो यदि स्यात् श्रीकान्यकुब्जाधिपतिस्तदासौ ।
यस्त्यादिपुष्टैः सहितैः स भद्रः सर्वत्र राजा शरदामशीतिम् ॥

अथ शशलक्षणमाह ।

**ईषद्दन्तुरकस्तनुद्विजनखः कोशेक्षणः शीघ्रगो**
**विद्याधातुवणिक्क्रियासु निरतः सम्पूर्णगण्डः शठः ।**
**सेनानीः प्रियमैथुनः परजनस्त्रीसक्तचित्तश्चलः**
**शूरो मातृहितो वनाचलनदीदुर्गेषु सक्तः शशः ॥ २० ॥**

अथ सौरेण रविसुतेन योऽसौ योग उत्पद्यते सचेत्थंरूपो भवति । शशाख्यः । ईषत् किञ्चित् । दन्तुरकः । दन्ता उन्नता यस्य । तनुद्विजनखः । तनवः अवरा द्विजा दन्ता नखाः कररुहाश्च यस्य । कोशेक्षणो विपुलपुटेक्षणः । शीघ्रगः शीघ्रगामी । विद्यासु मनःशिलागैरिकादिषु धातुषु वणिक्क्रियासु क्रयविक्रयेषु निरतः सक्तः । सम्पूर्णगण्डः समांसलमुखगण्डः । शठः परकार्ये विमुखः । सेनानीः सेनां नयति । प्रियमैथुनो मैथुनप्रियः । परजनस्त्रीसक्तचित्तः । परजनानां सम्बन्धिन्यो याः स्त्रियस्तासु सक्तं चित्तं यस्य । चलोऽस्थिरमतिः । शूरः सङ्ग्रामप्रियः । मातृहितो जननीभक्तः । वनाचलनदीदुर्गेषु सक्तः । वनेष्वरण्येषु । अचलेषु पर्वतेषु । नदीषु सरित्सु दुर्गेषु दुर्गादिषु । सक्तोऽनुरक्तो भवति ॥ २० ॥

अन्यच्च मानलक्षणमाह ।

**दीर्घोऽङ्गुलानां शतमष्टहीनं**
**साशङ्कचेष्टः पररन्ध्रविच्च ।**
**सारोऽस्य मज्जा निभृतप्रचारः**
**शशो ह्यतो नातिगुरुः प्रदिष्टः ॥ २१ ॥**

अष्टहीनं शतमङ्गुलानां द्विनवत्यङ्गुलान्युच्छ्रितो भवतीत्यर्थः । साशङ्का चेष्टा यस्य । यद्यत् करोति तत् साशङ्कमिति । पररन्ध्रविच्च । परजनानां छिद्रज्ञः । सारोऽस्य मज्जा । मज्जासारोऽयमित्यर्थः । निभृतप्रचारो निश्चलप्रचारः स्थिरगतिरित्यर्थः । अत शशो नातिगुरुर्नातिस्थूलः प्रदिष्ट उक्तः ॥ २१ ॥

अन्यदपि रेखाचिह्नलक्षणमाह ।

**मध्ये कृशः खेटकखड्गवीणा-**
**पर्यङ्कमालामुरजानुरूपाः ।**
**शूलोपमाश्चोर्ध्वगताश्च रेखाः**
**शशस्य पादोपगताः करे वा ॥ २२**

मध्ये मध्यभागे कत्त्याप्रदेशे कृशः क्षामः । खेटकः फरः । खड्गोऽसिः । वीणा वल्लकी । पर्यङ्कः प्रसिद्धः । आसनम् । माला स्रक् । मुरजो वादित्र-विशेषः । एषां खेटकादीनामनुरूपाः सदृश्यो रेखाः । शूलोपमाश्च त्रिशूलस-दृश्यः । ऊर्ध्वगता रेखाः शशस्य पादोपगताश्चरणस्थिताः । करे हस्ततले वा स्थिता भवन्ति ॥ २२ ॥

अन्यदपि वयोज्ञानादिकमाह ।

**प्रात्यन्तिको माण्डलिकोऽथवायं**
**स्फिक्स्रावशूलाभिभवार्त्तमूर्त्तिः ।**
**एवं शशः सप्ततिहायनोऽयं**
**वैवस्वतस्यालयमभ्युपैति ॥ २३ ॥**

अयं शशः । प्रात्यन्तिको गह्वरवासिनामधिपतिः । माण्डलिकोऽथवा राजा भवति । स्फिक्स्रावे स्फिक्स्रवणे योऽसौ शूलस्तदभिभवेन तत्परिभवेन

पीडया चार्तमूर्तिः पीडितशरीरः । एवंविधः शशोऽयं सप्ततिहायनः सप्तति-वर्षो वैवस्वतस्यालयं यमस्य गृहमभ्युपैति ॥ २३ ॥

तथा च सारावल्याम् ।

तनुद्विजः शीघ्रगतिः शशोऽयं शठोऽतिशूरो निभृतप्रचारः ।
वनाद्रिदुर्गेषु नदीषु सक्तः क्षयोदयी नातिलघुः प्रसिद्धः ॥
सेनानाथो बलिनिधिरतो धातुरश्चापि किञ्चि-
द्धातोर्वादे भवति निरतश्चञ्चलः कारणेषु ।
स्त्रीसंसक्तः परजनगृहे मातृभक्तः सुजङ्घो
मध्ये क्षामो बहुविधमती रन्ध्रवेदी परेषाम् ॥

पर्यङ्कशङ्खशरशस्त्रमृदङ्गमाला-
वीणोपमा यदि करे चरणे च रेखाः ।
वर्षाणि सप्ततिमितानि करोति राज्यं
प्रात्यन्तिकः क्षितिपतिः कथितो मुनीन्द्रैः ॥

इति शशः ॥

अधुना हंसलक्षणमाह ।

**रक्तं पीनकपोलमुन्नतनसं वक्त्रं सुवर्णोपमं**
**वृत्तं चास्य शिरोऽक्षिणी मधुनिभे सर्वे च रक्ता नखाः ।**
**स्रग्दामाङ्कुशशङ्खमत्स्ययुगलक्रत्वङ्गकुम्भाम्बुजै-**
**श्चिह्नैर्हंसकलस्वनः सुचरणो हंसः प्रसन्नेन्द्रियः ॥ २४ ॥**

जीवेन गुरुणा सह योऽसौ योगो हंसाख्यः समुत्पद्यते तस्येत्थं-रूपम् । अस्य हंसस्य वक्त्रं मुखं रक्तवर्णम् । पीनकपोलं समांसलं मुखमण्डलम् । उन्नतनसमुन्नतनासिकम् । सुवर्णोपमं कनकसदृशं मुखं भवति । वृत्तं परिवर्तुलं शिरः । अक्षिणी चक्षुषी मधुनिभे मधुसदृशे भवतः । नखाः कररुहाः सर्वे रक्ता रक्तवर्णाः । स्रग्दामो माला । अङ्कुशः प्रसिद्धः । शङ्खः प्रसिद्ध एव । मत्स्ययुगलं मीनयुग्मम् । क्रत्वङ्गं यज्ञाङ्गम् । वेदीस्रुवादि । कुम्भोऽम्भःकलशः । अम्बुजं पद्मम् । एतैश्चिह्नैश्चिह्नितः । हंसकलस्वनो हंसस्येव कलो मधुरः

स्वनः शब्दो यस्य । सुचरणः शोभनपादः । हंसः प्रसन्नेन्द्रियः प्रसन्नानि निर्मलानि इन्द्रियाणि वाक्पाणिपादपायूपस्थानि यस्य ॥ २४ ॥

अन्यच्चास्य मानलक्षणमाह ।

**रतिरम्भसि शुक्रसारता द्विगुणा चाष्टशतैः पलैर्मितिः ।**
**परिमाणमथास्य षड्युता नवतिः सम्परिकीर्त्तिता बुधैः ॥२५॥**

अम्भसि जलमध्ये रतिरस्य भवति । शुक्रसारता शुक्राधिकत्वम् । पलैरष्टशती द्विगुणा षोडशशतानि मितिर्मानम् । अथानन्तरं बुधैः पण्डितैरस्य हंसस्य षड्युता नवतिः षण्णवतिरङ्गुलानां परिमाणं पृथुत्वमौच्च्यं चोक्तं कथितम् ॥ २५ ॥

अन्यदस्य वयोज्ञानादिकमाह ।

**भुनक्ति हंसः खसशूरसेनान् गान्धारगङ्गायमुनान्तरालम् ।**
**शतं दशोनं शरदां नृपत्वं कृत्वा वनान्ते समुपैति मृत्युम् ॥२६॥**

हंसः खसान् शूरसेनान् गान्धारानेतान् सर्वानेव जनान् गङ्गायमुनान्तरालमन्तर्वेदीमित्यर्थः । एतान् सर्वान् भुनक्ति । शरदां वर्षाणां दशोनं शतं नवतिवर्षाणि नृपत्वं राज्यं कृत्वा वनान्ते वनसमीपे मृत्युं मरणमुपैति प्राप्नोति ॥ २६ ॥

तथा च सारावल्याम् ।

रक्तास्युन्नतनासिकः सुचरणो हंसः प्रसन्नेन्द्रियो
गौरः पीनकपोलरक्तकरजो हंसस्वरः श्लेष्मलः ।
शङ्खाब्जाङ्कुशदाममत्स्ययुगलैर्निस्त्रिंशमालाघटै-
श्चिह्नैः पादकराङ्कितो मधुनिभे नेत्रे च वृत्तं शिरः ॥
सलिलाश्रयेषु रमते स्त्रीषु न तृप्तिं प्रयाति कामार्तः ।
षोडशशतानि तुलितोऽङ्गुलानि दैर्घ्येण षण्णवतिः ॥
पातीह देशांश्च स शूरसेनान् गान्धारगङ्गायमुनान्तरालम् ।
जीवेन्नवत्यां दशवर्षसंख्यां पश्चाद्वनान्ते समुपैति नाशम् ॥

अथ रुचकलक्षणमाह ।

**सुभ्रूकेशो रक्तश्यामः कम्बुग्रीवो व्यादीर्घास्यः ।**
**शूरः क्रूरः श्रेष्ठो मन्त्री चौरस्वामी व्यायामी च ॥ २७ ॥**

कुजेन भौमेनायं रुचकाख्यो नाम योगः समुत्पद्यते । स त्वेतत्स्वरूपो रुचकः । सुभ्रूकेशो भ्रुवः केशाश्च शोभना यस्य । रक्तश्यामः रक्तश्चासौ श्यामो रक्तश्यामः । कम्बुग्रीवो वलित्रयचितग्रीवः । व्यादीर्घास्यः । विशेषेण दीर्घमास्यं मुखं यस्य । शूरः सङ्ग्रामप्रियः । क्रूर उग्रस्वभावः । श्रेष्ठः प्रधानः । मन्त्री मन्त्रज्ञः । अथवा मन्त्री सचिवः । चोरस्वामी तस्करनाथः । व्यायामी श्रमपरः ॥ २७ ॥

अन्यदपि मानलक्षणमाह ।

**यन्मात्रमास्यं रुचकस्य दीर्घं**
**मध्यप्रदेशे चतुरस्रता सा ।**
**तनुच्छविः शोणितमांससारो**
**हन्ता द्विषां साहससिद्धकार्यः ॥ २८ ॥**

रुचकस्य यन्मात्रमास्यं मुखं दीर्घं सा मध्यप्रदेशे उदरमध्ये चतुरस्रता विपुलत्वं भवति । तनुच्छविः सूक्ष्मत्वक् । शोणितमांससारः । रक्तसारः । मांससारश्च । हन्ता द्विषाम् । शत्रूणां हन्ता घातकः । साहससिद्धकार्यः । साहसेन सिद्धं कार्यं यस्य । असमीक्षितकार्यकरणत्वं साहससिद्धत्वमिति ॥ २८ ॥

अन्यदपि करचरणयोश्चिह्नलक्षणमाह ।

**खट्वाङ्गवीणावृषचापवज्र-**
**शक्तीन्द्रशूलाङ्कितपाणिपादः ।**
**भक्तो गुरुब्राह्मणदेवतानां**
**शताङ्गुलः स्यात् तु सहस्रमानः ॥ २९ ॥**

खट्वाया अङ्गं खट्वाङ्गम् । वीणा वल्लकी । वृषो दान्तः । चापं धनुः । वज्रमायुधम् । शक्तिरप्यायुधमेव । इन्द्रः । शूलं त्रिशूलम् । एतैरङ्कितौ चिह्नितौ पाणिपादौ हस्तचरणौ यस्य । गुरूणां ब्राह्मणानां देवतानां च भक्तः । शताङ्गुलः स्यात् । अङ्गुलानां शतं दैर्घ्येण पृथुत्वेन च स्याद्भवेत् । सहस्रमानः । सहस्रं पलानां परिमाणं यस्य ॥ २९ ॥

---

१ द्रष्टव्याऽस्य ग्रन्थस्य ८८७ पृष्ठे १ टिप्पणी ।

अन्यच्च वयोज्ञानादिकमाह ।

**मन्त्राभिचारकुशलः कृशजानुजङ्घो**
**विन्ध्यं ससह्यगिरिमुज्जयिनीं च भुक्त्वा ।**
**सम्प्राप्य सप्ततिसमा रुचको नरेन्द्रः**
**शस्त्रेण मृत्युमुपयात्यथवानलेन ॥ ३० ॥**

मन्त्रेषु कुशलः सक्तः । अभिचारेषु विद्वेषोच्चाटनवशीकरणमारणेषु कुशलः । कृशे दुर्बले जानुनी जङ्घे च यस्य । विन्ध्यं गिरिं विन्ध्यं पर्वतं ससह्यगिरिं सह्येन गिरिणा सहितम् । उज्जयिनीं नगरीं च भुक्त्वा नरेन्द्रो राजा सप्ततिसमाः सप्ततिवर्षाणि सम्प्राप्य शस्त्रेणायुधेनानलेनाग्निना वा मृत्युं मरणमुपयाति प्राप्नोति ॥ ३० ॥

तथा च सारावल्याम् ।

दीर्घास्यः स्वच्छकान्तिर्बहुरुचिचपलः साहसावाप्तकार्य-
श्चारुभ्रूर्नीलकेशः श्रमकरणरतो मन्त्रविच्चौरनाथः ।
रक्तश्यामोऽतिशूरो रिपुबलमथनः शङ्खकण्ठः प्रधानः
क्रूरो भक्तो नराणां द्विजगुरुनिरतः क्षाममज्जोऽनुजङ्घः ॥
खट्वाङ्गपाशवृषकार्मुकवज्रवीणाशस्यङ्कहस्तचरणश्च तथाङ्गुलिश्च ।
मन्त्राभिचारकुशलस्तुलया सहस्रं मध्यं च तस्य कथितं मुखदैर्घ्यतुल्यम् ॥
विन्ध्याचलमस्तगिरीन् भुक्त्वावन्तीं च सप्ततिं शरदाम् ।
शस्त्रानलकृतमृत्युं प्रयाति देवालयं रुचकः ॥

इति रुचकः ॥

## अथ नृपानुचरलक्षणं व्याख्यायते ।

तत्रादावेव तत्प्रविभागमाह ।

**पञ्चापरे वामनको जघन्यः**
**कुब्जोऽथवा मण्डलकोऽथ साची ।**
**पूर्वोक्तभूपानुचरा भवन्ति**
**सङ्कीर्णसञ्ज्ञः शृणु लक्षणैस्तान् ॥ ३१ ॥**

अतोऽस्मात् पञ्चयोगकादपरेऽन्ये वामनकादय एषामेव भूपानामनुचरा भवन्ति । तद्यथा । वामनको जघन्यः कुब्जः । अथवेति । अथशब्द आनन्तर्ये । वाशब्दश्चार्थे । मण्डलकः । अथ साची । एते पूर्वोक्तानां पञ्चानां भूपानामनुचरा भवन्ति । पूर्वोक्ताः प्राक् कथिता ये भूपा राजानो मालव्यादयः । एषामनुचराः सुहृदो भवन्ति । ते सङ्कीर्णसञ्ज्ञाः पुरुषाः । तांश्च लक्षणैः शृणु ॥ ३१ ॥

तत्र वामनकलक्षणमाह ।

सम्पूर्णाङ्गो वामनो भग्नपृष्ठः
किञ्चिच्चोरूमध्यकक्ष्यान्तरेषु ।
ख्यातो राज्ञां ह्येष भद्रानुजीवी
स्फीतो राजा वासुदेवस्य भक्तः ॥ ३२ ॥

वामनसञ्ज्ञः सम्पूर्णाङ्गः परिपूर्णावयवः । भग्नपृष्ठो भग्नं पृष्ठं यस्य । ऊरुप्रदेशे मध्ये मध्यभागे कक्ष्यान्तरेषु किञ्चिदीषद्भग्न एव किञ्चिदसम्पूर्णाङ्गः । राज्ञां पञ्चानां मध्ये एष वामनको भद्रानुजीवी भवति । भद्रस्यानु पश्चाज्जीवति । ख्यातः कीर्तियुक्तश्च । स्फीत ईश्वरो राजा भवति । स च वासुदेवस्य नारायणस्य च भक्तो भवति ॥ ३२ ॥

अथ जघन्यलक्षणमाह ।

मालव्यसेवी तु जघन्यनामा
खण्डेन्दुतुल्यश्रवणः सुसन्धिः ।
शुक्रेण सारः पिशुनः कविश्च
रूक्षच्छविः स्थूलकराङ्गुलीकः ॥ ३३ ॥
क्रूरो धनी स्थूलमतिः प्रतीत-
स्ता[1]म्रच्छविः स्यात् परिहासशीलः ।
उरोऽङ्घ्रिहस्तेष्वसिशक्तिपाश-
परश्वधाङ्कः स जघन्यनामा ॥ ३४ ॥

---

१ स्तामच्छविर्वानुचरः स नित्यम्-इति पाठान्तरम् ।

जघन्यनामा यः स मालव्यस्य नृपस्यानुचरो भवति । खण्डेन्दुतुल्यश्रवणः खण्डश्चासाविन्दुः खण्डेन्दुः । अर्धचन्द्रसदृशकर्णः । सुसन्धिः शोभनाङ्गसन्धिः । शुक्रेण सारः शुक्राधिकः । पिशुनः सूचकः । कविः पण्डितः । स्वच्छविरलस्निग्धत्वक् । स्थूलकराङ्गुलीकः । स्थूलाः कराङ्गुलयो यस्य ॥ ३३ ॥

क्रूरः क्रोधशीलः । धनी धनवान् । स्थूलमतिर्महाबुद्धिः । प्रतीतः प्रख्यातः । ताम्रच्छवी रक्तत्वक् । स्याद्भवेत् । परिहासशीलः परिहसनप्रियः । सच जघन्यनामा । अपरः पाठो वानुचरः स नित्यम् । सर्वकालमेवानुचर इति । उरोऽङ्घ्रिहस्तैरसिशक्तिपाशपरश्वधाङ्कः । उरो वक्षः । अङ्घ्री पादौ । हस्तौ पाणी । एतेषु । असिः खड्गः । शक्तिरायुधविशेषः । पाशः सर्पः । अथवा पाशरूप एव । परश्वधमायुधम् । एतैरङ्कितश्चिह्नितो भवति ॥ ३४ ॥

अथ कुब्जलक्षणमाह श्लोकद्वयेन । युगलकम् ।

कुब्जो नाम्ना यः स शुद्धो ह्यधस्तात्
क्षीणः किञ्चित् पूर्वकाये नतश्च ।
हंसासेवी नास्तिकोऽर्थैरुपेतो
विद्वान् शूरः सूचकः स्यात् कृतज्ञः ॥ ३५ ॥
कलास्वभिज्ञः कलहप्रियश्च
प्रभूतभृत्यः प्रमदाजितश्च ।
सम्पूज्य लोकं प्रजहात्यकस्मात्
कुब्जोऽयमुक्तः सततोद्यतश्च ॥ ३६ ॥

कुब्जो नाम्नेति । कुब्जो नाम्ना यः सोऽधस्तादधोभागाच्छुद्धः परिपूर्णाङ्गः । पूर्वकाये प्राग्देहभागे किञ्चित् क्षीणः किञ्चिन्नतश्च । हंसासेवी हंसस्यानुचरः । नास्तिकः क्रियारहितो लोकायतिकप्रायः । अर्थैरुपेतोऽर्थसंयुक्तः । विद्वान् पण्डितः । शूरः सङ्ग्रामप्रियः । सूचकः पिशुनः । स्याद्भवेत् । कृतज्ञः कृतं जानाति ॥ ३५ ॥

कलास्वभिज्ञ इति। कलासु गीतनृत्यवाद्येषु अभिज्ञोऽभि मुख्येन जानाति। कलहप्रियश्च भवति। प्रभूतभृत्यो बहुभृत्यः। प्रमदाजितश्च स्त्रीभिर्निर्जितः। लोकं जनम्। सम्पूज्यार्चयित्वा। अकस्मादेव प्रजहाति त्यजति। अयं कुब्ज उक्तः कथितः। सततोद्यतः सर्वकालमुत्साही॥ ३६॥ युगलकम्।

अथ मण्डलकलक्षणमाह श्लोकद्वयेन।

**मण्डलकक्षणमतो रुचकानुचरोऽभिचारवित् कुशलः।**
**कृत्यावेतालादिषु कर्मसु विद्यासु चानुरतः॥ ३७॥**
**वृद्धाकारः खरपरुषमूर्धजश्च शत्रुनाशने कुशलः।**
**द्विजदेवय[1]ज्ञयोगप्रसक्तधीः स्त्रीजितो मतिमान्॥ ३८॥**

मण्डलकलक्षणमत इति। अतोऽस्मात् कुब्जादनन्तरं मण्डलकलक्षणं भवति। सच कीदृक्। रुचकानुचरो रुचकस्यानुचरः। रुचकानुजीवी भवति। अभिचारविदभिचारज्ञः। विद्वेषोच्चाटनवशीकरणेष्वभिज्ञः। कुशलः समर्थः। कृत्यावेतालादिषु। अभिचारकैर्मन्त्रैः शत्रुवधार्थमग्निमध्याद्यास्त्री उत्पाद्यते सा कृत्या। शावशरीरस्योत्कृष्टस्य मन्त्रैः पुनरुत्थापनं वेतालः। आदिग्रहणाद्यक्षभूतेषु कर्मसु तथा तद्विद्यासु चानुरतः सक्तः॥ ३७॥

वृद्धाकारो वृद्धसदृशशरीरः। खरपरुषमूर्धजः। खराः कठिनाः परुषा रूक्षा मूर्धजाः केशा यस्य। शत्रुनाशने रिपूणां हनने कुशलः समर्थः। द्विजानां ब्राह्मणानां देवानां सुराणां यज्ञानामश्वमेधादीनां तथा योगेषु साङ्ख्यादिशास्त्रेषु प्रसक्ता धीर्बुद्धिर्यस्य। केचित् द्विजदेवयज्ञदोहप्रसक्तधीरिति पठन्ति। अथवा यज्ञं दुहन्ति ये तेऽग्निहोत्रिणः। स्त्रीजितः स्त्रीभिः पराजितः। मतिमान् बुद्धिमानिति॥ ३८॥ युगलकम्।

अथ साचिलक्षणम्।

**साचीति यः सोऽतिविरूपदेहः**
**शशानुगामी खलु दुर्भगश्च।**

---

१ द्विजदेवयज्ञदोहप्रसक्तधीः-इति पाठान्तरम्।

**दाता महारम्भसमाप्तकार्यो**
**गुणैः शशस्यैव भवेत् समानः ॥ ३९ ॥**

साचीति । यः साची नाम सोऽतिविह्वलदेहोऽशोभनशरीरः । शशानुगामी । शशस्यानुगामी पश्चाद्गच्छति । शशानुचरः । खल्वित्यव्ययं वाक्यालङ्कारे । दुर्भगो जनानामवल्लभः । दाता दानशीलः । महारम्भसमाप्तकार्यः । महारम्भान् करोति तेषु च समाप्तकार्योऽन्तगः । गुणैःपूर्वोक्तैः शशस्येव समानः सदृशस्तुल्यो भवेदित्यर्थः ॥ ३६ ॥

अथ पुरुषलक्षणस्य प्रभावमाह ।

**पुरुषलक्षणमुक्तमिदं मया**
**मुनिमतानि निरीक्ष्य समासतः ।**
**इदमधीत्य नरो नृपसम्मतो**
**भवति सर्वजनस्य च वल्लभः ॥ ४० ॥**

मुनिमतानि ऋषिप्रणीतानि शास्त्राणि निरीक्ष्यावलोक्य समासतः सङ्क्षेपतो मयेदं पुरुषलक्षणमुक्तं कथितम् । इदं च पुरुषलक्षणं नरः पुरुषोऽधीत्य ज्ञात्वा नृपसम्मतो राज्ञां सम्मत इष्टो भवति । सर्वजनस्य च सर्वलोकस्य च वल्लभः प्रियो भवति । यतः पूर्वमेवाचार्येण द्वयं प्रतिज्ञातम् ।

यथा ।

ज्यो[१]तिषमागमशास्त्रं विप्रतिपत्तौ न योग्यमस्माकम् ।
स्वयमेव विकल्पयितुं किन्तु बहूनां मतं वक्ष्ये ॥

इत्येव विचार्य सर्वागमतः पुरुषलक्षणं कथितम् । तच्च चिन्तनीयमन्यदूह्यं चेति ॥ ४० ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ पञ्चमहापुरुषलक्षणं नामानुचरैः सहाष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

१ द्रष्टव्योऽस्य ग्रन्थस्य २१३ पृष्ठे ,७ श्लोकः ।

## अथ कन्यालक्षणं व्याख्यायते ।

तत्रादावेव पादलक्षणम् ।

स्निग्धोन्नताग्रतनुताम्रनखौ कुमार्याः
पादौ समोपचितचारुनिगूढगुल्फौ ।
श्लिष्टाङ्गुली कमलकान्तितलौ च यस्या-
स्तामुद्वहेद्यदि भुवोऽधिपतित्वमिच्छेत् ॥ १ ॥

यस्याः कुमार्याः कन्यकायाः । पादौ चरणौ । स्निग्धोन्नताग्रतनुताम्रनखौ । स्निग्धौ सस्नेहावुन्नतावुच्चौ कूर्मपृष्ठौ । अग्रे तनू ययोः । ताम्रनखौ रक्तवर्णौ नखौ ययोः । समोपचितचारुनिगूढगुल्फौ समौ तुल्यावुपचितौ समांसलौ चारू दर्शनीयौ निगूढावनुल्बणौ गुल्फौ ययोः । तथाश्लिष्टाङ्गुली श्लिष्टा घना अङ्गुल्यः पादशाखा ययोः । कमलकान्तितलौ । कमलस्य पद्मस्येव कान्तिस्तले ययोः । तथाभूतौ पादौ । यदि भुवो भूम्या अधिपतित्वं राज्यमिच्छेत् तदा तामुद्वहेत् ॥ १ ॥

पुनरपि पादजङ्घाजानूरुगुह्यमणीनां लक्षणमाह ।

मत्स्याङ्कुशाब्जयववज्रहलासिचिह्ना-
वस्वेदनौ मृदुतलौ चरणौ प्रशस्तौ ।
जङ्घे च रोमरहिते विशिरे सुवृत्ते
जानुद्वयं सममनुल्बणसन्धिदेशम् ॥ २ ॥
ऊरू घनौ करिकरप्रतिमावरोमा-
वश्वत्थपत्त्रसदृशं विपुलं च गुह्यम् ।
श्रोणीललाटमुरु कूर्मसमुन्नतं च
गूढो मणिश्च विपुलां श्रियमादधाति ॥ ३ ॥

मत्स्याङ्कुशाब्जेति । मत्स्यो मीनः । अङ्कुशः प्रसिद्धः । अब्जं पद्मम् । यवो यवाकारः । वज्रमायुधम् । हलं लाङ्गलम् । असिः खड्गः । एतैश्चिह्नैश्चिह्नितौ चरणौ पादौ । तथाऽस्वेदनौ स्वेदरहितौ । मृदुतलौ मृदुनी तले ययोस्तौ तथाभूतौ प्रशस्तौ ।

तथा च समुद्रः ।

स्निग्धौ ताम्रनखौ धन्यौ कूर्मपृष्ठौ सुलोहितौ ।
निगूढगुल्फौ सुश्लिष्टौ घनाङ्गुलिसमन्वितौ ॥
मत्स्याङ्कुशयवाब्जेषुहलवज्रासिचिह्नितौ ।
सुस्पृशौ रोमरहितौ कुमार्याश्चरणौ शुभौ ॥
अतो विपर्ययस्तगुणौ दुःखदारिद्र्यभागिनौ ।
यस्याः पादौ नतौ कन्यामुद्वहेन्न कदाचन ॥

जङ्घे च रोमरहिते इति । जङ्घे रोमरहिते रोमवर्जिते । विशिरे शिरारहिते । सुवृत्ते परिवर्तुले । जानुयुगं जानुयुगलं समं तुल्यम् । अनुल्बणसन्धिदेशमस्थूलसन्धिदेशम् । सुश्लिष्टे जानुनी यच ॥ २ ॥

ऊरू घनाविति । ऊरू घनौ सन्ततौ करिकरप्रतिमौ गजहस्तसदृशौ । अरोमौ रोमवर्जितौ । गुह्यं भगम् । अश्वत्थपत्रसदृशम् । अश्वत्थवृक्षपत्राकारम् । विपुलं विस्तीर्णम् । श्रोण्या ललाटं श्रोणीललाटम् । तच्चोरु विस्तीर्णम् । कूर्मसमुन्नतं कूर्मवदुच्चं कूर्मपृष्ठाकारम् । मणिश्च निगूढोऽदृश्यमानो विपुलां विस्तीर्णां श्रियं लक्ष्मीमादधाति करोति ॥ ३ ॥

तथा च समुद्रः ।

जङ्घे तु रोमरहिते शिराहीने सुवर्तुले ।
सुश्लिष्टे जानुनी धन्ये शिरारोमविवर्जिते ॥
गजहस्तसमावूरू सम्पन्नौ सन्ततौ समौ ।
सुस्पर्शं कूर्मपृष्ठं वा विपुलं जघनं शुभम् ॥
मणिर्निगूढः सुश्लिष्टः स्फिजौ च विपुलौ शुभौ ।
नाभिदेशः सुगुप्तश्च यस्याः सा धनभागिनी ॥

अथ नितम्बनाभीलक्षणमाह ।

**विस्तीर्णमांसोपचितो नितम्बः**
**गुरुश्च धत्ते रशनाकलापम् ।**
**नाभिर्गभीरा विपुलाङ्गनानां**
**प्रदक्षिणावर्त्तगता च शस्ता ॥ ४ ॥**

नितम्बः कटिभागः । स च विस्तीर्णः पृथुलो मांसोपचितः समांसलः । गुरुश्च गौरवयुक्तो रशनाकलापं धत्ते धारयति । रशनायाः कलापो रशनाकलापः । रशना मेखला । तस्याः कलापो विस्तारः । तं धारयति ।

तथा च ।

जघनं विपुलं यस्याः सुस्पर्शं रोमवर्जितम् ।
सुवर्णाभरणैर्युक्ता सा भवेद्राज्यभागिनी ॥

नाभिर्गभीरेति । अङ्गनानां स्त्रीणां नाभिर्गभीरा गम्भीरा । विपुला विस्तीर्णा । प्रदक्षिणावर्तेन च गता प्रशस्ता धन्या ॥ ४ ॥

तथा च ।

गम्भीरा विपुला नाभी दक्षिणावर्तमाश्रिता ।
शस्ता विपर्यये नेष्टा वामावर्ता विशेषतः ॥

अथ मध्यस्तनोरुवक्षोग्रीवालक्षणमाह ।

**मध्यस्त्रियास्त्रिवलिनाथमरोमशं च**
**वृत्तौ घनावविषमौ कठिनावुरस्यौ ।**
**रोमप्रवर्जितमुरो मृदु चाङ्गनानां**
**ग्रीवा च कम्बुनिचितार्थसुखानि दत्ते ॥ ५ ॥**

स्त्रियो योषितो मध्यं मध्यभागं त्रिवलिनाथं त्रिवलिस्वामिनं वलित्रयोपविष्टं वलित्रययुक्तमित्यर्थः । अरोमशं रोमरहितम् ।

तथा च ।

मध्यं वलित्रयचितं सुस्पर्शं रोमवर्जितम् ।
यस्याः सा राजमहिषी कल्या नास्त्यत्र संशयः ॥

वृत्तौ घनाविति । उरसि भवावुरस्यौ स्तनौ । वृत्तौ परिवर्तुलौ । घनौ सन्ततौ । अविषमावतुल्यौ । कठिनौ कर्कशौ ।

तथा च ।

स्तनौ सुवर्तुलौ धन्यौ सन्ततौ कठिनौ तथा ।
अरोमौ च शिराहीनौ पुत्रसौख्यधनप्रदौ ॥

रोमप्रवर्जितमिति।

अङ्गनानां स्त्रीणामुरो वक्षो रोमवर्जितं रोमरहितं मृदु सुस्पर्शं च शुभम्।

तथा च।

वक्षो विलोम सुस्पर्शं विस्तीर्णं पतिसौख्यदम्।
शिराततं च विषमं वैधव्यायासशोकदम्॥

ग्रीवा चेति। ग्रीवा शिरोधरा कम्बुनिचिता वलित्रयोपचिता। अर्थान् सुखानि च दत्ते ददाति॥ ५॥

तथा च गर्गः।

स्थिरा त्रिरेखा सुभगोपपन्ना स्निग्धा सुमांसोपचिता सुवृत्ता।
न चातिदीर्घा चतुरङ्गुला च ग्रीवा च दीर्घा भवतीह धन्या॥

अथाधरदन्तलक्षणमाह।

**बन्धुजीवकुसुमोपमोऽधरो**
**मांसलो रुचिरबिम्बरूपभृत्।**
**कुन्दकुड्मलनिभाः समा द्विजा**
**योषितां पतिसुखामितार्थदाः॥ ६॥**

अधरोऽधरोष्ठो बन्धुजीवकुसुमोपमः। बन्धुजीवकुसुमसदृशोऽतिलोहित इत्यर्थः। मांसलो मांसोपेतः। रुचिरबिम्बरूपभृत्। रुचिरस्य दीप्तियुक्तस्य बिम्बस्य बिम्बफलस्य तुल्यं रूपं बिभर्ति धारयति।

तथा च।

अधरो बिम्बसङ्काशो मांसलोऽस्फुटितस्तथा।
यस्याः सा राजमहिषी कुमारी नात्र संशयः॥

कुन्दकुड्मलेति। द्विजा दन्ताः कुन्दकुड्मलनिभाः। कुन्दः पुष्पविशेषः। तस्य कुड्मलानि कलिकाः। तन्निभास्तत्सदृशाः। समास्तुल्याः। योषितां स्त्रीणाम्। पतिसुखं भर्तृसुखम्। अमितमपरिमितं प्रभूतमर्थं धनं च ददति।

तथा च गर्गः ।

तीक्ष्णाग्रवृत्ताः सुसमा दृढाश्च शुभा मृणालेन्दुसमानवर्णाः ।
निरन्तराः स्त्रीषु भवन्ति धन्या द्विजास्तथा ये रजतप्रकाशाः ॥

तथा च समुद्रः ।

द्वात्रिंशद्दशना यस्याः सर्वे गोक्षीरपाण्डुराः ।
सर्वे शिखरिणः स्निग्धा राजभार्या च सा भवेत् ॥

अथ वदननासिकादृशां लक्षणमाह ।

**दाक्षिण्ययुक्तमशठं परपुष्टहंस-**
**वल्गु प्रभाषितमदीनमनल्पसौख्यम् ।**
**नासा समा समपुटा रुचिरा प्रशस्ता**
**दृग्नीलनीरजदलद्युतिहारिणी च ॥ ७ ॥**

प्रभाषितं वचनं दाक्षिण्ययुक्तमानुकूल्यसंयुक्तं सुरसम् । अशठं शठभावरहितम् । परपुष्टः कोकिलः । हंसः पक्षिविशेषः । तत्सदृशं वल्गु रम्यम् । तथा चादीनं दैन्यरहितं यदि भवति तदाऽनल्पसौख्यं प्रभूतसौख्यम् ।

तथा च गर्गः ।

हंसस्वना दुन्दुभिनेमिघोषा मेघस्वनाः शङ्खनिनादघोषाः ।
मयूरचक्रप्रतिमस्वनाश्च स्त्रियस्तथा कोकिलतुल्यशब्दाः ॥
कादम्बचक्राह्वयकिङ्किणीषुसमस्वना याश्च भवन्ति नार्यः ।
सर्वाः प्रशस्ता धनपुत्रवत्यो भवन्ति धर्मानुरताः सदा ताः ॥

नासा समेति । नासा नासिका समा स्पष्टा । समपुटा तुल्या नासापुटा । रुचिरा सुकान्ता । प्रशस्ता शुभा ।

तथा च ।

स्पष्टा समा समपुटा नासा सौभाग्यदा मता ।

दृगिति । दृग्दृष्टिः । नीलनीरजदलद्युतिहारिणी । नीलं च तन्नीरजं नीलनीरजं नीलोत्पलम् । तस्य दलं पत्रं तस्य द्युतिं कान्तिं हरति तच्छीला नीलनीरजद्युतिहारिणी प्रशस्ता ॥ ७ ॥

तथा च ।

नीलनीरजप[1]त्राभा दृष्टिर्यस्या भवेत् सदा ।
सा राजमहिषी ज्ञेया ज्योतिःशास्त्रविशारदैः ॥

अधुना भ्रूललाटलक्षणमाह ।

**नो सङ्गते नातिपृथू न लम्बे शस्ते भ्रुवौ बालशशाङ्कवक्रे ।**
**अर्धेन्दुसंस्थानमरोमशं च शस्तं ललाटं न नतं न तुङ्गम् ॥ ८॥**

भ्रुवौ नो सङ्गते न श्लिष्टे । नातिपृथू विस्तीर्णे । न लम्बे नातिसङ्गते । बालशशाङ्कवक्रे । शशाङ्के चन्द्रे बालो यः शशाङ्कश्चन्द्रो द्वितीयायां तिथौ तद्वद्वक्रे कुटिले शस्ते ।

तथा च ।

बालचन्द्रसमे वक्रे न लम्बे नातिसङ्गते ।
भ्रुवौ यस्याः कुमार्यास्तां महाराज्ञीं विनिर्दिशेत् ॥

अर्धेन्दुसंस्थानमिति । ललाटं मुखपृष्ठमर्धेन्दुसंस्थानमर्धचन्द्राकारमरोमशं रोमरहितम् । न नतं न निम्नं न तुङ्गं नोन्नम् । समं शस्तं प्रशस्तमित्यर्थः ॥ ८ ॥

तथा च ।

नोन्नतं न च निम्नं वा शिरो रोमविवर्जितम् ।
अर्धचन्द्राकृति सौम्यं ललाटं शस्यते स्त्रियाः ॥

अथ कर्णकेशशिरोलक्षणमाह ।

**कर्णयुग्ममपि युक्तमांसलं शस्यते मृदु समाहितं समम् ।**
**स्निग्धनीलमृदुकुञ्चितैकजा मूर्धजाः सुखकराः समं शिरः ॥९॥**

कर्णयुग्मं श्रोत्रद्वयमपि,युक्तमांसलं न निर्मांसमित्यर्थः । मृदु कोमलं समं तुल्यं समाहितं संलग्नं शस्यते स्तूयते ।

तथा च ।

नातिलम्बौ मृदू तुल्यौ संलग्नौ युक्तमांसलौ ।
कर्णौ यस्याः स्मृता सा तु राजभार्या न संशयः ॥

---

१ नीलोत्पलसवर्णाभे नेत्रे लावण्यसंयुते ।
मगीभवे या सा कन्या धनधान्यविवर्द्धिनी ॥ इति ग॰ पु॰ पाठः ।

स्निग्धेति । मूर्धजाः केशाः स्निग्धा निर्मला नीला अतिकृष्णवर्णाः । मृदवः कोमलाः कुञ्चिताः कुटिलाः । एकजा एकरोमकूपे भवाः । सुखकराः सुखं कुर्वन्ति ।

तथा च ।

सुस्निग्धा नीलवर्णाश्च मृदवः कुञ्चिताः कचाः ।
शस्यन्ते योषितो नित्यं धनपुत्रप्रदा यतः ॥

समं शिरः । शिरः समं न निम्नं नोन्नतं सुखकरमेव ॥ ९ ॥

तथा च ।

नोन्नतं नाथवा निम्नं शिरः सौख्यप्रदं स्मृतम् ।

अथ हस्तपादयोर्लक्षणमाह ।

**भृङ्गारासनवाजिकुञ्जररथश्रीवृक्षयूपेषुभि-**
**र्मालाकुण्डलचामराङ्कुशयवैः शैलैर्ध्वजैस्तोरणैः ।**
**मत्स्यस्वस्तिकवेदिकाव्यजनकैः शङ्खातपत्राम्बुजैः**
**पादे पाणितलेऽथवा युवतयो गच्छन्ति राज्ञीपदम् ॥ १० ॥**

भृङ्गारो जलभाण्डं प्रसिद्धम् । आसनं पीठम् । वाजी तुरगः । कुञ्जरो हस्ती । रथः प्रसिद्धः । श्रीवृक्षो बिल्वः । यूपो यज्ञयूपः । इषुः शरः । एतैश्चिह्नैः । तथा माला स्रक् । कुण्डलं कर्णाभरणम् । चामरं वालव्यजनम् । अङ्कुशः प्रसिद्धः । यवो यवाकारः । एतैरपि । शैलः पर्वतः । ध्वजः पताकारूपो बहुपटनिर्मितः । तोरणं प्रसिद्धम् । एतैरपि । तथा मत्स्यो मीनः । स्वस्तिकश्चिह्नविशेषः । वेदिका वेदी चतुरस्रा मध्यक्षामा । व्यजनकं तालवृन्तम् । एतैरपि । शङ्खः प्रसिद्धः । आतपत्रं छत्रम् । अम्बुजं पद्मः । एतैर्भृङ्गारादिभिश्चिह्नैः पादे चरणतले पाणितले वा स्थितैर्युवतयः स्त्रियः । गच्छन्ति राज्ञीपदम् । राज्ञीस्थानं गच्छन्ति प्राप्नुवन्ति ॥ १० ॥

तथा च गर्गः ।

मत्स्यः समुद्रो वसुधा धनं च ध्वजस्तथाद्रिर्दिनकृच्छशी च ।
शङ्खः पुरं चक्रमथासनं च यूपस्तथा व्यञ्जनतोरणं च ॥

छत्त्रं यवः पद्ममथाङ्कुशं च सिंहोऽथवा स्वस्तिक एव वापी ।
कूर्मः पताका मकरः पुमांश्च दण्डः सरित् पूर्णघटो रथश्च ॥
पाणौ तथैतानि भवन्ति यासामेकं तथा द्वे च बहूनि वापि ।
अत्यन्तसौख्यं बहुपुत्त्रतां च स्त्रीणां तथा लक्षणमादिशेत ॥

तथा च समुद्रः ।

मत्स्यः पाणितले छत्त्रं कच्छपो वा ध्वजोऽपि वा ।
श्रीवत्सं कमलं शङ्खमासनं चामरं तथा ॥
अङ्कुशश्चैव माला च यस्या हस्ते तु दृश्यते ।
एकं सा जनयेत् पुत्त्रं राजानं पृथिवीपतिम् ॥
यस्याः पाणितले दृश्यः कोष्ठागारः सतोरणः
अपि दासकुले जाता सा राजमहिषी भवेत् ।

अथ हस्तलक्षणमाह ।

**निगूढमणिबन्धनौ तरुणपद्मगर्भोपमौ**
**करौ नृपतियोषितस्तनुविकृष्टपर्वाङ्गुली ।**
**न निम्नमति नोन्नतं करतलं सुरेखान्वितं**
**करोत्यविधवां चिरं सुतसुखार्थसम्भोगिनीम् ॥ ११ ॥**

करौ हस्तौ । निगूढमणिबन्धनौ । निगूढावनुल्बणौ मणिबन्धनौ प्रकोष्ठौ ययोः । मणिबन्धनग्रहणेन हस्तमूलमुच्यते । तरुणपद्मगर्भोपमौ । तरुणमभिनवं यत् पद्मं कमलं तस्य गर्भमभ्यन्तरं तदुपमौ तत्सदृशौ । तथा तनुविकृष्टपर्वाङ्गुली तनुः सूक्ष्मा ययोरङ्गुल्यः करशाखाः । तथा विकृष्टानि दीर्घाणि पर्वाणि यासामङ्गुलीनां ताश्च विद्यन्ते ययोः । तथाभूतौ करौ नृपतियोषितो राजपत्न्या भवतः । करतलं हस्ततलं नो निम्नं नाति नीचं नात्युन्नतमुच्चं सुरेखान्वितं शोभनाभी रेखाभिरन्वितं युक्तम् । चिरं चिरकालमविधवां भर्तृसंयुतां सुतसुखार्थसम्भोगिनीं पुत्त्रसुखधनसम्भोगयुक्तां तथाविधं हस्ततलं तां कन्यकां करोति ॥ ११ ॥

तथा च ।

निगूढमणिबन्धौ तु पद्मगर्भसमप्रभौ ।
विकृष्टाङ्गुलिपर्वाणौ करौ नृपतियोषितः ॥

नोच्चं न निम्नं सुसमं सुरेखाभिः समन्वितम् ।
तलं यस्या भवेन्नार्याः सा राजमहिषी स्मृता ॥

अन्यदप्याह ।

**मध्याङ्गुलिं या मणिबन्धनोत्था**
**रेखा गता पाणितलेऽङ्गनायाः ।**
**ऊर्ध्वस्थिता पादतलेऽथवा या**
**पुंसोऽथवा राज्यसुखाय सा स्यात् ॥ १२ ॥**

अङ्गनायाः स्त्रियाः पाणितले हस्ततले या रेखा मणिबन्धनोत्था हस्तमूलाज्जाता मध्याङ्गुलिं यावद्गता । अथवा या रेखा पादतले चरणतले ऊर्ध्वस्थिता पुंसः पुरुषस्य । अथ चैवंविधा हस्ततले पादतले वा भवति सा राज्यसुखाय स्याद् भूयात् । राज्यसुखं करोतीत्यर्थः ॥ १२ ॥

तथा च ।

मणिबन्धनसम्भूता मध्याङ्गुलिसमाश्रिता ।
रेखा पाणितले यस्याः सा कन्या राज्यभागिनी ।

अन्यदप्याह ।

**कनिष्ठिकामूलभवा गता या**
**प्रदेशिनीमध्यमिकान्तरालम् ।**
**करोति रेखा परमायुषः सा**
**प्रमाणमूना तु तदूनमायुः ॥ १३ ॥**

या रेखा कनिष्ठिकामूलभवा कनिष्ठामूलादुत्पन्ना तत्प्रदेशिन्या अङ्गुष्ठसमीपवर्तिन्या मध्यमिकायाश्चान्तरालं मध्यं गता प्राप्ता सा रेखा परमायुषः प्रमाणं करोति । विंशत्यधिकं सा वर्षशतं जीवतीत्यर्थः । यद्यूना भवति तदायुरूनमेव भवति । रेखानुसारेण स्वबुद्ध्या ऊहनीयम्—इति ॥ १३ ॥

तथा च ।

कनिष्ठामूलसम्भूता गता मध्यमिकान्तरम् ।
प्रदेशिन्याश्च सा रेखा यस्याः सा दीर्घजीविनी ॥

अथापत्यज्ञानमाह ।

अङ्गुष्ठमूले प्रसवस्य रेखाः
पुत्रा बृहत्यः प्रमदास्तु तन्व्यः ।
[1]अच्छिन्नमध्या बृहदायुषस्ताः
स्वल्पायुषां छिन्नलघुप्रमाणाः ॥ १४ ॥

अङ्गुष्ठमूले प्रसवस्यापत्यस्य रेखा भवन्ति । यावत्यो रेखास्तत्र तावन्तः प्रसवाः । तत्र या रेखा हस्ते स्थूलास्ते पुत्राः । याश्च तन्व्यः सूक्ष्मास्ताः प्रमदाः स्त्रियः । याश्च रेखा अच्छिन्नमध्या अछिन्नान्यच्छिन्नखण्डानि मध्यानि यासां ता बृहदायुषो दीर्घजीविन्यो विज्ञेयाः । केचिदच्छिन्नमूला इति पठन्ति । छिन्ना मध्याद्विच्छिन्ना लघुप्रमाणा अतिस्वल्पाः स्वल्पायुषां विज्ञेयाः ॥ १४ ॥

तथा च ।

अङ्गुष्ठमूले या रेखाः स्थूलाः पुत्राश्च ते मताः ।
सूक्ष्मा दुहितरस्ताभ्यो विच्छिन्नाः स्वल्पजीविनः ॥
वामहस्ते तु नारीणां पुरुषाणां च दक्षिणे ।
चिह्नं निरूपयेद्धीमान् समुद्रवचनं यथा ॥

एवं शुभाशुभलक्षणान्युक्त्वाधुनाहमशुभलक्षणानि वक्ष्यामीत्याह ।

इतीदमुक्तं शुभमङ्गनाना-
मतो विपर्यस्तमनिष्टमुक्तम् ।
विशेषतोऽनिष्टफलानि यानि
समासतस्तान्यनुकीर्त्तयामि ॥ १५ ॥

इतिशब्दः प्रकाराय । इत्येवंप्रकारमिदमङ्गनानां स्त्रीणां शुभमुक्तं शुभं कथितम् । अतोऽस्माद्विपर्यस्तं विपरीतं यत् तदनिष्टमशुभमुक्तम् । यानि विशेषतोऽतीवानिष्टफलान्यशुभफलानि लक्षणानि तानि समासतः सङ्क्षेपतोऽनुकीर्त्तयामि कथयामि ॥ १५ ॥

---

१ अच्छिन्नमूला—इति पाठान्तरम् ।

तथादावेव पादयोरनिष्टलक्षणान्याह ।

**कनिष्ठिका वा तदनन्तरा वा**
**महीं न यस्याः स्पृशति स्त्रियाः स्यात् ।**
**गताथवाङ्गुष्ठमतीत्य यस्याः**
**प्रदेशिनी सा कुलटाऽतिपापा ॥ १६ ॥**

यस्याः स्त्रिया अङ्गनायाः पादकनिष्ठा तदनन्तरा यानामिका वा महीं भूमिं न स्पृशति । अथवा यस्याः प्रदेशिनी अङ्गुष्ठमतीत्य गता स्यात् सा कुलटाऽतिपापा । कुलटा असाध्वी । अतिपापा स्याद्भवेत् ॥ १६ ॥

तथा च ।

कनिष्ठा पादयोर्यस्या भूमिं स्पृशति नाङ्गुलिः ।
न सा तिष्ठति कौमारी बन्धकीं तां विनिर्दिशेत् ॥
पादप्रदेशिनी यस्या अङ्गुष्ठादतिरिच्यते ।
कुमारी कुरुते जारं यौवनस्था तु किं पुनः ॥

अथ जङ्घागुह्योदरलक्षणमाह ।

**उद्वद्धाभ्यां पिण्डिकाभ्यां शिराले**
**शुष्के जङ्घे लोमशे चातिमांसे ।**
**वामावर्त्तं निम्नमल्पं च गुह्यं**
**कुम्भाकारं चोदरं दुःखितानाम् ॥ १७ ॥**

जङ्घे जानुनोरधोभागौ । उद्वद्धाभ्यामूर्ध्वलग्नाभ्यां पिण्डिकाभ्यामुपलक्षिते । जङ्घापश्चिमभागः पिण्डिकाशब्दवाच्यः । तथा शिराले शिरासन्तते । शुष्के निर्मांसे । रोमशे लोमबहुले । तथा चातिमांसे मांसबहुले अतिदुःखितानां महादुःखसन्तप्तानां स्त्रीणां भवतः ।

तथा च ।

शुष्के जङ्घेऽतिमांसे वा रोमशे चोर्ध्वपिण्डिके ।
यस्याः सा दुःखिता नित्यं पुत्रवित्तविवर्जिता ॥

वामावर्त्तमिति । गुह्यं भगं वामावर्त्तं वामावर्त्तै रोमभिः संयुक्तं निम्नमनुच्चमल्पं चातिसङ्कटं दुःखितानां भवति ।

तथा च।

वामावर्त्तं भगं यस्या दीर्घं चुल्लीसमप्रभम्।
निम्नं वा तेन दोषेण वेश्यास्त्रीत्वं च गच्छति॥

कुम्भाकारमिति। उदरं कुम्भाकारं घटाकारं दुःखितानामेव भवति॥ १७॥

तथा च।

लम्बोदरी च या कन्या दीर्घोदरसमन्विता।
भग्नोदरा च दुःखान्ता दासीभावमवाप्नुयात्॥

अथ ग्रीवालक्षणमाह।

**ह्रस्वयातिनिःस्वता दीर्घया कुलक्षयः।**
**ग्रीवया पृथूत्थया योषितः प्रचण्डता॥ १८॥**

ग्रीवया शिरोधरया। अतिह्रस्वया अतिप्रमाणहीनया। निःस्वता निर्धनता भवति। अतिदीर्घया प्रमाणाधिकया। कुलक्षयो वंशविनाशः। पृथूत्थया पृथूत्पन्नया चर्पटया ग्रीवया। योषितः स्त्रियाः। प्रचण्डता क्रूरता भवति॥ १८॥

तथा च।

कुलक्षयकरी दीर्घा ग्रीवा ह्रस्वा च निर्धना।
पृथूत्थया प्रचण्डत्वं ग्रीवया योषितो वदेत्॥

अथ नेत्रगण्डयोर्लक्षणमाह।

**नेत्रे यस्याः केकरे पिङ्गले वा**
**सा दुःशीला श्यावलोलेक्षणा च।**
**कूपौ यस्या गण्डयोश्च स्मितेषु**
**निःसन्दिग्धं बन्धकीं तां वदन्ति॥ १९॥**

यस्याः स्त्रिया नेत्रे चक्षुषी केकरे कातरे पिङ्गले कपिले वा सा दुःशीला असाध्वी भवति। तथा श्यावे श्याववर्णे लोले चञ्चले चलमाने ईक्षणे चक्षुषी यस्याः सापि दुःशीला भवति।

तथा च ।

पारावताक्षी या कन्या काकताक्षी तथापि या ।
उद्भ्रान्तचपलाक्षी च तां कन्यां वर्जयेद्बुधः ।

कूपौ यस्या इति । यस्या योषितः स्मितेषु हसितेषु गण्डयोर्मुखगण्डयोः कूपौ गर्ताकारौ भवतश्छिद्रे दृश्येते तां स्त्रियं निःसन्दिग्धमसंशयं बन्धकीमसाध्वीं वदन्ति कथयन्ति ॥ १९ ॥

तथा च ।

यस्यास्तु हसमानाया जायन्ते गण्डकूपकाः ।
भर्तारं हन्ति सा क्षिप्रं नैकत्र रमते चिरम् ॥

तथा च पराशरः ।

यस्या हसन्त्या दृश्यन्ते कूपका गण्डयोर्द्वयोः ।
स्थूलकाकारगण्डा च विकृतास्या महाशना ॥
एकापि यस्या न महीं संस्पृशेच्चरणाङ्गुली ।
तलमध्यमधो यस्या अधमां तां विनिर्दिशेत् ॥

अन्यदप्याह ।

**प्रविलम्बिनि देवरं ललाटे**
**श्वशुरं हन्त्युदरे स्फिजोः पतिं च ।**
**अतिरोमचयान्वितोत्तरोष्ठी**
**न शुभा भर्तुरतीव या च दीर्घा ॥ २० ॥**

ललाटे मुखपृष्ठभागे प्रविलम्बिनि लम्बमाने देवरं भर्तुर्भ्रातरं हन्ति मारयति । उदरे प्रविलम्बिनि श्वशुरं भर्तुः पितरं हन्ति । स्फिजोः प्रविलम्बमानयोः पतिं भर्तारं हन्ति ।

तथा च ।

त्रीणि यस्याः प्रलम्बन्ते ललाटमुदरं स्फिजम् ।
त्रींश्च सा पुरुषान् हन्ति देवरं श्वशुरं पतिम् ॥

अतिरोमचयान्वितोत्तरोष्ठीति । अतिरोमचयेन रोम्णां समूहेनान्वितः संयुक्त उत्तरोष्ठो यस्याः सा भर्तुः पत्युर्न शुभा । अतीव या च दीर्घात्युच्चा सापि भर्तुर्न शुभदा ॥ २० ॥

तथा च ।

श्मश्रुयुक्ता च या कन्या याऽतिदीर्घामलावृता ।
दासीभावमवाप्नोति देहदोषेण साङ्गना ॥

अथ स्तनकर्णदन्तलक्षणमाह ।

**स्तनौ सरोमौ मलिनोल्बणौ च**
**क्लेशं दधाते विषमौ च कर्णौ ।**
**स्थूलाः कराला विषमाश्च दन्ताः**
**क्लेशाय चौर्याय च कृष्णमांसाः ॥ २१ ॥**

स्तनौ सरोमौ रोमसंयुक्तौ मलिनौ कृष्णवर्णावुल्बणौ विषमावतुल्यौ क्लेशं कृच्छ्रं दधाते दधतः ।

तथा च ।

रोमयुक्तौ स्तनौ यस्या मलिनौ च शिराततौ ।
दुःखिता सा भवेन्नारी नित्यं प्रव्रजिता तथा ॥

एवंविधौ च कर्णौ सरोमौ मलिनावुल्बणौ विषमावतुल्यौ च क्लेशमेव दधाते ।

तथा च ।

शिरायुक्तौ न च समौ कर्णौ दारिद्र्यभाजनौ ।

स्थूला: कराला इति । दन्ता रदाः स्थूला अतिविस्तीर्णाः कराला विकराला बहिर्गताश्च विषमा अतुल्याः क्लेशाय भवन्ति । कृष्णमांसाश्च दन्ताश्चौर्याय भवन्ति । सा स्त्री चौरी भवतीत्यर्थः ॥ २१ ॥

तथा च ।

स्थूलाः कराला विषमाः कृष्णमांसा बहिर्गताः ।
दन्ता दुःखप्रदा ज्ञेया वैधव्यायासकारिणः ॥

अथ हस्तलक्षणमाह ।

**क्रव्यादरूपैर्वृककाककङ्क-**
**सरीसृपोलूकसमानचिह्नैः ।**

**शुष्कैः शिरालैर्विषमैश्च हस्तै-**
**र्भवन्ति नार्यः सुखवित्तहीनाः ॥ २२ ॥**

हस्तैः करैः क्रव्यादरूपैश्चिह्नैश्चिह्नितैः क्रव्यादा मांसाशिनो विहगा गृध्रादयः। वृकः प्राणी। काककङ्कौ प्रसिद्धौ पक्षिणौ। सरीसृपाः प्राणिनः कीटाः। उलूकः पक्षी। तत्समानैस्तत्सदृशैश्चिह्नैः शुष्कैर्निर्मांसैः शिरालैः शिरासन्ततैर्विषमैरसमैश्च नार्यः स्त्रियः सुखवित्तहीनाः सुखैर्धनैश्च विरहिता वर्जिताश्च भवन्ति ॥ २२ ॥

तथा च।

क्रव्यादसदृशैश्चिह्नैः काकोलूकसमप्रभैः।
शुष्कैः करालैर्विषमैः करैर्दुःखान्विताः स्त्रियः ॥

अन्यदप्याह।

**या तूत्तरोष्ठेन समुन्नतेन**
**रूक्षाग्रकेशी कलहप्रिया सा।**
**प्रायो विरूपासु भवन्ति दोषा**
**यत्राकृतिस्तत्र गुणा वसन्ति ॥ २३ ॥**

या तु स्त्री समुन्नतेनोच्चतरेणोत्तरोष्ठेनोपलक्षिता। रूक्षाग्रकेशी रूक्षा अग्रकेशा यस्याः सा नित्यं कलहप्रिया कलहकरी भवति।

तथा च।

या तूत्तरोष्ठेनोच्चेन केशाग्रं स्नेहवर्जितम्।
यस्याः सा दुःखिता नित्यं भर्तुर्निधनकारिणी ॥

प्रायो विरूपास्विति। प्रायो बाहुल्येन विरूपासु विगतरूपासु स्त्रीषु दोषा भवन्ति। यत्र यस्यां साऽऽकृतिः शोभना भवति तत्र तस्यां गुणा वसन्ति ॥ २३ ॥

अधुना शरीरक्षेत्रविभागमाह।

**पादौ सगुल्फौ प्रथमं प्रदिष्टौ जङ्घे द्वितीयं तु सजानुचक्रे।**
**मेढ्रोरुमुष्कं च ततस्तृतीयं नाभिः कटिश्चैव चतुर्थमाहुः ॥२४॥**

**उदरं कथयन्ति पञ्चमं हृदयं षष्ठमतस्तनान्वितम् ।**
**अथ सप्तममंसजत्रुणी कथयन्त्यष्टममोष्ठकन्धरे ॥ २५ ॥**
**नवमं नयने च सभ्रुणी सललाटं दशमं शिरस्तथा ।**
**अशुभेष्वशुभं दशाफलं चरणाद्येषु शुभेषु शोभनम् ॥ २६ ॥**

पादौ सगुल्फाविति । पादौ चरणौ सगुल्फौ गुल्फसहितौ प्रथममाद्यं दशाभागं च शुभाशुभं च शुभाशुभचिह्नितं प्रदिष्टमुक्तम् । जङ्घे सजानुचक्रे जानुचक्रिकासहिते द्वितीयं दशाभागमुक्तम् । मेढ्रं लिङ्गमुष्कद्वौ मुष्कौ वृषणौ ततोऽनन्तरमेतत् तृतीयं दशाभागम् । नाभिः कटिश्चेति चतुर्थं दशाभागमाहुः, कथयन्ति ॥ २४ ॥

उदरमिति । उदरं पञ्चमं दशाभागं कथयन्ति प्रवदन्ति मुनयः । हृदयं स्तनान्वितं स्तनसंयुक्तं षष्ठं दशाभागं कथयन्ति । अथानन्तरमंसौ स्कन्धौ जत्रुणी च सप्तमं दशाभागम् । ओष्ठौ द्वौ कन्धरा ग्रीवा एते ओष्ठकन्धरे अष्टमं दशाभागं कथयन्ति ॥ २५ ॥

नयने नेत्रे सभ्रुणी भ्रूसहिते नवमं दशाभागम् । शिरो मूर्धा सललाटं ललाटसहितं दशमं दशाभागं तथा तेनैव प्रकारेण । अत्र यद्यपि सामान्येनोक्तं तथापि परमायुःप्रमाणेन द्वादशवार्षिकीं दशां परिकल्प्य विचारः कर्तव्यः । ज्ञातायुस्तत्प्रमाणेन एतेषु क्षेत्रविभागेषु चरणाद्येषु वातप्रभृतिष्वशुभेष्वशुभमनिष्टं दशाफलं शुभेषु शोभनमिति । एतदुक्तं भवति । यद्गात्रं रूक्षं मांसविहीनं शिरावनद्धं च तदनिष्टं प्रोक्तम् । विपरीतमतः शुभं सर्वमित्यनेन क्रमेण यत्राङ्गेऽशुभलक्षणानि तद्दशाभागमशुभं यत्र शुभानि तत् शोभनं यत्र व्यामिश्राणि तन्मध्यमिति ॥ २६ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ कन्यालक्षणं
नाम एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---

## अथ वस्त्रच्छेदलक्षणं व्याख्यायते ।

तत्रादावेवाश्विन्यादीनां नक्षत्राणामभिनववस्त्रोपभोगे फलमाह ।

प्रभूतवस्त्रदाश्विनी भरण्यथापहारिणी ।
प्रदह्यतेऽग्निदैवते प्रजेश्वरेऽर्थसिद्धयः ॥ १ ॥
मृगे तु मूषकाद्भयं व्यसुत्वमेव शाङ्करे ।
पुनर्वसौ शुभागमस्तदग्रभे धनैर्युतिः ॥ २ ॥
भुजङ्गभे विलुप्यते मघासु मृत्युमादिशेत् ।
भगाह्वये नृपाद्भयं धनागमाय चोत्तरा ॥ ३ ॥
करेण कर्मसिद्धयः शुभागमस्तु चित्रया ।
शुभं च भोज्यमानिले द्विदैवते जनप्रियः ॥ ४ ॥
सुहृद्युतिश्च मित्रभे तदग्रभेऽम्बरक्षयः ।
जलप्लुतिश्च नैर्ऋते रुजो जलाधिदैवते ॥ ५ ॥
मिष्टमन्नमपि वैश्वदैवते
वैष्णवे भवति नेत्ररोगता ।
धान्यलब्धिरपि वासवे विदु-
र्वारुणे विषकृतं महद्भयम् ॥ ६ ॥
भद्रपदासु भयं सलिलोत्थं
तत्परतश्च भवेत् सुतलब्धिः ।
रत्नयुतिं कथयन्ति च पौष्णे
योऽभिनवाम्बरमिच्छति भोक्तुम् ॥ ७ ॥

प्रभूतवस्त्रदाश्विनीति । अश्विनीनक्षत्रे यदभिनवं वस्त्रमुपभुज्यते । तदा साश्विनी प्रभूतवस्त्रदा भवति । प्रभूतानि बहूनि वस्त्राणि अम्बराणि ददाति । अथानन्तरमेवं भरणी वस्त्रापहारिणी भवति । अग्निदैवते कृत्तिकानक्षत्रे वस्त्रं संदह्यतेऽग्निना । प्रजेश्वरे रोहिण्यामर्थानां सिद्धयः प्राप्तयो भवन्ति ॥ १ ॥

मृगे इति । मृगे मृगशिरसि मूषकाद्वस्त्रभयं भवति । तेन छिद्यते । शाङ्कर आर्द्रायां व्यसुत्वं विगतप्राणता भवति । म्रियत इत्यर्थः । पुनर्वसौ शुभस्यार्थस्य धर्मादेरागमः प्राप्तिर्भवति । तदग्रभे तस्य पुनर्वसोरग्रतः पुरतः स्थिते भे नक्षत्रे तिष्ये धनैर्वित्तैर्युतिः संयोगो भवति ॥ २ ॥

भुजङ्गभे इति । भुजङ्गभे श्लेषायां वस्त्रं विलुप्यते छिद्यते । मघासु मृत्युं मरणमादिशेद्वदेत् । भगाह्वये पूर्वफल्गुन्यां नृपाद्राज्ञो भयं भवति । उत्तरफल्गुनी धनागमाय धनप्राप्तये भवति ॥ ३ ॥

करेणेति । करेण हस्तेन कर्मणां सिद्धयो भवन्ति । चित्रायां शुभागमः शुभस्यार्थस्य धर्मादेरागमः प्राप्तिर्भवति । अनिले स्वातौ शुभं शोभनं भोज्यमाहारं भवति । द्विदैवते विशाखायां जनप्रियो जनवल्लभो भवति ॥ ४ ॥

सुहृद्युतिश्चेति । मित्रभेऽनुराधायां सुहृद्युतिर्मित्रसंयोगः । तदग्रभे तस्या अनुराधाया अग्रतः पुरतः स्थिते भे नक्षत्रे ज्येष्ठायामम्बरस्य वस्त्रस्य क्षयो विनाशो भवति । नैर्ऋते मूले जलप्लुतिर्वस्त्रं जलमध्ये प्लवति । यातीत्यर्थः । जलाधिदैवते पूर्वाषाढायां रुजो रोगा भवन्ति ॥ ५ ॥

मिष्टमन्नमिति । वैश्वदेवे उत्तराषाढायां मिष्टमन्नं भोजनं भवति । वैष्णवे श्रवणे नेत्ररोगता बघ्वपीडा । वासवे धनिष्ठायां धान्यानां लब्धिं लाभम् । विदुर्जानते । वारुणे शतभिषजि महदतीव भयं विषकृतं विषोत्पन्नं भवति ॥ ६ ॥

भद्रपदास्विति । भद्रपदासु पूर्वभद्रपदासु सलिलोत्थं जलादुत्पन्नं भयं भवति । तत्परतः उत्तरभद्रपदायां सुतलब्धिः पुत्रलाभो भवति । पौष्णे रेवत्यां रत्नयुतिं रत्नसंयोगं कथयन्ति मुनयः । तस्यैतानि फलानीत्याह । योऽभिनवाम्बरमिच्छति भोक्तुम् । यः पुरुषोऽभिनवाम्बरमभिनवं वस्त्रं भोक्तुमिच्छति तस्येति ॥ ७ ॥

अथ सर्वनक्षत्राणां कर्मयोगितामाह ।

**भोक्तुं नवाम्बरं शस्तमृक्षेऽपि गुणवर्जिते ।**
**विवाहे राजसम्माने ब्राह्मणानां च सम्मते ॥ ८ ॥**

विवाहे पाणिग्रहणकाले । राजसम्माने राजपूजायाम् । ब्राह्मणानां च सम्मते द्विजवचनेनेत्यर्थः । एतेषु कालेषु गुणवर्जितेऽपि ऋक्षे नवके नवाम्बरमभिनवं वस्त्रं भोक्तुमुपभोक्तुं शस्तं प्रशस्तमिति ॥ ८ ॥

अधुना वस्त्रादीनां दैवत्यप्रविभागेण शुभाशुभफलमाह ।

**वस्त्रस्य कोणेषु वसन्ति देवा नराश्च पाशान्तदशान्तमध्ये ।**
**शेषास्त्रयश्चात्र निशाचरांशास्तथैव शय्यासनपादुकासु ॥९॥**

वस्त्रस्याम्बरस्य कोष्ठकनवकविभागेन प्रविभक्तस्य कोणेषु चतुर्षु देवाः सुरा वसन्ति । वस्त्रस्य मूलं पाशान्तः । अग्रं दशान्तः । पाशान्तमध्यभागे दशान्तमध्यभागे च नरा देवविशेषा वसन्ति । शेषास्त्रयः कोष्ठकाः सममध्यवर्तिनोऽत्रास्मिन् वस्त्रे निशाचरांशा राक्षसभागाः । न केवलं वस्त्रस्यायं प्रविभागो यावच्छय्यायामास्तरणे । आसने । पादुकासु चेति । वस्त्रस्य मूलाग्रे यथोक्ते तथासने पादुकासु च । आसनस्य वृक्षवशान्मूलाग्रकल्पना । पादुकासूपानत्सु पादवन्मूलाग्रे ॥ ९ ॥

नवकोष्ठविभक्तस्य वस्त्रस्य न्यासः ।

| | | |
|---|---|---|
| देवाः | राक्षसाः | देवाः |
| नराः | राक्षसाः | नराः |
| देवाः | राक्षसाः | देवाः |

तथा च गर्गः ।

वस्त्रमुत्तरलोमं तु प्राग्देशं नवधा भवेत् ।
त्रिधा दशान्तपाशान्ते त्रिधा मध्यं पृथक् पृथक् ।
चतुर्षु कोणेषु सुराः पाशान्ते मध्यमे नराः ।
दशान्ते च नरा भूयो मध्यभागे निशाचराः ।
राक्षसान् विनिवृत्त्यैवं शय्यादिष्वप्ययं विधिः—इति ॥

प्रयोजनमाह ।

**लिप्ते मषीगोमयकर्दमाद्यैश्छिन्ने प्रदग्धे स्फुटिते च विन्द्यात् ।**
**पुष्टं नवेऽल्पाल्पतरं च भुक्ते पापं शुभं चाधिकमुत्तरीये ॥१०॥**

वस्त्रे मष्या कज्जलेन गोमयेन कर्दमेन चालिप्ते । आदिग्रहणाद्येन केनचिद्द्रव्येण लिप्ते । तथा छिन्ने प्रकल्पिते । प्रदग्धेऽग्निना प्लुष्टे । स्फुटिते पाटिते च विन्द्याज्जानीयात् पापमशुभं फलं शुभं वा । नववस्त्रादिकेषु पुष्टं

परिपूर्णं मध्यमेऽल्पं भुक्ते शीर्णेऽल्पतरम् । यद्यप्युक्तं तथैव शय्यासनपादुकास्विति तथाप्युत्तरीये वस्त्रेऽधिकतरं पापमशुभं शुभं शुभफलं भवति ॥ १० ॥

अधुना विशेषेणाह ।

**रुग्राक्षसांशेष्वथवापि मृत्युः पुंजन्म तेजश्च मनुष्यभागे ।**
**भागेऽमराणामथ भोगवृद्धिः प्रान्तेषु सर्वत्र वदन्त्यनिष्टम् ॥११॥**

राक्षसांशेषु राक्षसभागेष्वशुभेषु छेदादिषूत्पन्नेष्वस्य स्वामिनो रुग्रोगोऽथवा मृत्युर्भवति । मनुष्यभागेऽशुभे छेदादिके दृष्टे पुंजन्म पुत्रजन्म तेजः कान्तिश्च भवति । अमराणां देवानां भागेऽशुभे छेदादिके दृष्टे भोगवृद्धिर्भवति । सर्वत्र सर्वभागेषु प्रान्तेषु पर्यन्तेष्वनिष्टमशुभं वदन्ति कथयन्ति मुनयः ॥ ११ ॥

अन्यदप्याह ।

**कङ्कप्लवोलूककपोतकाकक्रव्यादगोमायुखरोष्ट्रसर्पैः ।**
**छेदाकृतिर्दैवतभागगापि पुंसां भयं मृत्युसमं करोति ॥१२॥**

कङ्कः । प्लवः । उलूकः । कपोतः । काकः । क्रव्यादा मांसाशिनः । एते सर्व एव पक्षिविशेषाः । गोमायुः शृगालः । खरो गर्दभः । उष्ट्रः करभः । सर्प उरगः । एतैः सदृशी छेदस्याकृतिर्दैवतभागगापि सुरभागप्राप्तापि । पुंसां नराणां मृत्युसमं मरणतुल्यं भयं करोति ॥ १२ ॥

अन्यदप्याह ।

**छत्त्रध्वजस्वस्तिकवर्धमानश्रीवृक्षकुम्भाम्बुजतोरणाद्यैः ।**
**छेदाकृतिर्नैर्ऋतभागगापि पुंसां विधत्ते नचिरेण लक्ष्मीम् ॥१३॥**

छत्त्रमातपत्रम् । ध्वजः प्रसिद्धः । स्वस्तिकश्चिह्नविशेषः । वर्धमानमपि चिह्नविशेषः । एतौ द्वावपि वास्तुनि । श्रीवृक्षो बिल्वः । कुम्भो घटः । अम्बुजं पद्मः । तोरणं प्रसिद्धम् । आदिग्रहणात् स्रक्कुण्डलभृङ्गारगजतुरगाः । एषां सदृशी छेदाकृतिर्नैर्ऋतभागगा चापि राक्षसभागप्राप्तापि पुंसां नराणां नचिरेण शीघ्रमेव लक्ष्मीं श्रियं विधत्ते ददाति । अपिशब्दात् सुरनरभागगताऽतीव शुभफला भवतीति ॥ १३ ॥

अथ पराशरमुनिना विशेषतरमुक्तम् ।

तद्यथा च ।

अथाशुभलक्षणे उपानच्छेदमुपदेक्ष्यामः । तत्र विंशतिश्छेदाः । तेषां सप्त पूजिता विगर्हिताः शेषा भवन्ति । अङ्गुष्ठादिवैश्वानरदेशे प्रभक्षितेऽन्नपानस्त्रीलाभं विन्द्यात् । प्रदेशिन्या स्त्रीवस्त्रलाभम् । मध्यमया बधबन्धनम् । अनामिकया मातृमरणं स्वसृप्रव्रजनं च । कनिष्ठिकया पितृमरणं भ्रातुर्वा । नासातः स्त्रीलाभम् । अङ्गुष्ठाङ्गुलिमूले व्याधिभयम् । चूडायां वैमनस्यम् । ग्रीवायां शिरश्छेदनम् । स्थानबन्धेऽन्नपानधनप्राप्तिम् । कर्णिकाशकलभक्षणे सन्धिच्छेदभयं च । सकले कलहसंप्रवृत्तिं च । पार्ष्णिबन्धेऽध्वगमनम् । पार्ष्णिस्थाने वाहनागमनम् । बाह्यपदपुटच्छेदावभक्षणात् सुहृद्भ्रातृविनाशं विन्द्यात् । मध्यमस्य विपुलमर्थागमम् । उत्तमस्य लाभम् । पदमध्ये शोकागमनम् । पार्श्वयोः पार्श्वरोगम् । सकलोपानद्भक्षणे मरणविद्रवायासा भवन्ति ।

अपि च ।

नवासु फलसामग्र्यमुपभुक्तासु मध्यमम् ।
शुभाशुभं विनिर्देश्यं जीर्णासु न भवेत् फलम् ॥

गुरुवृद्धद्विजाचार्य्यस्नानमङ्गलसेवनात् ।
अशुभानां च मर्त्यानां तस्माद्दोषात् प्रमुच्यत इति ।

इत्युपानच्छेदलक्षणम् ॥

अथ वाससां शुभाशुभेष्यत्फलसूचकम् । अकस्मान्मषीकर्दमाञ्जनशिरगोमयैरुपरागस्तथाखुकीटगोजन्तुभिरवभक्षणं वा दूनं च काष्ठकण्टकैर्दाहो वा वह्निना भवति तद्विज्ञानलक्षणफलमुपदेक्ष्यामः । तत्र प्राक्पार्श्वं प्रत्यक्पार्श्वं नवधा वस्त्रं विभजेत् त्रिवंशम् । अंशेषु तेषु क्रमात् फलनियमः । अर्थहानिः । अर्थागमः । धनक्षयः । स्त्रीविनाशः । पुत्रपीडा । दुहितृमरणम् । स्वशरीरव्याधिः । व्यसनागमश्चेति अष्टासु । नवमेऽध्वगमनमर्थागमः कर्मसिद्धयश्च । कुम्भाद्यंकर्णशकलशस्त्रपदविकूटेन्दुरुचकफलकगृहतोरणच्छत्रमेखलासुगुपवेदीपद्मशङ्खश्रीवत्सस्वस्तिकमत्स्यवर्धमाननन्द्याकारैस्तु क्रमाद्विपुलोऽर्थागमः । कुचि-

रोगः । श्रोत्रपीडा । विरोधः । अध्वगमनम् । अनारोग्यम् । व्यसनम् । ऐश्वर्यम् । अभिषेकागमः । प्रार्थितावन्ध्यश्येनकेदारसूर्पसूचीपाशैश्च कङ्कालपीठिकाकारैमरणम् । द्विरदरथतुरगसदृशैः पशुपुत्रधनैश्वर्यावाप्तिः । हयगजकर्णभगतुलाघटकाकारैश्छद्रैः प्राग्वत्कुटुम्बविनाशाय । पूर्वदक्षिणे नारीणाम् । दक्षिणे सुहृदाम् । दक्षिणापरे पशूनाम् । पश्चिमे प्रेष्याणाम् । पश्चिमोत्तरे ज्ञातेः । बन्धोश्चोत्तरे । पूर्वोत्तरे मध्यमस्य । पूर्वे सर्वसम्पदाम् ।

अपि च ।

विवर्णितं तु यद्वस्त्रं विनश्येच्छेदमङ्गलम् ।
विवर्णितं तु यच्च स्यादनर्थाय विनिर्दिशेत् ॥
नवे वस्त्रे यथोक्तं स्यात् फलं जीर्णे तु नेष्यते ।
न रक्ते न पुनर्धौते न स्वयं दग्धपाटिते ॥
विलक्षणं त्यजेद्वस्त्रं समच्छेदममङ्गलम् ।
विवर्णितं तु यद्वस्त्रं कुर्याद्देवद्विजार्चनम् ॥
जपहोमोपवासांश्चेत् तथा नाप्नोति किल्बिषम् ।

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ वस्त्रच्छेदलक्षणं नाम सप्ततितमोऽध्यायः ॥ ७० ॥

## अथ चामरलक्षणं व्याख्यायते ।

तत्रादावेव प्रयोजनप्रदर्शनार्थमाह ।

**देवैश्चमर्यः किल वालहेतोः**
**सृष्टा हिमक्ष्माधरकन्दरेषु ।**
**आपीतवर्णाश्च भवन्ति तासां**
**कृष्णाश्च लाङ्गूलभवाः सिताश्च ॥ १ ॥**

किलेत्यागमसूचने । देवैः सुरैर्वालहेतोर्वाहननिमित्तं हिमक्ष्माधरकन्दरेषु हिमवद्गिरिगुहासु चमर्यः प्राणिविशेषाः सृष्टा उत्पादिताः । तासां चमरीणामापीतवर्णा वाला भवन्ति । कृष्णा असिताश्च भवन्ति । तथा लाङ्गूलभवाः पुच्छसम्भूताः सिताः श्वेतवर्णाश्च भवन्ति ॥ १ ॥

अथ तासां गुणमाह ।

स्नेहो मृदुत्वं बहुवालता च
वैशद्यमल्पास्थिनिबन्धनत्वम् ।
शौक्ल्यं च तासां गुणसम्पदुक्ता
विद्धाल्पलुप्तानि न शोभनानि ॥ २ ॥

तासां चमरीणामियं गुणानां सम्पदुक्ता कथिता । तद्यथा । स्नेहोऽक्षता । मृदुत्वं मार्दवम् । बहुवालता प्रभूतवालत्वम् । वैशद्यं निर्मलता परस्परमश्लेषश्च । अल्पास्थिनिबन्धनत्वं निबध्यन्तेऽस्मिन्निति निबन्धनम् । यथास्थिमाला: संलग्नास्तस्याल्पत्वम् । शौक्ल्यं शुक्लता चैतानि यानि च विद्धानि निबन्धनस्य विद्धत्वात् तानि च विद्धानि खण्डतास्फोटनं वा तेषां विद्धत्वम् । अल्पानि ह्रस्वानि । लुप्तानि विच्छिन्नानि । एतानि न शोभनान्यशोभनानि । अशुभानीति ॥ २ ॥

अथ चामरदण्डलक्षणान्याह ।

अध्यर्धहस्तप्रमितोऽस्य दण्डो
हस्तोऽथवारत्निसमोऽथवान्यः ।
काष्ठाच्छुभात् काञ्चनरूप्यगुप्ता-
द्रत्नैश्च सर्वैश्च हिताय राज्ञाम् ॥ ३ ॥

अस्य चामरस्याध्यर्धहस्तप्रमितः सार्धहस्तमितो दण्डः कार्यः । हस्तोऽथवा हस्तप्रमाणः । अन्योऽपरोऽरत्निसमः कार्यः । अरत्निः कृतमुष्टिहस्तः । कनिष्ठासम इति केचित् । स च दण्डः काष्ठाच्छुभात् प्रशस्तलक्षणयुक्तः कार्यः । किम्भूतात् काञ्चनरूप्यगुप्तात् काञ्चनेन सुवर्णेन रूप्येण रजतेन वा सुगुप्तादाच्छादितात् । रत्नैश्च मणिविशेषैर्विचित्रैर्नानावर्णैश्च सहितादाज्ञां नृपाणां हिताय भवति ॥ ३ ॥

अथ वर्णक्रमेण दण्डलक्षणमाह ।

यष्ट्यातपत्राङ्कुशवेत्रचापवितानकुन्तध्वजचामराणाम् ।
व्यापीततन्त्रीमधुकृष्णवर्णा वर्णक्रमेणैव हिताय दण्डाः ॥ ४ ॥

यष्टिः प्रसिद्धा नित्यकालं हस्ते उह्यते । आतपत्रं छत्रम् । अङ्कुशः प्रसिद्धो गजदमनायोपयुज्यते । वेत्रो दण्डः प्रसिद्ध एव । चापं धनुः । वितानं कनकमिति लोके प्रसिद्धम् । कुन्तमायुधम् । ध्वजश्चिह्नम् । चामरं वालव्यजनम् । एतेषां दण्डवर्णाः क्रमेण व्यापीततन्त्रीमधुकृष्णवर्णा हिताय भवन्ति । तद्यथा । ब्राह्मणानां यष्ट्यः पीतवर्णा हिताय प्रशस्ताय । एवं तन्त्रीवर्णाः पीतलोहिताः क्षत्रियाणाम् । मधुवर्णा ईषत्पीता वैश्यानाम् । कृष्णवर्णाः शूद्राणामिति ॥ ४ ॥

तथा च गर्गः ।

विप्राणां पीतवर्णः स्यात् क्षत्रियाणां तु लोहितः ।
वैश्यानां पीतवर्णश्च शूद्राणामसितप्रभः ॥
दण्डः शुभप्रदो ज्ञेयो यष्टिच्छत्राङ्कुशादिषु ।

अथ दण्डादेः समपर्वणः फलमाह ॥

**मातृभूधनकुलक्षयावहा**
**रोगमृत्युजननाश्च पर्वभिः ।**
**द्व्यादिभिर्द्विकविवर्धितैः क्रमात्**
**द्वादशान्तविरतैः समैः फलम् ॥ ५ ॥**

एतैर्दण्डैर्द्व्यादिभिः पर्वभिः द्विकविवर्धितैर्द्वाभ्यां द्वाभ्यामधिकैः समैः समसङ्ख्यैर्द्वादशान्तविरतैर्द्वादशान्ते विरतो विरामो येषां तैः फलानि क्रमेण । मातृभूधनेति । तद्यथा । द्वाभ्यां पर्वभ्यां दण्डादयो युक्ता मातृक्षयावहाः जनन्याः क्षयं कुर्वन्ति । मातृमरणमित्यर्थः । चतुर्भिर्भूमिक्षयावहाः । षड्भिर्धनक्षयावहाः । अष्टभिः कुलक्षयावहाः । दशभी रोगजननाः रोगप्रदाः । द्वादशभिर्मृत्युजनना मृत्युप्रदाः ॥ ५ ॥

अथ तेषामेव त्र्यादिष्वसमेषु द्विकविवर्धितेषु फलमाह ।

**यात्राप्रसिद्धिर्द्विषतां विनाशो**
**लाभाः प्रभूता वसुधागमश्च ।**
**वृद्धिः पशूनामभिवाञ्छिताप्ति-**
**स्त्र्याद्येष्वयुग्मेषु तदीश्वराणाम् ॥ ६ ॥**

तदीश्वराणां दण्डादीनां स्वामिनां च्याद्येष्वयुग्मेषु पर्वसु छिद्रविष-र्यितेश्विमानि फलानि भवन्ति । तद्यथा । दण्डादिषु त्रिभिः पर्वभिर्यात्रायाः प्रसिद्धिर्विजयो भवति । पञ्चभिर्द्विषतां शत्रूणां विनाशः । सप्तभिः प्रभूता बहवो लाभा लब्धयः । नवभिर्वसुधागमो भूलाभः । एकादशभिः पशूनां चतुष्पदानां वृद्धिः । त्रयोदशभिर्वाञ्छितस्याभीष्टस्य प्राप्तिर्लाभो भवति । द्वादशत्रयोदशभ्यः परतः समविषमाणामशुभाशुभमात्रं फलम् । न विशेषफलमिति ॥ ६ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ चामरलक्षणं नामैकसप्ततितमोऽध्यायः ॥ ७१ ॥

## अथ छत्रलक्षणं व्याख्यायते ।

तत्रादावेव प्रयोजनप्रदर्शनार्थमाह ।

**निचितं तु हंसपक्षैः कृकवाकुमयूरसारसानां वा ।**
**दौकूल्येन नवेन तु समन्ततश्छादितं शुक्लम् ॥ १ ॥**
**मुक्ताफलैरुपचितं प्रलम्बमालाविलं स्फटिकमूलम् ।**
**षड्ढस्तशुद्धहैमं नवपर्वनगैकदण्डं तु ॥ २ ॥**
**दण्डार्धविस्तृतं तत् समावृतं रत्नभूषितमुदग्रम् ।**
**नृपतेस्तदातपत्रं कल्याणपरं विजयदं च ॥ ३ ॥**

निचितमिति । नृपते राज्ञः । तदातपत्रमेवंविधं कल्याणपरं श्रेयस्करम् । विजयदं च भवति विजयं च ददाति । कीदृशम् । निचितं तु हंसपक्षैः । हंसः पक्षी तत्पक्षैस्तदङ्गरुहैर्निचितं रचितम् । कृकवाकुः कुक्कुटः । मयूरसारसौ प्रसिद्धौ । कृकवाकुमयूरसारसानां वा पक्षैर्निचितम् । दौकूल्येन श्वेतपट्टविशेषेण नवेनाहतेन समन्ततः समन्ताच्छादितं शुक्लं श्वेतवर्णम् ॥ १ ॥

मुक्ताफलैरिति । मुक्ताफलैर्मुक्तामणिभिरुपचितं संयुक्तम् । प्रलम्बाभिर्लम्बमानाभिर्मुक्तामालाभिराविलं समन्ततो युक्तम् । स्फटिकमूलम् । मूले स्फटिकोपलो यस्य । एकदण्डं षड्ढस्तप्रमाणम् । शुद्धहैमं श्रेष्ठसुवर्णेनाच्छादितम् । नवभिः पर्वभिर्नगैः सप्तभिर्वा युक्तम् । एकदण्डमित्यनेनैतज्ज्ञापयति । यथैकवृक्षोद्भवो दण्डः कार्यः । न भिन्नजातीयैः खण्डखण्डैः कार्य इत्यर्थः ॥ २ ॥

तच्छत्रं दण्डार्धविस्तृतं कार्यम्। दण्डं षड्ढस्तप्रमाणं तदर्धविस्तृतं हस्तत्रयविस्तीर्णं विष्कम्भप्रमाणमेतदित्यर्थः। समावृतं समन्तादावृतं सुश्लिष्टग्रन्थिरिति यावत्। रत्नैर्मणिभिर्भूषितमलङ्कृतं दण्डमुदग्रं शुभ्रमिति ॥ ३ ॥

तथा च गर्गः।

हंसकुक्कुटपक्षैश्च मायूरैः सारसैस्तथा।
निचितं पटसञ्छन्नं शुक्लं मुक्ताफलान्वितम् ॥
छत्रं स्फटिकमूलं यत् तच दण्डं तु षट्करम्।
कारयेद्धेमसञ्छन्नं नवपर्वनगान्वितम् ॥
हस्तत्रितयविस्तीर्णं रत्नमालाभिरन्वितम्।
तदातपत्रं नृपतेः कल्याणविजयावहम् ॥

अथ युवराजनृपतिपत्निसेनापतिदण्डनायकानां छत्रलक्षणमाह।

**युवराजनृपतिपत्न्योः सेनापतिदण्डनायकानां च।**
**दण्डोऽर्धपञ्चहस्तः समपञ्चकृतोऽर्धविस्तारः ॥ ४ ॥**

युवराजः प्रसिद्धोऽर्धराज्यभाक्। नृपतौ राजा तस्य पत्नी राजभार्या। तयोः। तथा सेनापतेश्चमूनाथस्य। दण्डनायकस्य दण्डाधिपतेः। एतेषां सर्वेषां दण्डोऽर्धपञ्चहस्तः। अर्द्धः पञ्चमो हस्तो यत्र। हस्तचतुष्टयं सार्द्धमित्यर्थः। समपञ्चकृतोऽर्द्धविस्तारः। समानां पञ्चानामर्धकृतो विस्तारो यस्य। हस्तद्वयं सार्धं विस्तीर्णमित्यर्थः ॥ ४ ॥

अन्येषां राजपुरुषाणां छत्रलक्षणमाह।

**अन्येषामुष्णघ्नं प्रसादपट्टैर्विभूषितशिरस्कम्।**
**व्यालम्बिरत्नमालं छत्रं कार्यं तु मायूरम् ॥ ५ ॥**

अन्येषां युवराजविवर्जितानां मायूरं मयूरपक्षनिचितमुष्णघ्नमातपनिवारणं छत्रं कार्यम्। प्रसादपट्टैर्विभूषितशिरस्कम्। प्रसादपट्टः पट्टलक्षणोक्तैर्विभूषितमलङ्कृतं शिरो यस्मिन् छत्रे तत् तथाभूतम्। व्यालम्बमाना रत्नमाला यत्र तत् ॥ ५ ॥

अथ राजपुरुषवर्जितानामन्येषां नराणां ब्राह्मणानां च छत्रलक्षणमाह।

**अन्येषां तु नराणां शीतातपवारणं तु चतुरस्रम्।**
**समवृत्तदण्डयुक्तं छत्रं कार्यं तु विप्राणाम् ॥ ६ ॥**

अन्येषां सामान्यानां नराणां पुरुषाणां शीतातपवारणं शीतमातपं यद्वारयति रक्षति तच्छत्रं चतुरस्रं चतुष्कोणं कार्यम् । विप्राणां ब्राह्मणानां समवृत्तं समन्ततः परिवर्तुलं दण्डयुक्तं छत्रं कार्यमिति ॥ ६ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ छत्रलक्षणं नाम द्वासप्ततितमोऽध्यायः ॥ ७२ ॥

## अथ स्त्रीप्रशंसा व्याख्यायते ।

तत्रादावेव प्रयोजनप्रदर्शनार्थमाह ।

जये धरित्र्याः पुरमेव सारं
पुरे गृहं सद्मनि चैकदेशः ।
तत्रापि शय्या शयने वरा स्त्री
रत्नोज्ज्वला राज्यसुखस्य सारः ॥ १ ॥

धरित्र्या भूमेर्जये विजये सति पुरमेव सारं समस्तवसुधां जित्वा ततः पुरमात्रसारः । तत्र च पुरे गृहं वेश्म एकमेव सारः । तस्मिन् सद्मनि गृहे च एकदेशः कश्चित् सारः श्रेष्ठः । तत्रापि तस्मिन्नपि गृहैकदेशे शय्या आस्तरणं सारः । तस्मिन् शयने वरा स्त्री प्रधाना युवतिः सा च रत्नोज्ज्वला मणिकनकभूषिता । एतन्मात्रं राज्यसुखस्य सार इति । अन्यत् सर्वमसारमित्यर्थः ॥ १ ॥

अथ स्त्रीप्रशंसार्थमाह ।

रत्नानि विभूषयन्ति योषा भूष्यन्ते वनिता न रत्नकान्त्या ।
चेतो वनिता हरन्त्यरत्ना नो रत्नानि विनाङ्गनाङ्गसङ्गम् ॥ २ ॥

रत्नान्येतत् कर्मपदम् । योषाः स्त्रियो रत्नानि विभूषयन्ति शोभयन्ते । वनिताः स्त्रियः पुनर्न रत्नकान्त्या मणिदीप्त्या भूष्यन्ते । यतो वनिता अरत्ना रत्नविवर्जिताश्चेतो मनो हरन्ति । रत्नानि पुनरङ्गनाङ्गसङ्गं विना चेतो न हरन्ति । यावत् स्त्रिया अङ्गे न श्लिष्टानि तावच्चित्तहराणि न भवन्ति—इति ॥ २ ॥

अन्यदप्याह ।

**आकारं विनिगूहतां रिपुबलं जेतुं समुत्तिष्ठतां**
**तन्त्रं चिन्तयतां कृताकृतशतव्यापारशाखाकुलम् ।**
**मन्त्रिप्रोक्तनिषेविणां क्षितिभुजामाशङ्किनां सर्वतो**
**दुःखाम्भोनिधिवर्त्तिनां सुखलवः कान्तासमालिङ्गनम् ॥ ३ ॥**

कान्तासमालिङ्गनं वल्लभापरिष्वजनं सुखलवः सुखलेशः । केषाम् । राज्ञाम् । कीदृशानाम् । आकारं विनिगूहताम् । आकारोऽन्तश्चेतसि सुखभयहर्षादिरूपविकारः । तथाभूतमाकारं विनिगूहतां प्रच्छादयताम् । तथा रिपुबलं, शत्रुबलं जेतुमभिभवितुं समुत्तिष्ठतां प्रयत्नं कुर्वताम् । तन्त्रं चिन्तयतां ध्यायताम् । कीदृशं तन्त्रम् । कृताकृतशतव्यापारशाखाकुलम् । व्यापाराणां कर्मणां याः शाखा विस्तारः । कृताश्च अकृताश्च कृताकृताः । कृताकृताश्च शतशो व्यापाराः कर्माणि त एव शाखाः । ताभिराकुलं व्याप्तम् । किलानायकतन्त्रं शतशाखाकुलं भवति । मन्त्रिप्रोक्तनिषेविणाम् । मन्त्रिभिः सचिवैर्यत् प्रोक्तं कथितं नीतिशास्त्रविहितं नियमं तन्निषेविणां तत् कुर्वतां मन्त्रिमतानुसारेण व्यवहारताम् । सर्वतः सर्वस्मात् पुत्रादप्याशङ्किनामाशङ्कमानानां दुःखाम्भोनिधिवर्त्तिनां कान्तासमालिङ्गनं सुखलव इति ॥ ३ ॥

अन्यदप्याह ।

**श्रुतं दृष्टं स्पृष्टं स्मृतमपि नृणां ह्लादजननं**
**न रत्नं स्त्रीभ्योऽन्यत् क्वचिदपि कृतं लोकपतिना ।**
**तदर्थं धर्मार्थौ सुतविषयसौख्यानि च ततो**
**गृहे लक्ष्म्यो मान्याः सततमबला मानविभवैः ॥ ४ ॥**

लोकपतिना प्रजापतिना स्त्रीभ्यो योषिद्भ्योऽन्यत् परं द्वितीयं न क्वचिदपि रत्नं कृतम् । केवलमेव स्त्रीरत्नमित्यर्थः । स्त्रीरत्नं कीदृशम् । श्रुतं नाममात्रेण श्रुतमप्याह्लादकरम् । दृष्टमवलोकितम् । स्पृष्टमवयवैकदेशेन । स्मृतं चिन्तितमपि नृणां पुंसामाह्लादजननं सुखकरम् । आह्लादं करोतीत्यर्थः । तदर्थं धर्मार्थौ । धर्मश्चार्थश्च तौ । धर्मार्थौ तदर्थं क्रियेते । ततस्तस्मात् सकाशात् सुतविषयसौ-

ख्यानि भवन्ति। सुताः पुत्राः। विषयसौख्यानि इन्द्रियसौख्यानि च भवन्ति। अबलाः स्त्रियो गृहे वेश्मनि लक्ष्म्यः श्रियः। अतो मानविभवैः मानेन पूजया। विभवेनैश्वर्येण। एतैर्बहुविधैः सततं सर्वकालं मान्याः पूज्याः ॥ ४ ॥

अन्यदप्याह।

येऽप्यङ्गनानां प्रवदन्ति दोषान्
वैराग्यमार्गेण गुणान् विहाय।
ते दुर्जना मे मनसो वितर्कः
सद्भाववाक्यानि न तानि तेषाम् ॥ ५ ॥

ये नरा अङ्गनानां स्त्रीणां गुणान् विहाय गुणान् विद्यमानान् त्यक्त्वा वैराग्यमार्गेण विरागद्वारेण दोषान् प्रवदन्ति कथयन्ति ते दुर्जना इति मे मनसश्चित्तस्य वितर्को निश्चयः। तेषां दुर्जनानां न तानि सद्भाववाक्यानि परमार्थवचांसि भवन्ति ॥ ५ ॥

अन्यदपि प्रशंसार्थमाह।

प्रब्रूत सत्यं कतरोऽङ्गनानां
दोषोऽस्ति यो नाचरितो मनुष्यैः।
धार्ष्ट्येन पुम्भिः प्रमदा निरस्ता
गुणाधिकास्ता मनुनात्र चोक्तम् ॥ ६ ॥

अङ्गनानां स्त्रीणां कतरो दोषोऽस्ति कः प्रधानो दोषो विद्यते य आदावेव मनुष्यैः पुरुषैर्नाचरितो नानुष्ठितः। एतत् सत्यं परमार्थं यूयं विरक्ता अपि प्रब्रूत कथयत। असौ दोषः परदारागमनादिकः प्रथमं पुरुषैराचरितः पश्चात्तास्तेभ्यः सकाशाच्छिक्षिताः। पुम्भिर्मनुष्यैर्धार्ष्ट्येन धृष्टत्वेन निर्लज्जतया प्रमदाः स्त्रियो निरस्ता दोषमार्गेण क्षिप्ताः। यतस्ताश्च स्त्रियः पुरुषाणां सकाशाद्गुणाधिकाः। अथास्मिन्नर्थे मनुना शास्त्रकर्त्रा तासामेव प्राधान्यं चोक्तं कथितम् ॥ ६ ॥

ततश्चाह।

सोमस्तासामदाच्छौचं गन्धर्वः शिक्षितां गिरम्।
अग्निश्च सर्वभक्षित्वं तस्मान्निष्कसमाः स्त्रियः ॥ ७ ॥

तासां स्त्रीणां सोमश्चन्द्रमाः शौचं शुद्धिमदादयच्छत् । गन्धर्वो देवयोनिः । शिक्षितां श्रेष्ठामाह्लादकरीं गिरं वाचमदात् । अग्निर्हुताशनः सर्वभक्षित्वं सर्वाशित्वमदात् । तस्माद्धेतोः स्त्रियो निष्कसमाः सुवर्णतुल्याः । सर्ववर्णगामिन्योऽपि शुद्धा भवन्तीत्यर्थः ॥ ७ ॥

अन्यत् प्राधान्यमाह ।

**ब्राह्मणाः पादतो मेध्या गावो मेध्याश्च पृष्ठतः ।**
**अजाश्वा मुखतो मेध्याः स्त्रियो मेध्यास्तु सर्वतः ॥ ८ ॥**

ब्राह्मणा द्विजाः पादतो मेध्याः पादाभ्यां शुद्धाः पवित्राः । गावः सुरभयः पृष्ठभागान्मेध्याः । अजाश्छागाः । अश्वास्तुरगाः । एतेऽजाश्वा मुखतो मुखाद्भक्रान्मेध्याः । स्त्रियो योषितः सर्वतः सर्वाङ्गेभ्यो मेध्याः पवित्राः ॥ ८ ॥

अन्यदप्याह ।

**स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित् ।**
**मासि मासि रजो ह्यासां दुष्कृतान्यपकर्षति ॥ ९ ॥**

स्त्रियो योषितः । अतुलमसमं परं पवित्रं पावनम् । एताः स्त्रियो न कर्हिचिन्न कदाचिद्दुष्यन्ति दुष्टतां यान्ति । स्त्रीणां मासि मासि प्रतिमासं रजो रक्तं समुद्भूतं दुष्कृतानि दुष्टकर्माणि । अपकर्षति विनाशयति ॥ ९ ॥

अन्यदप्याह ।

**जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः ।**
**तानि कृत्याहतानीव विनश्यन्ति समन्ततः ॥ १० ॥**

जामयो भर्तुर्भगिन्यः कुलस्त्रियश्च ताश्चाप्रतिपूजिता असम्मानिता यानि गेहानि वेश्मानि शपन्ति । अतिशमं याताः क्रोशन्ते तानि च कृत्याहतानीव कृत्यया हतानि विनाशितानि यथा तथा समन्ततः समन्ताद्विनश्यन्ति विनाशं यान्ति ॥ १० ॥

अन्यदप्याह ।

**जाया वा स्याज्जनित्री वा सम्भवः स्त्रीकृतो नृणाम् ।**
**हे कृतघ्नास्तयोर्निन्दां कुर्वतां वः कुतः शुभम् ॥ ११ ॥**

जाया भार्या । तज्जाया भवति यस्यां जायते पुनरिति श्रुतिः । जाया स्त्री माता । स्त्रीकृतः सम्भवः । अङ्गात् सम्भवति हृदयादभिजायते । आत्मा वै पुत्रनामासि त्वं जीव शरदां शतमिति श्रुतिः । पुत्ररूपेणात्मन एवोत्पत्तिः । जाया वा स्याद्भवेत् । जनित्री माता वा भवेत् । नृणां सर्वेषां स्त्रीकृतः सम्भव उत्पत्तिः । हे कृतघ्ना इति । हे दुर्जनानामामन्त्रणम् । तयोर्जायाजनित्र्योर्निन्दां कुर्वतां वो युष्माकं कुतः कस्माच्छुभं श्रेयो भवति ॥ ११ ॥

अन्यदप्याह ।

**दम्पत्योर्व्युत्क्रमे दोषः समः शास्त्रे प्रतिष्ठितः ।**
**नरा न तमवेक्षन्ते तेनात्र वरमङ्गनाः ॥ १२ ॥**

दम्पत्योर्जायापत्योर्व्युत्क्रमे सति । व्युत्क्रमोऽनियमः । नरस्य परस्त्रीगमनं स्त्रियाः परपुरुषगमनं व्युत्क्रमः । तस्मिन् यो दोषो दुष्टता स शास्त्रे धर्मशास्त्रादौ समस्तुल्यः प्रतिष्ठित उक्तः । यथा नहीदृशमनायुष्यं यथा परस्त्रीनिषेवणमित्यादि । सामान्यमुभयोरपि । नराः पुनर्गतं दोषं परस्त्रीगमनादिकं न समवेक्षन्ते विचारयन्ति । स्त्रियः पुनरवेक्षन्ते तेन कारणेनात्रास्मिन् निर्धारणेऽङ्गनाः स्त्रियो वरं श्रेष्ठं प्रधानाङ्गमित्यर्थः ॥ १२ ॥

अथ दारातिक्रमणे प्रायश्चित्तमाह ।

**बहिर्लोम्ना तु षण्मासान् वेष्टितः खरचर्मणा ।**
**दारातिक्रमणे भिक्षां देहीत्युक्त्वा विशुध्यति ॥ १३ ॥**

दाराणामतिक्रमणं दारातिक्रमणमन्यस्त्रीनिषेवणं तस्मिन् दारातिक्रमणे बहिर्लोम्ना खरचर्मणा गर्दभत्वचा बाह्ये लोमानि कृतानि यस्मिन् तेन षण्मासान् वेष्टितः प्रावृतशरीरः प्रतिगृहं भिक्षां देहीति । भिक्षां मे प्रयच्छेत्युक्त्वा सम्भाष्य ततो विशुध्यति शुद्धिमायाति ॥ १३ ॥

अन्यदपि स्त्रीप्रशंसार्थमाह ।

**न शतेनापि वर्षाणामपैति मदनाशयः ।**
**तत्र शक्त्या निवर्तन्ते नरा धैर्येण योषितः ॥ १४ ॥**

मदनः कामश्चेति । तस्मिन्निति । तत्र मदनाशयः कामवासनाभिः संस्कारोऽभिलाषः पुरुषाणां शतेनापि वर्षाणामब्दानां नापैति हृदयान्नापसर्पति । यथा स्त्रिया सह संयोगः पूर्वमासीत् तथा साम्प्रतं यदि न भवति तदा पुरुषाणां वर्षशतेनापि मदनाशयो नापैति किन्तु तत्र तस्मिन् कामोपभोगविषये नराः पुरुषा अशक्त्या असामर्थ्येन निवर्तन्ते निवृत्तिं कुर्वन्ति । योषितः स्त्रियः पुनर्धैर्येण धृष्टत्वेनैनं निवर्तन्ते । अनेन स्त्रीणामभिलाषशीलताप्राधान्यं प्रदर्शितं भवति ॥ १४ ॥

अन्यदप्याह ।

**अहो धाष्ट्र्यमसाधूनां निन्दतामनघाः स्त्रियः ।**
**मुष्णतामिव चौराणां तिष्ठ चौरेति जल्पताम् ॥ १५ ॥**

असाधूनां दुर्जनानामनघा अपापाः स्त्रियो योषितः । निन्दां कुत्सां कुर्वतामहो धाष्ट्र्यमहो धीरता । अहो आश्चर्यं । धाष्ट्र्यं निर्लज्जता यत्र सा दृश्यते । यथा चौराणां तस्कराणां मुष्णतां दोषं कुर्वतां यस्यैव मुष्णन्ति तस्यैव पलायमानस्य तिष्ठ चौरेति जल्पतां भाष्यतां धाष्ट्र्यं तद्वदिति ॥ १५ ॥

एवं धर्मशास्त्रोक्तां प्रशंसामुपन्यस्याधुना स्वकृतामाह ।

**पुरुषश्चटुलानि कामिनीनां**
**कुरुते यानि रहो न तानि पश्चात् ।**
**सुकृतज्ञतयाङ्गना गतासू-**
**नवगूह्य प्रविशन्ति सप्तजिह्वम् ॥ १६ ॥**

पुरुषो मनुष्यः कामिनीनां स्त्रीणां संजातकामानां रहो निर्जने यानि सुरतकार्याणि चटुलानि, चाटूनि प्रियवचांसि कुरुते सम्भाषते । तानि पश्चादीषदपि सापराधानां न करोति दौर्जन्यात् । अङ्गनाः स्त्रियः सुकृतज्ञतया शोभनं कृतं सुकृतं तज्जानातीति सुकृतज्ञस्तस्य भावः सुकृतज्ञता तया सुकृतज्ञतया गतासून् मृतान् पुरुषान् स्वपतीनवगूह्य परिष्वज्य सप्तजिह्वमग्निं प्रविशन्ति । भर्तुरुपकृतं स्मृत्वा तेनैव सहात्मानमग्निना व्यापादयन्तीत्यर्थः ॥ १६ ॥

अन्यदप्याह ।

स्त्रीरत्नभोगोऽस्ति नरस्य यस्य
निःस्वोऽपि साम्प्रत्य[1]वनीश्वरोऽसौ ।
राज्यस्य सारोऽशनमङ्गनाश्च
तृष्णानलोद्दीपनदारु शेषम् ॥ १७ ॥

यस्य नरस्य पुरुषस्य स्त्रीरत्नभोगः । स्त्री एव रत्नं स्त्रीरत्नम् । तया सह भोग उपभोगो यस्यास्ति विद्यते । पुरुषो निःस्वोऽपि निर्धनोऽपि साम्प्रत्यवनीश्वरोऽसौ । अहमेव मन्ये यथासौ राजा । केचित् सम्प्रत्यवनीश्वरोऽसाविति पठन्ति । यथा सम्प्रति तस्मिन्नेव काले स राजा । अपिशब्दः सम्भावनायाम् । ईश्वरस्य का गणना । यस्माद्राज्यस्यैतावत् सारः श्रेष्ठम् । अशनं भोजनमङ्गनाश्च स्त्रियः शेषमन्यद्धनादिकं तृष्णानलस्य तृष्णाग्नेरुद्दीपने ज्वलने दारु काष्ठनिचयः । यतस्तेनाग्निरधिकतरं प्रज्वलति ॥ १७ ॥

अन्यत् प्रशंसार्थमाह ।

कामिनीं प्रथमयौवनान्वितां
मन्दवल्गुमृदुपीडितस्वनाम् ।
उत्स्तनीं समवलम्ब्य या रतिः
सा न धातृभवनेऽस्ति मे मतिः ॥ १८ ॥

कामिनीं समुद्गतमन्मथां तां च प्रथमयौवनान्वितामभिनवयौवनोपेताम् । मन्दमल्पं वल्गु रम्यं मृदु मधुरं पीडितं स्तब्धम् । शनैरालिङ्गिता सती मन्दवल्गुमृदुपीडितं स्वनं शब्दं कुर्वन्तीम् । उत्स्तनीमुद्गतस्तनामुद्भिद्यमानकुचाम् । एवंविधां स्त्रियं योषितं समवलम्ब्य परिष्वज्य या रतिर्भवति सुखं यादृशं संजायते सा धातृभवने प्रजापतिगृहे ब्रह्मलोके नास्ति न विद्यते-इति मम मतिर्बुद्धिः । एवमहं मन्ये-इति । महता क्लेशेन तपसा ध्यानेन योगादिना वा ब्रह्मलोकमासाद्य तत्र किमनुभूयते ॥ १८ ॥

---

[1] सम्प्रत्यवनीश्वरोऽसौ-इति पाठान्तरम् ।

इत्येतदाह ।

तत्र देवमुनिसिद्धचारणै-
र्मान्यमानपितृसेव्यसेवनात् ।
ब्रूत धातृभवनेऽस्ति किं सुखं
यद्रहः समवलम्ब्य न स्त्रियम् ॥ १९ ॥

तत्र तस्मिन् । धातृभवने ब्रह्मलोके । देवैः सुरैः । मुनिभिः । सिद्धैर्विद्याराधनेन ये सिद्धदेवयोनयः सम्पन्नास्तैः । तथा चारणैर्नटनर्तकगेयवाद्यगन्धर्वाप्सरोभिर्मान्यानां पूजनीयानां मानपितॄणां पूजकानां सेव्यानां च सेवनादुपासनात् परतोऽन्यत् किं सुखमस्त्येतद्ब्रूत कथयत । तत्र सेवकैः सेव्या आराध्यन्ते । मान्या मानपितृभिः पूज्यन्ते । एतावानेव । यद्रहो निर्जने सुरतसमये स्त्रियं योषितमवलम्ब्य परिष्वज्य किं नास्ति किं न सुखं विद्यते । अपि तु सर्वं ब्रह्मलोकादभ्यधिकं तत्र विद्यत इत्यद्यतनैर्लोकैर्गणना कार्या ॥ १९ ॥

इत्येतदाह ।

आब्रह्मकीटान्तमिदं निबद्धं
पुंस्त्रीप्रयोगेण जगत् समस्तम् ।
व्रीडात्र का यत्र चतुर्मुखत्व-
मीशोऽपि लोभाद्गमितो युवत्याः ॥ २० ॥

इदं समस्तं निरवशेषं जगद्विश्वमाब्रह्मकीटान्तं ब्रह्मणः पितामहात् प्रभृति कीटान्तं यावत् पुंस्त्रीप्रयोगेण स्त्रीपुरुषसम्प्रयोगेण निबद्धं ग्रथितम् । स्त्रीपुंयोगादृते नान्यत् किञ्चिद्दृश्यते । अत्र जगति का व्रीडा का लज्जा पुरुषमात्रस्य यत्र नास्ति । ईशोऽपि महादेवोऽपि युवत्याः स्त्रियाश्चतुर्मुखत्वं गमितः प्राप्तः ॥ २० ॥

अत्र पौराणिकी श्रुतिः ।

यथा तिलोत्तमायाः प्रदक्षिणं कुर्वाणायां अतिलावण्योपेतायाः उमाया उत्सङ्गस्थितायाः क्रोधभयाद्भगवता तद्रूपलाम्पट्येन तदवलोकनाय चतसृषु दिक्षु मुखचतुष्टयं सृष्टमिति ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतावन्तःपुरचिन्तायां स्त्रीप्रशंसा नाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

## अथ सौभाग्यकरणं व्याख्यायते ।

तथादावेव सुभगं पुरुषं प्रति विशेषमाह ।

जात्यं मनोभवसुखं सुभगस्य सर्व-
माभासमात्रमितरस्य मनोवियोगात् ।
चित्तेन भावयति दूरगतापि यं स्त्री
गर्भं बिभर्त्ति सदृशं पुरुषस्य तस्य ॥ १ ॥

सुभगस्य स्त्रीवल्लभस्य पुरुषस्य सर्वं मनोभवसुखं कामजं सुखं जात्यं श्रेष्ठम् । जात्यमुचितं सर्वं सर्वस्यां नार्याम् । यतः सुभगं पुरुषं सम्भोगे स्त्री निजहृदये आशास्ते अन्यत्र मनो न नयति ततः स्त्रीचित्तं तस्योपरि रज्यते । इतरस्य दुर्भगस्य मनोवियोगात् चित्तस्यान्यत्र गमनादाभासमात्रम् । अन्तरमननुप्रविश्य यद्भुज्यते तदाभासमात्रं न जात्यं स्त्रीमनोवियोगादन्यगतत्वान्मनसः । यतो वक्ष्यति ।

मनो[१] हि मूलं हरदग्धमूर्तेः । स्त्री न सुभगं प्रति याति सा च स्त्री दूरगताप्यसमीपस्थापि यं पुरुषं चित्तेन मनसा भावयति चिन्तयति कामयते तस्य पुरुषस्य सदृशं तदाकृतिं गर्भं बिभर्त्ति धारयति ॥ १ ॥

पुरुषस्यात्मा एव स्त्रीषु पुनर्जायते इत्येतत्प्रतिपादयितुमाह ।

भङ्क्त्वा काण्डं पादपस्योप्तमुर्व्यां
बीजं वास्यां नान्यतामेति यद्वत् ।
एवं ह्यात्मा जायते स्त्रीषु भूयः
कश्चित् तस्मिन् क्षेत्रयोगाद्विशेषः ॥ २ ॥

पादपस्य वृक्षस्य काण्डं शाखां भङ्क्त्वा उर्व्यां भूमावुप्तं रोपितं यद्वद्यथा नान्यतामेति बीजं वा वर्षमस्यामुप्तं नान्यतामेति तदेव जायते एवमनेन प्रकारेण स्त्रीष्वाधारभूतासु भूयः पुनरेवात्मा जायते उत्पद्यते । तस्मादात्मनि क्षेत्रयोगाद्धेतोः कश्चित् तत्क्षेत्रे विविधभावो भवति । यत्र

---

[१] अस्यैव ग्रन्थस्य ७७ अध्याये १४ श्लोकः ।

देहे बीजमुप्यते तद्वशादस्यान्यत्वं देहादृश्यं किञ्चिद्भवति । एवमातृव-शात् कश्चिद्विशेषो भवति ॥ २ ॥

दूरस्थस्य कथं क्रामं सम्भवतीत्येतदाह ।

**आत्मा सहैति मनसा मन इन्द्रियेण**
**स्वार्थेन चेन्द्रियमिति क्रम एष शीघ्रः ।**
**योगोऽयमेव मनसः किमगम्यमस्ति**
**यस्मिन् मनो व्रजति तत्र गतोऽयमात्मा ॥ ३ ॥**

आत्मा कर्मात्मा चिद्रूपो मनसा चित्तेनेति सहैव गच्छति । मनश्चेत इन्द्रियेण सहैति । तचेन्द्रियाणि दश पञ्च बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाणि । श्रोत्रं त्वक् चक्षुर्जिह्वा नासिकेति पञ्च बुद्धीन्द्रियाणि ।

उक्तं च ।

पायूपस्थं हस्तपादं वाक् तथैवाच पञ्चमी ।
पञ्च कर्मेन्द्रियाण्याहुर्मनः षष्ठानि तानि तु ॥
श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चेति पञ्चमी ।
पञ्च बुद्धीन्द्रियाण्याहुर्मनः षष्ठानि तानि तु ॥

एवं मन इन्द्रियेण सहैति । इन्द्रियं स्वार्थेनात्मीयार्थेन सहैति । यो यस्य इन्द्रियस्य विषयस्तेन सहैति गच्छति । क्रम एष शीघ्रस्तात्पर्य-क्रमः । अयमर्थः । आत्मा मनसा सह संयुज्यते । मनश्चेन्द्रियेण । इन्द्रिय-मर्थेन । अर्थ्यत इत्यर्थः । श्रोत्रादीनि बुद्धीन्द्रियाणि वागादीनि कर्मेन्द्रियाणि । अर्थाः शब्दादयः । शब्दस्पर्शरूपरसगन्धाः । अनन्तरमिन्द्रियास्वादितमर्थं मन आत्मानं निवेदयति । आत्मार्थक्रियाकारितां तस्य स्मृत्वा मनस आज्ञां ददाति कर्मेन्द्रियाण्यादाने त्यागे वा विनियुङ्क्ष्व इति । अनेन प्रकारेण क्रम एष शीघ्रः । क्रमः प्रक्रियैषा अवलम्बिता । योगः सम्बन्धोऽयमेव । मनस-स्तस्य किमगम्यमस्ति अपि तु सर्वत्रैव व्रजति । यस्मिन् देशे मनो व्रजति तत्रायमात्मा गतः ॥ ३ ॥

एतदेव विशेषयन्नाह ।

**आत्मायमात्मनि गतो हृदयेऽतिसूक्ष्मो**
**ग्राह्योऽचलेन मनसा सतताभियोगात्**

**यो यं विचिन्तयति याति स तन्मयत्वं**
**यस्मादतः सुभगमेव गता युवत्यः ॥ ४ ॥**

अयमात्मा कर्मात्मा चिद्रूपो जीव आत्मनि परमात्मनि गतः स्वप्नतायां बोधरूपः स्थितः कर्ता ज्ञाता च सम्पन्नः । क्व । हृदये हृत्स्थाने ।

तथा च ।

नाभेरूर्ध्वं वितस्तिं च कण्ठाधस्तात् षडङ्गुलम् ।
हृदयं तद्विजानीयाद्विश्वस्यायतनं महत्—इति ॥

कीदृशः । अतिसूक्ष्मोऽत्यन्ताल्पप्रमाणः । स च ग्राह्यो विषयीकार्यो-ऽचलेन स्थिरेण मनसा चित्तेन सतताभियोगादविच्छेदाभ्यासात् । यः पुरुषो यं च वस्तुरूपं विचिन्तयति चित्तेन भावयति स तन्मयत्वं याति । स एव प्राकृतो यस्य स तन्मयः । यस्मादेवमतोऽस्माद्धेतोर्युवत्यः स्त्रियः सुभगं पुरुषं प्रति गताः प्राप्ताः सततभ्यासादिति ॥ ४ ॥

अथ सुभगदुर्भगत्वस्य लक्षणमाह ।

**दाक्षिण्यमेकं सुभगत्वहेतुर्विद्वेषणं तद्विपरीतचेष्टा ।**
**मन्त्रौषधाद्यैः कुहकप्रयोगैर्भवन्ति दोषा बहवो न शर्म ॥५॥**

दाक्षिण्यमानुकूल्यं चित्ताराधनमेकमेव सुभगत्वहेतुर्वाल्लभ्यकारणम् । स्त्रीणामानुकूल्याद्वल्लभः पुमान् भवति । तद्विपरीतचेष्टा विपर्ययानुचरण-मनानुकूल्यं विद्वेषणं दौर्भाग्यकारणम् । मन्त्रौषधाद्यैः । मन्त्रैर्वशीकरणमन्त्रैः । ओषधैर्द्रव्यविशेषैः । आदिग्रहणाद्भोजनपानलिङ्गलेपानुलेपनैरन्यैश्चोपतापकरैः कुहकप्रयोगैर्विस्मयोत्पादकैर्बहवः प्रभूता दोषाः शरीरोपद्रवा भवन्ति । न शर्म श्रेयो न भवति । तस्मादानुकूल्यमेकमेव सौभाग्यकारणं नान्यत् प्रयोगादिकमपि ॥ ५ ॥

अन्यदपि सौभाग्यकरणे कार्यमाह ।

**वाल्लभ्यमायाति विहाय मानं दौर्भाग्यमापादयतेऽभिमानः ।**
**कृच्छ्रेण संसाधयतेऽभिमानी कार्याण्ययत्नेन वदन् प्रियाणि ॥ ६ ॥**

मानं गर्वं विहाय त्यक्त्वा पुरुषो जनस्य वाल्लभ्यं वल्लभत्वमायाति गच्छति । अभिमानोऽहङ्कारो गर्वः । दौर्भाग्यं दुर्भगत्वमापादयते प्रापयति । यश्चाभिमानी धृष्टः स कृच्छ्रेण क्लेशेन कार्याणि संसाधयते निवर्तयति । प्रियाणि प्रीतिवचनानि वदन् भाषयन्नयत्नेनाक्लेशेन कार्याणि साधयति-इति ॥ ६ ॥

अन्यदप्याह ।

**तेजो न तद्यत् प्रियसाहसत्वं वाक्यं न चानिष्टमसत्प्रणीतम् ।**
**कार्यस्य गत्वान्तमनुद्धता ये तेजस्विनस्ते न विकत्थना ये ॥७॥**

असमीक्षितानां कार्याणां करणं साहसं तस्य भावः साहसत्वम् । प्रियं यच्च वस्तुनि साहसत्वं न तत् तेजः शृङ्गारो भवति कदाचित् प्राणविनाश उत्पद्यते । यच्च वाक्यं वचनमनिष्टमननुकूलं मर्मस्पृक् । असत्प्रणीतमसद्भिर्धृष्टैः प्रणीतमुच्यते न तत् तेजः । ये जनाः कार्यस्य करणीयस्य वस्तुनोऽन्तं परिसमाप्तिमपि गत्वा तन्निवर्त्यानुद्धता अनभिमानिनस्ते तेजस्विनः । न विकत्थना वाचाला ये निरर्थकमसद्वाक्यं प्रलपन्ति ते न तेजस्विन इति ॥ ७॥

अन्यदप्याह ।

**यः सार्वजन्यं सुभगत्वमिच्छेद्गुणान् स सर्वस्य वदेत् परोक्षम् ।**
**प्राप्नोति दोषानसतोऽप्यनेकान् परस्य यो दोषकथां करोति॥८॥**

यः पुरुषः सार्वजन्यं सर्वत्र जनानां सुभगत्वं वाल्लभ्यमिच्छेदभिलषेत् स सर्वस्य निरवशेषस्य जनस्य परोक्षमप्रत्यक्षं गुणान् स्तुतिं वदेत् ब्रूयात् । यः पुनः परस्य संबन्धिनीं दोषकथां करोति स पुरुषोऽसतो दुर्जनाद्दनेकान् बहुप्रकारान् दोषान् प्राप्नोति लभते । किल सज्जनो क्षानशीलो भवति । दुर्जनः परदोषैकपरायणो भवतीति ॥ ८ ॥

अन्यदप्याह ।

**सर्वोपकारानुगतस्य लोकः सर्वोपकारानुगतो नरस्य ।**
**कृत्वोपकारं द्विषतां विपत्सु या कीर्त्तिरल्पेन न सा शुभेन ॥९॥**

सर्वेषामुपकारेऽनुगतो निरतः सर्वोपकारानुगतः । तस्य सर्वोपकारानुगतस्य पुरुषस्य सर्वो निरवशेषो लोक उपकारानुगतो भवति प्रत्यु-

पकारं करोति । द्विषतां शत्रूणां विपत्स्वापत्सूपकारमुपकृतिं कृत्वा या कीर्तिर्यशो भवति लोके साल्पेन शुभेन पुण्येन न भवति । बहुना शुभेन भवतीत्यर्थः । एवं सति सर्वस्योपकारः कर्तव्य इति तात्पर्यार्थः ॥ ९ ॥

अथ दुर्जनं प्राह ।

**तृणैरिवाग्निः सुतरां विवृद्धिमाच्छाद्यमानोऽपि गुणोऽभ्युपैति ।**
**स केवलं दुर्जनभावमेति हन्तुं गुणान् वाञ्छति यः परस्य ॥१०॥**

दुर्जनैः सज्जनस्य गुण आच्छाद्यमानोऽपि सुतरामतिशयेन विवृद्धिमुपैति वृद्धिं प्राप्नोति । यथा तृणेनाच्छाद्यमानोऽग्निर्विवृद्धिं याति । यः परस्य गुणान् हन्तुं विनाशयितुं वाञ्छति स केवलं दुर्जनभावं दौर्जन्यमेति प्राप्नोति न साधोर्गुणविनाशो भवति । तस्याधिकतरा गुणाः प्रकाशमायान्ति । यथा तृणैरग्निश्छाद्यमानः । केवलमेव तृणानि तत्र दह्यन्त इति ॥ १० ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतावन्तःपुरचिन्तायां सौभाग्यकरणं नाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

## अथ कान्दर्पिकं व्याख्यायते ।

तत्रादावेव प्रयोजनप्रदर्शनार्थमाह ।

**रक्तेऽधिके स्त्री पुरुषस्तु शुक्रे नपुंसकं शोणितशुक्रसाम्ये ।**
**यस्मादतः शुक्रविवृद्धिदानि निषेवितव्यानि रसायनानि ॥१॥**

गर्भाधानकाले स्त्रीपुरुषयो रक्ते शोणितेऽधिके सति गर्भे स्त्री भवति । शुक्रे रेतस्यधिके पुरुषो नरो भवति । शोणितस्य रक्तस्य शुक्रस्य रेतसश्च साम्ये तुल्यत्वे नपुंसकं भवति । यस्मादेवमतोऽस्माद्धेतोः शुक्रविवृद्धिदानि रेतसः संवर्धनानि रसायनानि नियोगान्निषेवितव्यान्यभ्यवहार्याणीति ॥ १ ॥

अथ कामस्य बन्धनरज्जुमाह ।

**हर्म्यपृष्ठमुडुनाथरश्मयः सोत्पलं मधु मदालसा प्रिया ।**
**वल्लकी स्मरकथा रहः स्रजो वर्ग एष मदनस्य वागुरा ॥ २ ॥**

हर्म्यपृष्ठं गृहपृष्ठम् । उडुनाथरश्मयश्चन्द्रकिरणाः । सोत्पलं नीलोत्पलसहितम् । मधु मद्यम् । मद्यग्रहणमुपलक्षणार्थं सुरमधिकृत्यैतदुक्तम् ।

ब्राह्मणादेरन्यदभिमतं पानम् । प्रिया वल्लभा । मदालसा मद्यपानेनालसा क्षीबा । वल्लकी वीणा । स्मरकथा कामकथा । रह एकान्तो निर्जनस्थानम् । सुरताभिनिवेशश्च । स्रजो मालाः । एष वर्गः समूहो मदनस्य कामस्य वागुरा बन्धनरज्जुः । अनया रज्ज्वा बध्यत इति ॥ २ ॥

अथ शुक्रवृद्धियोगमाह ।

**माक्षीकधातुमधुपारदलोहचूर्ण-**
**पथ्याशिलाजतुघृतानि समानि योऽद्यात् ।**
**सैकानि विंशतिरहानि जरान्वितोऽपि**
**सोऽशीतिकोऽपि रमयत्यबलां युवेव ॥ ३ ॥**

माक्षीकधातुः पाषाणमाक्षीकम् । मधु माक्षिकं क्षौद्रम् । पारदं प्रसिद्धम् । लोहचूर्णं शस्त्रचूर्णम् । पथ्या हरीतकी । शिलाजतुः प्रसिद्धः । घृतमाज्यम् । एतानि माक्षीकवर्जं सर्वाणि सममाषाणि । घृतमाक्षीकाभ्यां सममात्राभ्यां भावयित्वा गुलिका कार्या । तानि योऽद्यात् भक्षयेत् । सैकानि विंशतिरहानि सहैकेन वर्तते विंशतिः सैकविंशतिरहानि दिनानि । एकविंशतिदिनानीत्यर्थः । योऽद्यात् स जरान्वितोऽपि जरायुक्तोऽपि । अशीतिकोऽपि अशीतिवर्षोऽपि अतिवृद्धोऽपि तथाभूतोऽप्यबलां स्त्रियं युवेव तरुण इव रमयति क्रीडयति ॥ ३ ॥

अन्यदप्याह ।

**क्षीरं शृतं यः कपिकच्छुमूलैः**
**पिबेत् क्षयं स्त्रीषु न सोऽभ्युपैति ।**
**माषान् पयःसर्पिषि वा विपक्वान्**
**षड्ग्रासमात्रांश्च पयोऽनुपानम् ॥ ४ ॥**

यः कामी कपिकच्छुमूलैरात्मगुप्तामूलैः सह क्षीरं दुग्धं शृतं क्वथितं पिबेत् स स्त्रीषु विषये क्षयमशक्ततां नाभ्युपैति नायाति । क्षीरमेव निर्मथ्य यद्घृतमुत्पाद्यते तत् पयोघृतम् । पयःसर्पिषि पयोघृते । माषान् विपक्वान् कृत्वा षड्ग्रासमाषान् भुक्त्वा षडेव ग्रासान् प्राश्यानु पश्चात् पयसः क्षीरस्य पानं कार्यम् । तस्मात् पयोऽनुपानात् स स्त्रीषु क्षयं नाभ्युपैति ॥ ४ ॥

अन्यदप्याह ।

**विदारिकायाः स्वरसेन चूर्णं मुहुर्मुहुर्भावितशोषितं च ।**
**शृतेन दुग्धेन सशर्करेण पिबेत् स यस्य प्रमदाः प्रभूताः ॥ ५ ॥**

विदारिका प्रसिद्धा । तस्याश्चूर्णं स्वरसेनैव विदारिकारसेनैव मुहुर्मुहुः प्रतिक्षणं भावितं सेवितं मुहुर्मुहुः शोषितं च । एतदुक्तं भवति । स्वरसेन यावत् प्रतिपालनं भावयितुमायाति तेन भावयित्वा तापे शोषयेत् । पुनः शुष्कं भावयित्वा शोषयेत् । एवं भूयो भूयः सप्त वारानित्यर्थः । तस्याश्चूर्णं यस्य प्रमदाः प्रभूताः स्त्रियो बह्व्यो भवन्ति स दुग्धेन क्षीरेण शृतेन क्वथितेन सशर्करेण शर्करासहितेन पिबेत् ॥ ५ ॥

अन्यदाह ।

**धात्रीफलानां स्वरसेन चूर्णं**
**सुभावितं क्षौद्रसिताज्ययुक्तम् ।**
**लीढ्वानु पीत्वा च पयोऽग्निशक्त्या**
**कामं निकामं पुरुषो निषेवेत् ॥ ६ ॥**

धात्रीफलानामामलकानां चूर्णं स्वरसेनामलकरसेनैव सुभावितमतिशयेन भावितम् । ततः क्षौद्रसिताज्ययुक्तम् । क्षौद्रं माक्षिकम् । सिता शर्करा । आज्यं घृतम् । एतैः सममात्रैः संयुक्तं कृत्वा द्रवरूपं कृत्वा तल्लीढ्वाऽऽस्वाद्य अनु पश्चादग्निशक्त्या जठराग्निसामर्थ्येन पयः क्षीरं पीत्वा पुरुषो नरः कामं मैथुनं निकामं पर्याप्तं निषेवेदनुभवेत् ॥ ६ ॥

अन्यदप्याह ।

**क्षीरेण बस्ताण्डयुजा शृतेन**
**सम्प्लाव्य कामी बहुशस्तिलान् यः ।**
**सुशोषितानत्ति पयः पिबेच्च**
**तस्याग्रतः किं चटकः करोति ॥ ७ ॥**

बस्तश्छागः । तस्याण्डौ वृषणौ । क्षीरेण दुग्धेन बस्ताण्डयुजा बस्ताण्डयुतेन शृतेन क्वथितेन यः कामी कामुकः बहुशो बहून् वारान् सप्त वारान्

यावदित्यर्थः । तिलान् सम्प्राप्य प्लावयित्वा ततस्तानेव तिलान् सुशोषितानतिशुष्कान् । अत्ति भक्षयति । पयः क्षीरं पश्चात् पिबेत् तस्य नरस्याग्रतः पुरतश्चटकः कलविङ्कः किं करोति बहुस्त्रीगमनम् । अतीव स्त्रीषु बहुवारं शीघ्रगामी भवतीत्यर्थः ॥ ७ ॥

अन्यदप्याह ।

**माषसूपसहितेन सर्पिषा षष्टिकौदनमदन्ति ये नराः ।**
**क्षीरमप्यनु पिबन्ति तासु ते शर्वरीषु मदनेन शेरते ॥ ८ ॥**

ये नरा मनुष्या माषसूपसहितेन सर्पिषा घृतेन षष्टिकौदनं षष्टिशालिभक्तमदन्ति भक्षयन्ति । क्षीरं दुग्धं अनु पश्चात् पिबन्ति यासु शर्वरीषु रात्रिषु तासु ते नरा मदनेन कामेन सह शेरते स्वपन्ति । असकृत्स्त्रीगमनादिति ॥ ८ ॥

अन्यदप्याह ।

**तिलाश्वगन्धाकपिकच्छुमूलै-**
**र्विदारिकाषष्टिकपिष्टयोगः ।**
**आजेन पिष्टः पयसा घृतेन**
**पक्वं भवेच्छष्कुलिकातिवृष्या ॥ ९ ॥**

तिलाः प्रसिद्धाः । अश्वगन्धा प्रसिद्धैव । कपिकच्छुमूलमात्मगुप्तामूलम् । विदारिका प्रसिद्धा । षष्टिकः शालिविशेषस्ततः पिष्टः । औषधानामर्धे षष्टिकपिष्टस्य पिष्टेन सहैतेषां योगः कार्यः । तत आजेन छागेन पयसा क्षीरेण पिष्टः श्लक्ष्णीकृतः । ततो घृतेनाज्येन शष्कुलिका भक्ष्यप्रकारं पक्वं साधिताऽतिवृष्या बहुशुक्रकरी भवेत् सा ॥ ९ ॥

अन्यदप्याह ।

**क्षीरेण वा गोक्षुरकोपयोगं**
**विदारिकाकन्दकभक्षणं वा ।**
**कुर्वन्न सीदेद्यदि जीर्यतेऽस्य**
**मन्दाग्निता चेदिदमत्र चूर्णम् ॥ १० ॥**

क्षीरेण वा गोक्षुरकोपयोगं कुर्यात् । गोक्षुरकैः सह क्षीरं क्वाथयित्वा पिबेत् । अथवा विदारिकायाः कन्दस्य मूलस्य क्षीरेण क्वथितस्य भक्षणं कुर्यात् ।

एवं कुर्वन्न सीदेत् स्त्रीषु नावसादं याति । यद्यस्य कामुकस्य जीर्यते कामुकत्वं गच्छति तदैवम् । चेच्छब्दो यद्यर्थे । यदि मन्दाग्नितात्पाग्नितात्पाग्नित्वं भवति तदा तस्मिन्निदं वक्ष्यमाणं चूर्णमग्निसन्दीपनम् ॥ १० ॥

तदाह ।

**साजमोदलवणा हरीतकी शृङ्गवेरसहिता च पिप्पली ।**
**मद्यतक्रतरलोष्णवारिभिश्चूर्णपानमुदराग्निदीपनम् ॥ ११ ॥**

अजमोदं दीप्यकम् । लवणं सैन्धवम् । हरीतकी पथ्या । हरीतकी अजमोदलवणाभ्यां सहिता । शृङ्गवेरं शुण्ठी । शृङ्गवेरेण सहिता संयुता पिप्पली । सर्वाण्येतानि सममात्राणि कृत्वा चूर्णयेत् । अस्य चूर्णपानं मद्यतक्रतरलोष्णवारिभिः कुर्यात् । मद्यं शीध्वासवम् । तक्रमुदश्वित् । तरलं काञ्जिकं पय इति केचित् । उष्णवारुष्णपानीयम् । एतेषामन्यतमेनैव पिबेत् । तदाग्निदीपनं जठराग्निविवर्धनम्–इति ॥ ११ ॥

अथात्र विरुद्धान्याह ।

**अत्यम्लतिक्तलवणानि कटूनि चात्ति**
**यः क्षारशाकबहुलानि च भोजनानि ।**
**दृक्शुक्रवीर्यरहितः सकरोत्यनेकान्**
**व्याजान् जरन्निव युवाप्यबलामवाप्य ॥ १२ ॥**

यः पुरुषो भोजनान्याहारानत्यम्लान्यतितिक्तानि अतिलवणानि अतिकटूनि वा अत्ति भक्षयति । तथा क्षारबहुलानि भोजनानि च अत्ति । द्रव्याणां संयोगं कृत्वा दग्ध्वा च क्षारं कारयेत् ।

तद्यथा ।

क्षारो[१] विवेडगजचिर्भिटवल्यवह्नि-
व्योषं च संस्तरचितं लवणोपधानम् ।
दग्ध्वा विचूर्ण्य दधिमस्तुयुतं प्रयोज्यं
गुल्मोदरश्वयथुपाण्डुगदोद्भवेषु–इति ॥

---

१ हिन्दीभाषायाम् ।
क्षारः=खवाखार । विव=प्रतीश । गजा=गजपक् । चिर्भिट=तोती ककारी । वल्य=वाव । वह्नि=चित । व्योष=सेंठ, मरिच, पीपर ।

एवमादिक्षारप्रयोगाः ।

एवं क्षारबहुलानि भोजनानि । तथा शाकबहूनि च योऽत्ति । अथवा क्षारशाकाः सुप्रसिद्धाः । स दृक्शुक्रवीर्यरहितः । दृग्दृष्टिः । शुक्रं रेतः । वीर्यं च बलम् । एतै रहितो वर्जितो भवति । अबलां स्त्रियमवाप्य प्राप्य युवापि तरुणोऽपि अनेकान् व्याजान् जरन्निव वृद्धो यथा करोत्यशक्तत्वादित्यर्थः ॥ १२ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतावन्तःपुरचिन्तायां
कान्दर्पिकं नाम पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

## अथ गन्धयुक्तिर्व्याख्यायते ।

तत्रादावेव च द्रव्याणां नामपरिज्ञानायास्माभिर्निघण्टुर्लिख्यते ।

तद्यथा ।

अथात्र व्यवहारार्थं निघण्टुरभिलिख्यते ।
कस्तूरी मदनी नाभिर्मदो दर्पो मृगोद्भवा ॥
मृगदर्पो मृगमदो गन्धश्चेत्येकवाचकाः ।
स्फटिकेन्दुतुषाराख्यं कर्पूरं घनसारकम् ॥
काश्मीरं घुसृणं रक्तसञ्ज्ञकं कुङ्कुमं विदुः ।
वानराख्यं चलाख्यं च तैलं सिह्लं तुरुष्ककम् ॥
कालीयं जोङ्गकं लोहं खलः कार्पासकोऽगुरुः ।
हिमं शीताख्यमाह्वेयं मलयाख्यं च चन्दनम् ॥
सूक्ष्मैला बहुलाख्या च चन्द्रैला द्राविडी त्रुटिः ।
श्रीपुष्पं देवपुष्पं च लघुपुष्पं लवङ्गकम् ॥
कोलं कोलककक्कोले फलं जातीफलं विदुः ।
कोशं कटुफलं जातिं मालतीं जातिपत्रिकाम् ॥

---

संस्तरचितमेकस्यां स्थाल्यां क्षारादेर्व्याघ्रास्तं क्रमेणास्तृतम् । लवणोपधानं सैन्धवलवणेन विहितं कार्य्यमिति शेषः । ततः स्थालीं शरावकेण पिधाय मृत्कर्पटमयीं मुद्रां दत्त्वा दग्ध्वा ततो विचूर्ण्य तच्चूर्णं दधिमस्तुयुतं दधिजलेन संयुक्तं पाययेत् गुल्मोदरश्वयथुपाण्डुगदोद्भवेष्विति । गुल्मोदर=वायुगोला । श्वयथु=सूजन । पाण्डु=पिंडरोग, देह पीला हो जाना । अयं श्लोकश्च भेडसंहितायाः-इति श्रूयते ।

फलं पत्रं तमालं च गन्धपत्रं च नेत्रकम् ।
भृङ्गाख्यं नेत्रराजं च वराङ्गं त्वक् तनुत्वचम् ॥
गणकाख्यं काञ्चनाख्यं केसरं नागकेसरम् ।
रसं गन्धरसं पिण्डरसं बोलं चलं विदुः ॥
पूतिकोशो विडालाख्यश्चेलिस्तज्जातकाभिधः ।
लता लतानाभिनाम्नी रेणुः कुन्ती हरेणुका ॥
मेघाख्यं मुस्तमिच्छन्ति चक्राख्यं तगरं नतम् ।
करजाख्यं नखं शङ्खं तथा नखपदं स्मृतम् ॥
ज्वरघ्नयोत्पलाख्यं च वाप्यं कुष्ठं गदोऽथ रुक् ।
मांसीं केशीं पिशाचीं च नलदं कमलं जटाम् ॥
श्यामा प्रियाख्या श्रीसञ्ज्ञा प्रियङ्गुः फलिनी स्मृता ।
ग्रन्थिपर्णी ग्रन्थिपर्णं शुकं स्थौणेयकं विदुः ॥
ह्रीबेरं वारिसञ्ज्ञं च ह्रीबारं बालकं स्मृतम् ॥
रणं सेव्यं मृणालाख्यमुशीरमिह कथ्यते ।
रामोमृणालो रामञ्जो व्यामकं दवदग्धकम् ॥
प्रवालं विद्रुमाख्यं च नल्ली स्यान्नलिका नली ।
स्पृक्काऽसृग्ब्राह्मणी माला देवी च परिभाष्यते ॥
चक्राङ्गी कटुकी गन्धा जटिलोग्रा जया वचा ।
कचुं कर्चूरमुग्रं च गन्धमूलं च कीर्त्यते ॥
पुष्पा समन्तपुष्पा च शतपुष्पा शता मषिः ।
कुसुमालो भवेच्चण्डः स्तेनश्चोरोऽथ तस्करः ॥
आकृष्टं केशपलितं जरा स्थविरसञ्ज्ञितम् ।
गिर्याख्यं गिरिजाख्यं च शैलेयं समुदाहृतम् ॥
दार्वी दारु निशाख्या च कालेयं पीतचन्दनम् ।
पीता हरिद्रा नक्ताख्या दारु तद्वदारु यत् ॥
रक्ता समङ्गा मञ्जिष्ठा मधुकं मधुयष्टिका ।
धान्याकं धान्यकं धानीयकं कुस्तुम्बुरु स्मृतम् ॥

मरु मरुबकं मूर्वा फणिज्जं सानवं तथा ।
सर्जो सर्जरसासञ्ज्ञा राला चेह निगद्यते ॥
पुरं गुग्गुलु भद्रं च भद्राख्यं महिषाक्षकम् ।
रोहिषं पेशलं प्राहुः पर्यासं च कुठेरकम् ॥
क्षीरदध्याज्यसञ्ज्ञश्च श्रीवासः श्रीश्च वासकः ।
जतु लाक्षा कृमिस्तज्ज्ञा धात्रीमामलकं विदुः ॥
हरीतक्यभया पथ्या विजया प्राणदाऽपि च ।
कलिर्बिभीतक चाक्षं त्रिफलं स्यादिदं त्रिकम् ॥
शुण्ठीमरीचपिप्पल्यस्त्र्यूषणं सर्वसंयुता ।
त्रिफला सत्रिजाता च त्रिवर्गं त्रितयं स्मृतम् ॥
त्वक् पत्रला त्रिजातं स्याच्च तुर्जातं सकेसरम् ।
त्रिफला स्यात् तु कक्कोलकटुजातिफलैस्त्रिभिः ॥
घृतेन्दुकुङ्कुमैः पञ्चसुगन्धिः कोलपुष्पवृत् ।
कोलोज्झितः सदर्पश्च देवराजः सदैव हि ॥
कर्पूरं कुङ्कुमं दर्पं त्रितयं स्यात् त्रिगन्धिकम् ।
लवङ्गफलकक्कोलकटुकर्पूरकुङ्कुमैः ॥
त्वग्लताजातिचूतोत्थरसैर्दशसुगन्धिकः ।
तीक्ष्णं मरीचमिच्छन्ति चित्रकं वह्निसंज्ञकम् ॥
रोचना रुचिरा ज्ञेया शर्करा सिकता सिता ।
पुष्पासवः पुष्परसः सारघं मधु माक्षिकम् ॥
क्षौद्रं भ्रामरमित्याहुस्तन्मलं सिक्थकं विदुः ।
मदनं च मधूच्छिष्टं मधुसारं च पण्डिताः ॥
द्राक्षा फलोत्तमा बिल्वः श्रीफलः शीतरुस्तथा ।
लुङ्गं च मातुलुङ्गं च केशरी बीजपूरकम् ॥
शोभाञ्जनं सुभाञ्जं च शिग्रुवत्फलपल्लवाः ।
अजो बस्तो जरश्छागो मूत्रं स्रावस्तदम्बु वा ॥
त्वक्सहा सुरभिर्वज्री सुरभिश्च महातरुः ।
स्वर्णक्षीरी स्वर्णलता ज्योतिष्मत्यभिधीयते ॥

सुवीरं काचिकं वीरं तालुमालं च तालुकम् ।
सौभाग्यं टङ्कणं टङ्कं बाकुची मालतीभवम् ॥
निःसारं राचसं पट्टं कच्छं कतकजं फलम् ।
आमश्चूतश्च कामाङ्कः सहकारः स्मरप्रियः ॥
अचरं कोकिलावश्च निघण्टुष्वेदाहृतः ।

तत्रादावेव प्रयोजनप्रदर्शनार्थमाह ।

**स्रग्गन्धधूपाम्बरभूषणाद्यं न शोभते शुक्लशिरोरुहस्य ।**
**यस्मादतो मूर्धजरागसेवां कुर्याद्यथैवाञ्जनभूषणानाम् ॥१॥**

शुक्लशिरोरुहस्य श्वेतकचस्य स्रङ्माला । गन्धाः सुगन्धद्रव्याणि । धूपः सुगन्धधूपः । अम्बरं वस्त्रम् । भूषणमलङ्करणम् । आदिग्रहणादनुधूपनमिति । एवमादिकं सर्वं न शोभते यस्मादतोऽस्माद्धेतोर्मूर्धजानां केशानां रागे रञ्जने सेवां यत्नं कुर्यात् । यथैव येन प्रकारेणाञ्जने नेत्रयोर्भूषणानामलङ्करणादीनां सेवा क्रियते प्रत्यहं प्रयत्नतः संक्रियते तथैव मूर्धजरागसेवां कुर्यादिति ॥ १ ॥

अथ केशरञ्जनप्रयोगमाह ।

**लोहे पात्रे तण्डुलान् कोद्रवाणां**
**शुक्ले पक्वाँल्लोहचूर्णेन साकम् ।**
**पिष्टान् सूक्ष्मं मूर्ध्नि शुक्लाम्लकेशे**
**दत्त्वा तिष्ठेद्वेष्टयित्वार्द्रपत्रैः ॥ २ ॥**
**याते द्वितीये प्रहरे विहाय**
**दद्याच्छिरस्यामलकप्रलेपम् ।**
**सञ्छाद्य पत्रैः प्रहरद्वयेन**
**प्रक्षालितं कार्ष्ण्यमुपैति शीर्षम् ॥ ३ ॥**

लोहे पात्र इति । कोद्रवाः प्रसिद्धाः । कोद्रवाणां तण्डुलान् लोहपात्रे आयसभाजने शुक्लेऽम्ले काञ्जिकादौ पक्वान् स्विन्नान् ततो लोहचूर्णेनायश्चूर्णेन साकं सह पिष्टान् अतिसूक्ष्मचूर्णीकृतान् मूर्ध्नि शिरसि शुक्लाम्लकेशे

शुक्तेनाम्लेन काञ्जिकादिनाम्लीकृताः केशा यस्मिंस्तथाविधे मूर्धनि तैलेपं कृत्वा तत आर्द्रपत्रैः सरसैर्वेष्टयित्वाऽऽच्छाद्य तिष्ठेत् प्रहरद्वयं यावत् ॥ २॥

याते द्वितीय इति । ततो द्वितीये प्रहरे यातेऽतिक्रान्ते तल्लेपं विहाय त्यक्त्वा ततः शिरसि मूर्ध्नि आमलकैः प्रलेपं दद्यात्। पत्रैश्च सरसैः सञ्छाद्य तिष्ठेदन्येन प्रहरद्वयेन तल्लेपं त्यक्त्वा शीर्षं प्रक्षालयेत् । प्रक्षालितं कार्ष्ण्यं कृष्णत्वमुपैति गच्छति ॥ ३ ॥

ततः किं कुर्यादित्याह ।

**पश्चाच्छिरःस्नानसुगन्धतैलै-**
**र्लोहाम्लगन्धं शिरसोऽपनीय ।**
**हृद्यैश्च गन्धैर्विविधैश्च धूपै-**
**रन्तःपुरे राज्यसुखं निषेवेत् ॥ ४ ॥**

पश्चादनन्तरं शिरःस्नानैः सुगन्धैश्च तैलैर्लोहगन्धमम्लगन्धं च शिरसो मूर्ध्नोऽपनीयापास्य ततो हृद्यैश्च गन्धैर्हृदयस्य प्रियं हृद्यं चित्ताह्लादकम् । हृद्यैर्गन्धैः सुगन्धद्रव्यैस्तुष्टजननैर्विविधैश्च धूपैः सहान्तःपुरे राज्यस्य सुखं निषेवेत् स्वमहिषीभिः क्रीडां कुर्यादित्यर्थः ॥ ४ ॥

अथ द्रव्याणां सर्वेषां प्रायः काञ्जिकेन क्षालनं निर्मलेन केषांचिज्जलेन केषांचिद्गोमूत्रेण नखतिलतैलेनायसभाण्डे पचेत् मृद्वग्निना पाकवेधगन्धधूपनानि लोकतो ज्ञेयानि । आचार्येण नोक्तानि । अस्माभिर्ग्रन्थविस्तरभयान्न प्रदर्शितानि । यतः सकलसंहितास्माभिर्व्याख्यातुमारब्धा केवलमक्षराणां व्याख्या क्रियते न चास्माकमत्र तथाविधं प्रावीण्यम् । अतस्तज्ज्ञैर्लोकव्यवहारः कार्यप्रयोगनिचय इति ॥ ४ ॥

तत्रादावेव शिरःस्नानमाह ।

**त्वक्कुष्ठरेणुनलिकास्पृक्कारसतगरवालकैस्तुल्यैः ।**
**केसरपत्रविमिश्रैर्नरपतियोग्यं शिरःस्नानम् ॥ ५ ॥**

त्वक् प्रसिद्धा । कुष्ठः प्रसिद्ध एव । रेणुर्हरेणुका । नलिका प्रवालवल्ली । स्पृक्का प्रसिद्धा लता । रसो बोलः । तगरः प्रसिद्धः । वालकं

ह्रीबेरम् । एतैस्तुल्यैः समभागैः किंभूतैः केसरपत्त्रविमिश्रैः । केसरं नागकेसरम् । पत्त्रं गन्धपत्त्रं त्वगादिभिः केसरपत्त्रैर्विमिश्रितैः शिरःस्नानं नरपतियोग्यं राजोपयोग्यं भवति ॥ ५ ॥

अथ सुगन्धतैलमाह ।

**मञ्जिष्ठया व्याघ्रनखेन शुक्त्या**
**त्वचा सकुष्ठेन रसेन चूर्णः ।**
**तैलेन युक्तोऽर्कमयूखतप्तः**
**करोति तच्चम्पकगन्धि तैलम् ॥ ६ ॥**

मञ्जिष्ठा प्रसिद्धा । तथा व्याघ्रनखेन । व्याघ्रनखः समुद्रफेनः । तेन । तथा शुक्त्या नखेन । नखं शङ्खोद्भवं चर्म । त्वक् प्रसिद्धा । तया त्वचा । तथा सकुष्ठेन रसेन । कुष्ठं प्रसिद्धम् । रसो बोलः । कुष्ठसहितेन रसेन बोलेन सह चूर्णः कार्यः । सर्वैरेतैर्यथोक्तैः समभागकैः स चूर्णः कार्यः । तैलेन तिलतैलेन युक्तः । अर्कमयूखतप्तः । अर्कमयूखै रविकिरणैः सन्तप्तोऽतीवतापितः । तत् तैलं चम्पकगन्धि चम्पकपुष्पसमसुरभिं सुगन्धिं करोति ॥ ६ ॥

अथ गन्धचतुष्टयमाह ।

**तुल्यैः पत्त्रतुरुष्कवालतगरैर्गन्धः स्मरोद्दीपनः**
**सव्यामो बकुलोऽयमेव कटुकाहिङ्गुप्रधूपान्वितः ।**
**कुष्ठेनोत्पलगन्धिकः समलयः पूर्वो भवेच्चम्पको**
**जातीत्वक्सहितोऽतिमुक्तक इति ज्ञेयः सकुस्तुम्बुरुः ॥७॥**

पत्त्रं गन्धपत्त्रम् । तुरुष्कं सिह्लकम् । वालं वालकम् । तगरः प्रसिद्धः । एतैस्तुल्यैः समभागैः स्मरोद्दीपनः कामोद्दीपनो गन्धो भवति । सव्याम इति । अयमेव पूर्वोक्तो गन्धः । सव्यामो व्यामकेन दवदग्धकेन सहितः । तथा कटुकाहिङ्गुप्रदीपान्वितः । कटुका प्रसिद्धा । हिङ्गुर्हिङ्गुलुकः । गुग्गुलुक इति प्रसिद्धः । आभ्यां धूपान्वितः । धूपितः । बकुलो बकुलपुष्पगन्धो भवति । कुष्ठेनोत्पलगन्धिक इति । स एव पूर्वोक्तः कुष्ठेन सहित उत्पलगन्धिकः । उत्पलसमगन्धो भवति । समलयः पूर्वो भवेच्चम्पक इति । स एव पूर्वोक्तः समलयः । मलयेन सहितश्चम्पकपुष्पाणां समगन्धिको

भवति । जातीत्वक्स्वहित इति । स एव पूर्वोक्तो जातीत्वक्स्वहितः । जाती-शब्देन जातीफलमुच्यते । त्वक् प्रसिद्धा । आभ्यां सहितो युक्तः सकुस्तु-म्बुरुः कुस्तुम्बुरुसहितः । अतिमुक्तकोऽतिमुक्तकसदृशगन्धो भवेत् ॥ ७ ॥

अन्यदप्याह ।

**शतपुष्पाकुन्दुरुकौ पादेनार्धेन नखतुरुष्कौ च ।**
**मलयप्रियङ्गुभागौ गन्धो धूप्यो गुडनखेन ॥ ८ ॥**

शतपुष्पा प्रसिद्धा । कुन्दुरुकः प्रसिद्ध एव दारुनिर्यासः । एतौ द्वौ पादेन चतुर्भागेण देयौ । अर्धेन नखतुरुष्कौ च । नखं शङ्खोद्भवं चर्म । तुरुष्कं सिह्लकम् । एतौ द्वावर्धेन देयौ । मलयप्रियङ्गुभागाविति । मलयं चन्दनम् । प्रियङ्गुर्गन्धप्रियङ्गुः । अनयोर्द्वौ भागौ । द्वयोरेव चतुर्थभागो देयः । गन्धो धूप्यो गुडनखेन । एष गन्धो गुडेन नखेन च धूप्यो धूपयितव्यः । यत्र यत्र गन्धो धूप्यते तत्र तत्रादावेव हरीतक्या धूप्यः पश्चादुक्तद्रव्येणे-त्यागमविदः प्राहुः ॥ ८ ॥

अधुना धूपमाह ।

**गुंगुलुबालकलाक्षामुस्तानखशर्कराः क्रमाद्धूपः ।**
**अन्यो मांसीबालकतुरुष्कनखचन्दनैः पिण्डः ॥ ९ ॥**

गुग्गुलुः प्रसिद्धः । बालकः प्रसिद्ध एव । लाक्षा प्रसिद्धा । मुस्ता प्रसि-द्धैव । नखं शङ्खोद्भवं चर्म प्रसिद्धमेव । शर्करा प्रसिद्धा । एते क्रमात् समभाग-योजिता धूपो भवति । अन्य इति । मांसी प्रसिद्धा । बालकं प्रसिद्धम् । तुरुष्कं सिह्लकम् । नखचन्दनं च प्रसिद्धमेव । एतैः समभागैरन्यो द्वितीयः पिण्डः पिण्डधूपो भवति ॥ ९ ॥

अन्यदप्याह ।

**हरीतकीशङ्खघनद्रवाम्बुभि-**
**र्गुडोत्पलैः शैलकमुस्तकान्वितैः ।**
**नवान्तपादादिविवर्धितैः क्रमाद्-**
**भवन्ति धूपा बहवो मनोहराः ॥ १० ॥**

हरीतकी पथ्या। शङ्खो नखम्। घनं प्रसिद्धम्। द्रवो रसो बोल इत्यर्थः। अम्बु बालकम्। एतैः। तथा गुडोत्पलैः शैलकमुस्तकान्वितैः। गुडः प्रसिद्ध इक्षुविकारः। उत्पलं कुष्ठम्। शैलकं शैलेयम्। मुस्तकं मुस्तः। एतैरन्वितैर्युक्तैर्नवान्तपादादिविवर्धितैः क्रमात्। नवान्ताश्च ते पादादिविवर्धिताश्च पादश्चादौ पादश्चान्ते विवर्धिता येषाम्। तद्यथा। हरीतक्या एको भागः। शङ्खस्य द्वौ। घनस्य तृतीयः। अनेन क्रमेण यावत्। मुस्तस्य नव भागाः। एवं हरीतकीशङ्खघनद्रवाम्बुभिः पादविवर्धितैरेकः। गुडोत्पलैः सह द्वितीयः। एतैरेव शैलकमुस्तकान्वितैस्तृतीयः। अथवा हरीतक्या एको भागः। शङ्खस्य द्वावित्येको धूपः। तथैव घनस्य भागत्रयं दीयते तदा द्वितीयो धूपः। एवं प्रत्येकस्य द्रव्यस्य भागपरिवृद्ध्याऽष्टौ धूपा मनोहरा भवन्ति ॥ १० ॥

अन्यं धूपमाह।

भागैश्चतुर्भिः सितशैलमुस्ताः
श्रीसर्जभागौ नखगुग्गुलू च।
कर्पूरबोधो मधुपिण्डितोऽयं
कोपच्छदो नाम नरेन्द्रधूपः ॥ ११ ॥

सिता शर्करा। शैलेयं शैलेयकम्। मुस्तः प्रसिद्धः। एते चतुर्भिर्भागैर्दातव्याः। श्रीः श्रीवासकः। सर्जः सर्जरसः। अनयोर्द्वौ भागौ देयौ। नखं प्रसिद्धम्। गुग्गुलुः प्रसिद्ध एव। नखगुग्गुलू भागद्वयेनैव दातव्यौ। कर्पूरेण चास्य बोधः कार्यः। मधुपिण्डितो माक्षिकेण पिण्डीकृतः। अयं नरेन्द्रधूपो राजधूपः। कोपच्छदो नाम कोपच्छद इत्यस्य सञ्ज्ञा ॥ ११ ॥

आर्द्रं आर्द्रो यो दीयते स बेधः। चूर्णोऽते चूर्णो दीयते स बोधः।

उक्तमीश्वरेण स्वस्यां गन्धयुक्तौ।

[1]ओल्लंमि ओल्लओ जो दिज्जइ वेह इति सो भणिओ।
बोहो उण जो चुण्णो चुण्णविणि अच्छगन्धो सो ॥

1 आर्द्रं आर्द्रो यो दीयते बेध इति स भणितः। बोधः पुनर्यश्चूर्णश्चूर्णिते अच्छगन्धः सः ॥ २ ॥

अथ पुटवासमाह ।

**त्वगुशीरपत्रभागैः सूक्ष्मैलार्धेन संयुतैश्चूर्णः ।**
**पुट[1]वासः प्रवरोऽयं मृगकर्पूरप्रबोधेन ॥ १२ ॥**

त्वक् त्वचम् । उशीरं प्रसिद्धम् । पत्रं गन्धपत्रम् । एषां भागत्रयम् । एतैः सूक्ष्मेलार्धेन संयुतैः । सूक्ष्मेला प्रसिद्धैव । पूर्वोक्ताद्भागत्रयादर्धेन सूक्ष्मेला देयेत्यर्थः । अयं चूर्णो मृगकर्पूरप्रबोधेन । मृगः कस्तूरिका । कर्पूरं प्रसिद्धम् । अनयोः प्रबोधेन प्रवरः श्रेष्ठः पुटवासोऽङ्गोद्धूलनं भवति । केचित्पटवास इति पठन्ति । पटवासः कर्पटानुवासनम् ॥ १२ ॥

अथ गन्धार्णवमाह ।

**घनबालकशैलेयककर्पूरोशीरनागपुष्पाणि ।**
**व्याघ्रनखस्पृक्कागुरुदमनकनखतगरधान्यानि ॥ १३ ॥**
**कर्पूरचोलमलयैः स्वेच्छापरिवर्त्तितैश्चतुर्भिरतः ।**
**एकद्वित्रिचतुर्भिर्भागैर्गन्धार्णवो भवति ॥ १४ ॥**

घनं प्रसिद्धम् । बालकं प्रसिद्धमेव । शैलेयककर्पूरोशीराणि एतानि सुप्रसिद्धानि । नागपुष्पं नागकेसरम् । व्याघ्रनखः समुद्रफेनः । स्पृक्का लता । अगुरुः प्रसिद्धः । मदनकः प्रसिद्धः । तगरं प्रसिद्धम् । धान्यं धान्यकाफलम् । एतानि । कर्पूरः प्रसिद्धः । चोलश्चोरकः प्रसिद्धः । मलयं चन्दनम् । एवं षोडश सुगन्धद्रव्याणि । अतोऽस्माद्द्रव्यगणादेतैरेव घनादिभिश्चतुर्भिः स्वेच्छापरिवर्तितैरात्मीयेच्छापरिभ्रामितैर्विपर्यस्तीकृतैः । कथम् । एकद्वित्रिचतुर्भागैः । गन्धार्णवो गन्धसमुद्रो भवति । अत्र षोडश कोष्ठकाः कार्याः । तिर्यक्चत्वारोऽधोऽधश्चत्वारः । तत्राद्यकोष्ठकात्प्रभृति यथा पाठक्रमेण घनादीनि विन्यस्यानि । तद्यथा । प्रथमपङ्क्तौ घनादीनि च । द्वितीयायां च उशीरादीनि । तृतीयायामगुर्वादीनि । चतुर्थ्यां धान्यकादीनि । यदुक्तम् । स्वेच्छापरिवर्तितैश्चतुर्भिरतः । एकद्वित्रिचतुर्भागैर्गन्धार्णवो भवति । तत्र भेदाः प्रदर्श्यन्ते । यथा क्रमेण सर्वेषां प्रत्येकस्य षड्भेदाः सम्भवन्ति । चतुष्कस्य चतुर्विंशतिरिति । तद्यथा । घनस्यैकोभागः । बालकस्य द्वौ भागौ ।

[1] पटवासः-इति पाठान्तरम् ।

शैलेयकस्य त्रयो भागाः । कर्पूरस्य चत्वारो भागाः । एको गन्धो भवति । घनस्यैकोभागः । बालकस्य द्वौ । शैलेयकस्य चत्वारः कर्पूरस्य त्रयः । द्वितीयो गन्धो भवति । घनस्यैकोभागः । बालकस्य त्रयः । शैलेयस्य द्वौ । कर्पूरस्य चत्वारः । तृतीयो गन्धो भवति । घनस्यैको भागः । बालकस्य त्रयः । शैलेयस्य चत्वारः । कर्पूरस्य द्वौ । चतुर्थो गन्धः । घनस्यैको भागः । बालकस्य चत्वारः । शैलेयकस्य द्वौ । कर्पूरकस्य त्रयः ।

| | | | |
|---|---|---|---|
| घ | बा | शै | क |
| उ | ना | ज्या | स्यु |
| ष | म | न | त |
| धा | क | चो | म |

पञ्चमो गन्धो भवति । घनस्यैको भागः । बालकस्य चत्वारः । शैलेयकस्य त्रयः । कर्पूरकस्य द्वौ । षष्ठो गन्धो भवति । एवमेकैकस्य द्रव्यस्य षड्गन्धा उत्पद्यन्ते । चतुष्कस्य चतुर्विंशतिः । षोडशकस्य षण्णवतिः ॥ १४ ॥

अत्रैव विशेषमाह ।

**अत्युल्बणगन्धत्वादेकांशो नित्यमेव धान्यानाम् ।**
**कर्पूरस्य तदूनो नैतौ द्वित्र्यादिभिर्देयौ ॥ १५ ॥**

अत्र धान्यानां धान्यकाफलानामत्युल्बणगन्धत्वादुत्कटत्वान्नित्यं सर्वकालमेकांश एको भागो दातव्यः । कर्पूरस्योल्बणगन्धत्वात्तदूनः तस्माद्भागादप्यूनो दातव्यः । एतौ द्वौ द्वित्र्यादिभिर्भागैः प्राप्तावपि न देयौ न दातव्यौ । यतस्तदुत्कटत्वादन्यद्रव्याणां गन्धहानिर्भवति ॥ १५ ॥

अथैतेषां धूपानां बोधनं चाह ।

**श्रीसर्जगुडनखैस्ते धूपयितव्याः क्रमान्न पिण्डस्थैः ।**
**बोधः कस्तूरिकया देयः कर्पूरसंयुतया ॥ १६ ॥**

श्रीः श्रीवासकः । सर्जः सर्जरसः । गुडनखे प्रसिद्धे । एतैः क्रमात्त सर्व एव गन्धा धूपयितव्याः । न पिण्डस्थैर्न मिश्रीकृतैः । एतदुक्तं भवति । प्रथमतः सर्व एव श्रीवासकेन धूपयितव्याः । तथाभूताः । पुनः सर्जरसेन । ततः सर्वं पुनरपि गुडेन । ततः सर्वं नखेन धूपयितव्याः । ततः सर्वेषां कस्तूरिकया कर्पूरसंयुतया बोधः कार्यः । एवं कृते शोभनास्ते गन्धा भवन्ति ॥ १६ ॥

अथाच सर्वगन्धानां व्यापकत्वेन प्रदर्शनार्थमाह ।

**अत्र सहस्रचतुष्टयमन्यानि च सप्ततिसहस्राणि ।**
**लक्षं शतानि सप्त विंशतियुक्तानि गन्धानाम् ॥ १७ ॥**

अथास्मिन् द्रव्यगणे गन्धानां सहस्रचतुष्टयमन्यानि च सप्ततिसहस्राणि लक्षमेकं सप्तशतानि विंशत्यधिकानि गन्धानामन्तर्भवतीत्यर्थः ॥ १७ ॥

अथैकैकं बहुगन्धकरं भवतीत्याह ।

**एकैकमेकभागं द्वित्रिचतुर्भागिकैर्युतं द्रव्यैः ।**
**बहुगन्धकरं तद्वद्द्वित्रिचतुर्भागिकं कुरुते ॥ १८ ॥**

एकैकं द्रव्यं यत्तु एकभागिकं तदपि द्वित्रिचतुर्भागिकैर्द्रव्यैर्युतं संयुक्तं बहुगन्धकरं बहुगन्धान् करोति । तद्वत्तेनैव प्रकारेण । द्वित्रिचतुर्भागिकं कुरुते । यानि द्रव्याण्यन्यान्येकभागिकेऽन्यस्मिन् द्वित्रिचतुर्भागिकानि दत्तानि तान्यपि तेन सह प्राग्वद्भागपरिकल्पनया बहुगन्धकराणि भवन्ति । एवं प्रत्येकं द्रव्यमेकभागिकमन्यैर्द्वित्रिचतुर्भागिकैर्युक्तं बहुगन्धकरं भवति ॥ १८ ॥

अथ सर्वेषां सङ्ख्याख्यानमाह ।

**द्रव्यचतुष्टययोगाद्गन्धचतुर्विंशतिर्यथैकस्य ।**
**एवं शेषाणामपि षण्णवतिः सर्वपिण्डोऽत्र ॥ १९ ॥**

यथा येन प्रकारेणैकैकस्य द्रव्यस्य द्रव्यचतुष्टययोगाद्गन्धचतुर्विंशतिर्भवति । एकैकः खल्वेकभागिके द्रव्ये द्वित्रिचतुर्भागिकानि द्रव्याणि त्रीण्यन्यानि जायन्ते । एवं चत्वारि विमिश्रितानि च सम्पद्यन्ते । तानि षट् पतन्ति । अतः प्रत्येकं बहुगन्धकरम् । एवं षट्चतुष्काश्चतुर्विंशतिर्भवन्ति । तस्मादेकैकस्यैव गन्धः । चतुर्विंशतिर्यस्मात् स एव चतुर्विंशतिवारान् पतति प्रत्येकस्मिंश्चतुर्विंशतिर्गन्धा भवन्ति । अत उक्तं द्रव्यचतुष्टययोगाद्गन्धचतुर्विंशतिर्यथैकस्येति । एवं शेषाणां त्रयाणामपि चतुष्काणां द्विसप्ततिर्गन्धा भवन्ति । सर्वपिण्डाः षण्णवतिरस्मिन् गन्धप्रकरणे भवंति ॥ १९ ॥

अधुना चतुर्विकल्पेन भिद्यमानानां सङ्ख्याख्यानमाह ।

**षोडशके द्रव्यगणे चतुर्विकल्पेन भिद्यमानानाम् ।**
**अष्टादश जायन्ते शतानि सहितानि विंशत्या ॥ २० ॥**

अस्मिन् द्रव्यगणे षोडशके षोडशसङ्ख्ये चतुर्विकल्पेन चतुर्भिश्चतुर्भिर्द्रव्यैरेकैको गन्ध इत्यनेन क्रमेण भिद्यमानानामष्टादश शतानि विंशत्यधिकानि गन्धानां जायन्ते उत्पद्यन्ते । एतत्पुरस्तादाचार्य एव प्रदर्शयिष्यति ॥ २० ॥

अथ सर्वगन्धानां सङ्ख्याप्रमाणज्ञानमाह ।

**षण्णवतिभेदभिन्नश्चतुर्विकल्पो गणो यतस्तस्मात् ।**
**षण्णवतिगुणः कार्यः सा सङ्ख्या भवति गन्धानाम् ॥ २१ ॥**

अयमपि चतुर्विकल्पो यतो यस्मात्षण्णवतिभेदभिन्नो निरन्तरत्वेन तस्मादष्टादश शतानि विंशत्यधिकानि १८२० । यो गणः समूहः षण्णवतिगुणः कार्यः सा सङ्ख्या सर्वगन्धानां भवति । लक्षमेकं चतुःसप्ततिसहस्राणि सप्तशतानि विंशत्यधिकानीत्यर्थः १७४७२० । एतद्गौणवृत्त्या न मुख्यया । मुख्यवृत्त्या चित्वारिंशत्सहस्राणि षट्शतान्यशीत्यधिकानि[1] ४३६८० । भवन्ति । यतश्चतुर्विकल्पो गणश्चतुर्विंशतिभेदभिन्न इति ॥ २१ ॥

अथैतेषां भेदप्रदर्शनार्थं सङ्ख्यानयनार्थं लोष्टकप्रस्तारमाह

**पूर्वेण पूर्वेण गतेन युक्तं**
**स्थानं विनान्त्यं प्रवदन्ति सङ्ख्याम् ।**
**इच्छाविकल्पैः क्रमशोऽभिनीय**
**नीते निवृत्तिः पुनरन्यनीतिः ॥ २२ ॥**

एकाद्यानङ्कान् षोडशान्तानुपर्युपरि संस्थाप्योपरितनमङ्कं प्रत्येकेन पूर्वेण पूर्वेणाङ्कगतेनाङ्केन युक्तं कार्यम् । य एव पूर्वः स गतः । यथैकस्योपरि द्वौ स्थितौ तत्र द्वयोरपेक्षया एकः पूर्वो गतश्च तेन पूर्वेण पूर्वेण गतेनोपरितनमङ्कं युक्तं कार्यं तेनापि तदुपरितनं यावत्पञ्चदशं स्थानं यत उक्तम् । स्थानं विनान्त्यं प्रवदन्ति सङ्ख्यामिति । अन्त्यं स्थानं विना ऽन्त्यं वर्जयित्वा सङ्ख्यां प्रवदन्ति कथयन्ति । ततो भूयोऽधःप्रभृति पुनः पूर्वेण गतेन युक्तं कार्यम् । यावच्चतुर्दशं स्थानम् । ततोऽपि पुनरधः प्रभृति

१ अष्टादशशतानि विंशत्यधिकानि चतुर्विंशत्या गुणानि चित्वारिंशत्सहस्राणि षट्शतान्यशीत्यधिकानि जायन्ते ।

पूर्वेण गतेन युक्तं कार्यम् । यावत्त्रयोदशं स्थानम् । एवं तत्राष्टादशशतानि विंशत्यधिकानि भवन्ति । उदाहरणार्थमेकादीनां षोडशान्तानां न्यासः ।

| | | | |
|---|---|---|---|
| १६ | | | |
| १५ | १२० | | |
| १४ | १०५ | ५६० | |
| १३ | ९१ | ४५५ | १८२० |
| १२ | ७८ | ३६४ | १३६५ |
| ११ | ६६ | २८६ | १००१ |
| १० | ५५ | २२० | ७१५ |
| ९ | ४५ | १६५ | ४९५ |
| ८ | ३६ | १२० | ३३० |
| ७ | २८ | ८४ | २१० |
| ६ | २१ | ५६ | १२६ |
| ५ | १५ | ३५ | ७० |
| ४ | १० | २० | ३५ |
| ३ | ६ | १० | १५ |
| २ | ३ | ४ | ५ |
| १ | १ | १ | १ |

अत्र पूर्वेण पूर्वेण गतेनाङ्केनैकादिनोत्तरमङ्कं द्वितीयादिक्रमुपरिस्थितं युक्तं कार्यम् । तेनानुप्रविष्टेनान्त्यं विनोपरि [1]प्रथमे स्थाने षोडश जाताः । द्वितीये विंशत्यधिकं शतम् । तृतीये स्थाने पञ्चशतानि षष्ट्यधिकानि । चतुर्थे चाष्टादशशतानि विंशत्यधिकानि जातानि । एवं चतुर्विकल्पानां सङ्ख्या जाता ॥

अथैतेषां लोष्टकप्रस्तारार्थमाह ।

इच्छाविकल्पैः क्रमशोऽभिनीय नीते निवृत्तिः पुनरन्यनीतिः । तत्र तावद्घनादीनां द्रव्याणां षोडशानां नामाद्याक्षराणि लिखेत् । तत्राद्यानि त्रीणि स्थिरलोष्टचिह्नितानि कृत्वा चतुर्थे चरलोष्टं चिह्नितं कृत्वा तदपि क्रमेणान्यस्मिन् द्रव्ये नीत्वा तस्मिन्निवृत्तिः । पञ्चमे प्रत्यानयनम् । एवमनेन क्रमेण सर्वेषां कार्यम् । यत उक्तमिच्छाविकल्पैरिति । अभीष्टविकल्पैश्चरलोष्टं क्रमशः क्रमेणाभिनीय अन्यत्र सङ्ख्यायै नीते निवृत्तिः कार्या । पुनरन्यनीतिः । अन्यस्मिन् स्थाने चरलोष्टके ऽन्त्यवर्णं प्राप्तस्थिरलोष्टकमन्यत्स्थानान्तरं नयेत् । तत्र तं स्थिरं कृत्वा तदग्रतः स्थितेन चरलोष्टकेन सह स्थानान्तरं नीयमानेन भेदाः प्रदर्श्याः । ततः पुनरपि स्थानान्तरस्थं चरलोष्टकमन्यत्स्थानान्तरं नीत्वा तत्र तं स्थिरं विनिधाय तदग्रतः स्थितेन चरलोष्टकेन स्थानान्तरनीयमानेन भेदाः प्रदर्श्याः । एवमन्त्ये स्थिरलोष्टके उपान्तप्राप्ते ऽन्यत्स्थिरलोष्टकं स्थानान्तरं नयेत् । तत उपान्त्यान्त्यौ तदग्रस्थितौ कृत्वान्त्ये सङ्ख्यायैमाणे भेदाः प्राग्वत्प्रदर्श्याः । यावत्ते सर्वे एवोपान्त्यपूर्वे उपान्त्योऽन्त्यश्चान्त्यगताः स्युः । ततः पुनरन्यं स्थिरलोष्टकं स्थानान्तरं नयेत् तदग्रस्थितैरन्यैः प्राग्वद्भेदाः प्रदर्श्याः । एवं सर्वेषां क्रमेण कार्यम् । यावत्सर्वे एवान्त्यस्थानमाश्रिता भवन्ति । तद्यथा । आद्यं चिकं

| | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| [1] | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ |
| | १६ | १५ | १४ | १३ | १२ | ११ | १० | ९ | ८ | ७ | ६ | ५ | ४ | ३ | २ | १ |
| | | | | | | | | | | | | | १८२० | ५६० | १०५ | १६ |

एवमत्र एकाद्येकोत्तरा अङ्का इति भास्करीयलीलावतीसूत्रानुसारेण एकद्विन्यादिभेदा उत्पद्यन्ते ।

स्थिरलोष्टचिह्नितं कृत्वा चतुर्थे सञ्चार्यमाणे त्रयोदश उत्पद्यन्ते । ततस्तृतीयेन लोष्टकेन चतुर्थेद्रव्यं नीते चतुर्थे लोष्टके सञ्चार्यमाणे द्वादश उत्पद्यन्ते। ततस्तृतीये पञ्चमस्थानं नीते चतुर्थे लोष्टके सञ्चार्यमाणे एकादश उत्पद्यन्ते। ततस्तृतीये षष्ठं स्थाने नीते दश । एवं सप्तमे नव । अष्टमेऽष्टौ । एवं नवमे सप्त । दशमे षट् । एकादशे पञ्च । द्वादशे चत्वारः । त्रयोदशे त्रयः । चतुर्दशे द्वौ । पञ्चदशे एकः । एवमेकनवतिः ९१ । ततः प्रथमद्वितीयचतुर्थस्थानानि स्थिरलोष्टचिह्नितानि कृत्वा चतुर्थे सञ्चार्यमाणे द्वादश। ततस्तृतीये प्राग्वत्स्थानान्तरेषु नीयमाने चतुर्थे सञ्चार्यमाणे एकादश दश नवाष्ट सप्त षट् पञ्च चत्वारस्त्रयो द्वावेक इति उत्पद्यन्ते । एवमष्टसप्ततिः ७८ । पूर्वैः सहैकोनसप्तत्यधिकं शतम्—१६९ । ततः प्रथमद्वितीयपञ्चमेषु स्थानेषु स्थिरलोष्टचिह्नितेषु चतुर्थे सञ्चार्यमाणे एकादश दश नवाष्ट सप्त षट् पञ्च चत्वारस्त्रयो द्वावेक उत्पद्यन्ते। एवं षट्षष्टिः ६६। पूर्वैः सह शतद्वयं पञ्चत्रिंशदधिकम् २३५ । ततः प्रथमद्वितीयषष्ठस्थानेषु स्थिरलोष्टचिह्नितेषु चतुर्थे सञ्चार्यमाणे दश नवाष्ट सप्त षट् पञ्च चत्वारस्त्रयो द्वावेक उत्पद्यन्ते । एवं पञ्चपञ्चाशत् ५५। पूर्वैः सह शतद्वयं नवत्यधिकम् २९० । ततः प्रथमद्वितीयसप्तमेषु स्थानेषु स्थिरलोष्टचिह्नितेषु चतुर्थे सञ्चार्यमाणे नवाष्ट सप्त षट् पञ्च चत्वारस्त्रयो द्वावेकश्च भवति । एवं पञ्चचत्वारिंशत् ४५ । पूर्वैः सह शतत्रयं पञ्चत्रिंशदधिकम् ३३५। ततः प्रथमद्वितीयाष्टमेषु स्थानेषु स्थिरलोष्टचिह्नितेषु चतुर्थे सञ्चार्यमाणे अष्टसप्त षट् पञ्च चत्वारस्त्रयोद्वावेकश्च भवति । एवं षट्त्रिंशत् ३६। पूर्वैःसह शतत्रयमेकसप्तत्यधिकम् ३७१ । ततः प्रथमद्वितीयनवमस्थानेषु स्थिरलोष्टचिह्नितेषु चतुर्थे सञ्चार्यमाणे सप्त षट् पञ्च चत्वारस्त्रयो द्वावेकश्च भवति। एवमष्टाविंशतिः २८ । एवमनेन क्रमेणान्त्ये स्थानान्तरं नीयमाने चतुर्थे सञ्चार्यमाणे एकविंशतिः २१ । पुनरपि पञ्चदश १५ । पुनरपि दश १०। पुनः षट् ६। पुनस्त्रयः ३। पुनरेकः १। एवं चतुरशीतिः ८४। पूर्वैः सह चत्वारि शतानि पञ्चपञ्चाशदधिकानि ४५५ । एवमनेन प्रकारेण यथा यथा प्रथमाद्या लोष्टका द्वितीयादिषु सञ्चरन्ति तथा तथान्यानि त्रयोदशशतानि पञ्चषष्ट्यधिकानि १३६५ उत्पद्यन्ते । एकीकृतान्यष्टादशशतानि विंशत्यधिकानि भवन्ति १८२० । अस्माभिर्ग्रन्थगौरवभयात्सुप्रविद्धत्वाच्चोट्टङ्कमात्र

एव प्रदर्शितः । द्रव्यसंस्कारपाकबेधबोधधूपनादिकं नोक्तम् । एतनन्त्यत्रोऽभ्य उपलभ्य कार्यमिति ॥ २२ ॥

अथान्यान् गन्धयोगानाह ।

**द्वित्रीन्द्रियाष्टभागैरगुरुः पत्त्रं तुरुष्कशैलेयौ ।**
**विषयाष्टपक्षदहनाः प्रियङ्गुमुस्तारसाः केशः ॥ २३ ॥**
**स्पृक्कात्वक्तगराणां मांस्याश्च कृतैकसप्तषड्भागाः ।**
**सप्तर्तुवेदचन्द्रैर्मलयनखश्रीककुन्दुरुकाः ॥ २४ ॥**

द्वित्रीन्द्रियाष्टभागैरिति । अस्मिन् कच्छपुटे । अगुरुर्भागद्वयेन परिकल्प्यः । पत्त्रं गन्धपत्त्रं त्रिभिर्भागैः । तुरुष्कं सिह्लकमिन्द्रियसङ्ख्यैः पञ्चभिर्भागैः । शैलयोऽष्टभिः । विषयाष्टपक्षदहना इति । प्रियङ्गुर्गन्धप्रियङ्गुर्विषयसङ्ख्यैः पञ्चभिर्भागैः । मुस्ता अष्टभिः । रसो बोलः स पक्षसङ्ख्याभ्यां द्वाभ्याम् । केशः शालीजातकः स दहनभागैस्त्रिभिः ॥ २३ ॥

स्पृक्कात्वक्तगराणामिति । स्पृक्का लता कृतसङ्ख्यैश्चतुर्भागैः । त्वगेकेन भागेन । तगरं सप्तभिः । मांसी षड्भिः । सप्तर्तुवेदचन्द्रैरिति । मलयं चन्दनं सप्तभिः । नखमृतुसङ्ख्यैः षड्भिर्भागैः । श्रीकः श्रीवासको वेदसङ्ख्यैश्चतुर्भिर्भागैः । कुन्दुरुकश्चन्द्रसङ्ख्यैरेकेन भागेन देयः । एते प्राग्वद्यथाभागक्रमेण षोडशकोष्ठके न्यासः कार्यः ॥ २४ ॥

| | | | |
|---|---|---|---|
| अ २ | प ३ | तु ५ | शै ८ |
| प्रि ५ | मु ८ | र २ | के ३ |
| स्पृ ४ | त्व १ | त ७ | मां ६ |
| म ७ | न ६ | श्री ४ | कु १ |

एवं न्यासे प्रदर्शिते प्रयोजनमाह ।

**षोडशके कच्छपुटे यथा तथा मिश्रिते चतुर्द्रव्ये ।**
**येऽत्राष्टादश भागास्तेऽस्मिन् गन्धादयो योगाः ॥ २५ ॥**
**नखतगरतुरुष्कयुता जातीकर्पूरमृगकृतोद्बोधाः ।**
**गुडनखधूप्या गन्धाः कर्त्तव्याः सर्वतोभद्राः ॥ २६ ॥**

षोडशक इति। अस्मिन् षोडशके षोडशककोष्ठके कच्छपुटे यथा तथा येन तेन प्रकारेण चतुर्द्रव्ये मिश्रिते एकीकृते। चतुर्भिर्द्रव्यैर्यथाभागपरिकल्पितैर्मिश्रीकृतैरेव ये ऽष्टादश भागा भवन्ति तेऽस्मिन् कच्छपुटे गन्धादय ऊर्ध्वाधः क्रमेण तिर्यग्वा चतुर्षु कोणेषु वा मध्यमचतुष्कोणे वा कोणकोष्ठचतुष्टये वा प्राक्पङ्क्तौ वा मध्यमकोष्ठद्वये वान्त्यपङ्क्तौ। मध्यमकोष्ठद्वये वा द्वितीयतृतीयपङ्क्त्यां वाद्यन्तकोष्ठके वा येन तेन प्रकारेण। चतुर्षु मिश्रितेषु अष्टादश भागा भवन्ति। तस्मिन् कच्छपुटे गन्धादयो योगा ये तेऽष्टादशभागा मिश्रीकृतास्ते नखतगरतुरुष्कयुताः कार्याः। नखं शङ्खोद्भवं चर्म। तगरं प्रसिद्धम्। तुरुष्कं सिह्लकम्। एतैस्त्रिभिः सममात्रैर्युक्ताः कार्याः। तथा जातीकर्पूरमृगकृतोद्बोधाः। जाती जातीफलम्। कर्पूरः प्रसिद्धः। मृगः कस्तूरिका। एतैस्त्रिभिः सममात्रैः कृत उद्बोधो येषां ते तथाभूताः। गुडनखधूप्याः। गुडेन नखेन च सममात्रेण च धूपया धूपनीयाः। एवं गन्धाः सर्वतोभद्राः कर्तव्याः। तस्माद्यतस्ततो गृह्यमाणा अष्टादशभागा भवन्ति अतः सर्वतोभद्रसञ्ज्ञाः॥ २६॥

अथ तैरेव पारिजातानाह।

**जातीफलमृगकर्पूरबोधितैः ससहकारमधुसिक्तैः।**
**बहवोऽत्र पारिजाताश्चतुर्भिरिच्छापरिगृहीतैः॥ २७॥**

चतुर्भिर्मध्यैरिच्छापरिगृहीतैः स्वेच्छया गन्धानि द्रव्याणि सङ्गृहीतैः। जातीफलमृगकर्पूरबोधितैः। जातीफलं प्रसिद्धम्। मृगः कस्तूरिका। कर्पूरः प्रसिद्धः। एतैर्बोधितैः। ससहकारमधुसिक्तैः। सहकारेण चूतरससंयुक्तेन मधुना माक्षिकेण सिक्तैरेवास्मिन् कच्छपुटे बहवः पारिजाताः पारिजातसदृशगन्धा मुखवासा भवन्ति॥ २७॥

अथाधुना स्नानान्याह।

**सर्जरसश्रीवासकसमन्विता येऽत्र सर्वधूपास्तैः।**
**श्रीसर्जरसवियुक्तैः स्नानानि सबालकत्वग्भिः॥ २८॥**

अत्रास्मिन् कच्छपुटे ये ये धूपाः सर्जरसश्रीवासकसमन्वितास्ते सर्व एव निःशेषाः। तैरेव सर्वैः प्रागुक्तैः श्रीसर्जरसवियुक्तैः। श्रीवासकेन रहितैः

सबालकत्वग्भिः । बालकं ह्रीबेरम् । त्वक् प्रसिद्धा । सबालकत्वग्भिर्बालकत्वक्सहितैः स्नानानि स्नानीयानि चूर्णानि भवन्ति ॥ २८ ॥

अधुना चतुरशीतिकेसरगन्धानाह ।

**रोध्रोशीरनतागुरुमुस्तापत्त्रप्रियङ्गुवनपथ्याः ।**
**नवकोष्ठात्कच्छपुटाद्द्रव्यत्रितयं समुद्धृत्य ॥ २९ ॥**
**चन्दनतुरुष्कभागौ शुक्त्यर्धं पादिका तु शतपुष्पा ।**
**कटुहिङ्गुलगुडधूप्याः केसरगन्धाश्चतुरशीतिः ॥ ३० ॥**

रोध्रोशीरेति । रोध्रः प्रसिद्धः । उशीरं प्रसिद्धम् । नतं तगरम् । अगुरुः प्रसिद्धः । मुस्ता प्रसिद्धा । पत्त्रं गन्धपत्त्रम् । प्रियङ्गुः प्रसिद्धा । वनं परिपेलवम् । पथ्या हरीतकी । एषां प्राग्वद्यथाक्रमेण नवकोष्ठके न्यासः । अस्मान्नवकोष्ठात् कच्छपुटाद्यथाक्रमेण द्रव्यत्रितयं त्रीणि द्रव्याणि समुद्धृत्य सङ्गृह्य ततश्चन्दनतुरुष्कभागौ योज्यौ । चन्दनं मलयजम् । तुरुष्कं सिह्लकम् । चन्दनस्यैको भागः । तुरुष्कस्यैको भागः । शुक्तिर्नखस्तदर्धम् । शतपुष्पा पादिका चतुर्भागेन योज्या । कटुहिङ्गुलगुडधूप्याः । कटुका प्रसिद्धा । हिङ्गुलं कृष्णागुरुः । गुड इक्षुविकारः । एतैर्धूप्या धूपनीयाः । केसरगन्धा वकुलगन्धाः चतुरशीतिर्भवन्ति । एतदुक्तं भवति । नव द्रव्याणि भेदभिन्नानि यावत्क्रियन्ते तावच्चतुरशीतिर्भेदा भवन्ति । तदर्थं कोष्ठकादीनां न्यासः ।

| | | |
|---|---|---|
| रो | उ | न |
| अ | मु | प |
| व | प्रि | प |

तद्यथा पूर्वेण पूर्वेण गतेन युक्तमित्यनेन प्रकारेण । प्रथमस्थाने नव ९ द्वितीये षट्त्रिंशत् । तृतीये चतुरशीतिः । एषां प्रदर्शनाय लोष्ठ[1]कप्रस्तारः कार्यः ॥ ३० ॥

अधुना दन्तकाष्ठविधानमाह ।

**सप्ताहं गोमूत्रे हरीतकीचूर्णसंयुते क्षिप्त्वा ।**
**गन्धोदके च भूयो विनिक्षिपेद्दन्तकाष्ठानि ॥ ३१ ॥**

---

१

| | | |
|---|---|---|
| ९ | | |
| ८ | ३६ | |
| ७ | २८ | ८४ |
| ६ | २१ | ५६ |
| ५ | १५ | ३५ |
| ४ | १० | २० |
| ३ | ६ | १० |
| २ | ३ | ४ |
| १ | १ | १ |

एवमत्र प्रस्तारो भवति ।

**एलात्वक्पत्राञ्जनमधुमरिचैर्नागपुष्पकुष्ठैश्च ।**
**गन्धाम्भः कर्त्तव्यं कञ्चित्कालं स्थितान्यस्मिन् ॥ ३२ ॥**
**जातीफलपत्रैलाकर्पूरैः कृतयमैकशिखिभागैः ।**
**अवचूर्णितानि भानोर्मरीचिभिः शोषणीयानि ॥ ३३ ॥**

सप्ताहमिति । दन्तकाष्ठानि दन्तकाष्ठलक्षणाध्यायोक्तानीति । हरीतकीचूर्णसंयुते गोमूत्रे सप्ताहं सप्तदिनानि क्षिप्त्वा संस्थाप्य ततस्तस्मान्निःसार्य भूयः पुनर्गन्धोदके च गन्धपानीयमध्ये सप्ताहादूर्ध्वं विनिक्षिपेत्स्थापयेत् ॥ ३१ ॥

तच्च गन्धोदकलक्षणमाह । एलात्वगिति । एला सूक्ष्मैला । त्वक्त्वचम् । पत्त्रं गन्धपत्त्रम् । अञ्जनकं सौवीरकम् । मधु माक्षिकम् । मरिचं प्रसिद्धम् । एतैस्तथा नागपुष्पं नागकेसरम् । कुष्ठं प्रसिद्धम् । एतैरपि सर्वैतः समभागैर्गन्धाम्भो गन्धोदकं कर्त्तव्यं विधेयम् । अस्मिन् गन्धाम्भसि कञ्चित्कालं स्थितानि निशार्धं स्थापनीयानीत्यर्थः ॥ ३२ ॥

जातीफलेति । जातीफलानां कृतसङ्ख्याश्चत्वारो भागाः । पत्त्रं तस्य यमसङ्ख्यौ द्वौ भागौ । एला सूक्ष्मैला अस्या एको भागः । कर्पूरो घनसारस्तस्य शिखिसङ्ख्यास्त्रयो भागाः । एतैर्यथोक्तैर्भागैरेकीकृतचूर्णितैः सुसूक्ष्मैः । तानि दन्तकाष्ठावचूर्णितानि भानोरादित्यस्य मरीचिभिः किरणैः शोषणीयानि ॥ ३३ ॥

अथ तानि दन्तकाष्ठानि संसेवितानि कान् गुणान् कुर्वन्तीत्याह ।

**वर्णप्रसादं वदनस्य कान्तिं**
**वैशद्यमास्यस्य सुगन्धितां च ।**
**संसेवितुः श्रोत्रसुखां च वाचं**
**कुर्वन्ति काष्ठान्यसकृद्द्रवाणाम् ॥ ३४ ॥**

असकृद्वारद्वयं भवतीत्यसकृद्द्वा दन्तास्तेषां काष्ठानि दन्तकाष्ठानीत्यर्थः । संसेवितुर्वर्णप्रसादं वर्णस्य प्रसन्नतां सुकान्तमित्यर्थः । वदनस्य मुखस्य कान्तिं कमनीयताम् । आस्यस्य मुखस्य वैशद्यं निर्मलत्वं शुद्धताम् । सुगन्धितां सौगन्ध्यम् । श्रोत्रसुखां कर्णसुखप्रदां वाचं गिरं कुर्वन्ति ॥ ३४ ॥

अथ ताम्बूलगुणानाह ।

कामं प्रदीपयति रूपमभिव्यनक्ति
सौभाग्यमावहति वक्त्रसुगन्धितां च ।
ऊर्जं करोति कफजांश्च निहन्ति रोगां-
स्ताम्बूलमेवमपरांश्च गुणान् करोति ॥ ३५ ॥

वर्णप्रसादं वदनस्य कान्तिमित्येतान् गुणांस्ताम्बूलस्य स्थितानेव इमानपरानन्यान् । तद्यथा । कामं मन्मथं प्रदीपयति उत्पादयति । रूपं शरीरशोभामभिव्यनक्ति उत्पादयति । सौभाग्यं वल्लभत्वमावहति करोति । वक्त्रस्य मुखस्य सुगन्धितां सौगन्ध्यं करोति । ऊर्जं बलं करोति । कफजान् कफोत्थान् रोगान् गदान् निहन्ति नाशयति । तथापरान् कण्ठशाद्धमाषपरिणाममलक्षयांश्च करोति ॥ ३५ ॥

अन्यानप्याह ।

युक्तेन चूर्णेन करोति रागं
रागक्षयं पूगफलातिरिक्तम् ।
चूर्णाधिकं वक्त्रविगन्धकारि
पत्राधिकं साधु करोति गन्धम् ॥ ३६ ॥

ताम्बूलं चूर्णेन रङ्गेण युक्तेन न चातिबहुना नात्यल्पेन रागं करोति पूगफलातिरिक्तम् । पूगफलाधिकं रागस्य क्षयं विनाशं करोति । चूर्णेनाधिकमतिरक्तं वक्त्रस्य मुखस्य विगन्धकारि दुष्टगन्धं करोति । पत्राधिकं ताम्बूलं साधु शोभनं गन्धं करोति ॥ ३६ ॥

पुनरपि विशेषमाह ।

पत्राधिकं निशि हितं सफलं दिवा च
प्रोक्तान्यथाकरणमस्य विडम्बनैव ।
कक्कोलपूगलवलीफलपारिजातै-
रामोदितं मदमुदा मुदितं करोति ॥ ३७ ॥

निशि रात्रौ ताम्बूलं पत्राधिकं हितम् । दिवा च दिवसे सफलं पूगफलाधिकम् । अस्य ताम्बूलस्य प्रोक्तान्यथाकरणमुक्ताद्विपरीतकरणम् ।

यथा निशि फलाधिकं दिवसे पत्राधिकं विडम्बनेनोपहासः। कक्कोलं प्रसिद्धम्। पूगफलानि प्रसिद्धानि। लवलीफलं लवङ्गपुष्पम्। तस्य फलासम्भवात्। पारिजातं जातीफलम्। एतैरामोदितं युक्तं ताम्बूलं मदमुदा मदहर्षेण मुदितं हृष्टं नरं करोति ॥ ३० ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतावन्तःपुरचिन्तायां गन्धयुक्तिर्नाम षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

## अथ स्त्रीपुंसमायोगो व्याख्यायते।

तत्रादावेव प्रयोजनप्रदर्शनार्थमाह।

**शस्त्रेण वेणीविनिगूहितेन विदूरथं स्वा महिषी जघान।**
**विषप्रदिग्धेन च नूपुरेण देवी विरक्ता किल काशिराजम् ॥१॥**

**एवं विरक्ता जनयन्ति दोषान्**
**प्राणच्छिदोऽन्यैरनुकीर्त्तितैः किम्।**
**रक्ता विरक्ताः पुरुषैरतोऽर्थात्**
**परीक्षितव्याः प्रमदाः प्रयत्नात् ॥ २ ॥**

शस्त्रेणेति। विदूरथं राजानं स्वा महिषी आत्मीया भार्या विरक्ता वेणीविनिगूहितेन केशकलापप्रच्छादितेन शस्त्रेणायुधेन विनिगूढेन जघान हतवती। किलेत्यागमसूचने। काशिराजं देवी स्वभार्या विरक्ता विषप्रदिग्धेन विषलिप्तेन नूपुरेण मञ्जीरेण जघान। तद्विषं पानादिषु क्षिप्त्वेत्यर्थः ॥ १ ॥

एवमिति। एवमनेन प्रकारेण विरक्ताः स्त्रियः प्राणच्छिदः प्राणान्तिकान् दोषान् जनयन्ति उत्पादयन्ति। किमन्यैरपरैर्दोषैरनुकीर्त्तितैः कथितैः प्रयोजनम्। अतोऽस्मादेतस्मात्कारणात्पुरुषैर्नरेन्द्रैः प्रमदाः स्त्रियः प्रयत्नात्सर्वथा रक्ता विरक्ताः परीक्षितव्या विचार्याः ॥ २ ॥

तथा च कामन्दकिः।

स्नातानुलिप्तः सुरभिः स्रग्वी रुचिरभूषणः।
स्नातां स्वदत्तवसनां पश्येद्देवीं सभूषणाम् ॥

नहि देवीगृहं गच्छेदात्मीयात्सन्निवेशनात् ।
अत्यन्तवल्लभोऽपीह विस्रब्धस्त्रीषु न व्रजेत् ॥
देवी गृहगतोद्भ्रान्ता भद्रसेनं ममार यत् ।
मातुःशय्यान्तरासीनं कारूषं चोरसं सुतम् ॥
लाजान् विषेण संयोज्य मधुनेति विलोभितम् ।
देवी तु काशिराजेन्द्रं निजघान रहोगतम् ॥
विषाक्तेन च सौवीरं मेखलामणिना नृपम् ।
नूपुरेण च वैवर्त्यं तदूपं दर्पणेन च ॥
वेण्यां शस्त्रं समादाय तथैव च विदूरथम्—इति ।

अथानुरक्ताया लक्षणमाह ।

**स्नेहं मनोभवकृतं कथयन्ति भावा**
**नाभीभुजस्तनविभूषणदर्शनानि ।**
**वस्त्राभिसंयमनकेशविमोक्षणानि**
**भ्रूक्षेपकम्पितकटाक्षनिरीक्षणानि ॥ ३ ॥**

अन्तरावस्थासूचकाश्चेष्टाविशेषा भावाः । शरीरकम्पो मुखशोषः पाण्डुवक्त्रता चेत्यादिकाः । मनोभवकृतं कामजनितं स्नेहं प्रीतिं कथयन्ति व्यञ्जयन्ति । तथा नाभीभुजस्तनविभूषणदर्शनानि मनोभवकृतं स्नेहं कथयन्ति । नाभी उदरमध्यम् । भुजौ बाहू । स्तनौ कुचौ । भूषणान्यलङ्करणानि । एतेषां दर्शनानि । वल्लभं दृष्ट्वा अनुरक्ता स्त्री एतानि प्रकटीकरोति । तथा वस्त्राणामम्बराणामभिसंयमनं नियमनम् । केशानां केशवेण्या विमोक्षणं मुञ्चनम् । एतान्यपि मनोभवकृतं स्नेहं कथयन्ति । तथा भ्रूक्षेपकम्पितकटाक्षनिरीक्षणानि मनोभवकृतं स्नेहं कथयन्ति । कटाक्षो नयनविभ्रमः । भ्रूविक्षेपेण भ्रूचालनेन यः कम्पश्चालनं तेन यत्कटाक्षनिरीक्षणम् । तानि भ्रूक्षेपकम्पितकटाक्षनिरीक्षणान्यपि ॥ ३ ॥

तथा च कश्यपः ।

अनुरागस्थिता रक्ता विरक्ता वेशमानिनी ।
मनोदृष्टिनिबन्धेन हृदयेनाकुलीकृता ॥

आकारलिङ्गभेदैश्च ज्ञायते यानुरागिणी ।
विक्षिप्रमन्यचित्तत्वं गुरुगेहेऽप्यगोपनम् ॥
आह्लादनं च शब्देन यस्याः सा रागरञ्जिता ।
अतोऽपरा तु या नारी सा विरक्तेति कीर्त्तिता ॥

अथान्यदपि रक्तालक्षणमाह ।

उच्चैः ष्ठीवनमुत्कटप्रहसितं शय्यासनोत्सर्पणं
गात्रास्फोटनजृम्भणानि सुलभद्रव्याल्पसम्प्रार्थना ।
बालालिङ्गनचुम्बनान्यभिमुखे सख्याः समालोकनं
दृक्पातश्च पराङ्मुखे गुणकथा कर्णस्य कण्डूयनम् ॥ ४ ॥

इमां च विन्द्यादनुरक्तचेष्टां
प्रियाणि वक्ति स्वधनं ददाति ।
विलोक्य संहृष्यति वीतरोषा
प्रमार्ष्टि दोषान् गुणकीर्त्तनेन ॥ ५ ॥
तन्मित्रपूजा तदरिद्विषत्वं
कृतस्मृतिः प्रोषितदौर्मनस्यम् ।
स्तनौष्ठदानान्युपगूहनं च ।
स्वेदोऽथ चुम्बाप्रथमाभियोगः ॥ ५ ॥

उच्चैः ष्ठीवनमिति । एवंविधां स्त्रियमनुरक्तचेष्टां विन्द्याज्जानीयात् । कीदृशीम् । पुरुषं दृष्ट्वा उच्चैः कृत्वा ष्ठीवनमास्यशब्दं करोति । उत्कटं सशब्द प्रहसितम् । शय्यायामास्तरणे आसने योत्सर्पणं श्लिष्टत्वं समीपागमनं करोति । गात्राणां शरीरावयवानामास्फोटनं शब्दकरणं जृम्भणमास्यविहरणं चैतानि करोति । तथा सुलभस्य अल्पस्य च स्तोकमात्रस्य द्रव्यस्य सम्प्रार्थनां याच्ञां करोति । अभिमुखे वल्लभसम्मुखे बालालिङ्गनं चुम्बनानि करोति । बालस्य शिशोरालिङ्गनं परिष्वज्य चुम्बने वक्त्रसंयोगं च करोति । सख्या आल्याः सङ्केतज्ञायाः समालोकनं मुखप्रेक्षणं च करोति । दृक्पातश्च पराङ्मुखे तस्मिन् वल्लभे पराङ्मुखेऽन्यत्र प्रेक्षमाणे दृक्पातस्तदवलोकनं

तदीयानां गुणकथानां गुणान्वितानां कथनामनुकीर्तनं कथनम् । कर्णस्य घोषस्य च कण्डूयनं करोति ॥ ४ ॥

इमां चेति । इमामेवंविधामुक्तलक्षणामनुरक्तचेष्टां विन्द्याज्जानीयात् । अनुरक्ता चेष्टा कायपरिस्पन्दो यस्यास्ताम् । सा च प्रियाणि प्रियवचनानि वक्ति सम्भाषते । स्वधनमात्मीयवित्तं च ददाति प्रयच्छति । तं पतिं विलोक्य दृष्ट्वा संहृष्यति हर्षयति । वीतरोषा विगतक्रोधा च भवति । तदीयगुणकीर्तनेन तच्चरितकथनेन दोषांश्च तत्कृते अपराधांश्च प्रमार्ष्टि विनाशयति ॥ ५ ॥

तन्मित्रपूजेति । तदीयस्य मित्रस्य सुहृदः पूजामर्चां करोति । तदरेः शत्रोर्द्विष्टत्वं द्विष्टतां करोति । कृतस्मृतिस्तेन यत्कृतं कर्म तत् स्मरति । उपकृतं कीर्तयति । प्रोषिते तस्मिन् परदेशिनि दौर्मनस्यं दुःखितचित्तता । स्तनोष्ठदानानि । स्तनदानं स्तनस्पर्शः । ओष्ठदानमधरपानदानम् । उपगूहनमालिङ्गनम् । चुम्बनं वक्त्रसंयोगः । एवंविधः प्रथममादौ अभिसंयोगे आक्षेपे रक्तायाः रतेर्भवति ॥ ६ ॥

तथा च काश्यपः ।

दृष्टिर्निक्षिपते तत्र मनसापि विचिन्तयेत् ।
मूलेन रज्यते सा तु चित्रं चित्रपटे यथा ॥
अकस्मात् पुरतो भूत्वा कश्चिदाश्लिषति भृशम् ।
ऊरू नितम्बे नाभी च भूषणानि पयोधरौ ॥
करणैरुत्किरेन्नाभीमनुरागेण रञ्जिताम् ।
जृम्भते ग्रीवतेऽत्यर्थं वाग्दुष्टानि ददाति सा ॥
कुमारालिङ्गनं चैव दशनैरधरं दशेत् ।
एभिर्विकारैर्विज्ञेया मदनार्त्ता तु कन्यका ॥
दर्शनाद्हृष्यते या तु मित्रपक्षं च पूजयेत् ।
स्मितं पराङ्मुखं पश्येद्गुणांश्चैवानुकीर्तयेत्—इति ॥

अथ विरक्ताया लक्षणमाह ।

**विरक्तचेष्टा भ्रुकुटीमुखत्वं**
**पराङ्मुखत्वं कृतविस्मृतिश्च ।**

असम्भ्रमो दुष्परितोषता च
तद्द्विष्टमैत्री परुषं च वाक्यम् ॥ ७ ॥
स्पृष्टाथवालोक्य धुनोति गात्रं
करोति गर्वं न रुणद्धि यान्तम् ।
चुम्बाविरामे वदनं प्रमार्ष्टि
पश्चात्समुत्तिष्ठति पूर्वसुप्ता ॥ ८ ॥

विरक्तचेष्टा विरागचेष्टा यस्यास्तस्या इदं लक्षणम् । भ्रुकुटीमुखत्वं दूरस्थं पतिं दृष्ट्वा मुखे भ्रुकुटिविकृतिं करोति । पराङ्मुखत्वं तदवलोकनादन्यप्रेक्षणम् । कृतविस्मृतिः । तेन यत्कृतमुपकारादिकं तस्य विस्मृतिर्विस्मरणम् । दर्शनासम्भ्रमोऽनादरः । दुष्परितोषता दुःखेन परितोषः । प्रभूतार्थदानेनापि परितुष्टा न भवति । तद्द्विष्टेन तच्छत्रुणा सह मैत्री प्रीतिः सुहृद्भावः । वाक्यं वचनं परुषमनभिमतं ब्रवीति जल्पति ॥ ७ ॥

स्पृष्टाथवेति । अथवा तत्पुरुषं स्पृष्ट्वा विलोक्य संवीक्ष्य गात्रं शरीरं धुनोति चालयति । गर्वं माहात्म्यं च करोति । तं प्रतिकुपितं यान्तं गच्छन्तं न रुणद्धि न रोधयति । चुम्बाविरामे वक्त्रसंयोगान्ते वदनमास्यं प्रमार्ष्टि प्रमार्जयति । पूर्वसुप्ता प्रथममेव शयने सुप्ता पश्चादनन्तरं पुरुषे समुत्थिते समुत्तिष्ठति ॥ ८ ॥

तथा च काश्यपः ।

दृष्ट्वा न दृश्यते मूढा स्पृष्ट्वा दुर्वचनं वदेत् ।
रतिकालावगूढा तु चुम्बिनी मार्जयेन्मुखम् ॥
सुप्ता विबुध्यते पश्चाच्छयने तु पराङ्मुखी ।
विरक्ता सा स्मृता नारी वर्जनीया प्रयत्नतः ॥

अथैतासां कुलजनविनाशायैता दूत्यो भवन्ति ताभ्यः संरक्षणीया इत्याह ।

भिक्षुणिका प्रव्रजिता दासी धात्री कुमारिका रजिका ।
मालाकारी दुष्टाङ्गना सखी नापिती दूत्यः ॥ ९ ॥

**कुलजनविनाशहेतुर्दूत्यो यस्मादतः प्रयत्नेन ।**
**ताभ्यः स्त्रियोऽभिरक्ष्या वंशयशोमानवृद्ध्यर्थम् ॥ १० ॥**

भिक्षुणिकेति । भिक्षुणिका प्रसिद्धा व्रतस्था रक्तपटा स्त्री । प्रव्रजिता तपस्विनी स्त्री । दासी कर्मकरी । धात्री स्तनदायिनी । कुमारिका कुमारी । रजिका वस्त्ररञ्जकी । मालाकारी पुष्पप्रदायिका । दुष्टाङ्गना सदोषा स्वगृहस्थिता दुःशीला स्त्री । सखी आली । नापिती नापितस्त्री । एताः स्त्रीणां परपुरुषसंबन्धे दूत्यो भवन्ति ॥ ९ ॥

कुलजनविनाशहेतुरिति । यस्मादेता दूत्यः कुलजनस्य निरवद्यवंशसम्भूतस्य विनाशने शीलविध्वंसने हेतुः कारणं भवन्ति । अतोऽस्माद्धेतोस्ताभ्यो दूतीभ्यो वंशस्य कुलस्य यशसः कीर्तेर्मानस्य पूजाया वृद्ध्यर्थं सम्वर्धनाय स्त्रियो योषितोऽभिरक्ष्याः । अभि मुख्येन रक्षणीयाः ॥ १० ॥

अथ स्त्रीणां विनाशने सङ्केतहेतूनाह ।

**रात्रीविहारजागररोगव्यपदेशपरगृहेक्षणिकाः ।**
**व्यसनोत्सवाश्च सङ्केतहेतवस्तेषु रक्ष्याश्च ॥ ११ ॥**

रात्रीविहारो निशि स्वगृहान्निर्गत्य बहिश्चङ्क्रमणम् । जागरोऽस्वप्नम् । रोगव्यपदेशो व्याधिनिमन्त्रसमाश्रयणम् । परगृहमन्यवेश्मनिवासः । ईक्षणिका देवज्ञाः । व्यसनं किञ्चिद्विरागोत्पादकं हेतुमवलम्ब्य दुःखानुसेवनम् । उत्सवो विवाहादिः । एते स्त्रीणां सङ्केते परपुरुषसंयोगे हेतवः कारणानि । एतेषु स्त्रियो रक्ष्या रक्षणीयाः ॥ ११ ॥

तथा च काश्यपः ।

दुष्टसङ्गरता या तु सा क्षिप्रं नाशयेत् कुलम् ।
तीर्थयात्राटनं भेदे परवेश्मसमागमम् ॥
देवालये रात्र्यटनं परस्परनिवासिभिः ।
पितृवेश्मनिवासं च न श्रेयः स्वामिना विना ॥
घृतकुम्भोपमा नारी पुरुषं वह्निवर्चसम् ।
संश्लेषाद्द्रवते कुम्भस्तद्वत् स्त्री पुंसि भाविता ॥

निर्जने तु विविक्ताङ्गं या स्त्री पुरुषमीक्षते ।
तस्याः प्रस्विद्यते गुह्यमनुयाह्येच्छयान्विता ॥

अथ स्त्रीगुणसुरतलक्षणमाह ।

**आदौ नेच्छति नोज्झति स्मरकथां व्रीडाविमिश्रालसा**
**मध्ये ह्रीपरिवर्जिताभ्युपरमे लज्जाविनम्रानना ।**
**भावैर्नैकविधैः करोत्यभिनयं भूयश्च या सादरा**
**बुद्ध्वा पुम्प्रकृतिं च यानुचरति ग्लानेतरैश्चेष्टितैः ॥ १२ ॥**

आदौ प्रथममेव शयने पतिना सुरतं नेच्छति नानुमन्यते स्मरकथां कामकथां च नोज्झति न त्यजति। ततः सुरतारम्भे व्रीडाविमिश्रालसा। व्रीडा लज्जा तया विमिश्रं संयुक्तमालसत्वं यस्याः सा व्रीडाविमिश्रालसा । मध्ये सुरतान्तर्ह्रीपरिवर्जिता त्यक्तलज्जा भवति। अभ्युपरमे सुरतनिवृत्तौ लज्जाविनम्रानना। लज्जा व्रीडा तया विनम्रमवनतं मुखं यस्याः। भूयः पुनर्भावैर्लीलाविलासादिभिर्नैकविधैर्बहुप्रकारैः सह सुरतं करोति। कीदृशी सादरा। आदरसंयुक्ता श्रद्धान्विता । या च पुम्प्रकृतिं पुरुषस्वभावं बुद्ध्वा ज्ञात्वा ग्लानेतरैश्चेष्टितैः सुखदुःखादिभिरनुचरति । पुरुषे ग्लाने सापि ग्लानत्वं प्रदर्शयति तत्सुखिते सापि सुखिता ॥ १२ ॥

अथ भावानां लक्षणं बाहुलकाल्लिख्यते ।

लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम् ।
मोट्टायितं कुट्टमितं विब्बोको ललितं तथा ॥
विहृतं चेति विज्ञेया दश स्त्रीणां स्वभावजाः ।

तथा च ।

वागङ्गालङ्करणैः श्लिष्टैः प्रीतिप्रयोजकैर्मधुरैः ।
इष्टजनस्यानुकृतिर्लीला ज्ञेया प्रयोगज्ञैः ॥
स्थानासनगमनानां हास्यभ्रूकर्मणां चैव ।
उत्पद्यते विशेषो यः श्लिष्टः स तु विलासः स्यात् ॥
मालाच्छादनभूषणविलेपनानादरन्यासः ।
स्वल्पोऽपि परां शोभां जनयेत् या सा तु विच्छित्तिः ॥

विविधानामर्थानां वागङ्गाहार्यसत्त्वयुक्तानाम् ।
मदरागहर्षजनितो व्यत्यासो विभ्रमः प्रोक्तः ॥
स्मितहसितरुदितभयपुलकरोषगर्वश्रमाभिलाषाणाम् ।
सङ्करकरणं हर्षादसकृत् किलकिञ्चितं ज्ञेयम् ॥
इष्टजनस्य कथायां हेलालीलादिदर्शनेनापि ।
तद्भावभावनकृतं तन्मोट्टायितमभिख्यातम् ॥
केशस्तनादिपीडनरागादतिहर्षसम्भ्रमोत्पन्नम् ।
कुट्टमितमनुवदन्ति हि सुखस्य दुःखोपचारेण ॥
इष्टानां भावानां प्राप्तावभिमानगर्भसम्भूतः ।
स्त्रीणामनादरकृतो बिब्बोको नाम विज्ञेयः ॥
हस्तपादादिविन्यासे भ्रूनेत्रौष्ठप्रयोजिते ।
सौकुमार्यं भवेद्येन ललितं तत्प्रकीर्तितम् ॥
वाच्यानां प्रीतियुक्तानां प्राप्तानां यदभाषणम् ।
व्याजात् स्वभावतो वापि विहृतं नाम तद्भवेत्—इति ॥

अथान्यान् स्त्रीगुणानाह ॥

**स्त्रीणां गुणा यौवनरूपवेष-**
**दाक्षिण्यविज्ञानविलासपूर्वाः ।**
**स्त्री रत्नसञ्ज्ञा च गुणान्वितासु**
**स्त्रीव्याधयोऽन्याश्चतुरस्य पुंसः ॥ १३ ॥**

स्त्रीणां योषितामेते गुणाः । के ते । यौवनं तारुण्यम् । रूपं स्वकान्तत्वम् । वेषः शरीरालङ्कारः । दाक्षिण्यमानुकूल्यम् । विज्ञानं कामशास्त्रोक्तानां कलानां पुरुषचित्तग्रहणे च कौशलम् । विलासः स्थिरं मधुरवचनं कटाक्षनिरीक्षणम् । अथवा विलासो यस्य लक्षणमुक्तं "स्थानासनगमनानामि"ति । विलासपूर्वाः । विलासः पूर्वे प्रथमो येषाम् । लीला विलासो विच्छित्तिरित्याद्याः । एतावन्तः स्त्रीणां गुणाः । गुणान्वितासु च स्त्री रत्नसञ्ज्ञास्ति ।

तथा च वक्ष्यति ।

[1]द्विपहयवनितादीनां स्वगुणविशेषेण रत्नशब्दोऽस्ति ।

तदुक्तम् ।

---

१ अस्यैव ग्रन्थस्य ७८ अध्याये २ श्लोकः ।

जाती जाती यदुत्कृष्टं तद्रत्नमभिधीयते ।

स्त्रीव्याधयोऽन्या इति । अन्याः परलक्षणा गुणरहिताश्च पुंसः पुरुषस्य चतुरस्य नागरस्य स्त्रीव्याधयश्चित्तखेदकारिण्य इत्यर्थः ॥ १३ ॥

तथा च भगवान् व्यासः ।

यस्य भार्या शुचिर्दक्षा मिष्टान्नप्रियवादिनी ।

आत्मगुप्ता भर्तृभक्ता सा श्रीरित्युच्यते बुधैः ॥

या च भार्या विरूपाक्षी कश्मला कलहप्रिया ।

उत्तरोत्तरवक्त्री च सा जरा न जरा जरा ॥

निर्विण्णे निर्विण्णा मुदिते मुदिता समाकुलाऽऽकुलिते ।

प्रतिबिम्बसमा कान्ता संक्रुद्धे केवलं भीता ॥

अथाव वर्ज्याः स्त्रीराह ॥

**न ग्राम्यवर्णैर्मलदिग्धकाया**

**निन्द्याङ्गसंबन्धिकथां च कुर्यात् ।**

**न चान्यकार्यस्मरणं रहःस्था**

**मनो हि मूलं हरदग्धमूर्त्तेः ॥ १४ ॥**

ग्रामे या ग्राम्या ग्राम्यैर्वर्णैर्मलैर्दिग्धा उपलक्षिताः काया यासाम्। प्राकृतभाषिण्य इत्यर्थः । ताभिः स्त्रीभिः सह निन्द्याङ्गसंबन्धिकथां मैथुनीं कथां न कुर्यात् । रहःस्था सुरतासन्ना अन्यकार्याणां गृहाश्रितानां कर्मणां स्मरणं चिन्तनं न कुर्यात् । यतो हरदग्धमूर्तेः कामस्य मनश्चित्तं मूलं तस्मिन्नन्यत्र गते कामजं सुखं नोत्पद्यते । यतः प्रथमत एवोक्तम् । जात्यं मनोभवसुखं सुभगस्य सर्वमाभासमात्रमितरस्य मनोवियोगात् ॥ १४ ॥

अन्यानपि स्त्रीगुणानाह ।

**श्वासं मनुष्येण समं त्यजन्ती बाहूपधानस्तनदानदक्षा ।**

**सुगन्धकेशा सुसमीपरागा सुप्तेऽनुसुप्ता प्रथमं विबुद्धा ॥ १५ ॥**

मनुष्येण पुरुषेण समं तुल्यकालं श्वासं समुच्छ्वासं त्यजन्ती । अने परस्परं राग उक्तः । बाहूपधानस्तनदानदक्षा । बाह्वोरुपधानं बाहूपध

नम् । बाहूपधाने स्तनस्पर्शकरणे च दक्षा चतुरा । सुगन्धकेशा । सुगन्धीकृताः केशा यया च । सुसमीपरागा । शोभने समीपे निकटे रागोऽनुरागो यस्याः । सुरतारम्भ एव जायते रागो यस्या इत्यर्थः । तस्मिन् कान्ते सुप्ते पश्चात्सुप्ता प्रथममादौ विबुद्धा विगतनिद्रा भवति ॥ १५ ॥

तथा च काश्यपः ।

> निर्जने तु विविक्ताङ्गं या स्त्री पुरुषमीक्षते ।
> तस्याः प्रस्विद्यते गुह्यमनुग्राह्येच्छयान्विता ॥
> परस्परमनोरामे रमयित्वा मनः स्त्रियाः ।
> गर्भं सम्भरते श्रेष्ठं सुभगं दीर्घजीवितम् ॥
> दुर्मनःस्थौ विरक्तौ च भवेतां सङ्गमे यदि ।
> तदा विरूपश्चाल्पायुर्मुक्ताङ्गो दुःखितो भवेत् ॥

अथ वर्ज्याः स्त्रीराह ।

**दुष्टस्वभावाः परिवर्जनीया विमर्दकालेषु च न क्षमा याः ।**
**यासामसृग्वासितनीलपीतमाताम्रवर्णं च न ताः प्रशस्ताः॥१६॥**
**या स्वप्नशीला बहुरक्तपित्ता प्रवा¹हिनी वातकफातिरक्ता ।**
**महाशना स्वेदयुताङ्गदुष्टा या ह्रस्वकेशी पलितान्विता वा॥१७॥**

**मांसानि यस्याश्च चलन्ति नार्या**
**महोदरा खिक्खिमिनी च या स्यात् ।**
**स्त्रीलक्षणे याः कथिताश्च पापा-**
**स्ताभिर्न कुर्यात् सह कामधर्मम् ॥ १८ ॥**

दुष्टस्वभावा इति । स्त्रियो दुष्टस्वभावा दुष्टप्रकृतयस्ताः परिवर्जनीया वर्जयितव्याः । विमर्दकालेषु रतिकालेषु याश्च न क्षमा न समर्थाः । यासां स्त्रीणामसृग्रक्तमसितं कृष्णं नीलं नीलवर्णं पीतं पीतवर्णं हरितवर्णमाताम्रवर्णमीषल्लोहितं ताश्च न प्रशस्ताः ॥ १६ ॥

या स्वप्नशीलाऽतिनिद्रा । बहुरक्ता प्रभूतशोणिता । बहुपित्ता च । प्रवाहिनी प्रकर्षेण यस्य भगं वहति स्रवति । केचित्प्रदाहिनीति पठन्ति । प्रक-

---

१ प्रदाहिनी-इति पाठान्तरम् ।

र्वेण यस्या गमने पुरुषस्य शिश्ने दाहो जायते। पुरतो दाहमुत्पादयति। वातकफातिरक्ता वातश्लेष्मबहुला। महाशना बहुशना। स्वेदयुता घर्मसहिता। अङ्गदुष्टा अङ्गान्यवयवानि दुष्टानि सदोषाणि यस्या हीनाङ्गाधिका वा। या च स्वल्पकेशी स्वल्पमूर्धजा पलितान्विता जरासंयुक्ता ॥ १७ ॥

यस्याश्च नार्याः स्त्रिया मांसानि चलन्ति शिथिलानि भवन्ति। या च महोदरा स्थूलजठरा। खिङ्खिमिणी अव्यक्तशब्दा। या च स्त्रीलक्षणेऽशुभलक्षणे कथिता।

"कनिष्ठिका[1] वा तदनन्तरे" त्यादिलक्षणयुक्तायाः स्त्रियास्ताभिः सह न कामधर्मं कुर्यात्। सर्वथा पापा दुष्टलक्षणयुक्ताः कान्ता वर्ज्या इत्यर्थः ॥ १८ ॥

अथ रजस्वलायाः शोणितलक्षणमाह।

**शशशोणितसङ्काशं लाक्षारससन्निकाशमथवा यत्।**
**प्रक्षालितं विरज्यति यच्चासृक् तद्भवेच्छुद्धम् ॥ १९ ॥**
**यच्छब्दवेदनावर्जितं त्र्यहात् सन्निवर्त्तते रक्तम्।**
**तत्पुरुषसम्प्रयोगादविचारं गर्भतां याति ॥ २० ॥**

शशशोणितसङ्काशमिति। यच्चासृग्रक्तं शशशोणितसङ्काशम्। शशः प्राणी तस्य शोणितं रक्तं तत्सन्निकाशमतिलोहितम्। अथवा लाक्षारससन्निकाशम्। लाक्षा वृक्षनिर्यासस्तद्रसस्य सन्निकाशं सदृशं वा। यच्च प्रक्षालितं विरज्यति। वस्त्रस्थं निष्क्रमते। तच्छुद्धं भवेत् स्यात्। गर्भग्रहणयोग्यमित्यर्थः ॥ १९ ॥

यच्छब्दवेदनावर्जितमिति। यद्रक्तं शब्देन स्वनेनैव वर्जितं रहितम्। पतमानस्य शब्दं नोत्पद्यते। वेदना व्यथा तया वर्जितं रहितम्। त्र्यहात्त्रिनचयेण च यन्निवर्त्तते विरमति। तद्रक्तं पुरुषसम्प्रयोगाद् द्वन्द्वसंयोगाद्धेतोरविचारं निश्चितं गर्भतां याति गर्भत्वं गच्छति ॥ २० ॥

अथ रजस्वलानां परिभाषार्थमाह।

**न दिनत्रयं निषेव्यं स्नानं माल्यानुलेपनं स्त्रीभिः।**
**स्नायाच्चतुर्थदिवसे शास्त्रोक्तेनोपदेशेन ॥ २१ ॥**

---

१ अस्यैव ग्रन्थस्य ६९ अध्याये १६ श्लोकः।

**पुष्यस्नानौषधयो याः कथितास्ताभिरम्बुमिश्राभिः ।**
**स्नायात्तथात्र मन्त्रः स एव यस्तत्र निर्दिष्टः ॥ २२ ॥**

न दिनत्रयमिति । रजस्वलाभिः स्त्रीभिर्दिनत्रयं स्नानं माल्यं पुष्पादिकमनुलेपनं समालम्भनादिकं च न निषेव्यं नानुसेवितव्यम् । चतुर्थदिवसे चतुर्थेऽह्नि शास्त्रोक्तेनोपदेशेन शास्त्रविहितविधानेन स्नायाच्छौचं कुर्यात् ॥२१॥

पुष्यस्नानौषधय इति । पुष्यस्नाने औषधय उक्ताः कथिताः । "ज्योति[1]ष्मतीं त्रायमाणामि"त्यादिकास्ताभिरम्बुमिश्राभिर्जलसंयुक्ताभिः स्नायात् । तथा तेनैव प्रकारेण "तस्याः[2] कोणेषु दृढान् कलशान् सितसूत्रवेष्टितग्रीवान्" इत्यादिकेन स्नानेन च यस्तत्र मन्त्रस्तस्मिन् पुष्यस्नाने "सुरा[3]स्त्वामभिषिञ्चन्त्वि"त्यादिकः स एवात्र निर्दिष्ट उक्तः ॥ २२ ॥

अथ स्त्रीपुरुषसंयोगे विविभागमाह ।

**युग्मासु किल मनुष्या निशासु नार्यो भवन्ति विषमासु ।**
**दीर्घायुषः सुरूपाः सुखिनश्च विकृष्टयुग्मासु ॥ २३ ॥**

आर्तवादनन्तरं युग्मासु समासु रात्रिषु मनुष्याः पुरुषा भवन्त्युत्पद्यन्ते । किलशब्द आगमद्योतनार्थः । समासु यदा भर्त्रा सह संयोगस्तदा पुत्रा जायन्ते । एवं विषमासु रात्रिषु नार्यः स्त्रियो भवन्ति । तत्रापि विशेषमाह । दीर्घायुष: सुरूपाः सुखिन इति । विकृष्टयुग्मासु दूरस्थासु रात्रिषु समासु चतुर्थीं रात्रिं वर्जयित्वा षडष्टद्वादशषोडशीषु दीर्घायुषश्चिरजीविनः । सुरूपाः शोभनरूपाः । सुखिनश्च जायन्ते । अर्थादेव सन्निकृष्टयुग्मायां विपरीतम् ॥ २३ ॥

अथ गर्भस्य धृतसंस्थानवशेन पुंस्त्रीनपुंसकप्रविभागज्ञानमाह ।

**दक्षिणपार्श्वे पुरुषो वामे नारी यमावुभयसंस्थौ ।**
**यदुदरमध्योपगतं नपुंसकं तन्निबोद्धव्यम् ॥ २४ ॥**

यो गर्भः स्त्रिया दक्षिणपार्श्वे स्थितो भवति स पुरुषो ज्ञेयः । यश्च वामपार्श्वे नारी स्त्री ज्ञेया । उभयसंस्थौ वामदक्षिणपार्श्वस्थौ यमौ द्वौ

---

१ द्रष्टव्या अस्य ग्रन्थस्य ५६३ पृष्ठे ३८–४२ श्लोकाः ।
२ द्रष्टव्योऽस्य ग्रन्थस्य ५६२ पृष्ठे ३७ श्लोकः ।
३ द्रष्टव्या अस्य ग्रन्थस्य ५६७–५६८ पृष्ठे ५५–७० श्लोकाः ।

गर्भो भवेत्। यद्गर्भमुदरमध्योपगतं मध्यादेव न चलति तन्नपुंसकमिति निबोद्धव्यं ज्ञातव्यम् ॥ २४ ॥

अथ स्त्रीसम्प्रयोगकाले शुभयोगमाह ।

केन्द्रत्रिकोणेषु शुभस्थितेषु
लग्ने शशाङ्के च शुभैः समेते ।
पापैस्त्रिलाभारिगतैश्च यायात्
पुञ्जन्मयोगेषु च सम्प्रयोगम् ॥ २५ ॥

एवंविधे योगे भार्यया सह सम्प्रयोगं यायाद्गच्छेत्। केन्द्राणि लग्नचतुर्थसप्तमदशमानि । त्रिकोणं नवमपञ्चमे । शुभा बुधशुक्रजीवाः । केन्द्रत्रिकोणेषु शुभस्थितेषु सौम्यग्रहैर्यथासम्भवमधिष्ठितेषु। लग्ने शशाङ्के च चन्द्रे शुभैः समेते शुभग्रहसंयुक्ते । पापैरादित्याङ्गारकशनैश्चरैस्त्रिलाभारिगतैः । तृतीयैकादशषष्ठस्थानस्थैः । तथा पुञ्जन्मयोगो जातके उक्तः । "ओजर्क्षे पुरुषांशकेषु बलिभिर्लग्नार्कगुर्विन्दुभि"रित्यादि ॥ २५ ॥

अथर्तौ मैथुनकाले परिभाषार्थमाह ।

न नखदशनविक्षतानि कुर्या-
दृतुसमये पुरुषः स्त्रियाः कथञ्चित् ।
ऋतुरपि दश षट् च वासराणि
प्रथमनिशात्रितयं न तत्र गम्यम् ॥ २६ ॥

पुरुषो नरः स्त्रिया योषितः ऋतुसमये गर्भाधानसमये कथञ्चित् कथमपि नखदशनविक्षतानि न कुर्यात् कारयेत्। अपिशब्दश्चार्थे । ऋतू रजः । दश षट् च षोडशवासराणि षोडशदिनानि भवन्ति । तत्र ऋतौ सति प्रथममादौ निशात्रितयं रात्रित्रितयं न गम्यम् । यतस्तत्र गर्भः सम्भवतीति ॥ २६ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतावन्तःपुरचिन्तायां स्त्रीपुंसमायोगो नाम सप्ततितमोऽध्यायः ॥ ७० ॥

१ बृहज्जातके ४ अध्याये ११ श्लोकः ।

## अथ शय्यासनलक्षणं व्याख्यायते ।

तत्रादावेव तदारम्भप्रदर्शनार्थमाह ।

**सर्वस्य सर्वकालं यस्मादुपयोगमेति शास्त्रमिदम् ।**
**राज्ञां विशेषतोऽतः शयनासनलक्षणं वक्ष्ये ॥ १ ॥**

यस्मादेतत् इदं शास्त्रं शयनासनलक्षणाख्यं सर्वजनस्य सर्वकालमुपयोगमेति गच्छति विशेषतो राज्ञां नृपाणामुपयोगमेति । अतोऽस्माच्छयनासनलक्षणं वक्ष्ये कथयिष्ये ॥ १ ॥

तत्रादौ नृपाणामासनलक्षणमाह ।

**असनस्पन्दनचन्दनहरिद्रसुरदारुतिन्दुकीशालाः ।**
**काश्मर्यञ्जनपद्मकशाका वा शिंशपा च शुभाः ॥ २ ॥**

असनम् । स्पन्दनम् । चन्दनं मलयजम् । हरिद्रः । सुरदारुर्देवदारुः । तिन्दुकी । शालः । एते सर्व एव वृक्षविशेषाः । काश्मरी । अञ्जनं शोभाञ्जनम् । पद्मकः । शाकः । शिंशपा च । एते वृक्षाः । सर्व एव शयने शय्यायामासने च शुभाः शुभदाः ॥ २ ॥

अथाशुभवृक्षानाह ।

**अशनिजलानिलहस्तिप्रपातिता मधुविहङ्गकृतनिलयाः ।**
**चैत्यश्मशानपथिजोर्ध्वशुष्कवल्लीनिबद्धाश्च ॥ ३ ॥**

अशनिर्विद्युत् । जलं पानीयम् । अनिलो वायुः । हस्ती करी । एभिर्ये वृक्षाः प्रपातिताः प्रपीडिताः । ये मधुविहङ्गकृतनिलयाः । मधुभिर्मक्षिकाभिः । विहङ्गैश्च पक्षिभिः कृता निलया निवासस्थानानि येषाम् । चैत्यः प्रधानवृक्षः । श्मशानजः पितृवनजातः । पथिजो मार्गजातः । ऊर्ध्वशुष्कः स्थानस्य एवोपरि भागे शुष्को नीरसो जातः । वल्लीभिर्निबद्धः । एते सर्वे एवाशुभाः ॥ ३ ॥

अन्यदप्याह ।

**कण्टकिनो ये च स्युर्महानदीसङ्गमोद्भवा ये च ।**
**सुरभवनजाश्च न शुभा ये चापरयाम्यदिक्पतिताः ॥ ४ ॥**

कण्टकिन इति । ये च कण्टकिनः सकण्टकाः स्युर्भवेयुः । ये च महानदीसङ्गमोद्भवाः । महानद्यः प्रधानसरितः । सङ्गमः संयोगो यत्र तत्र येषामुद्भव उत्पत्तिः । तथा ये च सुरभवनजाता देववेश्मनि जाताः । ते सर्वे एव वृक्षा न शुभाः । ये चाऽपरस्यां पश्चिमायां दक्षिणस्यां दिशि पतितास्तेऽपि न शुभाः ॥ ४ ॥

अथाप्रशस्तवृक्षरचितस्य शयनासनस्य फलमनिष्टमाह ।

**प्रतिषिद्धवृक्षनिर्मितशयनासनसेवनात् कुलविनाशः ।**
**व्याधिभयव्ययकलहा भवन्त्यनर्था अनेकविधाः ॥ ५ ॥**

प्रतिषिद्धेनाप्रशस्तेन वृक्षेण तरुणा यन्निर्मितं कृतं शयनमासनं वा तस्य सेवनात् कुलविनाशो वंशक्षयो भवति । तथा व्याधिः पीडा । भयं भीतिः । व्ययमर्थहानिः । कलहोऽप्रीतिः । एते भवन्ति । अनेकविधाः अनेकप्रकाराश्चानर्था अनर्थकृतयो भवन्ति सन्ति ॥ ५ ॥

अथ प्राक्छिन्नस्य दारुणः परीक्षणवशेन फलमाह ।

**पूर्वच्छिन्नं यदि वा दारु भवेत्तत्परीक्ष्यमारम्भे ।**
**यद्यारोहेत् तस्मिन् कुमारकः पुत्रपशुदं तत् ॥ ६ ॥**

यदि वा कदाचिद्दारु काष्ठं पूर्वच्छिन्नं प्राक्कल्पितं भवेत् स्यात् तदा तद्दारावारम्भे प्रारम्भकाले परीक्ष्यं विचार्यम् । "अ[१]शनिजले"त्यादिनोक्तलक्षणेन तस्मिन् पूर्वच्छिन्ने दारुणि यदि कश्चित्कुमारको बालक आगत्याऽऽरोहेदु-पर्युपविशति तदा तत्कृतं शयनासनं पुत्रपशुदं भवति । पुत्रान् सुतान् पशूंश्च-तुष्पदान् ददाति ॥ ६ ॥

अथारम्भकाले शुभचिह्नान्याह ।

**सितकुसुममत्तवारणदध्यक्षतपूर्णकुम्भरत्नानि ।**
**मङ्गल्यान्यन्यानि च दृष्ट्वारम्भे शुभं ज्ञेयम् ॥ ७ ॥**

सितकुसुमानि श्वेतपुष्पाणि । मत्तवारणो मत्तहस्ती । दधि क्षीर-विकारः । अक्षता यवाः । पूर्णकुम्भो जलपूर्णो घटः । रत्नानि मणयः । मङ्गल्यानि । अन्यानि शङ्खशब्दवेदध्वनिगोचक्रवाककोकिलादीनां शब्दाः । आरम्भे आरम्भकाले दृष्ट्वाऽवलोक्य शुभं श्रेयं ज्ञातव्यमिति ॥ ७ ॥

१ अस्यैवाध्यायस्य २ श्लोकः ।

अथ नृपस्य शय्यायाः प्रमाणमाह ।

**कर्माङ्गुलं यवाष्टकमुदरासक्तं तुषैः परित्यक्तम् ।**
**अङ्गुलशतं नृपाणां महती शय्या जयाय कृता ॥ ८ ॥**

अष्टौ यवा यवाष्टकम् । तुषैः परित्यक्तं तुषरहितम् । परस्परमन्योऽन्यमुदरासक्तं कर्माङ्गुलसञ्ज्ञं भवति । तेनाङ्गुलप्रमाणेन नृपाणां राज्ञामङ्गुलशतं महती दीर्घा शय्या कृता रचिता जयाय भवति ॥ ८ ॥

अथ नृपपुत्रमन्त्रिबलपतिपुरोधसां शय्याप्रमाणमाह ।

**नवतिः सैव षडूना द्वादशहीना त्रिषट्कहीना च ।**
**नृपपुत्रमन्त्रिबलपतिपुरोधसां स्युर्यथासङ्ख्यम् ॥ ९ ॥**

अङ्गुलानां नवतिर्नृपपुत्रस्य राज्ञः सुतस्य दीर्घा शय्या कार्या । सैव नवतिः षडूना चतुरशीत्यङ्गुलानि सचिवस्य मन्त्रिणः दीर्घा कार्या । सैव नवतिर्द्वादशहीनाष्टसप्तत्यङ्गुलानि बलपतेः सेनापतेः । सैव नवतिस्त्रिषट्कहीना अष्टादशभिरङ्गुलैर्न्यूना पुरोधस आचार्यस्य शय्या दीर्घा कार्या । दैवज्ञस्याप्येवं समानत्वादिति ॥ ९ ॥

अथ विष्कम्भलक्षणं पादोच्छ्रायप्रमाणं चाह ।

**अर्धमतोऽष्टांशोनं विष्कम्भो विश्वकर्मणा प्रोक्तः ।**
**आयामत्र्यंशसमः पादोच्छ्रायः सकुक्ष्यशिराः ॥ १० ॥**

अतोऽस्माद्दैर्घ्यादर्धं दलमष्टांशोनमष्टभागवर्जितं विष्कम्भो विस्तारो विश्वकर्मणा प्रोक्तः कथितः । तद्यथा । अङ्गुलशतं नृपशय्या । अतोऽर्धं पञ्चाशदङ्गुलानि । एतदष्टांशोनं चिचत्वारिंशदङ्गुलानि सषड्यवानि विष्कम्भो वैपुल्यम् । एवं स्वदैर्घ्यानुसारेणान्यासामपि कल्पनीयम् । आयामत्र्यंशसम इति । आयामस्य दैर्घ्यस्य यस्त्र्यंशस्तृतीयो भागस्तत्समस्तत्तुल्यः पादस्योच्छ्रायः कार्यः । स च सकुक्ष्यशिराः । सह कुक्ष्येण शिरो वर्तते इति सकुक्ष्यशिराः पादोच्छ्राय इति । एवमन्यासामपि स्वदैर्घ्यानुसारेण कल्पनीयम् ॥ १० ॥

तथा च विश्वकर्मणोक्तम् ।

अन्योन्यमुदरासक्तं वितुषं तु यवाष्टकम् ।
कर्माङ्गुलमिति प्रोक्तं तेन मानेन कारयेत् ॥

नृपाणामङ्गुलशतं शय्या दीर्घा जयावहा ।
नवतिर्नृपपुत्रस्य सा षड्ना तु मन्त्रिणः ॥
द्वादशोना बलेशस्य षिषड्ढोना पुरोधसः ।
देवसमानमेवैतत् तुल्यत्वात् कारयेततः ॥
दैर्घ्यमष्टमभागोनं विष्कम्भः परिकीर्तितः ।
आयामत्र्यंशतुल्यश्च पादोच्छ्रायः प्रकीर्तितः ॥
सकुक्ष्यशिरसो ज्ञेयः शय्यायाः शुभकारकः ।
ऊनाधिका च या शय्या सा ज्ञेया स्वामिनोऽशुभा ॥

अधुना दारूणां विशेषफलमाह ।

यः सर्वः श्रीपर्ण्या पर्यङ्को निर्मितः स धनदाता ।
असनकृतो रोगहरस्तिन्दुकसारेण वित्तकरः ॥ ११ ॥
यः केवलशिंशपया विनिर्मितो बहुविधं स वृद्धिकरः ।
चन्दनमयो रिपुघ्नो धर्मयशोदीर्घजीवितकृत् ॥ १२ ॥
यः पद्मकपर्यङ्कः स दीर्घमायुः श्रियं श्रुतं वित्तम् ।
कुरुते शालेन कृतः कल्याणं शाकरचितश्च ॥ १३ ॥
केवलचन्दनरचितं काञ्चनगुप्तं विचित्ररत्नयुतम् ।
अध्यासन् पर्यङ्कं विबुधैरपि पूज्यते नृपतिः ॥ १४ ॥

यः सर्वः श्रीपर्ण्या इति । यः पर्यङ्कः सर्वो निःशेषं श्रीपर्ण्या निर्मितो रचितः । स धनदाता वित्तप्रदो भवति । यः सर्वोऽसनकृतः स रोगहरो रोगान् हरति विनाशयति । यः सर्वस्तिन्दुकसारेण रचितः स वित्तकरो धनकरः ॥ ११ ॥

यः केवल इति । यः पर्यङ्कः केवलः शिंशपयैव निर्मितः स बहुविधं बहुप्रकारं वृद्धिकरः । यः सर्वश्चन्दनमयश्चन्दनविरचितः पर्यङ्कः स रिपुघ्नस्तथा धर्मं यशः कीर्तिं दीर्घं च जीवितं करोति ॥ १२ ॥

यः पद्मकपर्यङ्क इति । यः सर्वः पद्मकरचितः पर्यङ्कः स आयुर्जीवितं दीर्घं चिरकालस्थायि । श्रियं लक्ष्मीम् । श्रुतं विद्याशुभं धर्म्मम् । वित्तं

र्थं कुरुते। तथा शालेन कृतो रचितः शाकरचितश्च कल्याणं श्रेयः कुरुते॥ १३॥

केवलचन्दनरचितमिति। यत्पर्यङ्कं केवलेनैव चन्दनेन विरचितं निर्मितं तथा काञ्चनेन सुवर्णेन गुप्तमाच्छादितम्। विचित्रैर्नानाकारै रत्नैर्मणि-भिर्युक्तं तन्नृपो राजा अध्यासन्नुपरि तिष्ठन् विबुधैर्देवैरपि पूज्यतेऽर्च्यते॥ १४॥

अथ व्यतिमिश्रदारूणां फलमाह।

**अन्येन समायुक्ता न तिन्दुकी शिंशपा च शुभफलदा।**
**न श्रीपर्णी न च देवदारुवृक्षो न चाप्यसनः॥ १५॥**
**शुभदौ तु शालशाकौ परस्परं संयुतौ पृथक् चैव।**
**तद्वत् पृथक् प्रशस्तौ सहितौ च हरिद्रककदम्बौ॥ १६॥**
**सर्वः स्पन्दनरचितो न शुभः प्राणान् हिनस्ति चाम्बकृतः।**
**असनोऽन्यदारुसहितः क्षिप्रं दोषान् करोति बहून्॥ १७॥**
**अम्बस्पन्दनचन्दनवृक्षाणां स्पन्दनाच्छुभाः पादाः।**
**फलतरुणा शयनासनमिष्टफलं भवति सर्वेण॥ १८॥**

अन्येन समायुक्तेति। तिन्दुकी शिंशपा च अन्येनापरेण दारुणा समा-युक्ता सहिता शुभफलदा न भवति। अशुभेत्यर्थः। न श्रीपर्णी च देवदारुर्युक्तः शुभफलदो भवति। एवं श्रीपर्णी चासनो युक्तो न शुभफलदो भवति॥ १५॥

शुभदाविति। शालशाकौ परस्परमन्योन्यं संयुक्तौ शुभदौ पृथक् चासंयुक्तौ केवलावपि शुभदौ। तद्वत्तेनैव प्रकारेण पृथक्पृथक्सहितौ च हरिद्रककदम्बौ प्रशस्तौ॥ १६॥

सर्वः स्पन्दनरचित इति। सर्वो निःशेषं स्पन्दनेन रचितो निर्मितो न शुभः पर्यङ्कः। यतः प्राणानसून् हिनस्ति नाशयति। अम्बकृतश्चश-ब्दादेवमेव प्राणान् हिनस्ति। असनोऽन्येनापरेण दारुणा संयुक्तः सहितः क्षिप्रमाश्वेव बहून् प्रभूतान् दोषान् करोति॥ १७॥

अम्बस्पन्दनेति। अम्बः। स्पन्दनम्। चन्दनम्। एषां वृक्षाणां स्पन्दनात्स्पन्दनवृक्षात् पादाः शुभाः। सर्वेण येन केनचित्फलदारुणा फलवृक्षेण शय्यासनमिष्टं फलं शुभफलं भवति॥ १८॥

अथ सर्वेषां वृक्षाणां प्रशस्तगजदन्तेनालङ्कारविधिः कार्य इत्येतदाह ।

**गजदन्तः सर्वेषां प्रोक्ततरूणां प्रशस्यते योगे ।**
**कार्योऽलङ्कारविधिर्गजदन्तेन प्रशस्तेन ॥ १९ ॥**

प्रोक्ततरूणां कथितवृक्षाणां सर्वेषां निःशेषाणां योगे गजदन्तो हस्तिरदः । प्रशस्यते स्तूयते इष्यत इत्यर्थः । प्रशस्तेन लक्षणसंयुक्तेन गजदन्तेन हस्तिरदेनालङ्कारविधिः कार्यः । शोभामुत्पादयेत् ॥ १९ ॥

अथ गजदन्तलक्षणमाह ।

**दन्तस्य मूलपरिधिं द्विरायतं प्रोह्य कल्पयेच्छेषम् ।**
**अधिकमनूपचराणां न्यूनं गिरिचारिणां किञ्चित् ॥ २० ॥**

गजदन्तस्य मूले यः परिधिः परिमण्डलं द्विरायतं द्विगुणं प्रोह्य त्यक्त्वा शेषं कल्पयेच्छिन्द्यात् । एतदुक्तं भवति । मूले यः परिणाहो गजदन्तस्य तद्द्विगुणमायतं गजदन्तमूलात् परित्यज्य शेषं कल्पयेत् । बहूदको देशोऽनूपः । अनूपचराणां गजानां दन्तमूलपरिधिं द्विरायतमधिकमपि प्रोह्य शेषं कल्पयेत् । गिरिचारिणां पर्वतचारिणां न्यूनमपि प्रोह्य शेषं कल्पयेत् । यतः पर्वतशिलास्तद्दन्तान् घर्षन्ति ॥ २० ॥

अथ गजदन्तस्य कल्पितस्य शुभाशुभमाह ।

**श्रीवृक्षवर्धमानच्छत्रध्वजचामरानुरूपेषु ।**
**छेदे दृष्टेष्वारोग्यविजयधनवृद्धिसौख्यानि ॥ २१ ॥**
**प्रहरणसदृशेषु जयो नन्द्यावर्त्ते प्रनष्टदेशाप्तिः ।**
**लोष्टे तु लब्धपूर्वस्य भवति देशस्य सम्प्राप्तिः ॥ २२ ॥**
**स्त्रीरूपे धननाशो भृङ्गारेऽभ्युत्थिते सुतोत्पत्तिः ।**
**कुम्भेन निधिप्राप्तिर्यात्राविघ्नं च दण्डेन ॥ २३ ॥**
**कृकलासकपिभुजङ्गेष्वसुभिक्षव्याधयो रिपुवशित्वम् ।**
**गृध्रोलूकध्वाङ्क्षश्येनाकारेषु जनमरकः ॥ २४ ॥**
**पाशेऽथवा कबन्धे नृपमृत्युर्जनविपत् स्रुते रक्ते ।**
**कृष्णे श्यावे रूक्षे दुर्गन्धे चाशुभं भवति ॥ २५ ॥**

श्रीवृक्षवर्धमान इति । श्रीवृक्षः प्रसिद्धः । बिल्वः । वर्धमानश्चिह्नम् । वर्धमानो वास्तुसदृशं सरागमिति केचित् । छत्त्रमातपत्रम् । ध्वजः प्रसिद्धो विविधपटविरचितं चिह्नम् । चामरं बालव्यजनम् । एषामनुरूपेषु सदृशेषु । छेदे दन्तच्छेदे । दृष्टेष्ववलोकितेषु । आरोग्यमरोगित्वम् । विजयो विशेषेण जयः । धनवृद्धिर्वित्तवर्धनम् । सौख्यम् । एतानि भवन्ति ॥ २१ ॥

प्रहरणसदृशेष्विति । प्रहरणमायुधादि । प्रहरणसदृशेषु छेदे दृष्टेषु जयो भवति । नन्द्यावर्तसदृशं तस्मिन् दृष्टे प्रनष्टस्यापहृतस्य देशस्य प्राप्तिर्लाभो भवति । लोष्टं मृत्खण्डम् । लोष्टसदृशेषु छेदे दृष्टेषु लब्धपूर्वस्य देशस्य सम्प्राप्तिर्लाभो भवति । पूर्वं लब्धो लब्धपूर्वः । आदावेव लब्धः सम्प्राप्तो हस्तीभूतः स लब्धपूर्वः । देशस्य सम्प्राप्तिर्लाभो भवति तस्येति ॥ २२ ॥

स्त्रीरूप इति । स्त्रीरूपे छेदे दृष्टे सुतोत्पत्तिः । पुत्त्रजन्म भवति । कुम्भेन कुम्भसदृशे छेदे चिन्हे दृष्टे निधिप्राप्तिर्निधिलाभो भवति । दण्डेन दण्डाकारेण यात्राविघ्नमगमनं भवति ॥ २३ ॥

कृकलासेति । कृकलासः प्राणिविशेषः । कपिर्वानरः । भुजङ्गः सर्पः । एवंविधेषु छेदे दृष्टेषु असुभिक्षं दुर्भिक्षम् । व्याधयः पीडाः । रिपुवशित्वं शत्रूणां वश्यत्वम् । गृध्रोलूकौ पक्षिणौ । ध्वाङ्क्षः काकः । श्येनो वाजिकः । एतेषामाकारेषु दृष्टेषु छेदे जनानां मरको भवति ॥ २४ ॥

पाशेऽथवेति । पाशः प्रसिद्धो रज्जुरूपः । कबन्धश्छिन्नशिराः पुरुषः । एवंविधेऽथवा छेदे दृष्टे नृपस्य राज्ञो मरणं मृत्युर्भवति । रक्तशोणिते स्रुते निर्गते छेदाज्जनानां विपदो भवन्ति । कृष्णे कृष्णवर्णे । श्यावे मलिने । रूक्षे परुषे । दुर्गन्धे च छेदात् । अशुभमनिष्टं भवति ॥ २५ ॥

अथ शुभच्छेदानां लक्षणं शयने च तथाविधं फलमाह ।

**शुक्लः समः सुगन्धिः स्निग्धश्च शुभावहो भवेच्छेदः ।**
**अशुभशुभच्छेदा ये शयनेष्वपि ते तथा फलदाः ॥ २६ ॥**

शुक्लः शुक्लवर्णः । समस्तुल्यः । सुगन्धिः शोभनगन्धिः । स्निग्धो निर्मलः । एवंविधश्छेदः शुभावहो भवति । ये छेदा अशुभाः शुभा दन्ते प्रोक्तास्ते शयनेष्वपि शय्यायां लग्नास्तथा तेनैव प्रकारेण फलदाः । तथा-

विधं फलं भवति । शुभमशुभं वा प्रयच्छतीत्यर्थः । दारुणामप्येवमेव वेदितव्याः ॥ २६ ॥

अथ दारुणां विनियोगमाह ।

**ईषायोगे दारु प्रदक्षिणाग्रं प्रशस्तमाचार्यैः ।**
**अपसव्यैकदिगग्रे भवति भयं भूतसञ्जनितम् ॥ २७ ॥**

ईषाशब्देन चत्वारि काष्ठानि घटितान्युच्यन्ते । शिरःपादभागयोर्द्वौ वामदक्षिणभागयोर्द्वाविति । तेषां परस्परं यच संयोगः शिरःपादकाष्ठयोर्द्वे द्वे छिद्रे कृत्वा वामदक्षिणपादकाष्ठानि तेषु क्षिपेत् । तत्रायं क्रमः । ईषायोगे दारु प्रदक्षिणाग्रमाचार्यैः प्रशस्तमुक्तम् । प्रादक्षिण्येनाग्रं यस्मिन् । अपसव्यैकदिगग्र इति । अपसव्येऽप्रदक्षिणस्थे । पूर्वोक्तविन्यस्तस्य शिरःकाष्ठस्य यदग्रं तत्र दक्षिणदिक्स्थकाष्ठमूलं क्षिपेत् । तस्याग्रे पादान्तभागस्थं काष्ठमूलं क्षिपेत् । तदग्र उत्तरदिग्भागस्थकाष्ठमूलं क्षिपेत् । तदग्रे शिरःकाष्ठमूलं क्षिपेत् । एवं पूर्वदक्षिणपश्चिमोत्तरसंस्थानेन न्यासे कृते प्रदक्षिणाग्रं भवति । अपसव्ये न प्रदक्षिणस्थे पूर्वोक्तन्यासाद्विपर्ययस्थे तथैकदिगग्रस्थिते दारौ भूतसञ्जनितं भूतग्रहोत्पन्नं भयं भीतिर्भवति । शिरःपादभागकाष्ठयोरेकस्यां दिश्यग्रं यद्भवति तदेकदिगग्रम् ॥ २७ ॥

अथ पादानां लक्षणमाह ।

**एकेनावाक्शिरसा भवति हि पादेन पादवैकल्यम् ।**
**द्वाभ्यां न जीर्यतेऽन्नं त्रिचतुर्भिः क्लेशवधबन्धाः ॥ २८ ॥**

एकेन पादेन । अवाक्शिरसा अधोमुखेन । मूलाग्रविपर्ययस्थितेन । पादवैकल्यं स्वामिनो भवति । द्वाभ्यां पादाभ्यामेवंविधाभ्यामन्नं भुक्तं न जीर्यते न परिणामं याति । त्रिभिश्चतुर्भिश्च क्लेशवधबन्धा भवन्ति ॥ २८ ॥

अथ पादस्य ग्रन्थियुक्तस्य लक्षणमाह ।

**सुषिरेऽथवा विवर्णे ग्रन्थौ पादस्य शीर्षगे व्याधिः ।**
**पादे कुम्भो यश्च ग्रन्थौ तस्मिन्नुदररोगः ॥ २९ ॥**
**कुम्भाधस्ताज्जङ्घा तत्र कृतो जङ्घयोः करोति भयम् ।**
**तस्याश्चाधारोऽधः क्षयकृद्द्रव्यस्य तत्र कृतः ॥ ३० ॥**

**खुरदेशे यो ग्रन्थिः खुरिणां पीडाकरः स निर्दिष्टः ।**
**ईषाशीर्षण्ययोश्च त्रिभागसंस्थो भवेन्न शुभः ॥ ३१ ॥**

सुषिरेऽथवेति । पादस्य शीर्षगे शिरोगते ग्रन्थौ सुषिरे अन्तरसारे. अथवा विवर्णे विगतवर्णे दारुवर्णान्तरमाश्रिते व्याधिर्भवति शिरस्येव स्वामिनः । तस्मिन्नेव पादे यश्च कुम्भः कुम्भभागस्तस्मिन् ग्रन्थौ स्थिते सत्युदररोगो भवति ॥ २९ ॥

कुम्भाधस्ताद्या जङ्घा तत्र कृतो ग्रन्थिर्जङ्घयोर्भयं करोति । तस्या जङ्घाया अधस्ताद्य आधारस्तत्र कृतो ग्रन्थिर्द्रव्यस्य धनादिकस्य क्षयकृद्भवति ॥ ३० ॥

खुरदेश इति । यो ग्रन्थिः खुरदेशे पादस्थाने स्थितः खुरिणामश्वादीनां स पीडाकरो निर्दिष्टः कथितः । ईषा पार्श्वपट्टिका । शीर्षण्यं शिरःकाष्ठम् । तयोः समाने त्रिभागे तृतीयांशे यः स्थितो ग्रन्थिः स स्वामिनो न शुभो भवति । पादभागस्य काष्ठद्वितीयपट्टिका वा अपि त्रिभागसंस्था न शुभदैव ॥ ३१ ॥

अधुना छिद्राणां नामान्याह ।

**निष्कुटमथ कोलाक्षं सूकरनयनं च वत्सनाभं च ।**
**कालकमन्यद्धुन्धुकमिति कथितश्छिद्रसङ्क्षेपः ॥ ३२ ॥**

निष्कुटं नाम छिद्रम् । अथशब्दश्चार्थे । कोलाक्षम् । सूकरनयनं च । वत्सनाभं च । कालकम् । अन्यदपरं धुन्धुकम् । इत्येवंप्रकारेण छिद्राणां सङ्क्षेपः समासः कथित उक्तः ॥ ३२ ॥

अथैतेषां लक्षणमाह ।

**घटवत् सुषिरं मध्ये सङ्कटमास्ये च निष्कुटं छिद्रम् ।**
**निष्पावमाषमात्रं नीलं छिद्रं च कोलाक्षम् ॥ ३३ ॥**
**सूकरनयनं विषमं विवर्णमध्यर्धपर्वदीर्घं च ।**
**वामावर्त्तं भिन्नं पर्वमितं वत्सनाभाख्यम् ॥ ३४ ॥**
**कालकसञ्ज्ञं कृष्णं धुन्धुकमिति यद्भवेद्विनिर्भिन्नम् ।**
**दारुसवर्णं छिद्रं न तथा पापं समुद्दिष्टम् ॥ ३५ ॥**

घटवत् सुषिरं मध्ये इति। यत्सुषिरं छिद्रं मध्ये मध्यभागे घटवत् कुम्भवत्। आस्ये मुखे च सङ्कटमल्पं तन्निष्कुटं नाम। निष्पावाः शालयः। निष्पावमात्रं निष्पावतुल्यं माषमात्रं च वा। नीलं नीलवर्णं तच्छिद्रं कोलाक्षसञ्ज्ञम् ॥ ३३ ॥

सूकरनयनमिति। सूकरनयनसञ्ज्ञं विषममतुल्यम्। विवर्णं विगतवर्णम्। अध्यर्धपर्वदीर्घमधिकमर्धं यस्य पर्वणः सार्धं पर्व दीर्घं भवति। वामावर्तं प्रदक्षिणावर्तं भिन्नं द्वितीयभागदृश्यं पर्वमितं पर्वप्रमाणं वत्सनाभाख्यं वत्सनाभसञ्ज्ञं छिद्रम् ॥ ३४ ॥

कालकसञ्ज्ञमिति। कालकसञ्ज्ञं कृष्णं कृष्णवर्णं भवति। यद्विनिर्भिन्नं द्वितीयभागदृश्यं कृष्णवर्णं च तद्धुन्धुकसञ्ज्ञम्। दारुसवर्णं दारुसदृशवर्णं यच्छिद्रं न तत्र तथैषामेवं दुष्टफलमुद्दिष्टमुक्तम्। एतदुक्तं भवति। अशुभमपि छिद्रं दारुसवर्णं यदि भवति तदातिदुष्टफलं न भवति ॥ ३५ ॥

अथैतेषां फलान्याह।

**निष्कुटसञ्ज्ञे द्रव्यक्षयस्तु कोलेक्षणे कुलध्वंसः।**
**शस्त्रभयं सूकरके रोगभयं वत्सनाभाख्ये ॥ ३६ ॥**
**कालकधुन्धुकसञ्ज्ञं कीटैर्विद्धं च न शुभदं छिद्रम्।**
**सर्वं ग्रन्थिप्रचुरं सर्वत्र न शोभनं दारु ॥ ३७ ॥**

निष्कुटसञ्ज्ञे छिद्रे द्रव्यस्य अर्थस्य क्षयो विनाशो भवति। कोलेक्षणे कोलाक्षसञ्ज्ञे कुलस्य वंशस्य ध्वंसो विनाशः। सूकरके सूकरनयने शस्त्रभयं भवति। वत्सनाभाख्ये रोगभयम् ॥ ३६ ॥

कालकच्छिद्रं तथा धुन्धुकाख्यं च यच्च कीटैः क्रिमिभिर्विद्धं तच्छिद्रं न शुभदं दुष्टफलम्। यद्दारु सर्वं ग्रन्थिप्रचुरं समस्तमेव ग्रन्थिबहुलं तत् सर्वत्र सर्वस्मिन् वस्तुनि न शोभनं प्रशस्तफलम् ॥ ३७ ॥

अथ मिश्रदारुरचितस्य शयनस्य फलमाह।

**एकद्रुमेण धन्यं वृक्षद्वयनिर्मितं च धन्यतरम्।**
**त्रिभिरात्मजवृद्धिकरं चतुर्भिरर्थं यशश्चाग्र्यम् ॥ ३८ ॥**

**पञ्चवनस्पतिरचिते पञ्चत्वं याति तत्र यः शेते ।**
**षट्सप्ताष्टतरूणां काष्ठैर्घटिते कुलविनाशः ॥ ३९ ॥**

यच्छय्यासनमेकद्रुमेणैकवृक्षेण निर्मितं तद्धन्यम् । वृक्षद्वयनिर्मितं धन्यतरम् । त्रिभिर्वृक्षैः प्रागुक्तैर्विनिर्मितं तदात्मजानां पुत्राणां वृद्धिकरम् । चतुर्भिर्यन्निर्मितं तदर्थं धनम् । अर्थ्यं प्रधानं यशः कीर्तिं च करोति ॥ ३८ ॥

पञ्चवनस्पतिरचित इति । पञ्चभिर्वनस्पतिभिर्वृक्षै रचिते निर्मिते शयनासने शयने यः शेते स्वपिति स पञ्चत्वं याति । म्रियत इत्यर्थः । षण्णां सप्तानामष्टानां च तरूणां वृक्षाणां काष्ठैर्घटिते निर्मिते कुलविनाशो वंशक्षयो भवति ॥ ३९ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ शय्यासनलक्षणं नामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

---

## अथ रत्नपरीक्षा व्याख्यायते ।

तत्र मणीनां तावद्गुणप्रधानार्थेलक्षणमाह ।

**रत्नेन शुभेन शुभं भवति नृपाणामनिष्टमशुभेन ।**
**यस्मादतः परीक्ष्यं दैवं रत्नाश्रितं तज्ज्ञैः ॥ १ ॥**

नृपाणां राज्ञां रत्नेन मणिना शुभेन शुभलक्षणेन संयुक्तेन शुभं दैवं भवति । अशुभेनानिष्टमशुभं दैवं भवति । दैवशब्देन प्राक्तनकर्मणां विपाक उच्यते । यस्मादेवमतोऽस्मात्तज्ज्ञै रत्नलक्षणज्ञै रत्नाश्रितं रत्नसंस्थितं दैवं परीक्ष्यं विचार्यम् ॥ १ ॥

रत्नपरीक्षायामुपलरत्नानामधिकारः क्रियत इत्येतदाह ।

**द्विपहयवनितादीनां स्वगुणविशेषेण रत्नशब्दोऽस्ति ।**
**इह तूपलरत्नानामधिकारो वज्रपूर्वाणाम् ॥ २ ॥**

द्विपो हस्ती । हयोऽश्वः । वनिता स्त्री । अधिकरणाज्जातौ जातौ यदुत्कृष्टं रत्नं तदभिधीयते । एवमादीनां स्वगुणविशेषेणात्मीयगुणप्रभावेण रत्नशब्दोऽस्ति विद्यते ।

तथा च ।

जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयत इति ।

इह त्वस्यां रत्नपरीक्षायामुपलरत्नानां पाषाणमणीनां वज्रपूर्वाणां वज्र-प्रथमानामधिकारः क्रियत इति ॥ २ ॥

अथ रत्नानामुत्पत्तिप्रदर्शनार्थं मतभेदमाचार्याणामाह ।

**रत्नानि बलाद्दैत्याद्दधीचितोऽन्ये वदन्ति जातानि ।**
**केचिद्भुवः स्वभावाद्वैचित्र्यं प्राहुरुपलानाम् ॥ ३ ॥**

बल इति दैत्याख्यस्तस्माद्बलाद्रत्नानि जातानि सम्भूतानि । स किलेन्द्रेण निहतस्तस्यास्थिभ्यो रत्नान्युत्पन्नानि ।

तथा च ।

सम्भूतानि बलाद्दैत्याद्रत्नानि विविधानि च ।
गतानि नानावर्णत्वमस्थिभ्यो भूमिसंश्रयात् ॥

दधीचितोऽन्य इति । अन्येऽपरे दधीचिमुनेरस्थिभ्यो जातानीति वदन्ति ।

तथा च ।

रत्नानि दधीचिमुनेर्जातानि सहस्रशो लोके ।
अस्थिभ्यो भूमिवशात् नानावर्णत्वमागतानि गुणैः ॥

केचिदिति । केचिदन्ये आचार्या भुवो भूमेः स्वभावाज्जातानि रत्नानि विविधानि च । उपला रत्नरूपत्वं प्राप्ताः कालान्तरेणेति प्राहुरुक्तवन्तः ॥ ३ ॥

अथ रत्नानां नामान्याह ।

**वज्रेन्द्रनीलमरकतकर्केतरपद्मरागरुधिराख्याः ।**
**वैदूर्यपुलकविमलकराजमणिस्फटिकशशिकान्ताः ॥ ४ ॥**
**सौगन्धिकगोमेदकशङ्खमहानीलपुष्परागाख्याः ।**
**ब्रह्ममणिज्योतीरससस्यकमुक्ताप्रवालानि ॥ ५ ॥**

वज्रेन्द्रनीलेति । वज्रम् । इन्द्रनीलः । मरकतः । कर्केतरः । पद्मरागः । रुधिराख्यः । वैदूर्यम् । पुलकः । विमलकः । राजमणी राजवान् । स्फटिकः । शशिकान्तश्चन्द्रकान्तः ॥ ४ ॥

सौगन्धिकः । गोमेदकः । शङ्खः । महानीलः । पुष्परागाख्यः । ब्रह्ममणिः । ज्योतीरसः । सस्यकः । मुक्ता मुक्ताफलानि । प्रवालं विद्रुमः । एतानि रत्नभेदानि । इत्यत उत्कृष्टानि चत्वारि वज्रमुक्तापद्मरागमरकताख्यानि तेषामेव लक्षणमाचार्यः करोतीति संबन्धः ॥ ५ ॥

अथ वज्रमणेः सप्ताकारस्थानानि लक्षणं चाह ।

वेणातटे विशुद्धं शिरीषकुसुमप्रभं च कौशलकम् ।
सौराष्ट्रकमाताम्रं कृष्णं सौर्पारकं वज्रम् ॥ ६ ॥
ईषत्ताम्रं हिमवति मतङ्गजं वल्लपुष्पसङ्काशम् ।
आपीतं च कलिङ्गे श्यामं पौण्ड्रेषु सम्भूतम् ॥ ७ ॥

वेणा नाम नदी तस्यास्तटे तीरे विशुद्धं दोषरहितम् । शिरीषकुसुमप्रभं शिरीषकुसुमसङ्काशं श्वेतपीतवर्णं तत्कौशलकं कोशलदेशसम्भूतम् । वज्रमाताम्रमाताम्रवर्णमीषल्लोहितं तत्तु सौराष्ट्रं सुराष्ट्रसम्भूतं वज्रम् । वज्रं कृष्णं कृष्णवर्णं सौर्पारकं सौर्पारदेशे सम्भूतं जातम् ॥ ६ ॥

ईषत्ताम्रमिति । ईषत् किञ्चित्ताम्रं ताम्रवर्णं वज्रं हिमवति पर्वते हिमवत्सम्भूतम् । वल्लपुष्पसङ्काशं वल्लपुष्पनिभमीषत्पाण्डुरं मतङ्गजं मतङ्गदेशसम्भूतम् । आपीतं पीतवर्णं कलिङ्गे कलिङ्गदेशोद्भवं वज्रम् । श्यामं श्यामवर्णं पौण्ड्रेषु सम्भूतं पौण्ड्रदेशजातमिति ॥ ७ ॥

अथैतेषां दैवत्यमाह ।

ऐन्द्रं षडश्रि शुक्लं याम्यं सर्पास्यरूपमसितं च ।
कदलीकाण्डनिकाशं वैष्णवमिति सर्वसंस्थानम् ॥ ८ ॥
वारुणमबलागुह्योपमं भवेत् कर्णिकारपुष्पनिभम् ।
शृङ्गाटकसंस्थानं व्याघ्राक्षिनिभं च हौतभुजम् ॥ ९ ॥
वायव्यं च यवोपममशोककुसुमप्रभं समुद्दिष्टम् ।
स्रोतः खनिः प्रकीर्णकमित्याकरसम्भवस्त्रिविधः ॥ १० ॥

ऐन्द्रमिति । यद्वज्रं षडश्रि षड्भिरश्रिभिर्युक्तम् । षट्कोणमित्यर्थः । शुक्लं शुक्लवर्णम् । तदैन्द्रम् । इन्द्रो देवतास्यैन्द्रम् । यद्वासितं कृष्णवर्णं सर्पास्य-

रूपं भुजङ्गमुखसदृशं तद्याम्यं यमदैवतम् । यच्च कदलीकाण्डनिकाशं नील-पीतमित्यर्थः । सर्वसंस्थानं सर्वाण्यशेषाणि संस्थानानि यस्य । सर्वाकारम् । तद्वैष्णवं विष्णुदैवत्यम् ॥ ८ ॥

वारुणमिति । अबला स्त्री तस्या गुह्यं वराङ्गं तदुपमं तद्विकार-स्त्रीमणिसदृशम् । तद्वारुणम् । कर्णिकारपुष्पनिभम् । कर्णिकारो वृक्षस्तत्कुसुम-प्रभम् । शृङ्गाटकसंस्थानं त्र्यस्रम् । व्याघ्राक्षिनिभं व्याघ्रनेत्रसदृशं नीललोहितं तद्वज्रं हौतभुजमाग्नेयम् ॥ ९ ॥

वायव्यं चेति । यद्वज्रं यवोपमं यवाकारं मध्यस्थूलम् । अशोककु-सुमप्रभमशोकपुष्पसदृशं लोहितवर्णं तद्वायव्यं वायुदैवत्यमुक्तम् । स्रोतः खनिः प्रकीर्णकमिति । स्रोतो यतो जलं स्रवति । खनिः खन्यत इति खनिः खातम् । प्रकीर्णकं यस्यां भूमौ मणयो भवन्ति । समुद्रे यथा । एवं स्रोतः खनिः प्रकीर्णकमिति त्रिविधः त्रिप्रकार आकरसम्भवो वज्रस्येति ॥ १० ॥

अथ ब्राह्मणादीनां कीदृशं वज्रं प्रशस्यत इत्याह ।

**रक्तं पीतं च शुभं राजन्यानां सितं द्विजातीनाम् ।**
**शैरीषं वैश्यानां शूद्राणां शस्यतेऽसिनिभम् ॥ ११ ॥**

रक्तं रक्तवर्णं पीतं च राजन्यानां क्षत्रियाणां शुभं प्रशस्तम् । सितं श्वेतवर्णं द्विजातीनां ब्राह्मणानां शुभम् । शैरीषं शिरीषकुसुमसदृशं वैश्यानां शुभम् । असिनिभं खड्गसदृशं कृष्णमित्यर्थः । शूद्राणां शस्यते स्तूयते । शुभमित्यर्थः ॥ ११ ॥

अधुनास्य वज्रमणेर्मूल्यपरिज्ञानार्थमाह ।

**सितसर्षपाष्टकं तण्डुलो भवेत्तण्डुलैस्तु विंशत्या ।**
**तुलितस्य द्वे लक्षे मूल्यं द्विघ्नूनिते चैतत् ॥ १२ ॥**
**पादत्र्यंशार्धोनं त्रिभागपञ्चांशषोडशांशाश्च ।**
**भागश्च पञ्चविंशः शतिकस्साहस्रिकश्चेति ॥ १३ ॥**

सितसर्षपाष्टकमिति । सितसर्षपा गौरसर्षपाः । तैरष्टभिस्तण्डुलो भवति । विंशत्या तण्डुलैश्च यद्वज्रं तुलितं परिच्छिन्नं तस्य द्वे लक्षे कार्षाप-णानां मूल्यम् । अशीत्या श्वेतिकानां पणः पणविंशत्या कार्षापणः ।

तथा च ।

विंशतिः श्वेतिकाः प्रोक्ता काकिण्येका विचक्षणैः ।
तच्चतुष्कं पण इति चतुर्थं तच्चतुष्टयम् ॥
चतुर्थकचतुष्कं तु पुराण इति कथ्यते ।
कार्षापणः स एवोक्तः क्वचित्तु पणविंशतिः ॥

द्विघ्नूनिते चेतदिति । तस्मिन्नेव वज्रे द्विघ्नूनिते द्वाभ्यां द्वाभ्यां तण्डुलाभ्यामूनिते रहिते । एतद्वक्ष्यमाणम् ॥ १२ ॥

पादत्र्यंशार्धोनमिति । विंशतिर्घ्नूनाष्टादश । अष्टादशभिस्तण्डुलैर्यद्वज्रं तुलितं तस्य कार्षापणलक्षद्वयं पादोनं मूल्यम् । सार्धलक्षमित्यर्थः । यत्षोडशभिस्तण्डुलैस्तुलितं तस्य लक्षद्वयं त्र्यंशोनं त्रिभागरहितं मूल्यम् । लक्षमेकं त्रयस्त्रिंशत्सहस्राणि शतत्रयं त्रयस्त्रिंशदधिकं सत्रिभागमित्यर्थः । चतुर्दशभिस्तण्डुलैस्तुलितं तस्यार्धोनं लक्षद्वयं लक्षमेकमित्यर्थः । द्वादशभिस्तण्डुलैस्तुलितस्य लक्षद्वयत्रिभागो मूल्यम् । षट्षष्टिसहस्राणि षट्शतानि सप्त षष्ट्यधिकानि त्रिभागश्च इत्यर्थः । दशभिस्तुलितस्य लक्षद्वयपञ्चांशो मूल्यम् । चत्वारिंशत्सहस्राणीत्यर्थः । अष्टाभिस्तण्डुलैस्तुलितस्य लक्षद्वयषोडशांशो मूल्यम् । द्वादशसहस्राणि पञ्चशतानीत्यर्थः । षड्भिस्तण्डुलैस्तुलितस्य लक्षद्वयात् पञ्चविंशतिको भागो मूल्यम् । अष्टौ सहस्राणीत्यर्थः । चतुर्भिस्तण्डुलैस्तुलितस्य लक्षद्वयाच्छतभागो मूल्यम् । सहस्रद्वयं कार्षापणानामित्यर्थः । अन्तरे स्वबुद्ध्या व्यस्तत्रैराशिकेन मूल्यमूह्यमिति ॥ १३ ॥

अथ शुभवज्रलक्षणान्याह ।

**सर्वद्रव्याभेद्यं लघ्वम्भसि तरति रश्मिवत् स्निग्धम् ।**
**तडिदनलशक्रचापोपमं च वज्रं हितायोक्तम् ॥ १४ ॥**

यद्वज्रं सर्वद्रव्याभेद्यं न केनचिच्छस्त्रादिनापि भिद्यते । लघु गौरववर्जितम् । अम्भसि जले तरति निमज्जतीत्यर्थः । रश्मिवत् । रश्मयः किरणा विद्यन्ते यस्य तत् । स्निग्धं स्नेहसंयुक्तम् । तडिद्विद्युत् । अनलोऽग्निः । शक्रचापमिन्द्रधनुः । एषामुपमं सदृशं तद्वज्रं हितायोक्तं श्रेयसे कथितम् ॥ १४ ॥

अथाशुभलक्षणान्याह ।

काकपदमक्षिकाकेशधातुयुक्तानि शर्करैर्विद्धम् ।
द्विगुणाश्रि दग्धकलुषत्रस्तविशीर्णानि न शुभानि ॥ १५ ॥

यानि वज्राणि काकपदैः काकपदाकृतिभिश्चिह्नैः । मक्षिकाभिस्तदाकृतिभिः । केशैर्बालसदृशरेखाभिः । धातुभिर्मृत्तिकाभिः । एतैर्युक्तानि । तथा यच्छर्करैर्युक्तं यच्च विद्धं वेधसंयुक्तम् । यच्च द्विगुणाश्रि लक्षणाभिरश्रिभिर्द्विगुणाभिर्युक्तम् । दग्धमग्निना । कलुषं विवर्णम् । त्रस्तं विगतकान्ति । विशीर्णं जर्जरितम् । एतानि न शुभानि अशोभनानि ॥ १५ ॥

अन्यदप्याह ।

यानि च बुद्बुददलिताग्रचिपिटवासीफलप्रदीर्घाणि ।
सर्वेषां चैतेषां मूल्याद्भागोऽष्टमो हानिः ॥ १६ ॥

यानि च वज्राणि बुद्बुदानि जलबुद्बुदसदृशानि । दलिताग्राणि । दलितं विदारितमग्रं प्रान्तं येषाम् । चिपिटानि चर्पटानि । वासीफलवत्प्रदीर्घाणि । वासिका द्रव्यविशेषः । एतेषां सर्वेषां प्राग्विधानेन यन्मूल्यं भवति तस्मादष्टमो भागो हानिर्भवति । अष्टमभागोनं मूल्यं भवतीत्यर्थः ॥ १६ ॥

अथ वज्रमणेर्धारणे गुणानाह ।

वज्रं न किञ्चिदपि धारयितव्यमेके
पुत्रार्थिनीभिरबलाभिरुशन्ति तज्ज्ञाः ।
शृङ्गाटकत्रिपुटधान्यकवत् स्थितं य-
च्छ्रोणीनिभं च शुभदं तनयार्थिनीनाम् ॥ १७ ॥

वज्रं वज्रमणिरबलाभिः स्त्रीभिः पुत्रार्थिनीभिः सुताभिलाषिणीभिर्न किञ्चिदपि धारयितव्यमित्येके आचार्या उशन्ति कथयन्ति । यच्छृङ्गाटकाकारं त्र्यस्रम् । त्रिपुटं त्रिभिः पुटैर्युक्तम् । धान्यकवद्धान्यकाफलवत्स्थितम् । श्रोणीनिभं स्त्र्यधररागसदृशम् । तत्तनयार्थिनीनां शुभदम् ॥ १७ ॥

तथा च ।

सुतार्थिनीभिर्धन्याभिर्न धार्यं वज्रमन्तकम् ।
यच्च शृङ्गाटकाकारं त्रिपुटं धान्यवत्स्थितम् ॥

श्रोणीनिभं सुवर्णं च स्निग्धं किरणसंयुतम् ।
तच्छस्तं धारणे स्त्रीणां पुत्रवृद्धिप्रदं स्मृतम् ॥

अन्यदप्याह ।

**स्वजनविभवजीवितक्षयं जनयति वज्रमनिष्टलक्षणम् ।**
**अशनिविषभयारिनाशनं शु[1]भमुपभोगकरं च भूभृताम् ॥१८॥**

अनिष्टलक्षणमशुभलक्षणसंयुक्तं वज्रं वज्रमणिः स्वजनानां बान्धवानां विभवस्यैश्वर्यस्य जीवितस्यायुषः क्षयं हानिं जनयत्युत्पादयति । शुभलक्षणं वज्रमशनिभयं विद्युद्भीतिम् । विषभयम् । अरिभयं शत्रुभयं च नाशयति । भूभृतां राज्ञामुपभोगकरं भवति । केचिदुरुभोगकरं विस्तीर्णभोगकरमितीच्छन्ति ॥ १८ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ वज्रमणिपरीक्षा मेकोनाशीतितमोऽध्यायः ॥ ७६ ॥

---

## अथ मुक्तालक्षणं व्याख्यायते ।

तत्रादावेव मुक्ताफलानामुत्पत्तिप्रदर्शनार्थमाह ।

**द्विपभुजगशुक्तिशङ्खाभ्रवेणुतिमिसूकरप्रसूतानि ।**
**मुक्ताफलानि तेषां बहुसाधु च शुक्तिजं भवति ॥ १ ॥**

द्विपो हस्ती । भुजगः सर्पः । शुक्तिः प्राणिविशेषः । शङ्खः प्राणी । अभ्रं मेघः । वेणुर्वंशः । तिमिर्मत्स्यः । सूकरो वराहः । एभ्यः प्रसूतानि उत्पन्नानि मुक्ताफलानि भवन्ति । तेषां सर्वेषां मध्याच्छुक्तिजं शुक्तिसम्भूतं बहुसाध्वतिश्रेष्ठं भवति । प्राचुर्येण व्यवहारीत्यर्थः ॥ १ ॥

अथ मुक्ताफलानामष्टावाकरानाह ।

**सिंहलकपारलौकिकसौराष्ट्रकताम्रपर्णिपारशवाः ।**
**कौबेरपाण्ड्यवाटकहैमा इत्याकरास्त्वष्टौ ॥ २ ॥**

सिंहलको देशः । परलोको देशः । तत्र भवः पारलौकिकः । सौराष्ट्रिकः । सुराष्ट्रको देशभेदः । ताम्रपर्णी नदी । पारशवो देशः । कौबेरो देशः ।

---

[1] शुभमुपभोगकरम्—इतिपाठान्तरम् ।

पाण्ड्यवाटको देशः। तत्र भवाः। हैमा हिमभवाः। इत्येवं प्रकारा अष्टौ मुक्ताफलानामाकरा उत्पत्तिस्थानानि ॥ २ ॥

अथैतेषां लक्षणमाह।

**बहुसंस्थानाः स्निग्धा हंसाभाः सिंहलाकराः स्थूलाः।**
**ईषत्ताम्राः श्वेतास्तमोवियुक्ताश्च ताम्राख्याः ॥ ३ ॥**
**कृष्णाः श्वेताः पीताः सशर्कराः पारलौकिका विषमाः।**
**न स्थूला नात्यल्पा नवनीतनिभाश्च सौराष्ट्राः ॥ ४ ॥**
**ज्योतिष्मत्यः शुभ्रा गुरवोऽतिमहागुणाश्च पारशवाः।**
**लघु जर्जरं दधिनिभं बृहद्द्विसंस्थानमपि हैमम् ॥ ५ ॥**
**विषमं कृष्णश्वेतं लघु कौबेरं प्रमाणतेजोवत्।**
**निम्बफलत्रिपुटधान्यकचूर्णाः स्युः पाण्ड्यवाटभवाः ॥ ६ ॥**

बहुसंस्थाना इति। या मुक्ता बहुसंस्थाना बहुप्रकारसंस्थानमाकारो यासाम्। स्निग्धा निर्मलाः। हंसाभा हंसवर्णसदृशकान्तयः। स्थूला बृहत्यस्ताः सिंहलाकराः सिंहल आकरो यासाम्। ईषत्ताम्राः किञ्चित्ताम्रवर्णाः। श्वेताः शुक्लाः। तमोवियुक्तास्तमोविरहिता निर्मला इत्यर्थः। तास्ताम्राख्यास्ताम्रपर्णीभवाः ॥ ३ ॥

कृष्णाः श्वेता इति। कृष्णाः कृष्णवर्णाः। श्वेताः सिताः। पीताः पीतवर्णाः। सशर्करा धातुयुक्ताः। विषमाश्चासमाः। ताः पारलौकिकाः परलोकभवाः। याश्च नातिस्थूला नातिबृहत्यः। नात्यल्पा नातिसूक्ष्माः। नवनीतनिभा नवनीतकान्तयस्ताः सौराष्ट्राः ॥ ४ ॥

ज्योतिष्मत्य इति। या मुक्ता ज्योतिष्मत्यस्तेजोयुक्ताः। शुभ्राः श्वेताः। गुरवोऽतिगौरवयुक्ताः। महागुणा महद्भिर्गुणैर्युक्ताः। ताः पारशवाः। लघु स्वल्पम्। जर्जरं विवर्णम्। दधिनिभं दधिसदृशम्। बृहद्विस्तीर्णम्। द्विसंस्थानं द्वे संस्थाने यस्य। तद्धैमं हिमवति सम्भूतम् ॥ ५ ॥

विषममिति। विषममसमम्। कृष्णश्वेतं कृष्णवर्णं श्वेतवर्णं च। लघु गौरववर्जितम्। प्रमाणतेजोवत्। प्रमाणं महत्त्वं तेजश्च कान्तिर्विद्यते यस्मिंस्तत्। निम्बफलसदृशम्। त्रिपुटं त्रिभिः पुटैरुपलक्षितम्। धान्यकं

धान्यकाफलसदृशम् । चूर्णं चातिसूक्ष्मम् । एताः सर्वा एव मुक्ताः पाण्ड्यवाट-भवाः पाण्ड्यवटे जाताः स्युर्भवेयुः ॥ ६ ॥

अथैतेषां विशेषमाह ।

अतसीकुसुमश्यामं वैष्णवमैन्द्रं शशाङ्कसङ्काशम् ।
हरितालनिभं वारुणमसितं यमदैवतं भवति ॥ ७ ॥
परिणतदाडिमगुलिकागुञ्जाताम्रं च वायुदैवत्यम् ।
निर्धूमानलकमलप्रभं च विज्ञेयमाग्नेयम् ॥ ८ ॥

अतसीकुसुमश्याममिति । अतसीकुसुममतिप्रसिद्धं तद्वत् श्यामं यन्मुक्ताफलं तद्वैष्णवं विष्णुदैवत्यम् । शशाङ्कसङ्काशं चन्द्राभं तदैन्द्रम् । यच्च हरितालनिभं हरितालवर्णं तद्वारुणम् । यच्चासितं कृष्णं तद्यमदैवत्यम् ॥ ७ ॥

परिणतदाडिमगुलिकागुञ्जाताम्रं चेति । परिपक्वदाडिमगुञ्जाफलरक्तं यत्तद्वायुदैवत्यं वायव्यम् । निर्धूमस्य धूमरहितस्यानलस्याग्नेः सदृशी प्रभा कान्तिर्यस्य तथा कमलस्य पद्मस्य च सदृशप्रभं यत्तदाग्नेयमग्निदैवत्यं विज्ञेयम् ॥ ८ ॥

अथैतेषां मूल्यपरिज्ञानार्थमाह ।

माषकचतुष्टयधृतस्यैकस्य शताहता त्रिपञ्चाशत् ।
कार्षापणा निगदिता मूल्यं तेजोगुणयुतस्य ॥ ९ ॥
माषकदलहान्यातो द्वात्रिंशद्विंशतिस्त्रयोदश च ।
अष्टौ च शतानि शतत्रयं त्रिपञ्चाशता सहितम् ॥ १० ॥
पञ्चत्रिंशं शतमिति चत्वारः कृष्णला नवतिमूल्याः ।
सार्धास्तिस्रो गुञ्जाः सप्ततिमूल्यं धृतं रूपम् ॥ ११ ॥
गुञ्जात्रयस्य मूल्यं पञ्चाशद्रूपका गुणयुतस्य ।
रूपकपञ्चत्रिंशत्त्रयस्य गुञ्जार्धहीनस्य ॥ १२ ॥

माषकचतुष्टयधृतस्येति । एकस्य मुक्ताफलस्य तेजोगुणयुक्तस्य गुणान् वक्ष्यति "स्निग्धः प्रभानुलेपी[1]त्या"द्येवं माषकचतुष्टयेन धृतस्य तुलितस्य

---

१ अस्यैव ग्रन्थस्य ८१ अध्यायस्य ३ श्लोकः ।

त्रिपञ्चाशत्कार्षापणाः शताहताः शतगुणिता मूल्यम् । त्रिपञ्चाशत्कार्षापणश-तानीत्यर्थः ॥ ९ ॥

माषकदलेति । अतोऽस्मान्माषकचतुष्टयधृतान्मुक्ताफलान्माषकदल-हान्या माषकार्धोनितया यत्तद्रूत्यमाणं मूल्यम् । तद्यथा । सार्धैस्त्रिभिर्मा-षकैस्तुलितस्य द्वात्रिंशत्कार्षापणशतानि मूल्यम् । त्रिभिर्माषकैस्तुलितस्य विंशतिकार्षापणशतानि मूल्यम् । द्वाभ्यां सार्धाभ्यां तुलितस्य त्रयोदशका-र्षापणशतानि । द्वाभ्यां तुलितस्याष्टौ शतानि । अध्यर्धेन माषकेण तुलितस्य त्रिपञ्चाशदधिकं शतत्रयं कार्षापणानां मूल्यम् ॥ १० ॥

एकेन माषकेण तुलितस्य पञ्चविंशदधिकं शतं कार्षापणानां मूल्यम् । चत्वारः कृष्णला नवतिमूल्या इति । पञ्च कृष्णला एको माष इति । कृष्णलाशब्देन गुञ्जा उच्यते । यस्य मुक्ताफलस्य चत्वारः कृष्णला धृतं रूपं तस्य नवतिः कार्षापणा मूल्यम् । यस्य मुक्ताफलस्य रूपं प्रमाणं सार्धास्तिस्रो गुञ्जा धृतं तस्य सप्ततिमूल्यम् । सप्ततिः कार्षापणास्तस्य मूल्यमित्यर्थः ॥ ११ ॥

गुञ्जात्रयस्येति । गुणयुक्तस्य सगुणस्य गुञ्जात्रयस्य पञ्चाशद्रूपका मूल्यम् । रूपकाः सुप्रसिद्धा एव । गुञ्जात्रयस्य गुञ्जार्धहीनस्य पञ्चविंशद्रूपका मूल्यम् ॥ १२ ॥

अथान्यन्मूल्यपरिज्ञानमाह ।

**पलदशभागो धरणं तद्यदि मुक्तास्त्रयोदश सुरूपाः ।**
**त्रिशती सपञ्चविंशा रूपकसङ्ख्या कृतं मूल्यम् ॥ १३ ॥**
**षोडशकस्य द्विशती विंशतिरूपस्य सप्ततिः सशता ।**
**यत्पञ्चविंशतिधृतं तस्य शतं त्रिंशता सहितम् ॥ १४ ॥**
**त्रिंशत्सप्ततिमूल्यं चत्वारिंशच्छतार्धमूल्यं च ।**
**षष्टिः पञ्चोना वा धरणं पञ्चाष्टकं मूल्यम् ॥ १५ ॥**
**मुक्काशीत्या त्रिंशच्छतस्य सा पञ्चरूपकविहीना ।**
**द्वित्रिचतुःपञ्चशता द्वादशषट्पञ्चकत्रितयम् ॥ १६ ॥**

पलदशभागो धरणमिति । “ पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश । पलं सुवर्णाश्चत्वार ” इति । एवं पलस्य यो दशभागः स धरणमित्युच्यते ।

तद्धरणं यदि त्रयोदश मुक्ताः सुरूपा गुणसंयुता भवति तदा सपञ्चविंशा त्रिशती रूपकसङ्ख्याकृतं मूल्यम् । त्रयाणां शतानां समाहारस्त्रिशती । सह पञ्चविंशत्या वर्तते या सा सपञ्चविंशा ॥ १३ ॥

षोडशकस्येति । मुक्ताषोडशयुक्तस्य चेद्धरणं तदा द्विशती रूपकसङ्ख्याकृतं मूल्यं भवति । एवं विंशतिरूपस्य सप्ततिः सशता । मुक्ताविंशतेर्धरणधृतायाः सप्तत्यधिकं शतं मूल्यम् । पञ्चविंशतिमुक्ताया धृतं धरणं भवति तस्य त्रिंशता सहितं शतं मूल्यमिति ॥ १४ ॥

त्रिंशन्मुक्ता यद्धरणं भवति तस्य सप्ततिमूल्यम् । चत्वारिंशन्मुक्ता यद्धरणं तस्य शतार्धं पञ्चाशद्रूपका मूल्यम् । अत्र वाशब्दश्चार्थे । यच्च षष्टिः पञ्चोना वा पञ्चपञ्चाशन्मुक्ता धरणं भवति तस्य पञ्चाष्टकमष्टौ पञ्चकाः । चत्वारिंशन्मूल्यमित्यर्थः ॥ १५ ॥

मुक्ताशीत्येति । मुक्ताशीत्या धृतस्य धरणस्य त्रिंशद्रूपकमूल्यम् । मुक्ताशतधृतस्य सा त्रिंशत्पञ्चरूपकविहीना पञ्चविंशतिरूपका मूल्यम् । द्विशतधरणस्य द्वादशरूपकाः । त्रिशतधरणस्य षट्रूपकाः । चतुःशतधरणस्य रूपकपञ्चकम् । पञ्चशतधरणस्य त्रितयं रूपकाणां मूल्यमिति ॥ १६ ॥

अधुना त्रयोदशाद्यानां धरणानां सञ्ज्ञार्थमाह ।

**पिक्कापिच्चार्घार्धा रवकः सिक्थं त्रयोदशाद्यानाम् ।**
**सञ्ज्ञाः परतो निगराश्चूर्णाश्चाशीतिपूर्वाणाम् ॥ १७ ॥**

त्रयोदशाद्यानां धरणानां पिक्काद्याः सञ्ज्ञाः । तद्यथा । त्रयोदशमुक्ताधृतस्य धरणस्य पिक्केतिसञ्ज्ञा । षोडशकस्य पिच्चा । विंशतिकस्यार्घा । पञ्चविंशतिकस्यार्धा । त्रिंशत्कधृतस्य रवकः । चत्वारिंशत्कस्य सिक्थम् । परतोऽनन्तरं पञ्चपञ्चाशत्कस्य निगरा । अशीतिपूर्वाणां पञ्चशतान्तानां सर्वधरणानां चूर्णा इति सञ्ज्ञा । एताश्चाकरस्थाने व्यवहारार्थमुपयुज्यन्ते ॥ १७ ॥

अथोत्तराणां मूल्यपरिज्ञानमाह ।

**एतद्गुणयुक्तानां धरणधृतानां प्रकीर्त्तितं मूल्यम् ।**
**परिकल्प्यमन्तराले हीनगुणानां क्षयः कार्यः ॥ १८ ॥**

**कृष्णश्वेतकपीतकताम्राणामीषदपि च विषमाणाम् ।**
**त्र्यंशोनं विषमकपीतयोश्च षड्भागदलहीनम् ॥ १९ ॥**

एतदिति । गुणयुक्तानां मुक्ताफलानां धरणधृतानामेतद्यथोक्तं मूल्यम् । अन्तराले मध्ये परिकल्प्यं स्वबुद्ध्या मूल्यमूह्यम् । यथा त्रयोदशकस्य धरणस्य त्रिशती सपञ्चविंशा उक्ता । षोडशकस्य द्विशती । अन्तराले मध्ये चतुर्दशधृतस्य पञ्चदशधृतस्य वा व्यस्तत्रैराशिकेन मूल्यानयनं कार्यमित्यर्थः । हीनगुणानां वक्ष्यमाणेनैवं क्रमेण क्षयः कार्यः ॥ १८ ॥

कृष्णश्वेतकेति । ईषदिति प्रत्येकमभिसंबध्यते । ईषत्किञ्चित्कृष्णानामसितवर्णानाम् । ईषच्छुक्लानामीषत्ताम्राणामीषद्विषमाणां प्राग्विधानेन यन्मूल्यं तदेव त्र्यंशोनं त्रिभागहीनं तेषां मूल्यं भवति । विषमकपीतयोश्च यथासङ्ख्यं षड्भागदलहीनम् । अतिविषमस्य षड्भागहीनं पीतस्यार्धहीनमिति ॥ १९ ॥

अथ गजमुक्ताफललक्षणमाह

**ऐरावतकुलजानां पुष्यश्रवणेन्दुसूर्यदिवसेषु ।**
**ये चोत्तरायणभवा ग्रहणेऽर्केन्द्वोश्च भद्रेभाः ॥ २० ॥**
**तेषां किल जायन्ते मुक्ताः कुम्भेषु सरदकोशेषु ।**
**बहवो बृहत्प्रमाणा बहुसंस्थानाः प्रभायुक्ताः ॥ २१ ॥**
**नैषामर्घः कार्यो न च वेधोऽतीव ते प्रभायुक्ताः ।**
**सुतविजयारोग्यकरा महापवित्रा धृता राज्ञाम् ॥ २२ ॥**

ऐरावतकुलजानामिति । ऐरावतो नाम हस्ती तस्य कुले वंशे जाता ये गजास्तेषां तद्वंशप्रभवाणां तद्वंशप्रसूतानां गजानां च प्रजाताः पुष्ये पुष्यनक्षत्रे श्रवणे च नक्षत्रे । इन्दुदिने चन्द्रवासरे सूर्यदिवसे अर्कवारे यद्युत्पद्यन्ते । ये चैते गजा उत्तरायणभवा उत्तरायणे जाताः । अर्केन्द्वोः सूर्याचन्द्रमसोश्च ग्रहण उपरागे च ये जातास्ते भद्रेभाः । भद्रनामानस्ते गजाः ॥ २० ॥

तेषामिति । किलेत्यागमदर्शनार्थम् । तेषामैरावतकुलजानां तथा भद्रेभानां कुम्भेषु मस्तकेषु सरदकोशेषु दन्तकोशसंयुक्तेषु मुक्ता जायन्ते

उत्पद्यन्ते च । बहवः प्रभूता बृहत्प्रमाणाः स्थूलाः । बहुसंस्थाना अनेकाकाराः । प्रभायुक्तास्तेजस्विन्यः ॥ २१ ॥

नैषामर्घः कार्य इति । तेषां मुक्ताफलानामर्घो मूल्यं न कार्यं न च वेधस्तेषां कार्यः । यतस्ताः सर्वा अतीवात्यर्थं प्रभायुक्तास्तेजस्विन्यो महापविचा अतिसाधमा राज्ञां नृपाणां धृता देहस्थिताः सुतविजयाऽऽरोग्यकरा भवन्ति । सुताः पुत्राः । विजयः शत्रुनिग्रहः । आरोग्यं नीरोगत्वं च कुर्वन्ति ॥ २२ ॥

अथ वराहजस्य मुक्ताफलस्य तिमिजस्य च लक्षणमाह ।

**दंष्ट्रामूले शशिकान्तिसप्रभं च बहुगुणं वाराहम् ।**
**तिमिजं मत्स्याक्षिनिभं बृहत् पवित्रं बहुगुणं च ॥ २३ ॥**

वराहाणां सूकराणाम् । दंष्ट्रामूलं यतो दंष्ट्रोत्पद्यते तत्र शशिकान्तिसप्रभं चन्द्रप्रभाभं बहुगुणमनेकगुणं वाराहं वराहसम्भूतं तन्मुक्ताफलं भवति । मत्स्याक्षिनिभं मीननेत्रसदृशं तिमिजं मत्स्यजं भवति । बृहत् स्थूलम् । पवित्रं पावनम् । बहुगुणं च तज्ज्ञेयमिति ॥ २३ ॥

अथ मेघसम्भूतस्य मुक्ताफलस्य लक्षणमाह ।

**वर्षोपलवज्जातं वायुस्कन्धाच्च सप्तमाद्भ्रष्टम् ।**
**ह्रियते किल खाद्दिव्यैस्तडित्प्रभं मेघसम्भूतम् ॥ २४ ॥**

वर्षे उपलो वर्षोपलः । वर्षोपलवज्जातम् । यथा वर्षमध्ये उपला जायन्ते तद्वत् सप्तमाद्वायुस्कन्धाद्भ्रष्टं पतितम् । किलेत्यागमार्थम् । दिवि भवा दिव्याः । खादन्तरिक्षात् पतमानं दिव्यैराकाशस्थैर्देवैर्निर्भिद्ह्रियते । तडित्प्रभं विद्युत्कान्तिसदृशं मेघसम्भूतमभ्रजं मुक्ताफलम् ॥ २४ ॥

अधुना नागजमुक्ताफलस्य लक्षणमाह ।

**तक्षकवासुकिकुलजाः कामगमा ये च पन्नगास्तेषाम् ।**
**स्निग्धा नीलद्युतयो भवन्ति मुक्ताः फणस्यान्ते ॥ २५ ॥**
**शस्तेऽवनिप्रदेशे रजतमये भाजने स्थिते च यदि ।**
**वर्षति देवोऽकस्मात्तज्ज्ञेयं नागसम्भूतम् ॥ २६ ॥**

तक्षकवासुकिकुलजा इति । ये पन्नगास्तक्षकवासुकिकुलजाः । तक्षककुले वासुकिकुले जाताः । कामगमा इच्छागामिनो ये च । तेषां नागानां फणास्यान्ते शिरःपर्यन्ते मुक्ताः स्निग्धाः सस्नेहा नीलद्युतयो नीलकान्तयो भवन्ति ॥ २५ ॥

शस्त इति । कथं नागजं मुक्ताफलं ज्ञातव्यम् । ज्ञायते । तत्प्रत्ययार्थमिदमाह । यस्मिन् मुक्ताफले शस्ते प्रशस्तेऽवनिप्रदेशे भूभागे तत्र च रजतमये रौप्ये भाजने पात्रे स्थिते सति अकस्मादनाशङ्कितमेव देवो वर्षति तन्मुक्ताफलं नागसम्भूतं ज्ञेयं ज्ञातव्यम् ॥ २६ ॥

अस्य च गुणानाह ।

**अपहरति विषमलक्ष्मीं क्षपयति शत्रून् यशो विकाशयति ।**
**भौजङ्गं नृपतीनां धृतमकृतार्घं विजयदं च ॥ २७ ॥**

भौजङ्गं सार्पं सर्पमुक्ताफलम् । अकृतार्घमकृतमूल्यं राज्ञां नृपतीनां धृतं विषमलक्ष्मीं चापहरति । शत्रून् रिपून् क्षपयति । यशः कीर्तिं विकाशयति । विजयदं च विजयं ददाति ॥ २७ ॥

अथ वेणुशङ्खोद्भवस्य लक्षणमाह ।

**कर्पूरस्फटिकनिभं चिपिटं विषमं च वेणुजं ज्ञेयम् ।**
**शङ्खोद्भवं शशिनिभं वृत्तं भ्राजिष्णु रुचिरं च ॥ २८ ॥**

कर्पूरनिभं स्फटिकनिभं चिपिटं विषमं च तद्वेणुजं वेणुसम्भूतम् । शशिनिभं चन्द्रसदृशं वृत्तं परिवर्तुलं भ्राजिष्णु भ्राजनशीलं रुचिरं तेजस्वि शङ्खोद्भवं शङ्खजं ज्ञेयम् ॥ २८ ॥

अथैतेषां परिभाषाज्ञानार्थमाह ।

**शङ्खतिमिवेणुवारणवराहभुजगाभ्रजान्यवेद्यानि ।**
**अमितगुणत्वाच्चैषामर्घः शास्त्रे न निर्दिष्टः ॥ २९ ॥**

शङ्खः प्राणी । तिमिर्मत्स्यः । वेणुर्वंशः । वारणो हस्ती । वराहः सूकरः । भुजगः सर्पः । अभ्रं मेघः । एभ्यो यानि जातानि सम्भूतानि तान्यवेद्यानि न वेदनीयानि । एषां सर्वेषाममितगुणत्वाद्बहुगुणत्वाच्छास्त्रे अर्घो मूल्यं न निर्दिष्टो नोक्तः ॥ २९ ॥

एतेषां प्रशस्तार्थमाह ।

एतानि सर्वाणि महागुणानि
सुतार्थसौभाग्ययशस्कराणि ।
रुक्शोकहन्तॄणि च पार्थिवानां
मुक्ताफलानीप्सितकामदानि ॥ ३० ॥

एतानि सर्वाणि निःशेषाणि शङ्खादिसम्भूतानि मुक्ताफलानि महागुणानि प्रभूतगुणानि । सुताः पुत्राः । अर्थो धनम् । सौभाग्यं सर्वजनप्रियत्वम् । यशः कीर्त्तिं कुर्वन्ति । पार्थिवानां राज्ञां रुक्शोकहन्तॄणि । रुग्रोगः । शोको दुःखम् । हरन्ति नाशयन्ति । ईप्सितमभिलषितं काममिच्छां च ददति ॥ ३० ॥

अधुना मुक्तारचितानामाभरणानां सञ्ज्ञा आह ।

सुरभूषणं लतानां सहस्रमष्टोत्तरं चतुर्हस्तम् ।
इन्दुच्छन्दो नाम्ना विजयच्छन्दस्तदर्धेन ॥ ३१ ॥
शतमष्टयुतं हारो देवच्छन्दो ह्यशीतिरेकयुता ।
अष्टाष्टकोऽर्धहारो रश्मिकलापश्च नवषट्कः ॥ ३२ ॥
द्वात्रिंशता तु गुच्छो विंशत्या कीर्त्तितोऽर्धगुच्छाख्यः ।
षोडशभिर्माणवको द्वादशभिश्चार्धमाणवकः ॥ ३३ ॥
मन्दरसञ्ज्ञोऽष्टाभिः पञ्चलता हारफलकमित्युक्तम् ।
सप्तविंशतिमुक्ता हस्तो नक्षत्रमालेति ॥ ३४ ॥
अन्तरमणिसंयुक्ता मणिसोपानं सुवर्णगुलिकैर्वा ।
तरलकमणिमध्यं तद्विज्ञेयं चाटुकारमिति ॥ ३५ ॥

एकावली नाम यथेष्टसङ्ख्या
हस्तप्रमाणा मणिविप्रयुक्ता ।
संयोजिता या मणिना तु मध्ये
यष्टीति सा भूषणविद्भिरुक्ता ॥ ३६ ॥

सुरभूषणं लतानामिति । अष्टाधिकसहस्रं लतानां चतुर्हस्तं चत्वारो हस्ता दीर्घं सुरभूषणं सुराणां देवानां भूषणमलङ्कारं तन्न क्रियते। तस्य नाम

सञ्ज्ञा इन्दुच्छन्दः। तस्यैवेन्दुच्छन्दसोऽर्धेन दलेन पञ्चशतानि चतुरधिकानि लतानां द्विहस्तं च विजयच्छन्दःसञ्ज्ञम्। शतमष्टयुतमिति। अष्टयुतं शतं लतानां द्विहस्तं च हारः। एकयुताशीतिरेकाशीतिर्लतानां द्विहस्तं च देवच्छन्दः। अष्टाष्टकोऽर्धहारः। अष्टाभिरष्टकैश्चतुःषष्ट्या लतानामर्धहारः। नवषट्कश्चतुष्पञ्चाशल्लता रश्मिकलापाख्यः॥ ३२॥

द्वात्रिंशता त्विति। लतानां द्वात्रिंशता युक्तं गुच्छाख्यम्। विंशत्या लतानामर्धगुच्छाख्यः कीर्तित उक्तः। षोडशभिर्लताभिर्माणवकाख्यः। द्वादशभिर्लताभिरर्धमाणवकः। द्विहस्त इति सर्वेषानुवृत्तिः॥ ३३॥

मन्दरसञ्ज्ञोऽष्टाभिरिति। अष्टाभिर्लताभिर्मन्दरसञ्ज्ञः। पञ्चभिर्लताभिर्हारफलकमिति उक्तं कथितम्। सप्तविंशतिर्मुक्ताफलानि हस्तप्रमाणा च नक्षत्रमालेति सञ्ज्ञा॥ ३४॥

अन्तरमणिसंयुक्तेति। सैव लता हस्तप्रमाणा अन्तरे मध्ये मणिभिः संयुक्ता सुवर्णगुलिकैर्वा कनकगुलिकैरथवान्तरे संयुक्ता मणिसोपानसञ्ज्ञम्। तदेव तरलकमणिमध्यम्। हेमनिबद्धो मणिस्तरलकमणिः स मध्ये यस्य। तेन संयुक्तं चाटुकारमिति ज्ञेयम्॥ ३५॥

एकावलीति। यथेष्टसङ्ख्या यथेष्टैर्मुक्ताफलैर्युक्ता हस्तप्रमाणा हस्तसम्मिता मणिभिर्विप्रयुक्ता रहिता एकावली नाम तस्या भवति। या तु यथेष्टसङ्ख्या हस्तप्रमाणा मणिना तु मध्ये संयोजिता सा भूषणविद्भिर्भूषणलक्षणज्ञैर्यष्टिरित्युक्ता कथिता॥ ३६॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ मुक्तालक्षणं नामाशीतितमोऽध्यायः॥ ८०॥

## अथ पद्मरागलक्षणं व्याख्यायते।

तत्रादावेव पद्मरागाणामुत्पत्तिलक्षणमाह।

**सौगन्धिककुरुविन्दस्फटिकेभ्यः पद्मरागसम्भूतिः।**
**सौगन्धिकजा भ्रमराञ्जनाब्जजम्बूरसद्युतयः॥ १॥**

**कुरुविन्दभवाः शबला मन्दद्युतयश्च धातुभिर्विद्धाः।**
**स्फटिकभवा द्युतिमन्तो नानावर्णा विशुद्धाश्च॥ २॥**

सौगन्धिकेति । सौगन्धिककुरुविन्दौ धातुविशेषौ । स्फटिकः स्फटिकोपलः । एभ्यः पद्मरागाणां सम्भूतिरुत्पत्तिः । तत्र च ये भ्रमरद्युतयो द्विरेफसमकान्तयः । अञ्जनद्युतयः । अब्जवर्णा उत्पलवर्णा वा तत्तुल्यकान्तयः । जम्बूरसद्युतयः । जम्बूर्वृक्षविशेषः । तद्रससमकान्तयो लोहितवर्णाः । ते सौगन्धिकजाः सौगन्धिकसम्भूताः ॥ १ ॥

कुरुविन्दभवा इति । ये तु शबलाः शुक्लकृष्णव्यामिश्राः । मन्दद्युतयोऽल्पकान्तयः । धातुभिर्मृत्तिकादिभिर्विद्धाः सकलङ्कास्तत्संयोगाज्जातास्ते कुरुविन्दभवाः कुरुविन्दजाताः । ये च द्युतिमन्तः प्रभावन्तो नानावर्णा विचित्रा विशुद्धा निर्मलास्ते स्फटिकभवाः स्फटिकसम्भूताः ॥ २ ॥

अधुनैतेषां गुणानाह ।

**स्निग्धः प्रभानुलेपी स्वच्छोऽर्चिष्मान् गुरुः सुसंस्थानः ।**
**अन्तःप्रभोऽतिरागो मणिरत्नगुणाः समस्तानाम् ॥ ३ ॥**

स्निग्धः स्नेहसंयुक्तः । प्रभानुलेपी प्रभया कान्त्या अनुलिम्पति तच्छीलः । स्वच्छो निर्मलः । अर्चिष्मान् दीप्तियुक्तः । गुरुर्गौरवयुक्तः । सुसंस्थानः शोभनाकृतिः । अन्तःप्रभोऽन्तर्मध्ये प्रभा कान्तिर्यस्य अतिरागोऽतीव रागेण लौहित्येन युक्तः । एते समस्तानां सर्वेषां पद्मरागादीनां मणिरत्नगुणाः प्रधानरत्नगुणाः ॥ ३ ॥

अथैतेषामपि दोषानाह ।

**कलुषा मन्दद्युतयो लेखाकीर्णाः सधातवः खण्डाः ।**
**दुर्विद्धा न मनोज्ञाः सशर्कराश्चेति मणिदोषाः ॥ ४ ॥**

कलुषा अनिर्मलाः । मन्दद्युतयः स्वल्पकान्तयः । लेखाकीर्णा लेखाभिर्व्याप्ताः । सधातवो धातुभिर्मृत्तिकादिभिः सहिताः । खण्डाः स्फटिताः । दुर्विद्धा दुष्टेनाप्रशस्तेन वेधेन संयुक्ताः । न मनोज्ञा न चित्ताह्लादकाः । सशर्कराः शर्करासंयुक्ताः । इत्येवंप्रकारा मणिदोषाः ॥ ४ ॥

अथ सर्पमणिलक्षणमाह ।

**भ्रमरशिखिकण्ठवर्णो दीपशिखासप्रभो भुजङ्गानाम् ।**
**भवति मणिः किल मूर्धनि योऽनर्घेयः स विज्ञेयः ॥ ५ ॥**

भुजङ्गानां सर्पाणां मूर्धनि शिरसि भ्रमरसदृशो द्विरेफकान्तिः। शिखिकण्ठसदृशवर्णो मयूरगलसमप्रभः। दीपशिखासप्रभः प्रदीपाग्रकान्तिः। यो मणिर्भवति सोऽनर्घेयोऽमूल्यो विज्ञेयो ज्ञातव्यः॥ ५॥

अस्य प्रभावमाह।

यस्तं बिभर्ति मनुजाधिपतिर्न तस्य
दोषा भवन्ति विषरोगकृताः कदाचित्।
राष्ट्रे च नित्यमभिवर्षति तस्य देवः
शत्रूंश्च नाशयति तस्य मणेः प्रभावात्॥ ६॥

यो मनुजाधिपती राजा तं सर्पमणिं बिभर्ति धारयति तस्य विषकृता रोगकृता दोषा न कदाचिद्भवन्ति। तस्य च राज्ञो राष्ट्रे देवः शक्रो नित्यं सर्वकालं वर्षति। तस्य च मणेः प्रभावाच्छत्रून् रिपून् स राजा नाशयति॥ ६॥

अथास्य मूल्यपरिज्ञानार्थमाह

षड्विंशतिः सहस्राण्येकस्य मणेः पलप्रमाणस्य।
कर्षत्रयस्य विंशतिरुपदिष्टा पद्मरागस्य॥ ७॥
अर्धपलस्य द्वादश कर्षस्यैकस्य षट्सहस्राणि।
यच्चाष्टमाषकधृतं तस्य सहस्रत्रयं मूल्यम्॥ ८॥
माषकचतुष्टयं दशशतक्रयं द्वौ तु पञ्चशतमूल्यौ।
परिकल्प्यमन्तराले मूल्यं हीनाधिकगुणानाम्॥ ९॥
वर्णन्यूनस्यार्द्धं तेजोहीनस्य मूल्यमष्टांशम्।
अल्पगुणो बहुदोषो मूल्यात् प्राप्नोति विंशांशम्॥ १०॥
आधूम्रं व्रणबहुलं स्वल्पगुणं चाप्नुयाद्द्विशतभागम्।
इति पद्मरागमूल्यं पूर्वाचार्यैः समुद्दिष्टम्॥ ११॥

षड्विंशतिः सहस्राणीति। एकस्य पद्मरागस्य पलप्रमाणस्य चतुष्कर्षस्य मूल्यं षड्विंशतिः सहस्राणि रूपकाणामुपदिष्टान्युक्तानि। कर्षत्रयस्य विंशतिसहस्राण्युपदिष्टान्युक्तानि॥ ७॥

अर्धपलस्य द्वादशसहस्राणि मूल्यम् । एकस्य कर्षस्य षट्सहस्राणि । यश्च पद्मरागोऽष्टाभिर्माषकैर्धृतस्तुलितस्तस्य सहस्रत्रयं रूपकाणां मूल्यम् ॥ ८ ॥

माषकचतुष्टयमिति । माषकचतुष्टयेन यो धृतः पद्मरागस्तस्य दशशतक्षयं सहस्रमूल्यम् । द्वौ तु माषकौ पञ्चशतमूल्यौ । अन्तराले मध्ये हीनाधिकगुणानां परिकल्प्यं स्वबुद्ध्या मूल्यमूह्यम् । यथा पलप्रमाणस्य षड्विंशतिः सहस्राणि । कर्षत्रयस्य विंशतिरेव । अर्धकर्षोनपलस्य त्रैराशिकविधानेन चयः कार्यः ॥ ९ ॥

वर्णोन्यूनस्यार्द्धमिति । वर्णोन्यूनस्य वर्णहीनस्य पद्मरागस्य प्रागुक्तान्मूल्यादर्धं मूल्यं भवति । तेजोविहीनस्य विगतकान्तेः प्रागुक्तान्मूल्यादष्टांशमष्टमभागं मूल्यं भवति । योऽल्पगुणो बहुदोषः स प्रागुक्तान्मूल्याद्विंशांशं विंशतितमं भागं प्राप्नोति लभते ॥ १० ॥

आधूम्रमिति । आधूम्रं कलुषं व्रणबहुलं प्रभूतच्छिद्रं स्वल्पगुणं मूल्यात् प्रागुक्ताद्द्विशतभागं चाप्नुयाल्लभते । इत्यनेन प्रकारेण पूर्वाचार्यैः पद्मरागस्य मूल्यं समुद्दिष्टं कथितमिति ॥ ११ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ पद्मरागलक्षणं नामैकाशीतितमोऽध्यायः ॥ ८१ ॥

## अथ मरकतलक्षणं व्याख्यायते ।

तल्लक्षणं प्रयोजनं चाह ।

**शुकवंशपत्रकदलीशिरीषकुसुमप्रभं गुणोपेतम् ।**
**सुरपितृकार्ये मरकतमतीव शुभदं नृणां विहितम् ॥ १ ॥**

यन्मरकतं शुकवंशपत्रसदृशं शुकपक्षसमवर्णं वंशपत्रसदृशं कदलीसदृशं श्यावपीतं शिरीषकुसुमप्रभं शिरीषपुष्पतुल्यवर्णं श्वेतपीतं वा । एतेषामन्यतमवर्णोपेतं तच्च यदि गुणोपेतं बहुगुणम् । बहुगुणाः स्निग्धः प्रभानुलेपी स्वच्छोऽर्चिष्मानित्यादिकास्तैर्युक्तं तथाविधं नृणां पुंसां सुरपितृकार्ये देवकार्ये पितृकार्ये चातीवात्यर्थं शुभदं विहितमुक्तमिति ॥ १ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ मरकतलक्षणं नाम द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

## अथ दीपलक्षणं व्याख्यायते ।

तत्रादावेवाशुभलक्षणफलमाह ।

**वामावर्त्तो मलिनकिरणः सस्फुलिङ्गोऽल्पमूर्त्तिः**
**क्षिप्रं नाशं व्रजति विमलस्नेहवर्त्यन्वितोऽपि ।**
**दीपः पापं कथयति फलं शब्दवान् वेपनश्च**
**व्याकीर्णार्चिर्विशलभमरुद्यश्च नाशं प्रयाति ॥ १ ॥**

यो दीपो वामावर्त्तो वामेनाप्रदक्षिणेनाऽऽवर्त्तेन परिभ्रमति । तथा मलिनकिरणोऽविमलरश्मिः । सस्फुलिङ्गोऽल्पमूर्त्तिः स्फुलिङ्गैरग्निकिरणैः सहितः । अल्पमूर्त्तिर्लघुप्रकाशः । विमलेन निर्मलेन स्नेहन तैलेन वर्त्याप्यन्वितो युक्तः क्षिप्रमाश्वेव नाशं व्रजति याति । तथा शब्दवान् शब्दयुक्तः । वेपनः कम्पनः कम्पनसंयुक्तः । व्याकीर्णार्चिर्विकीर्णज्वालः । विशलभमरुद्यश्च नाशं प्रयाति । शलभेन पतङ्गेन मरुता वायुना विना यो नाशं प्रयाति गच्छति । स तथाभूतः पापमनिष्टं फलं कथयति वक्ति ॥ १ ॥

अथ शुभलक्षणमाह ।

**दीपः संहतमूर्त्तिरायततनुर्निर्वेपनो दीप्तिमान्**
**निःशब्दो रुचिरः प्रदक्षिणगतिर्वैदूर्यहेमद्युतिः ।**
**लक्ष्मीं क्षिप्रमभिव्यनक्ति सुचिरं यश्चोद्यतं दीप्यते**
**शेषं लक्षणमग्निलक्षणसमं योज्यं यथायुक्तितः ॥ २ ॥**

यो दीपः संहतमूर्त्तिर्घनदेहः । आयततनुर्दीर्घशरीरः । निर्वेपनः कम्परहितः । दीप्तिमान् सुकान्तः । निःशब्दः स्वररहितः । रुचिरोऽतिप्रकाशः । प्रदक्षिणगतिः प्रदक्षिणज्वालः । वैदूर्यस्य मणेर्नीलपीतस्य हेम्नः सुवर्णस्य वा सदृशी द्युतिः कान्तिर्यस्य । सुचिरमतिबहुकालमुद्यतमतितेजस्वी दीप्यते ज्वलति । स क्षिप्रमेवाश्वेव लक्ष्मीं श्रियमभिव्यनक्ति प्रकाशयति । शेषं यल्लक्षणमत्र नोक्तं तद्यथायुक्तितो यथासम्भवमग्निलक्षणसमं तत्तुल्यं योज्यं योजयितव्यम् ।

यथा ।

ध्व[1]जकुम्भहयेभभूभृतामनुरूपे वशमेति भूभृताम् ।
उदयास्तधराधराऽधरा हिमवद्विन्ध्यपयोधरा धरा ॥

तथा ।

चा[2]मीकराशोककुरण्टकाब्जवैदूर्यनीलोत्पलसन्निभेऽग्नौ ।
न ध्वान्तमन्तर्भवनेऽवकाशं करोति रत्नांशुहतं नृपस्य ॥

सर्वं चिन्त्यमग्नौ यत्सम्भवति ।

यथा ।

"स्वाहाव[3]सानसमये" इत्यादि विचिन्त्यमिति ॥ २ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ दीपलक्षणं
नाम त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

## अथ दन्तकाष्ठलक्षणं व्याख्यायते ।

तत्रादावेव प्रयोजनप्रदर्शनार्थमाह ।

**वल्लीलतागुल्मतरुप्रभेदैः**
**स्युर्दन्तकाष्ठानि सहस्रशो यैः ।**
**फलानि वाच्यान्यथ तत्प्रसङ्गो**
**मा भूदतो वच्म्यथ कामिकानि ॥ १ ॥**

वल्ल्यः प्रसिद्धाः । लताश्च प्रसिद्धा एव । गुल्म एकमूलः शाखासमूहः । तरवो वृक्षाः । एतेषां ये प्रभेदाः पृथक्पृथग्जातयः । तैः सहस्रशः सहस्रप्रकारैर्दन्तकाष्ठानि स्युर्भवेयुः । यैः फलानि वाच्यानि वक्तव्यानि । अथ तत्प्रसङ्गो मा भूत् तेषां दन्तकाष्ठानामतिप्रसङ्गोऽत्यासक्तिर्विस्तरेण मा भूत् । अतोऽस्माद्धेतोः कामिकान्यभीष्टफलप्रदानि वच्मि कथयामि । अथशब्दः पादपूरणे ॥ १ ॥

---

१ अस्यैव ग्रन्थस्य ५१० पृष्ठे ३५ श्लोकः ।
२ अस्यैव ग्रन्थस्य ५१० पृष्ठे ३३ श्लोकः ।
३ अस्यैव ग्रन्थस्य ५०९ पृष्ठे ३२ श्लोकः ।

अथ परिभाषार्थमाह ।

अज्ञातपूर्वाणि न दन्तकाष्ठा-
न्यद्यान्न पत्रैश्च समन्वितानि ।
न युग्मपर्वाणि न पाटितानि
न चोर्ध्वशुष्काणि विना त्वचा च ॥ २ ॥

न ज्ञातं पूर्वं येषां तानि दन्तकाष्ठानि नाद्यान्न भक्षयेत् । पत्रैश्च समन्वितानि युक्तानि नाद्यात् न भक्षयेत् । न युग्मपर्वाणि युग्मग्रन्थि-भिर्युक्तानि नाद्यात् । पाटितानि दलितानि नाद्यात् । न चोर्ध्वशुष्काणि ऊर्ध्वमुपरिभागं शुष्कं येषां तानि नाद्यात् । विना त्वचा च त्वग्रहितानि नाद्यात् ॥ २ ॥

अथ प्रविभागेन फलान्याह ।

वैकङ्कतश्रीफलकाश्मरीषु
ब्राह्मी द्युतिः क्षेमतरौ सुदाराः ।
वृद्धिर्वटेऽर्के प्रचुरं च तेजः
पुत्रा मधूके सगुणाः प्रियत्वम् ॥ ३ ॥

वैकङ्कतः प्रसिद्धो वृक्षः । श्रीफलं प्रसिद्धम् । काश्मरी प्रसिद्धा । एतेषु दन्तकाष्ठेषु भक्षितेषु ब्राह्मी ब्राह्मणसंबन्धिनी द्युतिः कान्तिर्भवति । ब्रह्मवर्चा भवतीत्यर्थः । क्षेमतरौ क्षीरवृक्षे सुदाराः शोभनदारा भवन्ति । दाराः कलत्रम् । वटेऽर्थानां वृद्धिर्भवति । अर्केऽर्कवृक्षे प्रचुरं प्रभूतं तेजः कान्तिर्भवति । मधूके पुत्राः सुता भवन्ति । ते च सगुणा गुणसहिताः । प्रियत्वं जनवाल्लभ्यं च भवति ॥ ३ ॥

अन्यदप्याह ।

लक्ष्मीः शिरीषे च तथा करञ्जे
प्लक्षेऽर्थसिद्धिः समभीप्सिता स्यात् ।
मान्यत्वमायाति जनस्य जात्यां
प्राधान्यमश्वत्थतरौ वदन्ति ॥ ४ ॥

शिरीषे शिरीषवृक्षे तथा तेनैव प्रकारेण करञ्जे प्लक्षे च लक्ष्मीः श्रीर्भवति । अर्थानां धनानामभीप्सिताभिलषिता सिद्धिः स्याद्भवेत् । जात्यां जनस्य लोकस्य मान्यत्वं पूज्यत्वमाप्नोति लभते । अश्वत्थतराविश्वत्थवृक्षे प्राधान्यं प्रधानत्वं वदन्ति ॥ ४ ॥

अन्यदप्याह ।

आरोग्यमायुर्बदरीबृहत्यो-
रैश्वर्यवृद्धिः खदिरे सबिल्वे ।
द्रव्याणि चेष्टान्यतिमुक्तके स्युः
प्राप्नोति तान्येव पुनः कदम्बे ॥ ५ ॥

बदरी वृक्षविशेषः । बृहती कण्टकारिका । अनयोर्यथासङ्ख्यम् । आरोग्यं नीरोगता आयुर्दीर्घजीवित्वं भवति । खदिरे सबिल्वे बिल्वसहिते ऐश्वर्यस्य वृद्धिर्भवति । अथवा ऐश्वर्यलब्धी । खदिरे ऐश्वर्यम् । बिल्वे लब्धिलाभः । अतिमुक्तके इष्टान्यभिलषितानि द्रव्याणि धनादीनि स्युर्भवेयुः । कदम्बे तान्येव द्रव्याणि चेष्टानि प्राप्नोति पुनः ॥ ५ ॥

अन्यदप्याह ।

नीपेऽर्थाप्तिः करवीरेऽन्नलब्धि-
र्भाण्डीरे स्यादन्नमेवं प्रभूतम् ।
शम्यां शत्रूनपहन्त्यर्जुने च
श्यामायां च द्विषतामेव नाशः ॥ ६ ॥

नीपे नीपवृक्षेऽर्थाप्तिरर्थलाभो भवति । करवीरेऽन्नलब्धिर्भोजनलाभः । भाण्डीरवृक्षे प्रभूतं पर्याप्तमन्नमेवं स्यात् भवेत् । शम्यां शमीवृक्षे शत्रून् रिपूनपहन्ति नाशयति स कर्ता । अर्जुनवृक्षे चशब्दाच्छत्रूनेवापहन्ति । श्यामायां च द्विषतां शत्रूणामेव नाशः क्षयो भवति ॥ ६ ॥

अन्यदप्याह ।

शालेऽश्वकर्णे च वदन्ति गौरवं
सभद्रदारावपि चाटरूषके ।

---

१ ऐश्वर्यलब्धी इति पाठान्तरम् ।

वाल्लभ्यमायाति जनस्य सर्वतः
प्रियङ्ग्वपामार्गसजम्बुदाडिमैः ॥ ७ ॥

शाले शालवृक्षे अश्वकर्णे च गौरवं सम्मानं वदन्ति कथयन्ति। भद्रदारौ देवदारौ। अपिशब्दः समुच्चये। तथा चाटरूषके वासिकायां चशब्दाद्गौरवमेव वदन्ति। प्रियङ्ग्वपामार्गाभ्यां सजम्ब्वा जम्बूवृक्षसहितेन दाडिमेन च एतैः सर्वैरेव सर्वतः सर्वस्य वाल्लभ्यं वल्लभत्वमायात्यागच्छति ॥ ७ ॥

अथ दन्तकाष्ठलक्षणे विधानमाह।

उदङ्मुखः प्राङ्मुख एव वाब्दं
कामं यथेष्टं हृदये निवेश्य।
अद्यादनिन्दन् च सुखोपविष्टः
प्रक्षाल्य जह्याच्च शुचिप्रदेशे ॥ ८ ॥

दन्तकाष्ठमुदङ्मुख उत्तराभिमुखः। पूर्वाभिमुखो वा। अब्दं वार्षिकं यथेष्टं यथाभिप्रेतं काममिच्छां हृदये निवेश्यं हृद्यवस्थाप्य अनिन्दन् कुत्सामकुर्वन् सुखोपविष्टः सुखासीनोऽद्याद्भक्षयेत्। ततः प्रक्षाल्य शुचिप्रदेशे शुचौ शुद्धे प्रदेशे स्थाने जह्यात् परित्यजेत् ॥ ८ ॥

अथ त्यक्तस्य लक्षणमाह।

अभिमुखपतितं प्रशान्तदिक्स्थं
शुभमतिशोभनमूर्ध्वसंस्थितं यत्।
अशुभकरमतोऽन्यथा प्रदिष्टं
स्थितपतितं च करोति मृष्टमन्नम् ॥ ९ ॥

अभिमुखपतितम्। येन भक्षितं तस्यैवाभि मुख्येन सम्मुखं पतितं प्रशान्तदिक्स्थं प्रशान्तायां च दिशि स्थितं च शुभम्। यदूर्ध्वसंस्थितं तच्च च स्योर्ध्वस्थं भवति तदतिशोभनम्। अतोऽस्मात्प्रकारादन्यथा विपर्ययेणानभिमुखं पतितमप्रशान्तदिक्स्थमनूर्ध्वसंस्थितं न शुभकरं प्रदिष्टमुक्तम्। स्थितपतितं च करोति मृष्टमन्नम्। स्थित्वा यत्पतितं तन्मृष्टमन्नं करोति विदधाति ॥ ९ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ दन्तकाष्ठलक्षणं
नाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥

## अथ शाकुनं व्याख्यायते ।

तत्रादावेव प्रयोजनप्रदर्शनार्थमाह ।

यच्छक्रशुक्रवागीशकपिष्ठलगरुत्मताम् ।
मतेभ्यः प्राह ऋषभो भागुरेर्देवलस्य च ॥ १ ॥
भारद्वाजमतं दृष्ट्वा यच्च श्रीद्रव्यवर्धनः ।
आवन्तिकः प्राह नृपो महाराजाधिराजकः ॥ २ ॥
सप्तर्षीणां मतं यच्च संस्कृतं प्राकृतं च यत् ।
यानि चोक्तानि गर्गाद्यैर्यात्राकारैश्च भूरिभिः ॥ ३ ॥
तानि दृष्ट्वा चकारेमं सर्वशाकुनसङ्ग्रहम् ।
वराहमिहिरः प्रीत्या शिष्याणां ज्ञानमुत्तमम् ॥ ४ ॥

यत् शाकुनं शक्र इन्द्रः । शुक्रो भार्गवः । वागीशो बृहस्पतिः । कपिष्ठलो मुनिः । गरुत्मान् वैनतेयः । एषां शास्त्रकर्तॄणां मतेभ्यः ऋषभाख्य आचार्यः प्राह प्रोक्तवान् । तथा भागुरेर्मुनेर्देवलस्य च मुनेर्मतादाच्छाकुनं ऋषभाख्यः प्राह ॥ १ ॥

भारद्वाजमतमिति । यच्च शाकुनं भारद्वाजाख्यस्य मुनेर्मतं दृष्ट्वावलोक्य श्रीद्रव्यवर्धनाख्यो महाराजाधिराजवंशप्रसूत आवन्तिक उज्जयिन्या नृपो राजा प्राहोक्तवान् ॥ २ ॥

मतं सप्तर्षीणामिति । यच्छाकुनं सप्तर्षीणां मरीच्यादीनां मतम् । यच्चान्यत् संस्कृतं लोके व्यवहरति । यच्च प्राकृतं शाकुनं संस्कृतवाचा रहितम् । यानि च शाकुनानि गर्गाद्यैर्गर्गवसिष्ठपराशरकाश्यपैश्चर्षिपुत्रैर्भूरिभिर्बहुभिर्यात्राकारैरुक्तानि कथितानि ॥ ३ ॥

तानि च दृष्ट्वावलोक्येमं वराहमिहिरो वराहमिहिराख्यो मगधद्विजः शिष्याणां प्रीत्या हेतुभूतया प्रीत्यैव प्रीत्यर्थं सर्वशाकुनसङ्ग्रहं सङ्क्षेपमुत्तमं प्रधानं चकार कृतवान् ॥ ४ ॥

अथ शाकुने प्रयोजनमाह ।

अन्यजन्मान्तरकृतं कर्म पुंसां शुभाशुभम् ।
यत्तस्य शकुनः पाकं निवेदयति गच्छताम् ॥ ५ ॥

पुंसां पुरुषाणामन्यजन्मान्तरकृतं प्राग्जन्मन्यर्जितं शुभाशुभं यत् कर्म तस्य कर्मणो यत्पाकं शुभाशुभफलं तच्छकुनः शुभाशुभफलं निवेदयति सूचयति । कश्चित्प्राणिरूपः स गच्छतां व्रजमानानां यात्रायै निवेदयति ॥ ५ ॥

अधुना शाकुनानां भेदप्रदर्शनार्थमाह ।

**ग्रामारण्याम्बुभूव्योमद्युनिशोभयचारिणः ।**
**रुतयातेक्षितोक्तेषु ग्राह्याः पुंस्त्रीनपुंसकाः ॥ ६ ॥**

शकुनाः केचिद्ग्राम्या ग्रामभवाः । अन्ये आरण्या अरण्यनिवासिनः । अन्येऽम्बुचरा जलचारिणः । भूचराः स्थलवासिनः । व्योमचरा आकाशचराः । तत्र ग्राम्या नरतुरगगजसारमेयाः । आरण्याः सिंहव्याघ्रवराहद्वीपिमृगाः । अम्बुचरा हंसादयः । भूचराः श्वाविध्नकुलसर्पादयः । व्योमचरा ये नित्यमेवाकाशस्था दृश्यन्ते न कदाचिद्भूमौ श्लिष्यन्ते । अन्ये द्युचारिणोऽहश्चराः । अन्ये निशाचरा रात्रिचराः । अन्य उभयचारिणो द्युचरा रात्रिचराश्च । एतेषां लक्षणमुत्तरत्राचार्य एव वक्ष्यति "श्या[1]माश्येनशशघ्नवञ्जुले" त्यादिना ग्रन्थेन वयमपि तत्रैव व्याख्यास्यामः । एतेषु च शकुनेषु पुंस्त्रीनपुंसका रुतयातेक्षितोक्तेषु ग्राह्या गृहीतव्याः । रुतं शब्दः । यातस्तेषामेव गमनम् । एतेषु लक्षणप्रेक्षणमीक्षितम् । तेषामेव विचारः किमयं पुरुषः स्त्री वा नपुंसको वेति उक्तम् । तत्कालजातो बाह्यशब्दो दूरस्थः शकुनो यत्र व्याहरति तत्र संशयः किं पुरुषेण व्याहृतम् । स्त्रिया वा । नपुंसकेनैव वा । तत्र यदि पुंसः सम्भाषणं निकटस्थस्य तत्कालं श्रूयते तदा स शकुनः पुमान् । अथ स्त्रियाः श्रूयते तदा सापि स्त्री । नपुंसकस्य यदि श्रूयते तदा नपुंसक एवेति ॥ ६ ॥

पुनरप्याह ।

**पृथग्जात्यनवस्थानादेषां व्यक्तिर्न लक्ष्यते ।**
**सामान्यलक्षणोद्देशे श्लोकावृषिकृताविमौ ॥ ६ ॥**

एषां शकुनानां पृथक् पृथग्जातिर्योनिविभागः । अनवस्थानमेकदेशे त्वनवस्थितेरभावः । इतिहेतोर्व्यक्तिविभागो न लभ्यते न ज्ञायते । सामा-

---

[1] बृहत्संहितायाम् ८७ अध्यायस्य १ श्लोकः ।

न्यमविशेषलक्षणं यत्तस्य च उद्देशः कथनं, तत्रेमावृषिकृतौ मुनिप्रणीतौ वृद्ध-गर्गोक्तौ द्वौ श्लोकावुच्येते ॥ ७ ॥

अधुना तावेवाह ।

**पीनोन्नतविकृष्टांसाः पृथुग्रीवाः सुवक्षसः।**
**स्वल्पगम्भीरविरुताः पुमांसः स्थिरविक्रमाः ॥ ८ ॥**
**तनूरस्कशिरोग्रीवाः सूक्ष्मास्यपदविक्रमाः ।**
**प्रसक्तमृदुभाषिण्यः स्त्रियोऽतोऽन्यन्नपुंसकम् ॥ ९ ॥**

पीनोन्नतविकृष्टांसा इति । पीनौ मांसोपचितौ उन्नतावुच्चौ विकृष्टौ विस्तीर्णौ अंसौ स्कन्धौ येषाम् । पृथुग्रीवा विस्तीर्णशिरोधराः । सुवक्षसः शोभनोरःस्थलाः । स्वल्पगम्भीरविरुताः । स्वल्पमत्यल्पं गम्भीरं सानुनादं विरुतं शब्दो येषाम् । ये च स्थिरविक्रमा दृढपौरुषाः । ते पुमांसः पुरुषाख्याः शकुनाः ॥ ८ ॥

तनूरस्केति । उरो वक्षः । शिरः शीर्षम् । ग्रीवा शिरोधरा । एता-न्यवयवानि तनूनि यासां तास्तथाभूताः । ककारोऽत्र समासान्तः । सूक्ष्म-मल्पमास्यं मुखं पदानि चरणानि विक्रमः पुरुषार्थश्च सूक्ष्मो यासाम् । प्रसक्तं श्लिष्टं मृदु मधुरं भाषितं रवो यासां ताः स्त्रियः । अतोऽन्यन्नपुंसकमिति । अतोऽस्माल्लक्षणद्वयादन्यलक्षणसंयुतं नपुंसकम् । एतदुक्तं भवति । पुरुषस्य यल्लक्षणमुक्तं यच्च स्त्रियास्तेन व्यामिश्रेण लक्षणद्वयेन संयुतं नपुंसकं ज्ञेयम् ॥ ९ ॥

अथ यन्नोक्तं तल्लक्षणं तल्लोकाज्ज्ञातव्यमित्येतदाह ।

**ग्रामारण्यप्रचाराद्यं लोकादेवोपलक्षयेत् ।**
**सञ्चिक्षिप्सुरहं वच्मि यात्रामात्रप्रयोजनम् ॥ १० ॥**

तेषां शकुनानां ग्रामप्रचारमरण्यप्रचारं च लोकाल्लोकतोऽन्यशा-स्त्रादुपलक्षयेत् जानीयात् । आदिग्रहणाद्द्युनिशोभयचारित्वम् । सञ्चि-क्षिप्सुरिति । सङ्क्षेपं कर्तुमिच्छुः सञ्चिक्षिप्सुः । अहं सञ्चिक्षिप्सुर्यात्रामात्रप्रयोज-नम् । यात्रायां समानं यावन्मात्रमुपयुज्यते तावन्मात्रं वच्मि कथयामि इति हेतोर्विस्तरेण मयैतन्नोक्तं ग्रन्थगौरवभयादिति ॥ १० ॥

अधुना किमधिकृत्य शाकुनं विचारयेदित्याह ।

**पथ्यात्मानं नृपं सैन्ये पुरे चोद्दिश्य देवताम् ।**
**सार्थे प्रधानं साम्ये स्याज्जातिविद्यावयोऽधिकम् ॥ ११ ॥**

पथि गच्छतः पुंस आत्मानं स्वशरीरमुद्दिश्य शाकुनं शुभाशुभं लक्षयेत् । सैन्ये सेनायां नृपं राजानमुद्दिश्य । पुरे नगरे देवतां दैवतस्वामिनमुद्दिश्य । पुरग्रहणमुपलक्षणार्थम् । ग्रामाधिपतिमुद्दिश्य । सार्थे जनसमूहे प्रधानमर्थपतिमुद्दिश्य । यदा सार्थे बहवः प्रधाना भवन्ति तदा साम्ये जातितो जातिसाम्ये विद्यया योऽधिकस्तम् । विद्यासाम्ये यो वयसोऽधिकस्तमिति ॥ ११ ॥

अधुना दिग्लक्षणफलनियमांश्चाह ।

**मुक्तप्राप्तैष्यदर्कासु फलं दिक्षु तथाविधम् ।**
**अङ्गारदीप्तधूमिन्यस्ताश्च शान्तास्ततोऽपराः ॥ १२ ॥**

अत्र तावदादित्यस्य भ्रमणवशेनाष्टासु दिक्ष्ववस्थितिर्भवति । तद्यथा । सूर्योदयादारभ्य यावद्दिनस्य प्रहरस्तावदैशानी दिङ्मुक्तसूर्या । पूर्वा प्राप्तसूर्या । आग्नेयी एष्यत्सूर्या । ततः प्रहरादूर्ध्वं यावत्प्रहरद्वयं प्राची मुक्तसूर्या । आग्नेयी प्राप्तसूर्या । दक्षिणैष्यत्सूर्या । ततः प्रहरद्वयादूर्ध्वं प्रहरत्रयं यावदाग्नेयी मुक्तसूर्या । दक्षिणा प्राप्तसूर्या । नैर्ऋती एष्यत्सूर्या । ततः प्रहरत्रयादूर्ध्वमस्तमयं यावद्दक्षिणा मुक्तसूर्या । नैर्ऋती प्राप्तसूर्या । पश्चिमैष्यत्सूर्या । ततोऽस्तमयादूर्ध्वं यावत्प्रथमो रात्रिप्रहरस्तावन्नैर्ऋती मुक्तसूर्या । पश्चिमा प्राप्तसूर्या । वायव्यैष्यत्सूर्या । ततो रात्रिप्रहरादूर्ध्वं प्रहरद्वयं यावत्पश्चिमा मुक्तसूर्या । वायवी प्राप्तसूर्या । उत्तरैष्यत्सूर्या । ततः प्रहरद्वयादूर्ध्वं प्रहरत्रयं यावद्वायवी मुक्तसूर्या । उत्तरा प्राप्तसूर्या । ऐशान्येष्यत्सूर्या । ततः प्रहरत्रयादूर्ध्वं सूर्योदयं यावदुत्तरा मुक्तसूर्या । ऐशानी प्राप्तसूर्या । पूर्वैष्यत्सूर्या । एतासु मुक्तप्राप्तैष्यदर्कासु दिक्षु फलं तथाविधमिति । तासु दिक्षु तथाविधं नामानुरूपं फलमादेश्यम् । अशुभमित्यर्थः । मुक्तसूर्यायां दिशि यदशुभं शाकुनमुक्तं तन्मुक्तं गतम् । तत्फलमतीतमित्यर्थः । प्राप्तसूर्यायां यदशुभं शाकुनं तत्प्राप्तम् । तस्मिन्नेवाहनि भवति । एष्यत्सूर्यायां यदशुभं शाकुनं

तद्देश्यत् पुरस्ताद्भविष्यति । अङ्गारदीप्तधूमिन्यश्चेति । ता दिशो मुक्तप्राप्तै-ष्यदर्काख्या यथाक्रमेणाङ्गारदीप्तधूमिन्यः । मुक्तसूर्याङ्गारिणी । प्राप्तसूर्या दीप्ता । एष्यत्सूर्या धूमिनी । ततः पराः पञ्च दिशः शान्ताः ॥ १२ ॥

उक्तं च ।

अङ्गारिणी दिग्विविप्रमुक्ता यस्यां रविस्तिष्ठति सा प्रदीप्ता ।
प्रधूमिता यास्यति यां दिनेशः शेषाः प्रशान्ताः शुभदाश्च ताः स्युः ॥

अथ केचिद्रात्रेरर्धप्रहरमारभ्य यावद्दिनस्यार्धप्रहरं तावत् प्राचीं दिशं प्राप्तसूर्यामिति वर्णयन्ति । तत ऊर्ध्वं सार्धप्रहरं यावदाग्नेयीम् । शेषास्व-प्येवं ज्ञेयम् । अयुक्तमेतत् ।

यस्माद्भगवान् गर्गः ।

उदये दीप्यते पूर्वा पूर्वाह्णे पूर्वदक्षिणा ।
मध्याह्ने दक्षिणा दीप्ताऽथापराह्णे तु नैर्ऋती ॥
पश्चिमास्तमये दीप्ता वायवी पूर्वरात्रिके ।
सौम्या तु मध्यरात्रे स्यादैशान्यपररात्रिके ॥
सम्प्राप्तानागतातीता दीप्यन्तेऽत्र सदा दिशः ।
व्याहरन्ते मृगास्तासु वेदयन्ति महद्भयम् ॥
तात्र वृत्तमतीतायां दीप्तायां शंसते मृगः ।
अनागतायामाशादि दीप्तायां तद्दिने स्मृतम् ॥

अधुनाऽऽसां दिशां फलनियमानाह ।

**तत्पञ्चमदिशां तुल्यं शुभं त्रैकाल्यमादिशेत् ।**
**परिशेषदिशोर्वाच्यं यथासन्नं शुभाशुभम् ॥ १३ ॥**

तदित्यनेनाङ्गारिण्याद्यानां दिशां परामर्शः । ताभ्यः पञ्चमास्तत्प-ञ्चमाः । तत्पञ्चमदिशां तुल्यं सदृशं त्रैकाल्यं त्रिकालभवं शुभं फलमादिशेत् वदेत् । एतदुक्तं भवति । अङ्गारिण्या या पञ्चमी दिक् शान्ता तस्यां सौम्ये शकुने शुभं यत् फलं तद्यातम् । तस्यामेव वामे स्थिते शकुनेऽल्पफलमनिष्टं यातम् । दीप्ताया या पञ्चमी दिक् तस्यां शुभे स्थिते शकुने यत् शुभं तत् साम्प्र-तम् । तस्यामेव वामे स्थिते शकुनेऽल्पमशुभं साम्प्रतम् । धूमिताया या

पञ्चमी दिक् तस्यां शुभे स्थिते शकुने यत् शुभं फलं तदेष्यम्। तस्यामेव वामे शकुनेऽल्पमशुभमेष्यम्। अङ्गारिण्याद्यानामप्येवं शुभे शकुनेऽल्पं शुभमशुभेऽतीवाशुभं फलमिति सर्वासामूह्यम्। परिशेषदिशोरिति। परिशेषयोर्द्वयोर्दिशोर्यथासन्नं येन प्रकारेणासन्नं निकटवर्ति शुभाशुभं फलं वाच्यं वक्तव्यम्। यस्यां या दिक् प्रत्यासन्ना निकटवर्तिनी दीप्तायां तथा तस्यां यत् फलं तत् तस्यामेव वाच्यम्। एतदुक्तं भवति। ते दिशौ भागद्वयेन परिकल्प्य निश्चयः कार्यः। अङ्गारितशान्तासन्ने भागे पापे शकुने स्थिते यातमल्पमनिष्टं ज्ञेयम्। तस्मिन्नेव सौम्ये स्थिते शकुने शुभं यातम्। धूमितशान्तासन्ने भागे सौम्ये स्थिते शकुने भाव्यल्पमनिष्टम्। तस्मिन्नेव पापे स्थिते शकुने भावि बह्वनिष्टं भवति॥ १३॥

उक्तं च।

यातमुक्तायां साम्प्रतं दीप्तायामेष्यं ज्ञेयं धूपितायामनिष्टं शान्तास्वेवं दिक्षु तत्पञ्चमासु प्रत्यासन्नाशयैः शान्तदीप्तमिति॥

पुनरपि फलनियमार्थमाह।

**शीघ्रमासन्ननिम्नस्थैश्चिरादुन्नतदूरगैः।**
**स्थानवृद्ध्युपघाताच्च तद्वद्ब्रूयात् फलं पुनः॥ १४॥**

आसन्नैर्निकटवर्तिभिः शकुनैर्निम्नस्थैर्नीचस्थानगतैश्च शीघ्रमाश्वेव शुभमशुभं वा फलं भवति। उन्नतैरुच्चप्रदेशस्थैर्दूरस्थैरनिकटवर्तिभिश्चिराद्बहुकालेन शुभमशुभं वा फलं भवति।

तथा च पराशरः।

श्लिष्टेषु तु भवेत् क्षिप्रं शुभं वा यदि वेतरत्।
दूरस्थेषु तु सर्वेषु चिरात् सम्पद्यते फलम्॥

स्थानवृद्ध्युपघाताद्धेतोस्तद्वत् तेनैव प्रकारेण फलं ब्रूयाद्वदेत्। वर्द्धमाने स्थाने यत्र प्रत्यहं वृद्धिर्दृश्यते तत्रस्थोऽशुभः शकुने उपघातं करोति। अत्रैव शुभं किञ्चिदेवं विचार्य पुनर्भूयः शुभाशुभं फलं ब्रूयात्॥ १४॥

तथा च पराशरः।

दग्धवक्रातुरच्छिन्नशुष्ककण्टकिभूरुहाः।
अश्मनिम्नकपालास्थिविक्षताकेशभस्मसु॥

श्मशानाङ्गारवल्मीका ऊषरापांसुमत्सराः ।
शीर्णजीर्णाशुच्यशुभदेशस्था दीप्तसञ्ज्ञिताः ॥
मनोज्ञस्निग्धफलितक्षीरपुष्पतरुस्थिताः ।
समप्रशस्तभूमिष्ठाः शान्ताः स्युर्मृगपक्षिणः ॥
अथ दीप्तशुभाः शान्ताः शुभ इति ।
अधुना दशप्रकारस्य दीप्तस्य शकुनस्य लक्षणमाह ।

**क्षणतिथ्युडुवातार्कैर्दैवदीप्तो यथोत्तरम् ।**
**क्रियादीप्तो गतिस्थानभावस्वरविचेष्टितैः ॥ १५ ॥**

क्षणो मुहूर्तः शिवादिकः । तत्र दारुणोग्राणां नक्षत्राणां ये मुहूर्तास्तेषु क्षणेषु दीप्तः शकुनः । तिथिर्नन्दादिकस्तत्र चतुर्थीषष्ठ्यष्टमीनवमीचतुर्दश्यो दीप्ताः । एतासु तिथिषु दीप्तः शकुनः । दारुणोग्रनक्षत्रेषु तत्र दीप्तः शकुनः । उडूनि नक्षत्राण्युच्यन्ते । एवमुडुदीप्तः । चण्डखरपरुषप्रतिलोममारुतो वातदीप्तः । आदित्याभिमुखो वातदीप्तदिक्स्थश्चार्कदीप्तः । एवं यथोत्तरं शकुनः पञ्चप्रकारो दैवदीप्तः । एतदुक्तं भवति । क्षणदीप्तात् तिथिदीप्तोऽधिकः । तस्मान्नक्षत्रदीप्तः । तस्माद्वातदीप्तः । तस्मादर्कदीप्त इति दैवदीप्तः । विद्युदुल्कार्कमरुतामभिमुखे यो धावति स गतिदीप्तः । छिन्नभिन्नवक्रदिग्धपाणिजग्धशीर्णाशुचिस्थानस्थितः स्थानदीप्तः । भावः सत्ता सत्ता संवित्तिः । तद्विहीनो भावदीप्तः । विषमविप्लुताक्षरक्षामजर्जरस्वरः स्वरदीप्तः । .. पक्षपाततुण्डविधूननिपातपरोन्नावक्षभावकुट्टनैश्चेष्टादीप्तः । एवमेषोऽपि यथोत्तरं दीप्त इति ॥ १५ ॥

तथा चात्रोक्त ऋषिपुत्रोक्तवाक्यैर्निश्चयः ।

तद्यथा ।

चतुर्थीषष्ठ्यष्टमीचतुर्दशीषु तिथिदीप्ताः । विष्ट्यां करणे करणदीप्ताः । मूलेन्द्रसर्परौद्रेन्द्राग्नेययाम्यपित्र्याग्नेयपूर्वासु नक्षत्रदीप्ताः । मुहूर्तेऽप्येतेषामेव मुहूर्तदीप्ताः । विसञ्ज्ञाः स्वल्पसञ्ज्ञा भावदीप्ताः । स्वरपरुषभिन्नभैरवार्तोद्वेजनीयविषमविप्लुताक्षरक्षामजर्जरस्वराः स्वरदीप्ताः । अशनिहतपतितच्छिन्नभिन्नभग्नोन्मूलितार्धदलितोपमृष्टशुष्कव्याधितापत्राफलाक्षीरमलिनशीर्णवि-

त्वगाधारविरसकत्वाम्ललवणातिक्तक्वथितायतविषमसंश्रितसङ्कुटिलतावितानावनतनिरोधान्याक्रान्तकटाग्निदग्धेषु तरुषु । प्राकारगोपुराट्टालककुभूमिसंस्थाः स्थानदीप्ताः । ये शीर्णविषमनिम्नसङ्करकेशास्थिकपालवल्मीकाङ्गारपलालविनष्टायुधान्याधारकलहसर्पविद्युदुल्कार्कमारुतायुधाग्नीनुपधावन्ते ते गतिदीप्ताः । पक्षविपातोत्तुण्डविधूननैर्निपातपरोच्चावचभावकुट्टनैश्च चेष्टादीप्ताः । चण्डपरुषप्रतिलोममारुता वातदीप्ताः । अर्काभिमुखा दीप्तदीक्स्था रविदीप्ता इत्याह भगवानिन्द्रः ।

अथ विशेषमाह ।

**दशधैवं प्रशान्तोऽपि सौम्यस्तृणफलाशनः ।**
**मांसामेध्याशने रौद्रो विमिश्रोऽन्नाशनः स्मृतः ॥ १६ ॥**

एवमनेन प्रकारेण दशधा दशभिः प्रकारैरपि शान्तः शकुनो भवति । तथापि यदि तृणाशनस्तृणभक्षः । फलाशनो वा फलान्यश्नाति । तदा सौम्यः शुभफलः । अथ मांसामेध्याशनो मांसमामिषममेध्यं विष्ठादि वाश्नाति तदा रौद्रो दीप्तः । अन्नाशनोऽन्नमश्नाति । अन्नभोजी विमिश्रः शान्तो दीप्तश्च स्मृत उक्तः ॥ १६ ॥

उक्तं च ।

पिशिताशुचिभोजनः प्रदीप्तस्तृणफलभुक् च निसर्गतः प्रशान्तः ।
उभयः कथितस्तथान्नभोजी दिक्स्थानोदयकालतश्च चिन्त्यः ॥

अथान्यदप्याह ।

**हर्म्यप्रासादमङ्गल्यमनोज्ञस्थानसंस्थिताः ।**
**श्रेष्ठा मधुरसक्षीरफलपुष्पद्रुमेषु च ॥ १७ ॥**

हर्म्यं गृहम् । प्रासादो देवप्रासादः । मङ्गल्यस्थानानि देवब्राह्मणगोभिरध्यासितानि । मनोज्ञानि हरितशाद्वलानि शीतलद्रुमच्छायासंयुक्तानि । एतेषु स्थानेषु ये संस्थिताः शकुनास्ते श्रेष्ठाः शुभफलाः । तथा मधुरेषु सुस्वादफलेषु वृक्षेषु । तथा सक्षीरेष्वर्कादिषु । फलवृक्षेषु बीजपूरादिषु पुष्पवृक्षेषु च स्थिताः श्रेष्ठा एव ॥ १७ ॥

अधुना शाकुनानां बलविशेषफलमाह ।

**स्वकाले गिरितोयस्था बलिनो द्युनिशाचराः ।**

**क्लीबस्त्रीपुरुषा ज्ञेया बलिनः स्युर्यथोत्तरम् ॥ १८ ॥**

स्वकाले आत्मीयसमये गिरितोयस्थाः पर्वतजलस्था यथासङ्ख्यं द्युनिशाचरा बलिनो वीर्यवन्तो भवन्ति । द्युचरा दिवसे गिरिस्था बलिनः । गिरिशब्द उच्चदेशोपलक्षणार्थः । निशाचरा निश्यनूपे च ।

तथा च मनुधर्मा: ।

गिरौ दिवा दिवाचारी निश्यनूपे निशाचराः ।
रोधवाक् शकुनो ज्ञेयो विभजेद्बलमन्यथा ॥

क्लीबस्त्रीपुरुषा इति । एषां शकुनानां यथोत्तरं यथासङ्ख्यं क्लीबस्त्रीपुरुषा बलिनः । क्लीबेभ्यः स्त्रियो बलिन्यः । स्त्रीभ्यः पुरुषा इति ॥ १८ ॥

उक्तं च ।

द्युनिशोभयचारिणः स्वकाले पुरवनमिश्रचराः स्वभूमिसंस्थाः ।
सफला विफला विपर्ययस्था गमनेच्छोः पुरपार्थिवाः शुभास्ते ॥

अन्यदप्याह ।

**जवजातिबलस्थानहर्षसत्त्वस्वरान्विताः ।**

**स्वभूमावनुलोमाश्च तदूनाः स्युर्विवर्जिताः ॥ १९ ॥**

जवो वेगो गतिरित्यर्थः । जातिर्योनिविभागः । बलं प्रमाणः । स्थानं स्थितिः । हर्षश्चित्तहर्षः । सत्त्वं [1]सौन्दर्यनिर्भयमित्यर्थः । स्वरः शब्दः । एतैर्ये बलवत्तराः । वक्ष्यति च । "यो[2]ह्यो येो बलवत्तरः" । तत्र न ज्ञायते शकुनानां बलं तदर्थमुक्तम् । द्वयोर्मध्ये यः शकुनो जवेनाधिकः । यश्च जातेरधिकः । यश्च बलाधिकः । यश्च स्थाने शोभने स्थितः । यश्च हर्षयुक्तः । यश्च सत्त्वयुक्तः । यश्च शोभनः स्वरान्वितः । यश्च स्वभूमावानुलोम्येन स्थितः स एव बली । तदूनाः स्युर्विवर्जिताः । तदित्यनेन जवादयः परामृश्यन्ते । तैरूनां रहिता बलवर्जिताः स्युर्भवेयुः ॥ १९ ॥

---

१ सत्त्वमौदार्य-इति ग० पु० पाठः ।
२ अस्यैवाध्यायस्य ५४ श्लोकः ।

अधुनैतेषां जातिविभागेन दिग्बलमाह ।

**कुक्कुटेभपिरिल्यश्च शिखिवञ्जुलछिक्कराः ।**
**बलिनः सिंहनादश्च कूटपूरी च पूर्वतः ॥ २० ॥**

कुक्कुटः कृकवाकुः । इभो हस्ती । पिरिली पक्षिविशेषः । शिखी मयूरः । वञ्जुलः खदिरचञ्चुः । छिक्करो मृगजातिः । सिंहनादः पक्षिविशेषः । कूटपूरी करायिका । एते पूर्वतः पूर्वस्यां दिशि बलिनः । प्राजापत्याच पूर्वा ज्ञेया न यातुर्वशेनेत्येवं सर्वत्र ज्ञेयम् ॥ २० ॥

अथ दक्षिणस्यामाह ।

**क्रोष्टुकोलूकहरीतकाककोकर्क्षपिङ्गलाः ।**
**कपोतरुदिताक्रन्दक्रूरशब्दाश्च याम्यतः ॥ २१ ॥**

क्रोष्टुकः शृगालः । उलूकहारीतौ पक्षिविशेषौ । काको वायसः । कोकः पक्षी । ऋक्षः प्राणी । पिङ्गल उलूकचेटिका । कपोतः पक्षी । रुदितं रोदनम् । आक्रन्दमाक्रन्दितम् । अन्ये क्रूरशब्दा अप्रियाभिधायिनः । ते च सर्वे याम्यतो दक्षिणस्यां दिशि बलिनः ॥ २१ ॥

अथ पश्चिमायामाह ।

**गोशशक्रौञ्चलोमाशहंसोत्क्रोशकपिञ्जलाः ।**
**बिडालोत्सववादित्रगीतहासाश्च वारुणाः ॥ २२ ॥**

गोः प्रसिद्धा । शशः प्राणिविशेषः । क्रौञ्चः पक्षी । लोमाशः प्राणी । हंसः । उत्क्रोशाख्याः कुरवः । कपिञ्जलाख्यः । सर्व एव पक्षिविशेषाः । बिडालो मार्जारः । उत्सवो विवाहादिकः । वादित्राणि वीणामुरजमर्दलकरटाभेरीपणवगोमुखपटहादयः । गीतं प्रसिद्धम् । हास उपहासः । एते वारुणाः पश्चिमायां बलिनः ॥ २२ ॥

अथोत्तरस्यामाह ।

**शतपत्त्रकुरङ्गाखुमृगैकशफकोकिलाः ।**
**चाषशल्यकपुण्याहघण्टाशङ्खरवा उदक् ॥ २३ ॥**

शतपत्त्रः पक्षी दार्वाघाट इति प्रसिद्धः । कुरङ्गो हरिणः । आखुर्मूषकः । मृगः प्रसिद्धो हरिणः । एकशफावश्वगर्दभौ । कोकिलः प-

भृतः । चाषः पक्षी । शल्यको विलेशयः प्राणी । पुण्याहरव आशीःसंयुक्तः शब्दः । घण्टाशङ्खौ प्रसिद्धौ । एषां सर्वेषां रवाः शब्दा उदगुत्तरस्यां दिशि बलिनः ॥ २३ ॥

अधुना तेषां प्रतिभागमाह ।

**न ग्राम्योऽरण्यगो ग्राह्यो नारण्यो ग्राम्यसंस्थितः ।**
**दिवाचरो न शर्वर्यां न च नक्तंचरो दिवा ॥ २४ ॥**

ग्राम्यशब्दः शकुनोऽरण्यगोऽरण्यस्थितः शुभोऽशुभो वा न ग्राह्यः । एवमारण्योऽपि ग्रामसंस्थितो न ग्राह्यः । दिवाचरो दिवसचरः शर्वर्यां रात्रौ न ग्राह्यः । नक्तंचरो रात्रिचरो दिवसे न ग्राह्य इति ॥ २४ ॥

पुनरतिप्रतिषेधार्थमाह ।

**द्वन्द्वरोगार्दितत्रस्ताः कलहामिषकाङ्क्षिणः ।**
**आपगान्तरिता मत्ता न ग्राह्याः शकुनाः क्वचित् ॥ २५ ॥**

द्वन्द्वं युग्मं तच्च सारयुग्मं विना यतस्तदिष्टफलं वक्ष्यति च ।
[१] "सारसकूजितमिष्टफलं तद्युगपद्विरुतं मिथुनस्ये"ति ।

रोगार्दितो गदपीडितः । त्रस्तो भीतः । कलहकाङ्क्षी कलहेच्छुः । आमिषकाङ्क्षी मांसाभिलाषी । आपगान्तरिता नद्यन्तरिताः । मत्ताः ऋतुकालवशेन सदर्पाः । एवंविधाः शकुनाः सदसत्फलेषु न क्वचिदपि ग्राह्याः ॥ २५ ॥

उक्तं च ।

द्वन्द्वादिरोगार्दितभीतमत्तवैरान्तयुद्धामिषकाङ्क्षिणश्च ।
सीमान्तनद्यन्तरिताश्च सर्वे न चिन्तनीयाः सदसत्फलेषु—इति ॥

अधुना चैतेषामृतुकालज्ञानं निष्फलत्वं चाह ।

**रोहिताश्वाजवालेयाः कुरङ्गोष्ट्रमृगाः शशाः ।**
**निष्फलाः शिशिरे ज्ञेया वसन्ते काककोकिलौ ॥ २६ ॥**

रोहितो मृगजातिः । अश्वस्तुरगः । अजश्छागः । वालेयो गर्दभः । कुरङ्गो मृगजातिः । उष्ट्रः करभः । मृगो हरिणः । शशः प्राणी । एते सर्वे

१ बृहत्संहितायाम् ८७ अध्याये ३७ श्लोकः ।

शिशिरे माघफाल्गुनयोः । सदसन्वान्निष्फला ज्ञेया ख्यातख्याः । वसन्ते चैत्रवैशाखयोः काको वायसः । परभृतः । एतौ सदसन्त्वान्निष्फलावेव ॥ २६ ॥

अन्येष्वाह ।

**न तु भाद्रपदे ग्राह्याः सूकरश्ववृकादयः ।**
**शारद्यब्जादगोक्रौञ्चाः श्रावणे हस्तिचातकौ ॥ २७ ॥**

भाद्रपदे मासि सूकरो वराहः । श्वा सारमेयः । वृकः प्राणी । आदिग्रहणान्मृगादयो विलेशयाः । एते न ग्राह्याः । सदसत्त्वाद्वा निष्फलाः । शारद्याश्विनकार्त्तिकयोः । अब्जादा हंसादयः । अप्सु जायत इत्यब्जम् । तददन्ति भक्षयन्ति इति अब्जादाः । गोः प्रसिद्धा । क्रौञ्चः पक्षिविशेषः । एते सदसत्त्वान्निष्फलाश्च ग्राह्याः । श्रावणे मासि हस्तिचातकौ न ग्राह्यौ हस्ती गजः । चातकः पक्षिविशेषः ॥ २७ ॥

अथान्येष्वप्याह ।

**व्याघ्रर्क्षवानरद्वीपिमहिषाः सविलेशयाः ।**
**हेमन्ते निष्फला ज्ञेया बालाः सर्वे विमानुषाः ॥ २८ ॥**

व्याघ्रः प्रसिद्धः प्राणी नखी । ऋक्षः प्राणी । वानरः कपिः । द्वीपी चित्रकः । महिषः प्रसिद्धः । एते सविलेशयाः विलेशयैः प्राणिभिः सहिताः । बिले शेते विलेशयः श्वाविद्नकुलादयः । विमानुषा मानुषवर्जिताः सर्वे प्राणिनः । बालाः शिशवः । हेमन्ते मार्गशीर्षपौषयोर्निष्फला ज्ञेया ख्यातख्याः । मानुषा बालाः पुनः सफला एव । एतेषां यच्छुभाशुभचेष्टितं तत्सफलमेव ॥ २८ ॥

अथ ऋतुकाललक्षणं भगवत्पराशरकृतं विस्तृतं लिख्यते ।

अथ शकुनेषु कोकिलमयूरजीवञ्जीवकप्रियपुत्रराजपुत्रीगोदापुत्रशतपत्रदात्यूहमदनसारिकावर्षाभूकोयष्टिमहामुत्तकभषकदण्डिमाणवकवायसकुक्कुटवकोत्क्रोश[1]शार्ङ्गप्लवकचित्रकपोतपुष्करयोष्ट्रयादीनां वसन्तो मदकालः । शतपत्रोत्क्रोशभृङ्गराजमयूरकोकिलबकबलाहकाप्लववाकधन्वनचातकसारङ्गाणां वर्षाः । चकोरकादम्बमदनशारिकाक्षीरपुष्करचातकहंसचक्रवाकसारसकुररक्रौञ्चकारण्डवभ्रमराणां शरत् । श्येनकुररक्रौञ्चसारसादीनां हेमन्ते शिशिरे

[1] शार्दूल-इति ग॰ पु॰ पाठः ।

एवमादयः शकुनानां मदकालाश्च । मृगाणां पुनः पुरुषाणां च शिवाशश-जम्बूकरुरुमरचमरवानरमार्जारनकुलगजगवयसिंहव्याघ्रकूर्मवराहादीनां प्रायः सर्वेषां मदकालश्च विशेषतश्च सारसरुमरसिंहव्याघ्रादीनां ग्रीष्मे । हरिणगजवृषभादीनां प्रावृट् । वृषभरुरुमहिषगवयरुमरचमराणां शरत् । गोगवयवृषादीनां हेमन्तः शिशिर इति ।

अधुना द्वात्रिंशद्भेदभिन्नस्य दिक्चक्रस्य प्रतिभागप्रदर्शनार्थमाह ।

**ऐन्द्रानलदिशोर्मध्ये त्रिभागेषु व्यवस्थिताः ।**
**कोशाध्यक्षानलाजीवितपोयुक्ताः प्रदक्षिणम् ॥ २९ ॥**

ऐन्द्री, पूर्वा दिक् । अनला आग्नेयी । अनयोर्मध्येऽन्तरे त्रयस्त्रिभागास्तेषु व्यवस्थिताः क्रमेण कोशे गञ्जेऽध्यक्षः स चैकस्मिन् भागे । द्वितीये अनलाजीवी अग्न्युपजीवकः सुवर्णकारादिकः । तृतीये तपोयुक्तस्तापसः । एत एव प्रदक्षिणं प्रादक्षिण्येनेति ॥ २९ ॥

अन्येष्वाह ।

**शिल्पी भिक्षुर्विवस्त्रा स्त्री याम्यानलदिगन्तरे ।**
**परतश्चापि मातङ्गगोपधर्मसमाश्रयाः ॥ ३० ॥**

याम्या दक्षिणा । अनला आग्नेयी । अनयोरन्तरे मध्ये ये त्रयो भागास्तेषु क्रमेण व्यवस्थिताः । शिल्पी चित्रकरलेखकरवर्धकिप्रायाः प्रथमे विभागे । भिक्षुर्यतिर्द्वितीये । विवस्त्रा स्त्री नग्ना स्त्री तृतीये । परतो दक्षिणनैर्ऋत्योर्मध्ये ये त्रयस्त्रिभागास्तेषु प्रथमे मातङ्गो हस्ती तत्समाश्रितः पुमान् । द्वितीये गोपालकस्तत्संमाश्रितः पुमान् । तृतीये धर्मसमाश्रयो धर्मानुरतः ॥ ३० ॥

अन्येष्वाह ।

**नैर्ऋतीवारुणीमध्ये प्रमदासूतितस्कराः ।**
**शौण्डिकः शाकुनी हिंस्रो वायव्यापश्चिमान्तरे ॥ ३१ ॥**

नैर्ऋती दक्षिणपश्चिमा । वारुणी पश्चिमा । अनयोर्मध्ये ये त्रयस्त्रिभागा मध्ये स्थितास्तेषु प्रथमे प्रमदा स्त्री । द्वितीये सूतिः प्रसवः । तृतीये तस्कराश्चोराः । वायव्यापश्चिमान्तरे ये त्रयस्त्रिभागा, मध्ये

स्थितास्तेषु प्रथमे शौण्डिको मधुपानसक्तः । कल्यपाल इति केचित् । द्वितीये शाकुनी धीवरः । तृतीये हिंस्रः क्रूरः ॥ ३१ ॥

अन्येष्वाह ।

**विषघातकगोस्वामिकुहकज्ञास्ततः परम् ।**
**धनवानीक्षणीकश्च मालाकारः परं ततः ॥ ३२ ॥**

ततः परमनन्तरम् । वायव्योत्तरयोरन्तरे ये त्रयस्त्रिभागाः । तत्र प्रथमे विषघातकः । विषं घातयति मारयति । द्वितीये गोस्वामी गोमान् । तृतीये कुहकज्ञ इन्द्रजालवित् । ततः परमुत्तरैशान्योरन्तरे ये त्रयो भागास्तेषु प्रथमे धनवान् । द्वितीये ईक्षणीको दैवज्ञः । तृतीये मालाकारः पुष्पप्रचायकः ॥ ३२ ॥

अन्येष्वप्याह ।

**वैष्णवश्चरकश्चैव वाजिनां रक्षणे रतः ।**
**द्वात्रिंशदेवं भेदाः स्युः पूर्वदिग्भिः सहोदिताः ॥ ३३ ॥**

ऐशानीपूर्वयोरन्तरे त्रयस्त्रिभागास्तेषु प्रथमे वैष्णवो विष्णुभक्तः । द्वितीये चरकश्चरः । तृतीये वाजिनामश्वानां रक्षणे पालने रतः सक्तः । एवमनेनैव प्रकारेण द्वात्रिंशद्भेदाः पूर्वदिग्भिः प्रागुक्ताभिरष्टाभिर्दिग्भिः सह साकमुदिताः कथिताः स्युर्भवेयुः ॥ ३३ ॥

अधुनाष्टासु दिक्ष्वधिपतीनाह ।

**राजा कुमारो नेता च दूतः श्रेष्ठी चरो द्विजः ।**
**गजाध्यक्षश्च पूर्वाद्याः क्षत्रियाद्याश्चतुर्दिशम् ॥ ३४ ॥**

राजा नृपः पूर्वस्यां दिशि । कुमारो राजपुत्र आग्नेय्याम् । नेता सेनापतिर्दक्षिणस्याम् । दूतो गमागमिको नैर्ऋत्याम् । श्रेष्ठी पश्चिमायाम् । चरो गूढपुरुषो वायव्याम् । द्विजो ब्राह्मण उत्तरस्याम् । गजाध्यक्षो हस्तिशालाध्यक्ष ऐशान्याम् । एते पूर्वाद्या ज्ञेयाः । क्षत्रियाद्याश्चतुर्दिशम् । पूर्वाद्यासु चतसृषु दिक्षु क्षत्रियाद्या वर्णाः । तद्यथा । पूर्वस्यां क्षत्रियाः । दक्षिणस्यां वैश्याः । पश्चिमायां शूद्राः । उत्तरस्यां ब्राह्मणाः ॥ ३४ ॥

अथ चक्रस्य प्रविभागमाह ।

**गच्छतस्तिष्ठतो वापि दिशि यस्यां व्यवस्थितः ।**
**विरौति शकुनो वाच्यस्तद्दिग्जेन समागमः ॥ ३५ ॥**

पुंसो गच्छतो यात्रायां व्रजतः । तिष्ठत एकदेशस्थस्य निश्चलस्य वापि यस्यां दिशि व्यवस्थितः समवस्थितः । शकुनः प्राणी पक्षी वा विरौति शब्दं करोति तद्दिग्जेन यस्यां दिशि यो जातस्तेन कथितेन सह तस्मिन् दिने तस्य समागमः संयोगो वाच्यो वक्तव्यः । यथेन्द्रानलदिशोर्मध्ये प्रथमविभागस्थे शकुने कोशाध्यक्षेण सह संयोगः । द्वितीयेऽनलाजीविना । तृतीये तापसेनेत्यादि सर्वत्रोदाहार्यम् ॥ ३५ ॥

अथ शिष्यजनभ्रान्तिनिरासाय चक्रविन्यासः प्रदर्श्यते ।



अधुना रुतान् शुभाशुभानाह ।

**भिन्नभैरवदीनार्त्तपरुषक्षामजर्जराः ।**
**स्वना नेष्टाः शुभाः शान्तहृष्टप्रकृतिपूरिताः ॥ ३६ ॥**

ये स्वनाः शब्दा भिन्ना विषमाः । भैरवाः क्रूराः । दीना दैन्यमागताः । जर्जरा भिन्नभाण्डसमुद्भूतशब्दसदृशाः । ते सर्वे एव नेष्टा न शुभाः । ये स्वनाः शान्तेन शान्तदिक्स्थेनार्काभिमुखेन मधुरस्वरेण च हृष्टप्रकृतिना सहर्षेण पूरिताः कृतास्ते च शुभाः ॥ ३६ ॥

अथ यातुर्वामभागगता ये शुभा गतास्तेषां नामान्याह ।

**शिवा श्यामा रला छुच्छुः पिङ्गला गृहगोधिका ।**
**सूकरी परपुष्टा च पुन्नामानश्च वामतः ॥ ३७ ॥**

शिवा शृगालिका । श्यामा पोतकी । रला कलहकारिका । छुच्छुः छुच्छुन्दरी मूषकजातिः । पिङ्गला उलूकचेटिका । गृहगोधिका पल्ली । सूकरी प्रसिद्धा । परपुष्टा च कोकिला । ये चान्ये पुन्नामानः पुरुषसञ्ज्ञास्ते यातुर्वामतो वामभागगताः शुभाः ॥ ३७ ॥

उक्तं च ।

छुच्छुन्दरी सूकरिका शिवा च श्यामा रला पिङ्गलिकाऽन्यपुष्टा ।
वामाः प्रयाणे गृहगोधिका च पुंसञ्ज्ञिता ये च पतत्रिणः स्युः ॥

अथ यातुर्दक्षिणभागगता ये शुभास्तेषां नामान्याह ।

**स्त्रीसञ्ज्ञा भासभषककपिश्रीकर्णछिक्कराः ।**
**शिखिश्रीकण्ठपिप्पीकरुरुश्येनाश्च दक्षिणाः ॥ ३८ ॥**

ये च स्त्रीसञ्ज्ञाः स्त्रीनामानः ।

तथा च ।

भगवान् पराशरः ।

तेषां शिवागोधाकालकाराजपुत्रीभरद्वाजबलाकापोतकीसूकरिकापिप्पीकाम्रतचिप्रचलापिण्डीकपिङ्गलाद्याः स्त्रीसञ्ज्ञाः शेषाः पुन्नामानः ॥

तथा भासः पक्षी । भषकः करायिका । कपिर्वानरः । श्रीकर्णः

पक्षी । धिक्करो मृगजातिः । श्येनो वाजिकः । एते दक्षिणा यातुर्दक्षिणभागगताः शुभाः ॥ ३८ ॥

उक्तं च ।

श्येनो रुरुः पूर्वकुटः कपिश्च श्रीकर्णधिक्कारकपिप्पिकाजाः ।
स्त्रीवञ्जिता ये च शिखिद्विपौ च याने हिता दक्षिणभागसंस्थाः—इति ॥

अथान्येषामपि वामदक्षिणभागानां शुभाशुभफलमतिदिशन्नाह ।

**क्ष्वेडास्फोटितपुण्याहगीतशङ्खाम्बुनिःस्वनाः ।**
**सतूर्याध्ययनाः पुंवत् स्त्रीवदन्या गिरः शुभाः ॥ ३९ ॥**

क्ष्वेडः, मुखशब्दः शोडनिकेति प्रसिद्धा । आस्फोटितं करशब्दः करास्फोटः । वक्षःस्थस्य बाहोर्द्वितीयहस्तेन ताडनम् । पुण्याहशब्दः प्रशस्तवादः । शङ्खः प्रसिद्ध एव । अम्बु जलम् । एषां सर्वेषां निःस्वनाः शब्दाः सतूर्याध्ययनाः । तूर्येण च सहिताः । अध्ययनशब्दा वेदनिर्घोषाः । एते सर्व एव पुंवच्छुभाः । वामभागस्था इत्यर्थः । स्त्रीवदन्या गिरः शुभाः । अन्याः सर्वा गिरो वाचः स्त्रीवच्छुभाः । माङ्गलिकवाचो दक्षिणभागस्थाः शुभा इत्यर्थः ॥ ३९ ॥

उक्तं च ।

आक्ष्वेडितस्फोटितशङ्खतूर्यपुण्याहगीतध्वनिगीतशब्दाः ।
वामाः प्रशस्ताः शुभदा नराणामाक्रन्दितो दक्षिणतः परेषाम् ॥

अधुना ग्रामस्वराणां शुभाशुभत्वमाह ।

**ग्रामौ मध्यमषड्जौ तु गान्धारश्चेति शोभनाः ।**
**षड्जमध्यमगान्धारा ऋषभश्च स्वरा हिताः ॥ ४० ॥**

याने यात्रायां ग्रामौ मध्यमषड्जौ तु शस्तौ शोभनौ । गान्धारश्चेति शोभन एव । इतिशब्दः प्रकारार्थः । सच गान्धारो देवेषु गीयते । मानुषेषु तथा षड्जमध्यमगान्धारा ऋषभश्चेति स्वराः शस्ताः ॥ ४० ॥

उक्तं च ।

गान्धारषड्जर्षभमः खलु मध्यमश्च याने स्वराः शुभकरा न तु येऽवशेषाः ।
ग्रामौ शुभावपि हि मध्यमषड्जसञ्ज्ञौ गान्धारगीतमपि भद्रमुशन्ति देवाः ॥

अथान्यच्छुभाशुभशकुनमाह ।

**एतत्कीर्त्तनदृष्टेषु भारद्वाजाजबर्हिणः ।**
**धन्या नकुलचाषौ च सरटः पापदोऽग्रतः ॥ ४१ ॥**

भरद्वाजः पक्षिविशेषः । लाठेति प्रसिद्धः । अजश्छागः । बर्ही मयूरः । एते सर्वे एतेन शब्देन कीर्त्तनेन नामसङ्कीर्तनेन दृष्टेन दर्शनेन च धन्याः शुभाः । नकुलचाषौ । नकुलः प्राणी । चाषः पक्षिविशेषः । एतावपि च शब्दौ धन्यावेव एतत्कीर्तनदृष्टेष्विति । सरटः प्राणी पक्षिभेदः । कृकलास इति केचित् । सचाग्रतः पुरतः पापदोऽनिष्टफलः ॥ ४१ ॥

अथान्यदप्याह ।

**जाहकाहिशशक्रोडगोधानां कीर्त्तनं शुभम् ।**
**रुतं सन्दर्शनं नेष्टं प्रतीपं वानरर्क्षयोः ॥ ४२ ॥**

जाहकः प्राणी । अहिः सर्पः । शशः प्राणी । क्रोडः सूकरः । गोधा प्राणिविशेषः । एतेषां कीर्त्तनं नामग्रहणं शुभम् । एतेषामेव रुतं शब्दः सन्दर्शनमवलोकनं नेष्टं शुभम् । प्रतीपं वानरर्क्षयोः । वानरः कपिः । ऋक्षः प्राणी । एतयोः प्रतीपमेतद्विपरीतम् । एतयो रुतं सन्दर्शनमिष्टं न कीर्तनमित्यर्थः ॥ ४२ ॥

उक्तं च ।

> भारद्वाज्यजबर्हिचाषनकुलाः सङ्कीर्तनाद्दर्शनात्
> क्रोशन्तश्च शुभप्रदा न सरटो दृष्टः शिवाय क्वचित् ।
> गोधासूकरजाहकाहिशशकाः पापा रुतालोकने
> धन्यं कीर्तनमृक्षवानरकलं तद्व्यत्ययाच्छोभनम् ॥

अन्यदप्याह ।

**ओजाः प्रदक्षिणं शस्ता मृगाः सनकुलाण्डजाः ।**
**चाषः सनकुलो वामो भृगुराहापराह्णतः ॥ ४३ ॥**

मृगा हरिणाः । सनकुलाण्डजा नकुलाः प्राणिनः । अण्डजाः पक्षिणः । ते चौजा विषमसङ्ख्याः । एकस्त्रयः पञ्च सप्त नव इत्यादि । प्रादक्षिण्येन शस्ता शुभाः । यान्तुर्वामपार्श्वादग्रत आगत्य प्रदक्षिणेन पार्श्वेन

क्रामति यत् तत् प्रदक्षिणं सव्यं च। एतद्विपरीतं दक्षिणपार्श्वाद्वामपार्श्वगमनं यत् तदपसव्यम् । एतत्सर्वं शाकुने विज्ञेयम् । यस्मादाचार्य एव ज्ञापकः ।

ऐन्द्रा[1]नलदिशोर्मध्ये विभागेषु व्यवस्थिताः ।

कोशाध्यक्षानलाजीवितपोयुक्ताः प्रदक्षिणम्—इति ॥

चाषः सनकुलो वाम इति । चाषः सनकुलो नकुलेन सहितो वामो वामभागगतो धन्यः । भृगुराहापराह्णतः । भृगुर्नाम मुनिरेवमाहोक्तवान् । यथाऽपराह्णतोऽपराह्णात् परतो वामगो धन्यो न पूर्वाह्णे ।

तथा भृगुः ।

वामगो चाषनकुलावपराह्णे शुभप्रदो ।

श्वशृगालयोरिदं व्यत्यासेन फलं प्रशस्यते । चाषो नकुलश्च वामगो दिवसार्धात् परतः शुभप्रद इति ॥ ४३ ॥

अथान्येषामप्याह ।

**छिक्करः कूटपूरी च पिरिली चाह्नि दक्षिणाः ।**
**अपसव्याः सदा शस्ता दंष्ट्रिणः सबिलेशयाः ॥ ४४ ॥**

छिक्करः शृगालः । कूटपूरी करायिका । पिरिली पक्षिविशेषः । तेऽह्नि दिवसे दक्षिणाः शस्ताः । दंष्ट्रिणो वराहादयः । बिले शेरते ते बिलेशयाः श्वाविद्नकुलादयः । दंष्ट्रिणो बिलेशयैः सह अपसव्या वामभागगताः शस्ताः शोभना इति ॥ ४४ ॥

अधुना दिग्वशेन शाकुनानां शुभाशुभमाह ।

**श्रेष्ठे हयसिते प्राच्यां शवमांसे च दक्षिणे ।**
**कन्यकादधिनी पश्चादुदग्गोविप्रसाधवः ॥ ४५ ॥**

हयोऽश्वः । सितः श्वेतवर्णो यः कश्चिद्वस्तुरूपः । एते प्राच्यां पूर्वदिशि यातुः श्रेष्ठे शोभने । शवः मृतपुरुषः । मांसमामिषम् । एते दक्षिणे दक्षिणस्यां दिशि शुभे । कन्यका कुमारी । दधि क्षीरविकारः । एते पश्चिमे पश्चिमायां दिशि शोभने । गौः प्रसिद्धा । विप्रो ब्राह्मणः । साधुः सज्जनः । एत उदक् उत्तरस्यां दिशि शोभनाः ॥ ४५ ॥

---

१ अस्यैवाध्यायस्य २८ श्लोकः ।

उक्तं च ।

द्रव्याणि श्वेतानि तुरङ्गमश्च पूर्वेण याम्येन शवं समांसम् ।

पश्चात् कुमारी दधि चातिशस्तं सौम्येन गोब्राह्मणसाधवश्च इति ॥

अथाशुभानाह ।

**जालश्वचरणौ नेष्टौ प्राग्याम्यौ शस्त्रघातकौ ।**

**पश्चादासवषण्ढौ च खलासनहलान्युदक् ॥ ४६ ॥**

जाल: प्रसिद्ध: । सूत्रतन्तुविरचितो जाल: पक्षिणो यत्र बध्यन्ते । जालेन चरति शुना चरतीति जालश्वचरणौ । एतौ प्राक् पूर्वस्यां दिशि नेष्टा-वशुभौ । शस्त्रमायुधवर्जितमन्यद्यत् किञ्चित् । घातको बाधक: । एतौ याम्यायां दक्षिणस्यां दिशि न शुभौ । आसव: पानविशेष: । षण्ढ: क्लीब: । एतौ पश्चात् पश्चिमायां दिशि न शुभौ । खलो दुर्जन: । आसनं प्रसिद्धम् । पर्यङ्कादि । हलं लाङ्गलम् । एतान्युदगुत्तरस्यां दिशि न शोभनानि ॥ ४६ ॥

उक्तं च ।

जालकरश्वकरौ न शुभौ प्राक् घातकशस्त्रकरौ यमदिक्स्थौ ।

षण्ढकमद्यकरावपि पश्चादासनशीरखलै: सह चोदक् ॥

अधुना कर्मादौ शकुनानां विशेषमाह ।

**कर्मसङ्गमयुद्धेषु प्रवेशे नष्टमार्गणे ।**

**यानव्यस्तगता ग्राह्या विशेषश्चात्र वक्ष्यते ॥ ४७ ॥**

कर्म यत् किञ्चित् क्रियते । सङ्गम: केनचिद्वृद्धादिना सह संयोग: । युद्ध: सङ्ग्रामम् । एतेषु । तथा प्रवेशे गृहप्रवेशादौ । नष्टमार्गणे नष्टस्यापहृतस्य वस्तुनो मार्गणेऽन्वेषणे । एतेषु सर्वेषु यानव्यस्तगता ग्राह्या: । याने यात्रायां येन प्रकारेणोक्तास्तद्व्यत्ययेनैतेषु ग्राह्या: । एतदुक्तं भवति । यात्रायां ये दक्षिणे शस्तास्तेऽत्र वामत: । यात्रायां वामतस्तेऽत्र दक्षिणत: । यात्रायां ये च पुर-स्तात् तेऽत्र पृष्ठत: । यात्रायां ये च पृष्ठतस्तेऽग्रत इति । दिक्ष्वप्येवमेव विपर्यया विज्ञातव्या: । तेन यात्रायां ये पूर्वस्यां दिशि तेऽत्र पश्चिमायाम् । ये च पश्चिमायां ते च पूर्वस्याम् । ये च दक्षिणस्यां त उत्तरस्याम् । य उत्तरस्यां ते दक्षिणस्यामिति । अत्रास्मिन्नर्थे कर्मसङ्गमादिके यो विशेष: स वक्ष्यते कथयिष्यते ॥ ४७ ॥

उक्तं च ।

नष्टावलोकनसमागमयुद्धकर्मवेश्मप्रवेशमनुजेश्वरदर्शनेषु ।

यानप्रतीपविधिना शुभदा भवन्ति—

अत्रैव विशेषमाह ।

**दिवा प्रस्थानवद्ग्राह्याः कुरङ्गरुरुवानराः ।**

**अह्नश्च प्रथमे भागे चाषवञ्जुलकुक्कुटाः ॥ ४८ ॥**

**पश्चिमे शर्वरीभागे नप्तृकोलूकपिङ्गलाः ।**

**सर्व एव विपर्यस्ता ग्राह्याः सार्थेषु योषिताम् ॥ ४९ ॥**

दिवा प्रस्थानवदिति । कर्मादिषु दिवा दिवसे । कुरङ्गरुरुवानराः । कुरङ्गो हरिणः । रुरुर्मृगजातिः । वानरः कपिः । एते प्रस्थानवद्ग्राह्याः । यथा प्रस्थाने यात्रायां गृह्यते तथात्रापि । अह्नो दिवसस्य प्रथमे भागे चाषवञ्जुलकुक्कुटाः सर्वे एते पक्षिणः प्रस्थानवद्ग्राह्याः ॥ ४८ ॥

शर्वरी रात्रिः । तस्याः पश्चिमेऽन्त्ये भागे । नप्तृका उलूका पिङ्गला एते सर्वे एव पक्षिणः । पिङ्गलोलूकचेटिका । एते प्रस्थानवद्ग्राह्याः । योषितां स्त्रीणां केवलानां सार्थेषु सर्वे एव विपर्यस्ता विपरीतगता ग्राह्याः । यात्रायां कर्मसङ्गमादिष्वपि सर्वत्र विपरीता ग्राह्या इति ॥ ४९ ॥

अन्यदप्याह ।

**नृपसन्दर्शने ग्राह्यः प्रवेशोऽपि प्रयाणवत् ।**

**गिर्यरण्यप्रवेशेषु नदीनां चावगाहने ॥ ५० ॥**

**वामदक्षिणगौ शस्तौ यौ तु तावग्रपृष्ठगौ ।**

नृपो राजा तस्य सन्दर्शनेऽवलोकने । यद्यपि प्रवेशो राजगृहे भवति तथापि प्रयाणवद्ग्राह्यः । एवं यद्यपि प्रवेशस्तथापि तस्मिन् प्रयाणवद्ग्राह्यः ।

उक्तं च ।

केचिज्जगुर्गमनवन्नृपदर्शनेषु—इति ॥

गिरिप्रवेशे पर्वतप्रवेशे । अरण्यप्रवेशे अटव्याम् । नदीनां सरितामेवावगाहने उत्तरणे ॥ ५० ॥

यो शकुनो यात्रायां वामदक्षिणगौ शस्तौ तावग्रपृष्ठगाविति प्रवेश-

दिशि शस्तौ । यात्रायां ये वामतः शस्तास्तेऽत्राग्रतः पुरतः । यात्रायां ये दक्षिणतस्तेऽत्र पृष्ठत इति ।

अथान्येष्वाह ।

**क्रियादीप्तौ विनाशाय यातुः परिघसञ्ज्ञितौ ॥ ५१ ॥**

**तावेव तु यथाभागं प्रशान्तरुतचेष्टितौ ।**

**शकुनौ शकुनद्वारसञ्ज्ञितावर्थसिद्धये ॥ ५२ ॥**

क्रियादीप्तस्य लक्षणं प्रागुक्तम् । "क्रि[1]यादीप्ता गतस्थानभावस्वरविचेष्टिते" रिति । क्रियादीप्तौ शकुनौ यातुर्जिगमिषोर्यदि परिघसंस्थितौ उभयपार्श्वस्थितौ भवतस्तदा विनाशाय यातुरेव भवतस्तावेव शकुनौ परिघसञ्ज्ञितौ ॥ ५१ ॥

यथाभागं यथास्थितौ भवतः । यः शकुनो दक्षिणस्थितः सच तत्रैव शुभो यश्च वामभागस्थः सच वामभाग एव शुभः । तौ च प्रशान्तरुतचेष्टितौ । प्रशान्तं रुतं शब्दश्चेष्टितं च ययोस्तौ तथाभूतौ शकुनौ शकुनानां शुभानामर्थानां द्वारसञ्ज्ञितौ मार्गभूतावर्थानां च सिद्धये भवतः ॥ ५२ ॥

अधुना मतान्तरेण शकुनद्वारमाह ।

**केचित् तु शकुनद्वारमिच्छन्त्युभयतः स्थितैः ।**

**शकुनैरेकजातीयैः शान्तचेष्टाविराविभिः ॥ ५३ ॥**

चेष्टालक्षणं वक्ष्यति । "तिथि[2]वाय्वर्कभस्थानचेष्टादीप्ता यथाक्रमम्" । एवं शान्तचेष्टा विरावः शब्दश्च येषां तैः शकुनैरेकजातीयैरेकयोन्युद्भवैः उभयतः स्थितैः पार्श्वद्वयगतैः केचित् शकुनद्वारमिच्छन्ति कथयन्ति ॥ ५३ ॥

तथा च नन्दिः ।

एकयोन्युद्भवैः शान्तैः शान्तचेष्टैर्व्यवस्थितैः ।
यथाभागगतैस्तैश्च शकुनद्वारमिष्यते ॥

अन्यदप्याह ।

**विसर्जयति यद्येक एकश्च प्रतिषेधति ।**

**स विरोधोऽशुभो यातुर्ग्राह्यो यो बलवत्तरः ॥ ५४ ॥**

---

१ अस्यैवाध्यायस्य १५ श्लोकः । २ अस्यैवाध्यायस्य ५८ श्लोकः ।

एकः शकुनो यदि विसर्जयति पश्चाच्च सिद्धिमाचष्टे । एकश्चान्यः प्रतिषेधति विरोधमाचष्टे सच यातुर्गच्छतो विरोधसञ्ज्ञः । अशुभश्च । अथवा तयोर्द्वयोर्बलवत्तरोऽतिशयेन बली स ग्राह्यः । बलं च प्रागेवोक्तम् । "जव[1]जातिबलस्थान" मिति ॥ ५४ ॥

अन्यदप्याह ।

**पूर्वं प्रावेशिको भूत्वा पुनः प्रास्थानिको भवेत् ।**
**सुखेन सिद्धिमाचष्टे प्रवेशे तद्विपर्ययात् ॥ ५५ ॥**

पूर्वं प्रथमं शकुनः प्रावेशिको भूत्वा पुनः पश्चात् प्रास्थानिकः प्रायाणिको यदि भवति प्रयाणे यद्धितं तत् करोति । प्रवेशे नष्टमार्गणे यानव्यस्तगतो ग्राह्य इति । एवमादौ प्रावेशिकः । तदा स शकुनः सुखेनाक्लेशेन यातुः सिद्धिमाचष्टे कथयति । प्रवेशे तद्विपर्ययात् । प्रवेशो यात्रायां निर्वर्त्य स्वगृहे याता प्रविशति तस्मिन् प्रवेशे तद्विपर्ययादुक्तविपर्ययाद्ग्राह्यः । पूर्वं प्रायाणिकः पश्चात् प्रावेशिको यदि भवति तदा सुखेन सिद्धिमाचष्ट इति ॥ ५५ ॥

अथान्यदप्याह ।

**विसर्ज्य शकुनः पूर्वं स एव निरुणद्धि चेत् ।**
**प्राह यातुररेर्मृत्युं डमरं रोगमेव वा ॥ ५६ ॥**

शकुनः प्रथमं पूर्वं विसर्ज्य यात्रायां शुभचेष्टितं कृत्वा स एव पुनर्यदि निरुणद्धि यात्रां प्रतिषेधयति तदा यातुर्गच्छतः । अरेः शत्रोः सकाशान्मृत्युं मरणं प्राह कथयति । अथवा डमरं शस्त्रकलहं रोगमेव वा कथयति ॥ ५६ ॥

अथान्यदप्याह ।

**अपसव्यास्तु शकुना दीप्ता भयनिवेदिनः ।**
**आरम्भे शकुनो दीप्तो वर्षान्तस्तद्भयङ्करः ॥ ५७ ॥**

अपसव्या अप्रदक्षिणाः शकुनास्ते च दीप्तदिक्स्थाः सूर्याभिमुखं भयनिवेदिनो भयं निवेदयन्ति कथयन्ति । आरम्भे कार्यप्रारम्भे शकुनो दीप्तो वर्षान्तर्वर्षमध्ये तद्भयङ्करः । तस्मिन्नेव कार्ये तद्भयं करोति ॥ ५७ ॥

---

१ अस्यैवाध्यायस्य १६ श्लोकः ।

अधुना चेष्टादीप्तस्य लक्षणं तत्फलं चाह ।

**तिथिवाय्वर्कभस्थानचेष्टादीप्ता यथाक्रमम् ।**
**धनसैन्यबलाङ्गेष्टकर्मणां स्युर्भयङ्कराः ॥ ५८ ॥**

तिथिदीप्तः । वायुदीप्तः । अर्कदीप्तः । नक्षत्रदीप्तः । स्थानदीप्तः । चेष्टादीप्तः । एतेषां लक्षणं प्रागेवोक्तम् । कस्यचिद्विघातं कर्तुमिच्छुः । एवंविधा दीप्ताः । यथाक्रमं धनसैन्यबलाङ्गेष्टकर्मणां भयङ्कराः स्युर्भवेयुः । तद्यथा । तिथिदीप्तः शकुनो धनभयं करोति । वायुदीप्तः सैन्यस्य । अर्कदीप्तो बलस्य । नक्षत्रदीप्तोऽङ्गस्य शरीरावयवस्य । स्थानदीप्त इष्टस्याभिप्रेतस्य वल्लभस्य वा । चेष्टादीप्तः कर्मण इति ॥ ५८ ॥

अन्यदप्याह ।

**जीमूतध्वनिदीप्तेषु भयं भवति मारुतात् ।**
**उभयोः सन्ध्ययोर्दीप्ताः शस्त्रोद्भवभयङ्कराः ॥ ५९ ॥**

जीमूतो मेघः । जीमूतध्वनिना मेघशब्देन दीप्तेषु शकुनेषु मारुताद्वायोर्भयं भवति । उभयोर्द्वयोः सन्ध्ययोः सूर्योदयास्तमययोर्दीप्ताः शकुनाः शस्त्रोद्भवं शस्त्रसमुत्थं भयं कुर्वन्ति ॥ ५९ ॥

अथान्यदप्याह ।

**चितिकेशकपालेषु मृत्युबन्धबधप्रदाः ।**
**कण्टकीकाष्ठभस्मस्थाः कलहायासदुःखदाः ॥ ६० ॥**
**अप्रसिद्धिं भयं वापि निःसाराश्मव्यवस्थिताः ।**
**कुर्वन्ति शकुना दीप्ताः शान्ता याप्यफलास्तु ते ॥ ६१ ॥**

चितिकेशकपालेष्विति । चितौ शवदाहाग्निसमीपे मृत्युं मरणं ददाति । केशेषु मूर्धजेषु स्थितो बन्धं ददाति । कपालेऽस्थिशकले स्थितो बधं मरणं तथा कण्टकीवृक्षे स्थितः शकुनः कलहं ददाति । काष्ठे स्थितः आयासमुपद्रवं ददाति । भस्मनि स्थितो दुःखम् ॥ ६० ॥

तथा निःसाराश्मव्यवस्थिता अप्रसिद्धिं भयं वापि कुर्वन्ति । निःसारेऽन्तःसुषिरे स्थितः कार्याणामप्रसिद्धिं करोति । अश्मनि पाषाणे स्थितः । भयं करोति । कुर्वन्ति शकुना दीप्ता इति । यदेतत् प्रागुक्तं चितिकेशकपालेषु तद्दीप्ताः शकुनाः कुर्वन्ति । शान्तास्तु ते पुनर्याप्यफला भवन्ति । याप्यमीषत् फलं भवति ॥ ६१ ॥

अन्यदप्याह ।

**असिद्धिसिद्धिदौ ज्ञेयौ निर्हाराहारकारिणौ ।**
**स्थानाद्रुवन् व्रजेद्यात्रां शंसते त्वन्यथागमम् ॥ ६२ ॥**

निर्हाराहारकारिणौ शकुनौ यथासङ्ख्यमसिद्धिसिद्धिदौ ज्ञेयौ ज्ञातव्यौ। निर्हारं पुरीषोत्सर्गः । निर्हारकारी शकुनोऽसिद्धिं कार्याणां करोति । आहारकारी भोजनकृल्लीलासिद्धिकरः । स्थानाद्रुवन्निति । यस्मिन् स्थाने स्थितस्तस्माद्रुवन् शब्दं कुर्वन् यदि व्रजेत् गच्छेत् तदा यात्रां गमनं शंसते कथयति । अन्यथा विपर्यय आगमं शंसते कथयति । एतदुक्तं भवति । वाच्यमानः स्थानमागत्य उपविशति तदा शकुनः कस्यचिदागमं शंसते ॥ ६२ ॥

अथान्यदप्याह ।

**कलहः स्वरदीप्तेषु स्थानदीप्तेषु विग्रहः ।**
**उच्चमादौ स्वरं कृत्वा नीचं पश्चाच्च दोषकृत् ॥ ६३ ॥**

स्वरो दीप्तो येषां तेषु शकुनेषु कलहो भवति । स्थाने दीप्ता ये स्थिताः तेषु विग्रहो भवति । आदौ प्रथममुच्चं स्वरं कृत्वा पश्चान्नीचमल्पं करोति तदा दोषकृद्दोषं करोति ॥ ६३ ॥

अन्यदप्याह ।

**एकस्थाने रुवन् दीप्तः सप्ताहाद्ग्रामघातकः ।**
**पुरदेशनरेन्द्राणामृत्वर्धायनवत्सरात् ॥ ६४ ॥**

दीप्तः शकुन एकस्मिन् स्थाने रुवन् क्रोशन् सकलमेव दिनं तिष्ठति तदा सप्ताहात् सप्तभिर्दिनैः पुरतो ग्रामघातको ग्रामविनाशं करोति । न केवलं यावत् पुरदेशनरेन्द्राणामृत्वर्धायनवत्सरात् विनाशं करोति । पुरं नगरं तत्र चैकस्थाने रुवन् ऋतुना मासद्वयेन घातं करोति । एवमर्धायनेन त्रिभिर्मासै देशघातं करोति । नृपस्य राज्ञो वत्सरद्वर्षाद्घातं करोति । एकस्थाने रुवन्निति सर्वेषानुवृत्तिः ॥ ६४ ॥

अन्यदप्याह ।

**सर्वे दुर्भिक्षकर्त्तारः स्वजातिपिशिताशिनः ।**
**सर्पमूषकमार्जारपृथुलोमविवर्जिताः ॥ ६५ ॥**

सर्वे शकुनाः स्वजातिपिशिताशिनः स्वजातीनां पिशितं मांसमश्नन्ति भक्षयन्ति तथाभूता दुर्भिक्षं कुर्वन्ति। किन्तु सर्पं उरगः। मूषक आखुः। मार्जारो बिडालः। पृथुलोमा मत्स्यः। एतान् वर्जयित्वा एषां सर्वेषां पिशिताशित्वं स्वभाव एव अन्येषामुत्पातः॥ ६५॥

उक्तं च।

विहाय सर्पाखुबिडालमत्स्यान् स्वजातिमांसान्युपभुञ्जते वा।

व्रजन्ति वा मैथुनमन्यजात्यामिति॥

अन्यदप्याह।

**परयोनिषु गच्छन्तो मैथुनं देशनाशनाः।**

**अन्यत्र वेसरोत्पत्तेर्नृणां चाजातिमैथुनात्॥ ६६॥**

परयोनिष्वन्ययोनिषु मैथुनं व्रजन्तो गच्छन्तो देशनाशं कुर्वन्ति। किन्तु अन्यत्र वेसरोत्पत्तेरिति। वेसरोऽश्वतरस्तदुत्पत्तेस्तत्सम्भवादन्यत्र तां वर्जयित्वा तत्राश्वायां गर्दभो याति। नृणां पुंसां चाजातिमैथुनात् अन्यत्र। यतो नरा मनुष्या अजातौ वडवादिषु यान्ति। एवमादिकं वर्जयित्वा यतस्तदुत्पत्तिरूपं न भवति॥ ६६॥

अन्यदप्याह।

**बन्धघातभयानि स्युः पादोरुमस्तकान्तिगैः।**

**शष्पापःपिशितान्नादैर्दोषवर्षक्षयग्रहाः॥ ६७॥**

पादोरुमस्तकान्तिगैः शकुनैर्यथाक्रमं बन्धघातभयानि स्युर्भवेयुः। यदा शकुनः पादान्तिगः पादनिकटे याति तदा बन्धं करोति। अथोरुप्रदेशे ऊर्वोर्निकटे याति तदा घातमभिघातं करोति। अथ मस्तके याति तदा भयं करोति। शष्पापःपिशितान्नादैरिति। शष्पादस्तृणाशी शकुनः नृणां नाशेन दोषं करोति। अपोऽदो जलाशी शकुनो वर्षं वृष्टिं करोति। पिशितादो मांसभक्षी क्षतमङ्गक्षतं करोति। अन्नादोऽन्नभक्षी ग्रहं संयोगं केनचिद्बन्धुना सह करोति॥ ६७॥

अधुना शकुनोपदेशेऽनागन्तूनां लक्षणमाह।

**क्रूरोग्रदोषदुष्टैश्च प्रधाननृपवृत्तकैः।**

**चिरकालेन दीप्ताद्यास्वागमो दिक्षु तन्नृणाम्॥ ६८॥**

दीप्ताद्यास्वष्टसु दिक्षु स्थिते शकुने क्रूराद्युपलक्षितानां नृणां पुरुषाणामागमो भवति । तत्तृणां तत्तच्छकुनोपलक्षितानाम् । तेन दीप्तायां दिशि स्थितः शकुनः कस्यचित् पुरुषस्य क्रूरेण हिंस्रेण संयुतस्यागमं करोति । धूमितायां दिशि स्थितः शकुनः कस्यचिदुग्रेण दण्डेन सह नरस्यागमं करोति । तत्परं शान्तायां दिशि स्थितः कस्यचिद्दोषयुक्तेन नरेण सहितस्यागमं करोति । तत्परं दुष्टेन संयुक्तस्य । तत्परं प्रधानेन युक्तस्य । तत्परं नृपेण राज्ञा संयुक्तस्य । तत्परं वृत्तकेन श्रावकेण संयुक्तस्य । तत्परमङ्गारितायां दिशि स्थितः शकुनश्चिरकालेन प्रभूतसमयेन सहितस्य नरस्यागमं करोति । एवं केचिद्व्याचक्षते । अन्ये चतस्रो दिश इच्छन्ति । दीप्ता दीपिता शान्ताङ्गारिणी चेति । तत्र दीप्तदिक्स्थे शकुने क्रूरेण सहितस्य नरस्यागमम् । धूमितदिक्स्थे उग्रेण तीव्रतरेण दोषेण दुष्टो यस्तेन सहितस्यागमम् । शान्तदिक्स्थे प्रधानस्य नृपस्य नहुषादेर्वृत्तं चरितं यः कथयति । तेन सहितस्य । अङ्गारितास्थे चिरकालेन सहितस्येति सह योगे तृतीया । एषैव व्याख्या ज्यायसी ॥ ६८ ॥

अथ य आगच्छति तस्य सद्रव्यनिर्द्रव्यत्वज्ञानमाह ।

**सद्रव्यो बलवांश्च स्यात् सद्रव्यस्यागमो भवेत् ।**
**द्युतिमान् विनतप्रेक्षी सौम्यो दारुणवृत्तकृत् ॥ ६९ ॥**

शकुनः सद्रव्यो येन केनचिद्भक्ष्यद्रव्येण संयुक्तः स च बलवांश्च बलयुक्तः स्याद्भवेत् । तदा सद्रव्यस्यागमो भवेत् स्यात् । य आगच्छति तद्दिने स द्रव्ययुक्तः । अन्यथा शून्यहस्तः । अथ शकुनो द्युतिमान् दीप्तियुक्तः स एव यदि विनतप्रेक्षी अधोदृष्टिर्भवति तदा सौम्योऽपि शुभोऽपि दारुणं तीव्रं वृत्तं करोति । वृत्तं कथनं यः सूचयति स वृत्तकृत् दुष्टं फलं करोति । य आगच्छति सद्रव्यः पुमान् स उपद्रवं करोतीत्यर्थः ॥ ६९ ॥

अन्यदप्याह ।

**विदिक्स्थः शकुनो दीप्तो वामस्थेनानुवाशितः ।**
**स्त्रियाः सङ्ग्रहणं प्राह तद्दिगाख्यातयोनितः ॥ ७० ॥**

शकुनो विदिक्स्थो विदिशि स्थितो दीप्तः सूर्याभिमुखः स च वामस्थेन वामभागसमवस्थितेनान्येन शकुनेनानुवाशितो यदि भवति, तदा

तद्दिगाख्यातयोनित: तस्यां दिशि आख्याता उक्ता योनिरुत्पत्तिर्यस्य नरस्य तस्य सकाशात् स्त्रिया योषित: सङ्गहणं संयोगं प्राह कथयति। पुरुषस्तां स्त्रियं ददातीत्यर्थ:। अथवा तस्यां विदिशि यस्या: स्त्रिया आख्याता योनिस्तस्या: संयोगमाहेति ॥ ७० ॥

अन्यदप्याह।

**शान्तः पञ्चमदीप्तेन विरुतो विजयावहः।**
**दिग्नरागमकारी वा दोषकृत् तद्विपर्यये ॥ ७१ ॥**

शान्त: शकुन: पञ्चमदीप्तेनान्येन विरुत:। तस्माच्छकुनाद्य: पञ्चम्यां दिशि दीप्तायां स्थितो दीप्त: स एवार्काभिमुखस्तेन। विरुत: कृतशब्दो विजयावहो भवति विजयमावहति। दिग्नरागमकारी वा। तस्यां दिशि यो नर: पुरुषस्तस्य वाऽऽगमं करोति। तत आगच्छतीत्यर्थ:। दोषकृत् तद्विपर्यये। यस्तस्मात् पूर्वोक्ताद्विपर्यये विपरीते स दोषकृत्। दीप्त: पञ्चमशान्तेन विरुतस्तदा दोषकृद्भवति दोषमशुभं करोतीत्यर्थ: ॥ ७१ ॥

अन्यदप्याह।

**वामसव्यगतो मध्यः प्राह स्वपरयोर्भयम्।**
**मरणं कथयन्त्येते सर्वे समविराविणः ॥ ७२ ॥**

मध्यो मध्यमभागस्थ: शकुनो वामसव्यगतो यथाक्रमं स्वपरयोर्भयं प्राह कथयति। मध्यस्थ: शकुनो वामभागस्थेन शकुनेन विरुत: स्वभयं स्वीयेभ्य आत्मीयेभ्यो भयं प्राह। स एव मध्यम: सव्येन दक्षिणभागस्थेन विरुत: पराच्छत्रोर्भयं प्राह। अर्थादेव द्वाभ्यां विरुतो मध्यस्थ: स्वपरयोरेव भयं प्राह। सर्वे एते त्रय: समविराविणो युगपद्रुवन्तो मरणं कथयन्ति प्रवदन्ति ॥ ७२ ॥

अन्यदप्याह।

**वृक्षाग्रमध्यमूलेषु गजाश्वरथिकागमः।**
**दीर्घाब्जमुषिताग्रेषु नरनौशिबिकासमः ॥ ७३ ॥**

वृक्षाग्रे स्थित: शकुनो गजारूढस्य नरस्यागमं करोति। वृक्षमध्ये स्थितोऽश्वारूढस्य। वृक्षमूले रथिकस्य रथारूढस्य। दीर्घे आयामिनि

वस्तुनि स्थितः शकुनो नरारूढस्य नरस्यागमं करोति । अभ्रे पट्टादौ स्थितो नाव आगमनं करोति । मुषितांग्रे छिन्नाग्रे स्थितः शिबिकागमनं युग्यस्यागमनं करोति । युग्यस्यस्येत्यर्थः ॥ ७३ ॥

अथान्यदप्याह

**शकटेनोन्नतस्थे वा छायास्थे छत्रसंयुते ।**
**एकत्रिपञ्चसप्ताहात् पूर्वाद्यास्वन्तरासु च ॥ ७४ ॥**

शकटेनोन्नतस्थे । उच्चभागसमवस्थिते पर्वतादौ व्यवस्थिते । शकटेन गन्त्या कश्चिदागच्छति । छायास्थे शकुने छत्रसंयुत आतपत्रेण संयुक्त आगच्छति । तद्यथा । शकुने शुभमशुभं चोक्तं गन्त्याद्यागमनं वा तत् कस्मिन् काले भवतीत्याह । एकत्रिपञ्चसप्ताहादिति । प्राच्यादिषु दिक्ष्वन्तरासु च विदिक्ष्वेकत्रिपञ्चसप्ताहाद्भवति । पूर्वस्यां दिशि स्थितेन शकुनेन यत् सूचितं शुभाशुभफलं कस्यचिद्वाऽऽगमनं केनचिद्वा संयोगस्तदेकाहादेकेनैव दिवसेन भवति । एवं दक्षिणस्यां त्र्यहात् । पश्चिमायां पञ्चाहात् । उत्तरस्यां सप्ताहात् । अन्तरासु च विदिक्षु चशब्दादेवमेव । तेनाग्नेय्यामेकाहात् । नैर्ऋत्यां त्र्यहात् । वायव्यां पञ्चाहात् । ऐशान्यां सप्ताहादिति ॥ ७४ ॥

अधुनाचैव विशेषज्ञानार्थमाह ।

**सुरपतिहुतवहयमनिर्ऋतिवरुणपवनेन्दुशङ्कराः क्रमशः ।**
**प्राच्याद्यानां पतयो दिशः पुमांसोऽङ्गना विदिशः ॥७५॥**

सुरपतिप्रभृतयो देवाः प्राच्याद्यानां दिशां पतयः स्वामिनः । सुरपतिरिन्द्रः । स पूर्वस्यां दिश्यधिपतिः । हुतवहोऽग्निराग्नेय्यामधिपतिः । यमः पितृपतिर्दक्षिणस्याम् । निर्ऋती राक्षसानामधिपतिर्नैर्ऋत्याम् । वरुणोऽपाम्पतिः पश्चिमायाम् । पवनो वायुर्वायव्याम् । इन्दुश्चन्द्रमा उत्तरस्याम् । शङ्करो रुद्र ऐशान्याम् । प्रयोजनम् । आगतस्य नरस्य येन वा तद्दिने संयोगस्तस्येन्द्रादिपर्यायो नाम तस्य देवस्य भक्तिर्वा हृतनष्टादौ चोरद्रव्यस्थानं वा शुभाशुभे शकुने लाभालाभे स्थानं वा प्रश्ने चिन्तायां तत्र मनसा स्थितिर्वा आतुरे तत्सुरपूजनाच्छान्तिर्वेत्यादि । दिशः पुमां-

सोऽङ्गना विदिश इति । दिशः पूर्वाद्यास्तत्रस्थाः पुमांसो मनुष्याः । विदिशश्चतस्रोऽङ्गनाः स्त्रियः ।

तथा च पराशरः ।

वर्णानां ब्राह्मणादीनामुत्तरादिदिशः स्मृताः ।
ऐशान्याद्याश्च विदिशस्ताः स्त्रीणां परिकीर्तिताः ॥

प्रयोजनम् । दिक्षु स्थिते शकुने प्रष्टुरि वा पुरुषकृता चिन्ता तज्जन्म वा । एवं विदिक्षु स्त्रीजन्मनश्चिन्ता वा हृतनष्टादौ चौरज्ञानं च । एषामागमः संयोगो भवति ॥ ७५ ॥

अथ लेखज्ञानमाह ।

**तरुतालीविदलाम्बरसलिलजशरचर्मपट्टलेखाः स्युः ।**
**द्वात्रिंशत्प्रविभक्ते दिक्चक्रे तेषु कार्याणि ॥ ७६ ॥**

पूर्वमेवैन्द्रानलदिशोर्मध्ये विभागेषु व्यवस्थिता इत्यनेन प्रमाणेन यद्दिक्चक्रं द्वात्रिंशत्प्रविभक्तं द्वात्रिंशद्भेदैर्भिन्नं प्रदर्शितं तस्मिन् यानि शुभाशुभानि कार्याणि शकुनान्युक्तानीत्यभिधीयन्ते च तानि तेषु लोकेषु भवन्ति । वक्ष्यति च । "नैर्ऋत्यां स्त्रीलाभस्तुरगालङ्कारदूतलेखाप्ति"रिति । तत्र लेखपरिज्ञानं तरुतालीत्यादि । पूर्वस्यां दिशि स्थिते शकुने लेखस्तरौ वृक्षे लिखितः । वृक्षावयवे त्वचि पर्णे वेत्यर्थः । एवमेवाग्नेय्यां तालवृक्षदले । दक्षिणस्यां विदले विगतार्धे यत्र तत्र । नैर्ऋत्यामम्बरे वस्त्रे । पश्चिमायां सलिलजे पद्मपत्रादौ । वायव्यां शरे काण्डे । उत्तरस्यां चर्मणि । ऐशान्यां पट्टे । पट्टः प्रसिद्धो नेत्रादिकः ॥ ७६ ॥

अथान्यान्यपि संयोगस्थानान्याह ।

**व्यायामशिखिनिकूजितकलहाम्भोनिगडमन्त्रगोशब्दाः ।**
**वर्णास्तु रक्तपीतककृष्णसिताः कोणगा मिश्राः ॥ ७७ ॥**

पूर्वस्यां दिशि स्थिते शकुने यच्छुभं फलं सूचितं तत्प्राप्तिः कस्मिन् स्थाने भवति । तत्र व्यायामे युद्धादौ । एवमाग्नेय्यां शिखिस्थानेऽग्निसमीपे । दक्षिणस्यां निकूजितं शब्दः कस्यापि श्रूयते यत्र । नैर्ऋत्यां यत्र कलहः ।

१ अस्यैवाध्यायस्य २६ श्लोकः । २ अस्यैव ग्रन्थस्याग्रिमाध्याये ८ श्लोकः ।

पश्चिमायां यत्राम्भो जलम् । वायव्यां यत्र निगडो बन्धनादिकः । उत्तरस्यां यत्र मन्त्रो वेदः पठ्यते । ऐशान्यां यत्र गावस्तेषां शब्दो रवो यत्र । एतेषूपलक्षितेषु स्थानेषु शुभशकुने कार्यागमः संयोगो वा केनचित् सह । वर्णास्त्विति । यत्किञ्चिदुक्तो वर्णो रक्तो लोहितं तत् पूर्वस्याम् । पीतवर्णो याम्यायाम् । कृष्णमसितं पश्चिमायाम् । सितं श्वेतमुत्तरस्याम् । कोणगा मिश्राः । मिश्रवर्णाः कोणेषु विदिक्षु । तद्यथा । आग्नेय्यां रक्तपीतः । नैर्ऋत्यां पीतकृष्णः । वायव्यां कृष्णसितः । ऐशान्यां सितरक्तः । प्रयोजनम् । सद्रव्ये शकुने सद्रव्यस्यागम उक्तः । तत्र द्रव्यज्ञानमेतत् । हृतनष्टादौ द्रव्यवर्णज्ञानम् । वस्त्रचिन्तायां वस्त्रवर्णज्ञानम् । एतद्वर्णदेवताविषये भक्तिर्वा ॥ १७ ॥

अथान्यच्छुभे शकुने स्थाननिर्देशार्थमाह ।

**चिह्नं ध्वजो दग्धमथ श्मशानं**
**दरी जलं पर्वतयज्ञघोषाः ।**
**एतेषु संयोगभयानि विन्द्या-**
**दन्यानि वा स्थानविकल्पितानि ॥ १८ ॥**

पूर्वस्यां दिशि ध्वजश्चिह्नमुपलक्षणम् । आग्नेय्यां दग्धमग्निना दग्धं यत् किञ्चित् । अथानन्तरं याम्यायां श्मशानं पितृवनम् । नैर्ऋत्यां दरी गुहा । पश्चिमायां जलमुदकम् । वायव्यां पर्वतो गिरिः । उत्तरस्यां यज्ञो यागः । ऐशान्यां घोषो गह्वरम् । एतेषु स्थानेषु संयोगभयानि विन्द्याज्जानीयात् । शुभे शकुने केनचित् सह संयोगः । वक्ष्यति च ।

ऐ[1]न्द्र्यां दिशि शान्तायां विलुवन्नृपसंश्रितागमं वक्ति ।

शकुनेष्वेतेषु भयं वक्ष्यति च ।

शा[2]न्तासु दिक्षु फलमिदमुक्तं दीप्तास्वतोऽभिधास्यामि ।

ऐन्द्र्यां भयं नरेन्द्रात् समागमश्चापि शत्रूणाम्—इति ॥

अन्यानि वा स्थानविकल्पितानीति । अन्यान्यपराणि वा कार्याणि स्थानवशेन परिकल्पनीयानि । एतदुक्तं भवति । शुभानि यानि कार्याणि

१ अस्यैव ग्रन्थस्याग्रिमाध्याये १ श्लोकः ।
२ अस्यैव ग्रन्थस्याग्रिमाध्याये २७ श्लोकः ।

शुभशकुनसंसूचितानि शुभेष्वेव स्थानेषु भवन्ति । यान्यशुभानि तान्यशुभेष्विति ॥ ७८ ॥

अन्यदप्याह ।

स्त्रीणां विकल्पा बृहती कुमारी
व्यङ्गा विगन्धा त्वथ नीलवस्त्रा ।
कुस्त्री प्रदीर्घा विधवा च ताश्च
संयोगचिन्तापरिवेदिकाः स्युः ॥ ७९ ॥

पूर्वस्यां स्त्रीणां विकल्पा बृहती बृहत्काया स्त्री । आग्नेय्यां कुमारी कन्यका । दक्षिणस्यां व्यङ्गाऽङ्गहीना । नैर्ऋत्यां विगन्धा दुर्गन्धा । अथशब्द आनन्तर्ये । पश्चिमायां नीलवस्त्रा नीलाम्बरा । वायव्यां कुस्त्री कुत्सिता योषित् । उत्तरस्यां प्रदीर्घात्युच्चा । ऐशान्यां विधवा विगतभर्तृका रण्डा स्त्री । एवं केचिद्व्याचक्षते । अन्ये चतस्रो दिश इच्छन्ति । यत उक्तम् । अङ्गना विदिश इति । ताश्च । ऐशान्यां बृहती कुमारी । आग्नेय्यां व्यङ्गा विगन्धा नैर्ऋत्यां नीलवस्त्रा कुस्त्री । वायव्यां प्रदीर्घा विधवा । प्रयोजनम् । ताश्च संयोगचिन्तापरिवेदिकाः स्युरिति । ताभिः सह प्रागाद्यासु दिक्षु शुभे संयोगे समागमे चिन्तां परिवेदयन्त्युत्पादयन्ति । हृतनष्टादौ चौर्ये एता एव ॥ ७९

अन्यदप्याह ।

पृच्छासु रूप्यकनकातुरभामिनीनां
मेषाव्ययानमखगोकुलसंश्रयासु ।
न्यग्रोधरक्ततरुरोध्रककीचकाख्या-
श्चूतद्रुमाः खदिरबिल्वनगार्जुनाश्च ॥ ८० ॥

पृच्छासमये पूर्वस्यां दिशि स्थिते शकुने प्रष्टरि वा रूप्यसंश्रया रजतसमाश्रिता पृच्छा वक्तव्या । एवमाग्नेय्यां कनकस्य सुवर्णस्य । याम्यायामातुरस्य व्याध्यर्दितस्य । नैर्ऋत्यां भामिन्याःस्त्रियाः । पश्चिमायां मेषाव्यस्याजस्य । वायव्यां यानस्याश्वादिकस्य गमनस्य वा । उत्तरस्यां मखस्य यज्ञस्य च । ऐशान्यां गोकुलसंश्रया वाटसमाश्रिता पृच्छा वक्तव्येति । तथा न्यग्रोधो वृक्षः पूर्वस्याम् । रक्ततरुर्लोहितवर्णो वृक्ष आग्नेय्याम् । रोध्रवृक्षो दक्षिण-

स्याम् । कौचकाख्यो वेणुर्नैर्ऋत्याम् । चूतद्रुम आम्रवृक्षः पश्चिमायाम् । खदिरो वायव्याम् । बिल्वतरुरुत्तरस्याम् । नग एवार्जुनवृक्ष ऐशान्याम् । अथवा नगः पर्वतोऽर्जुनवृक्षश्च । अथवा सर्व एव न्यग्रोधादयो नगशब्द-वाच्याः । नगो वृक्ष उच्यते स्थिरत्वात् । प्रयोजनम् । प्रागाद्यासु दिक्षु स्थिते शुभे शकुन एतेषु स्थानेषु कृष्यादीनां लब्धिरशुभे हानिः । संयोगो वियोगो वा केनचित् सह चौरादिस्थानपरिग्रहमिति ॥ ८० ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ सर्वशाकुने मिश्रकं नाम पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

## अथान्तरचक्रं व्याख्यायते ।

तत्रादौ प्राग्द्वात्रिंशद्भागप्रविभक्ते दिक्चक्रे शान्तासु दिक्षु स्थिते शकुने फलान्याह ।

**ऐन्द्र्यां दिशि शान्तायां विरुवन्नृपसंश्रितागमं वक्ति ।**
**शकुनः पूजालाभं मणिरत्नद्रव्यसम्प्राप्तिम् ॥ १ ॥**

ऐन्द्र्यां पूर्वस्यां दिश्याशायां शान्तायां विरुवन् क्रोशन् नृपसंश्रितस्य राज-समाश्रितस्यागमं वक्ति कथयति । तथा तत एव पूजालाभार्थानां मणिरत्नानां प्रधानरत्नानां द्रव्याणामन्येषां सुवर्णादीनां सम्प्राप्तिं लाभं च कथयति । यदि च स शकुनः शुभः । अथ मध्यमस्तदा मध्यमं फलं करोति । अथाशुभस्तदा किञ्चिच्छुभम् । एवं सर्वं परिज्ञेयम् ॥ १ ॥

अथान्यदाह ।

**तदनन्तरदिशि कनकागमो भवेद्वाञ्छितार्थसिद्धिश्च ।**
**आयुधधनपूगफलागमस्तृतीये भवेद्भागे ॥ २ ॥**

तस्या एव पूर्वस्या अनन्तरदिशि प्रादक्षिण्येन द्वितीयदिशि स्थिते शकुने कनकागमः सुवर्णलाभो भवति वाञ्छितस्याभिलषितस्य च कार्यस्य सिद्धिर्भवति । तृतीये भागे आयुधस्य च खड्गादेर्धनस्य वित्तस्य पूगफलानां वाऽऽगमो लाभो भवति ॥ २ ॥

अन्यदप्याह ।

**स्निग्धद्विजस्य सन्दर्शनं चतुर्थे तथाहिताग्नेश्च ।**
**कोणेऽनुजीविभिक्षुप्रदर्शनं कनकलोहाप्तिः ॥ ३ ॥**

चतुर्थे भागे स्निग्धस्येष्टस्य द्विजस्य ब्राह्मणस्य तथाऽऽहिताग्नेर्याजकस्य सन्दर्शनं कनकस्य सुवर्णस्य लोहस्य शस्त्रस्य च प्राप्तिर्लाभो भवतीत्यर्थः । आग्नेये कोणे अनुजीविनो भिक्षोः प्रदर्शनम् ॥ ३ ॥

अथान्यदप्याह ।

**याम्येनाद्ये नृपपुत्रदर्शनं सिद्धिरभिमतस्याप्तिः ।**
**परतः स्त्रीधर्माप्तिः सर्षपयवलब्धिरप्युक्ता ॥ ४ ॥**

याम्येन दक्षिणदिग्भागेन तदाद्येनोपलक्षित आद्यः स च कोणाद्बहिः । आद्ये प्रथमभागे नृपपुत्रस्य राजपुत्रस्य दर्शनं सिद्धिश्च भवति कार्याणाम् । अभिमतस्याभीष्टस्यार्थस्य चाप्तिर्लाभो भवति । परतोऽनन्तरं द्वितीये भागे स्त्रीप्राप्तिर्धर्मप्राप्तिश्च भवति । सर्षपाणां यवानामपि लब्धिरुक्ता कथिता ॥ ४ ॥

अन्यदप्याह ।

**कोणाच्चतुर्थखण्डे लब्धिर्द्रव्यस्य पूर्वनष्टस्य ।**
**यद्वा तद्वा फलमपि यात्रायां प्राप्नुयाद्याता ॥ ५ ॥**

कोणादारभ्य यश्चतुर्थखण्डस्तस्मिन् पूर्वनष्टस्य प्रागपहृतस्य द्रव्यस्यार्थस्य लब्धिर्लाभो भवति । याता यात्रायां यद्वा यनत् फलं तद्वा येन तेन प्रकारेणाप्नुयात् प्राप्नोतीत्यर्थः ॥ ५ ॥

अन्यदप्याह ।

**यात्रासिद्धिः समदक्षिणेन शिखिमहिषकुक्कुटाप्तिश्च ।**
**याम्याद्द्वितीयभागे चारणसङ्गः शुभं प्रीतिः ॥ ६ ॥**

समश्चासौ दक्षिणो भागः समदक्षिणः । तस्मिन् समदक्षिणे च यात्रासिद्धिर्भवति । शिखी मयूरः । शिखिमहिषकुक्कुटानां चाप्तिर्लाभो भवति । याम्यात् समदक्षिणाद्द्वितीये भागे चारणा नटनर्तकप्रभृतयः । तैः सह सङ्गः संयोगो भवति शुभं धर्मादिप्रीतिश्च भवति ॥ ६ ॥

अन्यदप्याह।

**ऊर्ध्वं सिद्धिः कैवर्त्तसङ्गमो मीनतित्तिराद्याप्तिः।**
**प्रव्रजितदर्शनं तत्परे च पक्वान्नफललब्धिः॥ ७॥**

ऊर्ध्वं द्वितीयभागात् परतस्तृतीयभागे सिद्धिः कार्याणां भवति। कैवर्त्तेन सङ्गस्तेन सह संयोगो मीनतित्तिरादीनां प्राप्तिश्च भवति। मीनो मत्स्यः। तित्तिरः पक्षी। आदिग्रहणात् लावकादयः। तत्परे चतुर्थे भागे प्रव्रजितस्य गृहीतव्रतस्य दर्शनं भवति पक्वान्नस्य फलानां च लब्धिर्लाभो भवति॥ ७॥

अन्यदप्याह।

**नैर्ऋत्यां स्त्रीलाभस्तुरगालङ्कारदूतलेखाप्तिः।**
**परतोऽस्य चर्मतच्छिल्पिदर्शनं चर्ममयलब्धिः॥ ८॥**

नैर्ऋत्यां स्त्रीलाभो भवति। तुरगस्याश्वस्यालङ्करणस्य भूषणस्य दूतस्य देशावेदिनो लेखस्य च प्राप्तिर्भवति। अस्य नैर्ऋतभागस्य परतोऽनन्तरं चर्मदर्शनं भवति। तच्छिल्पी चर्मशिल्पी तस्यापि दर्शनमवलोकनम्। चर्ममयस्य भाण्डस्य उपहारादेर्लब्धिर्लाभो भवति॥ ८॥

अन्यदप्याह।

**वानरभिक्षुश्रवणावलोकनं नैर्ऋतात् तृतीयांशे।**
**फलकुसुमदन्तघटितागमश्च कोणाच्चतुर्थांशे॥ ९॥**

नैर्ऋतात् कोणात् तृतीयांशे तृतीयभागे वानरस्य कपेर्भिक्षोर्यतेः श्रवणस्य बौद्धस्य चावलोकनं दर्शनमित्यर्थः। कोणान्नैर्ऋतकोणाच्चतुर्थांशे चतुर्थभा फलादीनामाम्रादीनां कुसुमानां पुष्पाणां दन्तघटितानां दन्तादिकृतानां चागमो भवति॥ ९॥

अन्यदप्याह।

**वारुण्यामर्णवजातरत्नवैदूर्यमणिमयप्राप्तिः।**
**परतोऽतः शबरव्याधचौरसङ्गः पिशितलब्धिः॥ १०॥**

वारुण्यां पश्चिमायामर्णवजातानां समुद्रसम्भूतानां रत्नानां वैदूर्यादीनां मणीनां मणिमयानां रत्नकृतानां च भाण्डानां प्राप्तिर्लाभो भवति। अतो वारुण्याः परतोऽनन्तरं शबरैः शबरजनैर्व्याधैर्लुब्धकजनैश्चौरैस्तस्क-

रैश्च सह सङ्गमो योगो भवति । पिशितस्य च मांसस्य लब्धिर्लाभो भवति ॥ १० ॥

अन्यदप्याह ।

**परतोऽपि दर्शनं वातरोगिणां चन्दनागुरुप्राप्तिः ।**
**आयुधपुस्तकलब्धिस्तद्वृत्तिसमागमश्चोर्ध्वम् ॥ ११ ॥**

परतोऽनन्तरमस्मिन् भागे वातरोगिणामनिलव्याध्यर्दितानां दर्शनम् । चन्दनस्य मलयजस्य । अगुरोः सुगन्धद्रव्यस्य । प्राप्तिर्लाभो भवति । अत ऊर्ध्वमतः परमन्यस्मिन् भागे आयुधस्य खड्गादेः पुस्तकस्य च शास्त्रस्य लब्धिः । तद्वृत्तीनामायुधपुस्तके एव वृत्तिर्वर्तनं येषां तैः सह समागमः संयोगो भवति ॥ ११ ॥

अन्यदप्याह ।

**वायव्ये फेनकचामरौर्णिकाप्तिः समेति कायस्थः ।**
**मृन्मयलाभोऽन्यस्मिन् वैतालिकडिण्डिभाण्डानाम् ॥ १२ ॥**

वायव्ये कोणे फेनकस्य चामरस्य वालव्यजनस्यौर्णिकस्य च कम्बलादेः प्राप्तिर्भवति । कायस्थो देवरः समेति संयोगं याति । अन्यस्मिन् द्वितीयभागे मृन्मयस्य द्वितीयस्य भाण्डस्य लाभः । वैतालिको नग्नाचार्यः । डिण्डिभाण्डानि वादित्रविशेषाः । पटहमृदङ्गकरटाः समेता यत्र वाद्यन्ते तानि डिण्डिभाण्डानि तेषां लाभः ॥ १२ ॥

अन्यदप्याह ।

**वायव्याच्च तृतीये मित्रेण समागमो धनप्राप्तिः ।**
**वस्त्राश्वाप्तिरतः परमिष्टसुहृत्सम्प्रयोगश्च ॥ १३ ॥**

वायव्यकोणात् परे तृतीयभागे मित्रेण सह सुहृदा सह समागमो भवति । धनस्यार्थस्य च प्राप्तिः । अतोऽस्मात् तृतीयात् परं वस्त्रस्याम्बरस्याश्वस्य तुरगस्य च प्राप्तिः । इष्टेन वल्लभेन सुहृदा मित्रेण सह सम्प्रयोगः समागमः ॥ १३ ॥

अन्यदप्याह ।

**दधितण्डुललाजानां लब्धिरुदग्दर्शनं च विप्रस्य ।**
**अर्थावाप्तिरनन्तरमुपगच्छति सार्थवाहश्च ॥ १४ ॥**

उदगुत्तरस्यां दिशि दधितण्डुललाजानां लब्धिः । दध्नस्तण्डुलानां लाजानां च लाभो भवति । विप्रस्य ब्राह्मणस्य दर्शनमवलोकनम् । अनन्तरमतः परमन्यस्मिन् भागेऽर्थावाप्तिरर्थलाभो भवति सार्थवाहश्चोपगच्छति आयाति ॥ १४ ॥

अन्यदप्याह ।

**वेश्यावटुदाससमागमः परे शुक्लपुष्पफललब्धिः ।**
**अत ऊर्ध्वं चित्रकरस्य दर्शनं चित्रवस्त्राप्तिः ॥ १५ ॥**

परेऽन्यस्मिन् भागे वेश्या बन्धकी । वटुर्ब्राह्मणः । दासो भृत्यः । एतैः समागमः संयोगः । शुक्लपुष्पाणां फलानां च लब्धिर्लाभो भवति । अत ऊर्ध्वमतः परमन्यस्मिन् भागे चित्रकरस्य दर्शनं भवति । चित्राणां नानावर्णानां वस्त्राणामम्बराणां च प्राप्तिर्भवति ॥ १५ ॥

अन्यदप्याह ।

**ऐशान्यां देवलकोपसङ्क्रमो धान्यरत्नपशुलब्धिः ।**
**प्राक् प्रथमे वस्त्राप्तिः समागमश्चापि बन्धक्या ॥ १६ ॥**

ऐशान्यां दिशि देवलकेन भोजकेनोपसङ्क्रमः संयोगो भवति । धान्यरत्नपशूनां च लब्धिः । प्राक् प्रथमे पूर्वस्यां दिशि प्रथमे भागे वस्त्राप्तिरम्बरलाभो बन्धक्या वेश्यया सह समागमो भवति ॥ १६ ॥

अन्यदप्याह ।

**रजकेन समायोगो जलजद्रव्यागमश्च परतोऽतः ।**
**हस्त्युपजीविसमाजश्चास्माद्धनहस्तिलब्धिश्च ॥ १७ ॥**

रजकेन वस्त्ररागकृता समायोगो जलजानां जलोत्पन्नद्रव्याणामागमो लाभश्च भवति । अतोऽस्मात् परतो हस्त्युपजीविभिर्हस्तिनामनुजीविभिः समाजः संयोगो भवति । अस्माच्च समाजाद्धनलब्धिर्हस्तिलब्धिश्च भवति ॥ १७ ॥

अत्रैव विशेषमाह ।

**द्वात्रिंशत्प्रविभक्तं दिक्चक्रं वास्तुबन्धनेऽप्युक्तम् ।**
**अरनाभिस्थैरन्तः फलानि नवधा विकल्प्यानि ॥ १८ ॥**

दिक्चक्रं दिङ्मण्डलं वास्तुवद्द्वात्रिंशद्भागप्रविभक्तं सनेम्युक्तं नेम्या सह कथितम् । नेमियुक्तस्यैतत् फलम् । यथा वास्तुबन्धने द्वात्रिंशद्भागप्रविभक्ते वास्तुप्रतिदिशमष्टौ द्वाराणि विभक्तान्येवं दिक्चक्रमपि विभक्तं तत्रैतत्फलम् । अरनाभिस्थैररणीनाभिस्थैः । अराश्चक्रस्य मध्यवर्तिनः । नाभिर्मध्यं तैररनाभिस्थैः शकुनैरन्तर्मध्ये नवधा नवप्रकारं फलानि विकल्प्यानि विकल्पनीयानि ॥ १८ ॥

तानि चाह ।

**नाभिस्थे बन्धुसुहृत्समागमस्तुष्टिरुत्तमा भवति ।**
**प्राग्रक्तपट्टवस्त्रागमस्त्वरे नृपतिसंयोगः ॥ १९ ॥**

नाभिस्थे चक्रनाभिस्थे शकुने बन्धुभिः कुटुम्बैः सुहृद्भिर्मित्रैः सह समागमः संयोगो भवति । उत्तमा प्रकामा च तुष्टिः । प्राक् पूर्वभागे योऽरस्तत्र स्थिते शान्ते शकुने रक्तस्य लोहितस्य पट्टस्य वस्त्रस्याम्बरस्य चागमो लाभो भवति । नृपतिना राज्ञा सह संयोगः ॥ १९ ॥

अन्यदप्याह ।

**आग्नेये कौलिकतक्षपारिकर्माश्वसूतसंयोगः ।**
**लब्धिश्च तत्कृतानां द्रव्याणामश्वलब्धिर्वा ॥ २० ॥**

आग्नेयेऽरे कौलिकस्तन्तुवायः । तक्षा वर्धकिः । पारिकर्मा परिकर्म वेत्ति यः स पारिकर्मा । गणितपरिकर्माणि जानाति यः । केचित् कर्मज्ञा इत्याहुः । अश्वस्तुरगः । सूतोऽश्ववाहकः । एतैः सह संयोगो भवति । तत्कृतानां कौलिकादिकृतानां द्रव्याणां लब्धिर्लाभः । अश्वलब्धिस्तुरगलब्धिश्च वा भवति ॥ २० ॥

अन्यदप्याह ।

**नेमीभागं बुद्ध्वा नाभीभागं च दक्षिणे योऽरः ।**
**धार्मिकजनसंयोगस्तत्र भवेद्धर्मलाभश्च ॥ २१ ॥**

नेमी चक्रस्य प्रान्तं तस्या नाभेश्च भागं बुद्धा प्रविभागं ज्ञात्वा दक्षिणेन दक्षिणस्यां दिशि योऽरस्तत्र स्थिते शकुने धार्मिकजनैः सह संयोगो भवति धर्मलाभश्च ॥ २१ ॥

अन्यदप्याह ।

**उक्षाक्रीडककापालिकागमो नैर्ऋते समुद्दिष्टः**
**वृषभस्य चात्र लब्धिर्माषकुलत्थाद्यमशनं च ॥ २२ ॥**

उक्षा गौः । क्रीडको यः क्रीडयति । कापालिकः प्रसिद्धस्तपस्वी । एषामागमो नैर्ऋतेऽरे समुद्दिष्टः कथितः । अत्रास्मिन्नरे वृषभस्य दान्तस्य च लब्धिर्लाभो भवति । अशनं भोज्यं माषकुलत्थाद्यं भवति । माषकुलत्थौ प्रसिद्धौ सस्यविशेषौ । आद्यग्रहणाद्यवगोधूमकङ्गुनिका गृह्यन्ते ॥ २२ ॥

अन्यदप्याह ।

**अपरस्यां दिशि योऽरस्तत्रासक्तिः कृषीवलैर्भवति ।**
**सामुद्रद्रव्यसुसारकाचफलमद्यलब्धिश्च ॥ २३ ॥**

अपरस्यां पश्चिमायामरस्तत्र तस्मिन् कृषीवलैः कार्षिकैरासक्तिः संयोगो भवति सामुद्रद्रव्याणां सुसारस्य काचस्य च लब्धिर्लाभो भवति । सुसारो मणिविशेषः । फलानामाम्रादीनां मद्यस्य पानविशेषस्य च लब्धिर्लाभो भवति ॥ २३ ॥

अन्यदप्याह ।

**भारवहतक्षभिक्षुकसन्दर्शनमपि च वायुदिक्संस्थे ।**
**तिलककुसुमस्य लब्धिः सनागपुन्नागकुसुमस्य ॥ २४ ॥**

वायव्यां दिशि योऽरस्तत्संस्थे शकुने भारवहो भारवाहकः । तक्षा वर्धकिः । भिक्षुको यतिः । एषां सन्दर्शनं भवति । तिलककुसुमस्य । तिलको वृक्षविशेषः । तत्पुष्पाणां लब्धिर्भवति । पुन्नागकुसुमस्य पुन्नागपुष्पस्य सनागस्य नागकुसुमेन सहितस्य लब्धिर्भवति ॥ २४ ॥

अन्यदप्याह ।

**कौबेर्यां दिशि योऽरस्तत्रस्थो वित्तलाभमाख्याति ।**
**भागवतेन समागममाचष्टे पीतवस्त्रैश्च ॥ २५ ॥**

कौबेर्यामुत्तरस्यां दिशि शान्तायां योऽरस्तत्रस्थः शकुनो वित्तलाभं धनलब्धिमाख्याति कथयति । तथा भागवतेन वैष्णवेन द्विजेन सह समागमं संयोगमाचष्टे कथयति । पीतवस्त्रैश्च पीतवर्णैरम्बरैः संयोगम् ॥ २५ ॥

अन्यदप्याह ।

**ऐशाने व्रतयुक्ता वनिता सन्दर्शनं समुपयाति ।**
**लब्धिश्च परिज्ञेया कृष्णायःशस्त्रघण्टानाम् ॥ २६ ॥**

ऐशानेऽरे व्रतयुक्ता व्रतस्था वनिता स्त्री सन्दर्शनं समुपयाति गच्छति । कृष्णायसः कृष्णलोहस्य शस्त्रस्य घण्टानां च लब्धिः परिज्ञेया ॥ २६ ॥

अथात्रैव विशेषमाह ।

**याम्येऽष्टांशे पश्चाद्द्विषट्त्रिसप्ताष्टमेषु मध्यफला ।**
**सौम्येन च द्वितीये शेषेष्वतिशोभना यात्रा ॥ २७ ॥**
**अभ्यन्तरे तु नाभ्यां शुभफलदा भवति षट्सु चारेषु ।**
**वायव्यानैर्ऋतयोररयोः क्लेशावहा यात्रा ॥ २८ ॥**

याम्येऽष्टांश इति । याम्ये दक्षिणदिग्भागे योऽष्टांशोऽष्टभागस्तस्मिंस्तथा पश्चात् पश्चिमदिग्भागे नैर्ऋतकोणादारभ्य द्विषट्त्रिसप्ताष्टमेषु । द्वितीयषष्ठतृतीयसप्तमाष्टमेषु । तथा सौम्येन उत्तरदिग्भागेन च द्वितीयाष्टांशे एतेषु शकुने स्थिते शान्ते मध्यफला यात्रा भवति । न शुभा नाप्यशुभेत्यर्थः । शेषेष्वन्येषु भागेषु पञ्चविंशत्सङ्ख्यास्वति शोभना यात्रा भवति ॥ २७ ॥

अभ्यन्तर इति । नाभ्यामभ्यन्तरे नाभिमध्ये षट्सु चाष्टसु चारेषु वायव्यानैर्ऋतवर्जितेषु स्थिते शकुने शुभफलदा यात्रा भवति । वायव्यानैर्ऋतयोर्द्वयोररयोः क्लेशावहा कष्टप्रदा यात्रा भवति ॥ २८ ॥

एवमिदं यदुक्तं तच्छान्तासु दिक्षु दीप्तासु वक्ष्यामीत्याह ।

**शान्तासु दिक्षु फलमिदमुक्तं दीप्तास्वतोऽभिधास्यामि ।**
**ऐन्द्र्यां भयं नरेन्द्रात् समागमश्चैव शत्रूणाम् ॥ २९ ॥**

इदं यदुक्तं फलं शान्तासु दिक्षु । अतोऽस्मात् परं दीप्तास्वभिधास्यामि कथयिष्यामि । ऐन्द्र्यां पूर्वस्यां दिशि दीप्तायां स्थिते शकुने नरेन्द्राद्राज्ञो भयं भवति । शत्रूणां रिपूणां समागमः संयोगो भवति ॥ २९ ॥

अन्यदप्याह ।

**तदनन्तरदिशि नाशः कनकस्य भयं सुवर्णकाराणाम् ।**
**अर्थक्षयस्तृतीये कलहः शस्त्रप्रकोपश्च ॥ ३० ॥**

तदनन्तरदिशि पूर्वस्यां परतो द्वितीयभागे स्थिते शकुने दीप्ते कनकस्य सुवर्णस्य नाशो भवति सुवर्णकाराणां च संबन्धि भयं भवति । तृतीये भागे अर्थक्षयो वित्तनाशः कलहः शस्त्रप्रकोपश्च ॥ ३० ॥

अन्यदप्याह ।

**अग्निभयं च चतुर्थे भयमाग्नेये च भवति चौरेभ्यः ।**
**कोणादपि द्वितीये धनक्षयो नृपसुतविनाशः ॥ ३१ ॥**

चतुर्थे प्राग्भागादग्निभयं भवति । आग्नेये च कोणे चौरेभ्यस्तस्करेभ्यो भयं भवति । कोणादपि आग्नेयकोणात् तृतीयभागे धनस्य वित्तस्य क्षयः । नृपसुतविनाशो राजपुत्रस्य विनाशः क्षयो म्रियत इत्यर्थः ॥ ३१ ॥

अन्यदप्याह ।

**प्रमदागर्भविनाशस्तृतीयभागे भवेच्चतुर्थे च**
**हैरण्यककारुकयोः प्रध्वंसः शस्त्रकोपश्च ॥ ३२ ॥**

कोणादाग्नेयात् तृतीयभागे स्थिते शकुने प्रमदा जाया तस्या गर्भविनाशो भवेत् स्यात् । चतुर्थे च भागे हैरण्यकः सुवर्णादिविक्रयादिकः । कारुकः शिल्पी । तयोः प्रध्वंसो विनाशो भवति । तथा शस्त्रकोपश्च ॥ ३२ ॥

अन्यदप्याह ।

**अथ पञ्चमे नृपभयं मारीमृतदर्शनं च वक्तव्यम् ।**
**षष्ठे तु भयं ज्ञेयं गन्धर्वाणां सडोम्बानाम् ॥ ३३ ॥**

अथानन्तरं पञ्चमे भागे नृपभयं राजभयं भवति । मारी तत्र जनानां मरको भवति । मृतस्य पुरुषस्य दर्शनमवलोकनं वक्तव्यं वाच्यम् । षष्ठे भागे गन्धर्वाणां गायनानां सडोम्बानां डोम्बसहितानां भयं भवति । तेभ्यो भयं भवतीत्यर्थः ॥ ३३ ॥

अन्यदप्याह ।

**धीवरशाकुनिकानां सप्तमभागाद्भयं भवति दीप्ते ।**
**भोजनविघात उक्तो निर्ग्रन्थभयं च तत्परतः ॥ ३४ ॥**

सप्तमभागे दीप्ते शकुने धीवरः प्रसिद्धः । शाकुनिकः पक्षिघाती । तेभ्यः सकाशाद्भयं भवति । तत्परतोऽष्टमभागे भोजनस्याशनस्य विघातो नाश उक्तः कथितः । निर्ग्रन्थो नग्नक्षपणकस्तस्माच्च भयं भवति ॥ ३४ ॥

अन्यदप्याह ।

**कलहो नैर्ऋतभागे रक्तस्रावोऽथ शस्त्रकोपश्च ।**
**अपराद्ये चर्मकृतं विनश्यते चर्मकारभयम् ॥ ३५ ॥**

नैर्ऋतकोणे कलहो रक्तस्रावोऽसृक्स्रुतिः । शस्त्रकोपः सङ्ग्रामश्च भवति । अपराद्ये पश्चिमप्रथमभागे चर्मकृतं चर्ममयं वस्त्रोपानहादिकं विनश्यते नाशं याति । चर्मकारभयं चर्मकाराच्च भीतिर्भवति ॥ ३५ ॥

अन्यदप्याह ।

**तदनन्तरे परिव्राट् श्रवणभयं तत्परे त्वनशनभयम् ।**
**वृष्टिभयं वारुण्ये श्वतस्कराणां भयं परतः ॥ ३६ ॥**

तदनन्तरं द्वितीये भागे परिव्राजकस्य तपस्विनो भयं श्रवणाच्छाक्यभिक्षोश्च भयं भवति । तत्परे तृतीये भागे त्वनशनभयमुपवासभीतिर्भवति । वारुण्ये पश्चिमायां वृष्टिभयं वर्षणाद्भीतिर्भवति । परतोऽनन्तरमन्यस्मिन् भागे श्वतस्कराणां सारमेयानां चौराणां च संबन्धि भयं भवति ॥ ३६ ॥

अन्यदप्याह ।

**वायुग्रस्तविनाशः परे परे शस्त्रपुस्तवार्त्तानाम् ।**
**कोणे पुस्तकनाशः परे विषस्तेनवायुभयम् ॥ ३७ ॥**

तत्परतो भागे वायुग्रस्तविनाशः । वायुनानिलेन ग्रस्तः क्रोडीकृतो वायुग्रस्तो वातादिना विनाशो मरणं भवति । परे परभागेऽन्यस्मिन् शस्त्रपुस्तवार्त्तानां भवति । शस्त्रमायुधम् । पुस्तं लिपिकर्म । शस्त्रपुस्तयोर्वार्त्ता वर्त्तनं येषां तेभ्यो भयं भवति । कोणे वायव्ये पुस्तकस्य शास्त्रस्य

विनाशो भवति । परे द्वितीये भागे विषस्तेनवायुकृतं भयम् । विषं प्रविष्टम् । स्तेनश्चोरः । वायुर्मारुतः । एभ्यो भयं भवति ॥ ३७ ॥

अन्यदप्याह ।

**परतो वित्तविनाशो मित्रैः सह विग्रहश्च विज्ञेयः ।**
**तस्यासन्नेऽश्वबधो भयमपि च पुरोधसः प्रोक्तम् ॥ ३८ ॥**

परतोऽनन्तरमन्यस्मिन् भागे वित्तस्य धनस्य विनाशः क्षयो भवति । मित्रैः सुहृद्भिश्च सह विग्रहः कलहो विज्ञेयो ज्ञातव्यः । तस्यासन्ने निकटवर्त्तिनि द्वितीये भागे अश्वस्य तुरगस्य बधो मरणं भवति । पुरोधस आचार्यस्य भयं प्रोक्तं कथितम् ॥ ३८ ॥

अन्यदप्याह ।

**गोहरणशस्त्रघातावुदक् परे सार्थघातधननाशौ ।**
**आसन्ने च श्वभयं व्रात्यद्विजदासगणिकानाम् ॥ ३९ ॥**

उदगुत्तरस्यां दिशि गोहरणं गवामपहरणं शस्त्रस्य च घातो विनाशो भवति । परे द्वितीये भागे सार्थस्य च घातो बधो धननाशो वित्तहानिश्च भवति । आसन्ने निकटवर्त्तिनि भागे श्वभयं सारमेयभयं च भवति । तथा व्रात्यद्विजदासगणिकानां भयं भवति । यस्य ब्राह्मणस्याष्टमाद्वर्षादारभ्य षोडशवर्षं यावदुपनयनं कृतं स व्रात्यो द्विजः । दासः कर्मकरः । गणिका वेश्या । एतासां संबन्धि भयं भवति ॥ ३९ ॥

अन्यदप्याह ।

**ऐशानस्यासन्ने चित्राम्बरचित्रकृद्भयं प्रोक्तम् ।**
**ऐशाने त्वग्निभयं दूषणमप्युत्तमस्त्रीणाम् ॥ ४० ॥**

ऐशानस्यासन्ने निकटवर्त्तिनि भागे चित्राम्बरस्य चित्रवस्त्रस्य चित्रकृतश्चित्रकरस्य संबन्धि भयं प्रोक्तं कथितम् । ऐशाने कोणे त्वग्निभयं हुतवहभीतिरुत्तमस्त्रीणां प्रधानयोषितामपि दूषणं दुष्टत्वं भवति ॥ ४० ॥

अन्यदप्याह ।

**प्रोक्तस्यैवासन्ने दुःखोत्पत्तिः स्त्रिया विनाशश्च ।**
**भयमूर्ध्वं रजकानां विज्ञेयं काञ्चिकानां च ॥ ४१ ॥**

प्राक् पूर्वस्यां दिशि तस्यैवैशानकोणस्यासन्ने निकटवर्तिनि भागे दुःखस्योत्पत्तिरागमः । स्त्रिया योषितो विनाशो मरणं भवति । ऊर्ध्वे द्वितीयभागे रजकानां वस्त्ररागकृतानां काञ्चिकानां गन्धयोजकानां च संबन्धि भयं ज्ञेयं ज्ञातव्यम् ॥ ४१ ॥

अन्यदप्याह ।

**हस्त्यारोहभयं स्याद्द्विरदविनाशश्च मण्डलसमाप्तौ ।**
**अभ्यन्तरे तु दीप्ते पत्नीमरणं ध्रुवं पूर्वे ॥ ४२ ॥**

मण्डलसमाप्तौ मण्डलस्य द्वात्रिंशत्प्रविभक्तस्य यत्र समाप्तिस्तस्यां स्थिते दीप्ते शकुने हस्त्यारोहेभ्यो भयं भवति । द्विरदो हस्ती तस्य च विनाशो मरणम् । अभ्यन्तरे तु मध्यभागे पूर्वे प्राग्भागे योऽरस्तस्मिन् दीप्ते तत्रस्थे शकुने ध्रुवं निश्चितं पत्नीमरणम् । पत्नी भार्या तस्या मरणं भवति ॥ ४२ ॥

अन्येष्वप्याह ।

**शस्त्रानलप्रकोपावाग्नेये वाजिमरणशिल्पिभयम् ।**
**याम्ये धर्मविनाशोऽपरेऽग्न्यवस्कन्दचोरवधाः ॥ ४३ ॥**
**अपरे तु कर्मिणां भयमथ कोणे चानिले खरोष्ट्रवधः ।**
**अत्रैव मनुष्याणां विसूचिकाविषभयं भवति ॥ ४४ ॥**
**उदगर्थविप्रपीडा दिश्यैशान्यां तु चित्तसन्तापः ।**
**ग्रामीणगोपपीडा च तत्र नाभ्यां तथात्मवधः ॥ ४५ ॥**

शस्त्रानलेति । आग्नेये कोणे योऽरस्तत्रस्थे दीप्ते शकुने शस्त्रप्रकोपोऽनलस्याग्नेश्च प्रकोपो भवति । वाजिमरणमश्वविनाशः । शिल्पिभ्यो लेखपुस्तकचित्रकृद्भ्यो भयं भवति । याम्ये दक्षिणेऽरे धर्मविनाशः । अपरे नैर्ऋते अग्निर्हुताशनः । अवस्कन्द उपर्यागमनम् । चोरो दुष्ट इति प्रसिद्धः । एभ्यो वधो मरणं भवति ॥ ४३ ॥

अपरे त्विति । अपरे पश्चिमे भागे योऽरस्तत्रस्थे शकुने कर्मिणां सम्बन्धि भयं भवति । अथानन्तरमनिले वायव्येऽरे खराणां गर्दभानाम्-

ष्ट्राणां करभाणां च बधो मरणं भवति । अत्रैव वायव्ये मनुष्याणां पुंसां विषूचिकाभयमुदरशूलभीतिर्विषभयं च भवति ॥ ४४ ॥

उदगुत्तरस्यां योऽरस्तत्रार्थस्य धनस्य विप्राणां ब्राह्मणानां च पीडा भवति । ऐशान्यां दिशि अरे चित्तस्य मनसः सन्तापो भवति । सन्तापश्चित्तविभेदः । तत्र तस्मिन्नेवैशाने भागे ग्रामीणगोपपीडा भवति । ग्रामीणा ग्राम्यजनाः । गोपा गोपालकाः । एभ्यः पीडा । तथा नाभ्यां दीप्राग्रामात्मवध आत्मनो बधो मरणं भवतीति ॥ ४५ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ सर्वशाकुनेऽन्तरचक्रं नाम षडशीतितमोऽध्यायः ॥ ८६ ॥

# अथ विरुताध्यायो व्याख्यायते ।

तत्रादावेव दिवसचराणां सञ्ज्ञार्थमाह ।

**श्यामाश्येनशशघ्नवञ्जुलशिखिश्रीकर्णचक्राह्वया-**
**श्चाषाण्डीरकखञ्जरीटकशुकध्वाङ्क्षाः कपोतास्त्रयः ।**
**भारद्वाजकुलालकुक्कुटखरा हारीतगृध्रौ कपिः**
**फेण्टः कुक्कुटपूर्णकूटचटकाः प्रोक्ता दिवासञ्चराः ॥ १ ॥**

श्यामा पोतकी । श्येनो बाजिकः । शशघ्नः पक्षी । वञ्जुलः खदिरचञ्चुः । शिखी मयूरः । श्रीकर्णः पक्षी । चक्राह्वयश्चक्रवाकः । चाषः । अण्डीरकः । खञ्जरीटः । शुकः । एते सर्व एव पक्षिणः । ध्वाङ्क्षः काकः । कपोतास्त्रयः । आपाण्डुरश्चित्रकपोतः कुङ्कुमधूम्रश्चेति । भारद्वाजः पक्षी । कुलालकुक्कुटो गर्त्ताकुक्कुटः । खरो गर्दभः । हारीतगृध्रौ पक्षिणौ । कपिर्वानरः । फेण्टः पक्षिविशेषः । कुक्कुटः कृकवाकुः । पूर्णकूटः करायिकः । चटकः कलविङ्कः । एते सर्वे दिवासञ्चरा दिवसचरा उक्ताः कथिताः ॥ १ ॥

अथ ये रात्रिसञ्ज्ञास्तेषां च फलमाह ।

**लोमाशिका पिङ्गलछिप्पिकाख्यौ**
**वल्गुल्युलूकौ शशकश्च रात्रौ ।**

**सर्वे स्वकालोत्क्रमचारिणः स्यु-**
**र्देशस्य नाशाय नृपान्तदा वा ॥ २ ॥**

लोमाशिका प्रसिद्धा प्राणिविशेषः । पिङ्गल उलूकचेटी । छिप्पिकाख्यः पक्षिविशेषः । छिप्पिकेत्याख्या नाम यस्य । वल्गुली चर्मचटिका । उलूकः । शशकः प्राणी । एते रात्रौ चरन्ति । रात्रिचरा वा यदि दिवाचरास्तदा स्वकालोत्क्रमचारिणः । ते च देशस्य जनपदस्य नाशाय क्षयाय स्युर्भवेयुः । नृपस्य राज्ञोऽन्तदा वा मृत्युकराः स्युः ॥ २ ॥

अथोभयचारिण आह ।

**हयनरभुजगोष्ट्रद्वीपिसिंहर्क्षगोधा**
**वृकनकुलकुरङ्गश्वाजगोव्याघ्रहंसाः ।**
**पृषतमृगशृगालश्वाविदाख्यान्यपुष्टा**
**द्युनिशमपि बिडालः सारसः सूकरश्च ॥ ३ ॥**

हयोऽश्वः । नरो मनुष्यः । भुजगः सर्पः । उष्ट्रः करभः । द्वीपी चित्रकः । सिंहो हरिः । ऋक्षः प्राणी । गोधा प्राणिविशेषः । वृको मृगजातिः । नकुलः प्रसिद्धो बिलेशयः प्राणी । कुरङ्गो हरिणः । श्वा सारमेयः । अजश्छागः । गौः प्रसिद्धा । व्याघ्रः प्राणिविशेषः । हंसः पक्षी । पृषतो मृगजातिः । मृगः प्रसिद्धः । शृगालः क्रोष्टुकः । श्वाविद् बिलेशयः प्राणी । श्वाविदित्याख्या नाम यस्य । अन्यपुष्टः कोकिलः । तथा बिडालो मार्जारः सारसः पक्षी । सूकरो वराहः । एते सर्वे द्युनिशमहोरात्रमपि चरन्ति रात्रिचरा द्युचराश्चेत इत्यर्थः ॥ ३ ॥

अथैतेषां व्यवहारार्थं सञ्ज्ञामाह ।

**भषकूटपूरिकुरबककरायिकाः पूर्णकूटसञ्ज्ञाः स्युः ।**
**नामान्युलूकचेट्याः पिङ्गलिका पेचिका हक्का ॥ ४ ॥**
**कपोतकी च श्यामा वञ्जुलकः कीर्त्यते खदिरचञ्चुः ।**
**छुच्छुन्दरी नृपसुता वालेयो गर्दभः प्रोक्तः ॥ ५ ॥**
**स्रोतस्तडागभेद्येकपुत्त्रकः कलहकारिका च रला ।**
**भृङ्गारवच्च विरुवति निशि भूमौ ह्रस्वकुलशरीरा ॥ ६ ॥**

दुर्बलिको भाण्डीकः प्राच्यानां दक्षिणः प्रशस्तोऽसौ ।
धिक्कारो मृगजातिः कृकवाकुः कुक्कुटः प्रोक्तः ॥ ७ ॥
गर्त्ताकुक्कुटकस्य प्रथितं तु कुलालकुक्कुटो नाम ।
गृहगोधिकेति सञ्ज्ञा विज्ञेया कुड्यमत्स्यस्य ॥ ८ ॥
दिव्यो धन्वन उक्तः क्रोडः स्यात् सूकरोऽथ गोरुत्ता ।
श्वा सारमेय उक्तो जात्या चटिका च सूकरिका ॥ ९ ॥

भषकूटपूरीति । भषः कूटपूरी कुरबकः करायिका एताः सर्वाः पूर्णकूटस्य सञ्ज्ञा नामानि स्युर्भवेयुः । पिङ्गलिका पेचिका हक्का एतानि उलूकचेट्या नामानि ॥ ४ ॥

कपोतकी श्यामा पोतकीत्युच्यते । वञ्जुलः खदिरचञ्चुरिति कीर्त्यते कथ्यते । छुच्छुन्दरी सुगन्धमूषिका नृपसुता राजपुत्री कीर्त्यते । गर्दभः खरो वालेयः प्रोक्त इति कथितः ॥ ५ ॥

स्रोत इति । स्रोतोभेद्यस्तडागभेद्य एकपुत्रकः कलहकारिका च एतैर्नामभी रला इति ज्ञेया । सा च निशि रात्रौ भृङ्गारवद्विरुवति वाशति भृङ्गारो दांदा[१]नी दमनी । भृङ्गारेण तुल्यं भृङ्गारवत् । तद्वत् शब्दं करोति । हुङ्कारमुच्चरतीत्यर्थः । केचिद्भृङ्गारः पक्षिविशेष इतीच्छन्ति । निशि रात्रौ किंप्रमाणा द्व्यङ्गुलशरीरा द्व्यङ्गुलप्रमाणं शरीरं यस्याः ॥ ६ ॥

दुर्बलिक इति । भाण्डीको दुर्बलिकः प्रोक्तः । असौ दुर्बलिकः प्राच्यानां पूर्वदेशभवानां दक्षिणः प्रशस्तः । अर्थादेवान्येषां सर्वेषां वामतः । धिक्कारो मृगजातिरुक्ता । कुक्कुटः कृकवाकुरिति प्रोक्तः कथितः ॥ ७ ॥

गर्त्ताकुक्कुटस्येति । गर्त्तः खातं तत्र य उक्तः कुक्कुटस्तस्य कुलालकुक्कुटेति नाम सञ्ज्ञा प्रथितं प्रख्यातम् । कुड्यमत्स्यस्य भित्तिमीनस्य गृहगोधिकेति सञ्ज्ञा नाम विज्ञेया विज्ञातव्या ॥ ८ ॥

दिव्यो धन्वन इति । दिव्यो धन्वन इत्युक्तः कथितः । क्रोडः सूकरः स्याद्भवेत् । अथशब्दश्चार्थे । गोरुत्तेति ख्याता । श्वा कुक्कुरः सारमेय इति कथितः । जात्या प्रकृत्या या चटिका सा सूकरिकेत्युक्ता ॥ ९ ॥

---

१ दांदानी दमनी—इति टीकाकारदेशभाषेति ।

अथैवोपदेशार्थमाह ।

एवं देशे देशे तद्विद्भ्यः समुपलभ्य नामानि ।
शकुनरुतज्ञानार्थं शास्त्रे सञ्चिन्त्य योज्यानि ॥ १० ॥

एवमनेन प्रकारेण देशे देशे विद्भ्यः शकुननामविद्भ्यो नामानि समुपलभ्य ज्ञात्वा शकुनानां शुभाशुभसूचकानां रुतज्ञानार्थं तच्छब्दज्ञानाय सञ्चिन्त्य विचार्य शास्त्रे ग्रन्थे योज्यानि संयोजनीयानि ॥ १० ॥

अथ वञ्जुलश्येनशुकगृध्राणां रुतलक्षणमाह ।

वञ्जुलकरुतं तित्तिडिति दीप्तमथ किल्किलीति तत्पूर्णम् ।
श्येनशुकगृध्रकङ्काः प्रकृतेरन्यस्वरा दीप्ताः ॥ ११ ॥

प्रकृतेः स्वभावतोऽन्यस्वरा विपरीतशब्दा दीप्ता उक्ताः । वञ्जुलकरुतं तित्तिडिति । यद्वञ्जुलकस्य रुतं तित्तिड्–इति दीप्तमशुभम् । यत् किल्किलीत्येतत्पूर्णं शुभम् । श्येनशुकगृध्रकङ्काः प्रसिद्धाः पक्षिणः । एते सर्वे प्रकृतेः स्वभावतोऽन्यस्वरा विपरीतशब्दा दीप्ता उक्ताः ॥ ११ ॥

अथ कपोतचेष्टितमाह ।

यानासनशय्यानिलयनं कपोतस्य सद्मविशनं वा ।
अशुभप्रदं नराणां जातिविभेदेन कालोऽन्यः ॥ १२ ॥
आपाण्डुरस्य वर्षाच्चित्रकपोतस्य चैव षण्मासात् ।
कुङ्कुमधूम्रस्य फलं सद्यः पाकं कपोतस्य ॥ १३ ॥

यानासनेति । यानमश्वादि । आसनं पीठम् । यत्रोपविश्यते । शय्या आस्तरणम् । एतेषु कपोतस्य निलयनं संश्लेषः सद्मविशनं वा गृहप्रवेशनं वा भवति । एतन्नराणां पुंसामशुभप्रदमनिष्टप्रदं भवति । अन्यः परः कालः समयः फलस्य जातिभेदेन योनिविशेषेण भवति ॥ १२ ॥

तं च कालमाह । आपाण्डुरस्येति । आपाण्डुरस्य श्वेतवर्णस्य कपोतस्य वर्षात् पाकः फलम् । चित्रकपोतस्य नानावर्णस्य षण्मासात् षड्भिर्मासैः पाकः । कुङ्कुमवर्णस्य धूम्रवर्णस्य च कपोतस्य सद्यस्तस्मिन्नेवाह्नि पाकः फलं भवति ॥ १३ ॥

अधुना श्यामारुतमाह ।

**चिचिदिति शब्दः पूर्णः श्यामायाः शूलिशूलिति च धन्यः ।**
**चञ्चेति च दीप्तः स्यात् स्वप्रियलाभाय चिकुचिगिति ॥ १४ ॥**

श्यामायाश्चिचिदिति शब्दः पूर्णस्तस्या एव शूलिशूलिति च शब्दो धन्यः शुभः । चञ्चेति च शब्दो दीप्तोऽशुभः । स्याद् भवेत् । चिकुचिगिति च शब्दः स्वस्यात्मीयस्य प्रियस्य वल्लभस्य लाभाय प्राप्तये भवति ॥ १४ ॥

अथ हारीतभारद्वाज्यो रुतमाह ।

**हारीतस्य तु शब्दो गुग्गुः पूर्णोऽपरे प्रदीप्ताः स्युः ।**
**स्वरवैचित्र्यं सर्वं भारद्वाज्याः शुभं प्रोक्तम् ॥ १५ ॥**

हारीतस्य तु गुग्गुशब्दः पूर्णः । अपरे अन्ये सर्व एव शब्दाः प्रदीप्ताः स्युर्भवेयुः । भारद्वाज्याः स्वराणां शब्दानां वैचित्र्यं नानात्वं सर्वं निःशेषं शुभं प्रशस्तं प्रोक्तं कथितम् ॥ १५ ॥

करायिकरुतमाह ।

**किष्किषिशब्दः पूर्णः करायिकायाः शुभः कहकहेति ।**
**क्षेमाय केवलं करकरेति न त्वर्थसिद्धिकरः ॥ १६ ॥**
**कोटुक्लीति क्षेम्यः स्वरः कटुक्लीति वृष्टये तस्याः ।**
**अफलः कोटिकिलीति च दीप्तः खलु गुं कृतः शब्दः ॥ १७ ॥**

किष्किषीति । करायिकायाः पूर्णकूट्याः किष्किषिशब्दः पूर्णः । कहकहेति शब्दः शुभः । करकरेति शब्दः केवलं क्षेमाय लब्धपालनाय । न त्वर्थसिद्धिकरोऽर्थसिद्धिं न करोति ॥ १६ ॥

कोटुक्लीति । तस्याः करायिकायाः कोटुक्लीति शब्दः क्षेम्यः क्षेमे साधुः । कटुक्लीति च शब्दो वृष्ट्ये वर्षणाय भवति । देवो वर्षति । कोटिकिलीति चाफलो निष्फल इत्यर्थः । खलुशब्दश्चार्थे । गुं कृतः शब्दस्तस्या एव दीप्तः ॥ १७ ॥

अथ दिव्यकचेष्टितमाह ।

**शस्तं वामे दर्शनं दिव्यकस्य**
**सिद्धिर्ज्ञेया हस्तमात्रोच्छ्रितस्य ।**

**तस्मिन्नेव प्रोन्नतस्थे शरीराद्-**
**धात्री वश्यं सागरान्ताभ्युपैति ॥ १८ ॥**

दिव्यकस्य धन्वनस्य वामे वामभागे दर्शनमवलोकनं शस्तं शुभम्। तत्रैव वामभागे भूमेर्हस्तमात्रोच्छ्रितस्य शयप्रमाणोच्चस्य सिद्धिरभीष्टा कार्याणां च ज्ञेया । तस्मिन्नेव वामभागे यातुः शरीराद्देहात् प्रोन्नतस्य उच्चतरो भवति तदा धात्री भूर्वश्यं विधेयित्वं सागरान्ता समुद्रपर्यन्ताभ्युपैत्युपगच्छति ॥ १८ ॥

उक्तं च ।

वामे शस्तो धन्वनः सिद्धिदाता प्रोत्तुङ्गश्चेद्धस्तमात्रं जयाय ।
आकायं चेदुन्नतो वामभागे पृथ्वीलाभं बन्धुनाशं करोति ॥

अथ सर्पचेष्टितमाह ।

**फणिनोऽभिमुखागमोऽरिसङ्गं**
**कथयति बन्धुबधात्ययं च यातुः ।**
**अथवा समुपैति सव्यभागात्**
**न स सिद्धौ कुशलो गमागमे च ॥ १९ ॥**

फणिनः सर्पस्याभिमुखागमोऽरिसङ्गं शत्रुसंयोगं यातुः कथयति वक्ति। अथवा बान्धवानां बधो मरणमत्ययो विनाशः । अथ सव्यभागाद्दक्षिणभागाद्वामभागे समुपैत्यायाति तदा स सर्पः सिद्धौ सिद्धये गमागमे न कुशलः शस्तो न भवति ॥ १६ ॥

अथ खञ्जनकचेष्टितमाह ।

**अब्जेषु मूर्धसु च वाजिगजोरगाणां**
**राज्यप्रदः कुशलकृच्छुचिशाद्वलेषु ।**
**भस्मास्थिकाष्ठतुषकेशतृणेषु दुःखं**
**दृष्टः करोति खलु खञ्जनकोऽब्दमेकम् ॥ २० ॥**

खञ्जनकोऽब्जेषु पद्मादिषु तथा वाजिनोऽश्वाः । गजा हस्तिनः । उरगाः सर्पाः । एतेषां मूर्धसु मस्तकेषु दृष्टो राज्यप्रदो भवति । तथा शुद्धप्रदेशे शाद्वलेषु दूर्वासु च दृष्टः कुशलकृत् कुशलं करोति शुभफलकृद्वा भवति।

भस्मनि अस्थिकाष्ठतुषकेशतृणेषु दृष्टोऽब्दं वर्षमेकं दुःखं करोति । खलुशब्द आगमद्योतनार्थः ॥ २० ॥

अथ तित्तिरशशकयोश्चेष्टितमाह ।

**किलिकिल्किलि तित्तिरस्वनः**
**शान्तः शस्तफलोऽन्यथापरः ।**
**शशको निशि वामपार्श्वगो**
**वाशन् शस्तफलो निगद्यते ॥ २१ ॥**

तित्तिरस्वनः किलिकिल्किलीति शान्तः । सच शस्तफलः शोभनः । अपरोऽन्योऽन्यथा प्रदीप्त इत्यर्थः । सचाशस्तफलः । शशको निशि रात्रौ वामपार्श्वगो वामभागतो वाशन् विरुवन् शस्तफलः शोभनफलो निगद्यते कथ्यते ॥ २१ ॥

अथ कपिकुलालकुक्कुटयो रुतमाह ।

**किलिकिलिविरुतं कपेः प्रदीप्तं**
**न शुभफलप्रदमुद्दिशन्ति यातुः ।**
**शुभमपि कथयन्ति चुग्लुशब्दं**
**कपिसदृशं च कुलालकुक्कुटस्य ॥ २२ ॥**

कपेर्वानरस्य किलिकिलिविरुतं प्रदीप्तं तच्च यातुर्गमनेच्छोर्न शुभफलप्रदमुद्दिशन्ति कथयन्ति । चुग्लुशब्दं च शुभफलं कथयन्ति । कुलालकुक्कुटस्य रुतं कपिसदृशं वानरतुल्यमिति । यथैवं कपिदीप्तशान्तविरुतमुक्तं तथैव कुलालकुक्कुटस्येति ॥ २२ ॥

अथ चाषविरुतचेष्टितमाह ।

**पूर्णाननः कृमिपतङ्गपिपीलकाद्यै-**
**श्चाषः प्रदक्षिणमुपैति नरस्य यस्य ।**
**खे स्वस्तिकं यदि करोत्यथ वा यियासो-**
**स्तस्यार्थलाभमचिरात् सुमहत् करोति ॥ २३ ॥**

यस्य नरस्य चाषः कृमिभिः सरीसृपैः पतङ्गैः शलभैः पिपीलकाः प्रसिद्धास्ताभिः । आद्यग्रहणादन्यैरपि प्राणिभिः पूर्णाननः परिपूरितवक्त्रः प्रदक्षि-

णमुपैति प्रादक्षिण्येन याति । अथवा यस्य यियासोर्यातुमिच्छोः । खे नभसि स्वस्तिकं करोति स्वस्तिकवद्याति तस्यार्थलाभं वित्तलाभं सुमहदतिप्रभूतमचिराच्छीघ्रमेव करोति ॥ २३ ॥

अन्यदप्याह ।

**चाषस्य काकेन विरुध्यतश्चेत्**
**पराजयो दक्षिणभागगस्य ।**
**बधः प्रयातस्य तदा नरस्य**
**विपर्यये तस्य जयः प्रदिष्टः ॥ २४ ॥**

यदि चाषस्य काकेन वायसेन सह विरुध्यतः कलहं कुर्वतः काकाद्दक्षिणभागगतस्य चाषस्य पराजयः । तदा तस्मिन् काले प्रयातस्य गतस्य नरस्य पुरुषस्य बधो मरणं भवति । विपर्यये विपरीते काकादुत्तरभागे गतस्य जयः प्रदिष्ट उक्तः । जये सति प्रयातस्य जय एव ॥ २४ ॥

उक्तं च ।

पूर्णाननो यस्य करोति चाषः प्रदक्षिणं स्वस्तिकमेव वा खे ।
लाभो महांस्तस्य पराभवाय काकेन भङ्गो विजयो जयस्य ॥

अन्यदप्याह ।

**केकेति पूर्णकुटवद्यदि वामपार्श्वे**
**चाषः करोति विरुतं जयकृत् तदा स्यात् ।**
**क्रेक्रेति तस्य विरुतं न शिवाय दीप्तं**
**सन्दर्शनं शुभदमस्य सदैव यातुः ॥ २५ ॥**

चाषो वामपार्श्वे वामभागे केकेति विरुतं शब्दं करोति तथा पूर्णकुटवत् करायिकावत् किष्किषिकहकहेति शब्दं करोति । तदा जयकृत् स्याद्भवेत् । तस्य चाषस्य क्रेक्रेति विरुतं दीप्तं तच्च न शिवाय न श्रेयसे भवति । अस्य चाषस्य सन्दर्शनमवलोकनं यातुः सदैव सर्वकालं शुभदम् ॥ २५ ॥

अथाण्डीरकफेण्टकयोश्चेष्टितमाह ।

**अण्डीरकष्टीति रुतेन पूर्ण-**
**ष्टिट्टिट्टिशब्देन तु दीप्त उक्तः ।**

फेण्टः शुभो दक्षिणभागसंस्थो
न वाशिते तस्य कृतो विशेषः ॥ २६ ॥

अण्डीरकश्चेति । अण्डीरकः–टी–इति एतेन शब्देन पूर्ण उक्तः । टिट्टिट्टि अनेन शब्देन तु दीप्त उक्तः कथितः । फेण्टश्चाण्डीरको यातु-र्दक्षिणभागसंस्थः शुभः । तस्य फेण्टस्य वाशिते विरुते न विशेषः कृत उक्तः ॥ २६ ॥

अथ श्रीकर्णरुतमाह ।

श्रीकर्णरुतं तु दक्षिणे
क्वक्वक्वेति शुभं प्रकीर्त्तितम् ।
मध्यं खलु चिक्चिकीति य-
च्छेषं सर्वमुशन्ति निष्फलम् ॥ २७ ॥

दक्षिणे दक्षिणभागे श्रीकर्णरुतं क्वक्वक्वेति शुभं प्रकीर्तितमुक्तम् । तस्यैव चिक्चिकि इति यद्रुतं तन्मध्यफलं न शुभं नाप्यशुभमित्यर्थः । शेषं परिशिष्टं यद्रुतं तत् सर्वं निष्फलं फलरहितमुशन्ति कथयन्ति मुनय इति ॥ २७ ॥

अथ दुर्बलिविरुतमाह ।

दुर्बलेरपि चिरिल्विरिल्विति
प्रोक्तमिष्टफलदं हि वामतः ।
वामतश्च यदि दक्षिणं व्रजेत्
कार्यसिद्धिमचिरेण यच्छति ॥ २८ ॥

दुर्बलिभाण्डीकस्तस्य दुर्बलेश्चिरिल्विरिल्विति प्रोक्तमिष्टफलदं शोभनं कथितम् । वामतो वामभागे । यदि वामतो वामभागाद्दक्षिणभागे व्रजे-द्गच्छति तदाऽचिरेण शीघ्रमेव कार्यसिद्धिमर्थप्राप्तिं यच्छति ददाति ॥ २८ ॥

अस्यैव विशेषरुतमाह ।

चिक्चिकिवाशितमेव तु कृत्वा
दक्षिणभागमुपैति तु वामात् ।

क्षेमकृदेव न साधयतेऽर्थान्
व्यत्ययगो बधबन्धभयाय ॥ २९ ॥

स एव दुर्बलिकश्चित्कचिकीति वाशितमेव तु कृत्वा ततो वामाद्वामभागाद्दक्षिणभागमुपैति आगच्छति तदा क्षेमकृदेव क्षेमं करोति । अर्थानभीष्टान् न साधयते । सिद्धिं तेषां न ददाति । व्यत्ययगो विपरीतश्चातो बधो मरणं बन्धो बन्धनं भयं भीतिः । एतानि करोति । यदि दक्षिणभागाद्वाममुपैति ॥ २९ ॥

अन्यदप्याह ।

क्रक्रेति च सारिका द्रुतं त्रेत्रे वाप्यभया विरौति या ।
सा वक्ति यियासतोऽचिराद्गात्रेभ्यः क्षतजस्य विस्रुतिम् ॥ ३० ॥

या सारिका द्रुतं त्वरितं क्रक्रेति विरौति शब्दं करोति । या वा सारिकाऽभया भयवर्जिता त्रेत्रे इति विरौति शब्दं करोति । साऽचिराच्छीघ्रमेव यियासतो यातुमिच्छोर्गात्रेभ्योऽवयवेभ्यः क्षतजस्य रक्तस्य विस्रुतिं स्रावं वक्ति कथयति ॥ ३० ॥

अथ फेण्टकरुतमाह ।

फेण्टकस्य वामतश्चिरिल्विरिल्विति स्वनः ।
शोभनो निगद्यते प्रदीप्त उच्यतेऽपरः ॥ ३१ ॥

वामतो वामभागे फेण्टकश्चिरिल्विरिल्विति स्वनं शब्दं यदि करोति तदा शोभनः शुभफलप्रदो निगद्यते कथ्यते । अपरोऽन्यः प्रदीप्त उच्यते कथ्यत इति ॥ ३१ ॥

अथ गर्दभरुतमाह ।

श्रेष्ठं खरं स्यात्तुमुशन्ति वाम-
मोङ्कारशब्देन हितं च यातुः ।
अतोऽपरं गर्दभनादितं यत्
सर्वाश्रयं तत् प्रवदन्ति दीप्तम् ॥ ३२ ॥

खरं गर्दभं वामं वामभागगतं स्यात्नुमेकस्थानस्थितं श्रेष्ठं शोभनमुशन्ति कथयन्ति । तथोङ्कारशब्देन यदि विरौति तदा यातुर्हितमनुकूलम्

अतोऽपरमन्यद्गर्दभनादितं खरविरुतं सर्वाश्रयम् । सर्वेषां आश्रया यस्य तत् सर्वाश्रयं दीप्तं प्रवदन्ति कथयन्ति ॥ ३२ ॥

अथ कुरङ्गमृगपृषतरुतमाह ।

आकाररावी समृगः कुरङ्गः
ओकाररावी पृषतश्च पूर्णः ।
येऽन्ये स्वरास्ते कथिताः प्रदीप्ताः
पूर्णाः शुभाः पापफलाः प्रदीप्ताः ॥ ३३ ॥

कुरङ्गो मृगजातिः । समृगो मृगेण सहितः । सचाकाररावी । आकारं रौतीति आकाररावी । सच पूर्णः शुभः । पृषत ओकाररावी पूर्णः । अन्ये परिशिष्टाः स्वरास्ते प्रदीप्ताः कथिता उक्ताः । सर्वेषां शकुनानां ये पूर्णाः स्वरास्ते शुभाः । ये च प्रदीप्तास्ते पापफला अशुभाः ॥ ३३ ॥

अथ कुक्कुटरुतमाह ।

भीता रुवन्ति कुकुकुक्किति ताम्रचूडा-
स्त्यक्त्वा रुतानि भयदान्यपराणि रात्रौ ।
स्वस्थैः स्वभावविरुतानि निशावसाने
ताराणि राष्ट्रपुरपार्थिववृद्धिदानि ॥ ३४ ॥

ताम्रचूडाः कुक्कुटा रात्रौ निशि सभयाः कुकुकुकु—इति रुवन्ति शब्दं कुर्वन्ति । तानि तु रुतानि त्यक्त्वा परित्यज्यापराण्यन्यानि भयदानि भवन्ति । स्वस्थैः स्वभावस्थैर्नीरुजैरपरतन्त्रैः । स्वभावविरुतानि प्राकृतानि । स्वभाविकाः शब्दा निशावसाने रात्र्यन्ते ताराण्युच्चतराणि यानि क्रियन्ते तानि राष्ट्रस्य जनपदस्य पुरस्य नगरस्य पार्थिवस्य राज्ञो वृद्धिदानि वृद्धिं ददति ॥ ३४ ॥

अथ छिप्पिकाबिडालविरुतं गोरुतं चाह ।

नानाविधानि विरुतानि हि छिप्पिकाया-
स्तस्याः शुभाः कुलुकुलुर्न शुभास्तु शेषाः ।
यातुर्बिडालविरुतं न शुभं सदैव
गोस्तु क्षुतं मरणमेव करोति यातुः ॥ ३५ ॥

छिप्पिकाया नानाविधानि बहुप्रकाराणि विरुतानि भवन्ति। तेभ्यो मध्यात् तस्यास्तु कुलुकुलुशब्दाः शुभाः। शेषा अपरास्तु सर्वे एव न शुभाः। बिडालविरुतं मार्जारशब्दो यातुः सदैव सर्वकालमेव न शुभम्। गोस्तु पुनः क्षुतं यातुर्मरणमेव करोति ॥ ३५ ॥

उक्तं च।

सर्वेष पापं क्षुतमुद्दिशन्ति गोस्तु क्षुतं मृत्युकरं प्रियासोः।
मार्जाररावस्खलनं च यातुर्वस्त्रस्य सङ्गस्य न शोभनानि ॥

अथोलूकविरुतमाह।

हुंहुंगुग्लुगिति प्रियामभिलषन् क्रोशत्युलूको मुदा
पूर्णः स्याद्गुरुलु प्रदीप्तमपि च ज्ञेयं सदा किस्किसि।
विज्ञेयः कलहो यदा बलबलं तस्यासकृद्वाशितं
दोषायैव टटट्टटेति न शुभाः शेषास्तु दीप्तस्वराः ॥ ३६ ॥

उलूको मुदा हर्षेण प्रियां स्वपत्नीमभिलषन् वाञ्छन् हुंहुंगुग्नुगिति क्रोशति वाशति। गुरुल्विति शब्दः पूर्णः स्यात् भवेत्। सदा सर्वस्मिन् काले किस्किसि रुतं प्रदीप्तमपि ज्ञेयं ज्ञातव्यम्। यदा तस्योलूकस्यासकृत् पुनः-पुनर्बलबलमिति वाशितं तदा कलहो विज्ञेयः। टटट्टटेति वाशितं दोषायैव भवति। शेषास्तु अन्ये स्वराः सर्वे दीप्तास्ते च न शुभा इति ॥ ३६ ॥

अथ सारसविरुतमाह।

सारसकूजितमिष्टफलं तद्यदा युगपद्विरुतं मिथुनस्य।
एकरुतं न शुभं यदि वा स्यादेकरुते प्रविरौति चिरेण ॥३७॥

सारसकूजितमिति। सारसशब्दो मिथुनस्य युग्मस्य युगपत् तुल्यकाले विरुतं तदिष्टफलं शुभम्। एकरुतमेकस्य रुतं न शुभं यदि वैकरुते पश्चादन्यश्चिरेण प्रविरौति तदा न शुभम् ॥ ३७ ॥

अथ पिङ्गलारुतमाह।

चिरिल्विरिल्विति स्वरैः शुभं करोति पिङ्गला।
अतोऽपरे तु ये स्वराः प्रदीप्तसञ्ज्ञितास्तु ते ॥ ३८ ॥

पिङ्गला चिरिल्विरिल्विति स्वरैः शब्दैः शुभं करोति । अतोऽस्माद-परे येऽन्ये स्वराः शब्दास्ते सर्वे प्रदीप्तसञ्ज्ञितास्ते नेष्टाः ॥ ३८ ॥

अथान्यत् ।

**इशिविरुतं गमनप्रतिषेधि**
**कुशुकुशु चेत् कलहं प्रकरोति ।**
**अभिमतकार्यगतिं च यथा सा**
**कथयति तं च विधिं कथयामि ॥ ३९ ॥**

इशीति विरुतं तस्या गमनप्रतिषेधि यात्राविघ्नं करोति । यदि कुशुकुशु शब्दं करोति तदा कलहं करोति । सा च पिङ्गला यथा येन प्रकारेणाभिमतकार्यगतिमभिमतकार्याणां गतिमभिमतसिद्धिं कथयति वक्ति । तथा तं च विधिमभीष्टार्थसिद्धिं कथयामि वदामि ॥ ३९ ॥

तमेवाह ।

**दिनान्तसन्ध्यासमये निवास-**
**मागम्य तस्याः प्रयतश्च वृक्षम् ।**
**देवान् समभ्यर्च्य पितामहादीन्**
**नवाम्बरस्तं च तरुं सुगन्धैः ॥ ४० ॥**
**एको निशीथेऽनलदिक्स्थितश्च**
**दिव्यैतरैस्तां शपथैर्नियोज्य ।**
**पृच्छेद्यथाचिन्तितमर्थमेव-**
**मनेन मन्त्रेण यथाशृणोति ॥ ४१ ॥**

दिनान्तसन्ध्यासमय इति । तस्याः पिङ्गलाया दिनान्ते अस्तसमये यः सन्ध्यासमयः सन्ध्याकालस्तस्मिन् दिनान्तसन्ध्यासमये निवासं गृहमागम्य गत्वा वृक्षं तरुं प्रयतोऽनुच्छिष्टः संयतः पितामहादीन् ब्रह्मविष्णुमहेश्वरान् देवान् सुरान् समभ्यर्च्य सम्पूज्य । कीदृशः प्रष्टा । नवाम्बरोऽभिनववसनः सन् । तं तरुं वृक्षं सुगन्धैः सुगन्धद्रव्यैश्चन्दनकुङ्कुमकस्तूरिकागुरुप्रभृतिभिरभ्यर्च्य ॥ ४० ॥

ततो निशीथे सुप्रजनेऽर्धरात्रावधौ एक एवानलदिक्स्थ आग्नेयाशासमवस्थितः तां च पिङ्गलां शपथैः प्रत्ययैर्दिव्यैतरैर्दैवानां संबन्धिभिः शपथैरितरैरन्यैर्लौकिकैश्च नियोज्य सन्निवेश्य ततो यथा येन प्रकारेणाशृणोत्याकर्णयति तथाऽनेन वक्ष्यमाणेन मन्त्रेण यथाचिन्तितमेवार्थं तस्याः सिद्धिं पृच्छेत् ॥ ४१ ॥

अथ मन्त्रमाह ।

**विद्धि भद्रे मया यत् त्वमिममर्थं प्रचोदिता ।**
**कल्याणि सर्ववचसां वेदित्री त्वं प्रकीर्त्यसे ॥ ४२ ॥**
**आपृच्छेऽद्य गमिष्यामि वेदितश्च पुनस्त्वहम् ।**
**प्रातरागम्य पृच्छे त्वामाग्नेयीं दिशमाश्रितः ॥ ४३ ॥**
**प्रचोदयाम्यहं यत् त्वां तन्मे व्याख्यातुमर्हसि ।**
**स्वचेष्टितेन कल्याणि यथा वेद्मि निराकुलम् ॥ ४४ ॥**

विद्धि भद्रे इति । हेभद्रे कल्याणवति मया यत् त्वमिममर्थं प्रचोदिता प्रष्टुमारब्धा विद्धि जानीहि । हे कल्याणि सौभागिनि सर्ववचसां निःशेषवाक्यानां त्वं वेदित्री ज्ञात्री प्रकीर्त्यसे ॥ ४२ ॥

अद्यापृच्छे । यत् करोषि । गमिष्यामि यास्यामि । गमितेति पृष्टश्च पुनर्भूयोऽहं प्रातः श्वरागम्य आग्नेयीं पूर्वदक्षिणां दिशमाश्रितः स्थितः पृच्छे ॥ ४३ ॥

त्वां यदहं प्रचोदयामि पृच्छामि तत् कल्याणि सौभागिनि स्वचेष्टितेन आत्मीयेन चेष्टितेन यथा येन प्रकारेण निराकुलं निःसंशयं वेद्मि जानामि तथा तन्मे व्याख्यातुं कथयितुमर्हसि ॥ ४४ ॥

अथ चेष्टितमाह ।

**इत्येवमुक्ते तरुमूर्धगाया-**
**श्चिरिल्विरिल्वीति रुतेऽर्थसिद्धिः ।**
**अत्याकुलत्वं दिशिकारशब्दे**
**कुचाकुचेत्येवमुदाहृते वा ॥ ४५ ॥**

अवाक्प्रदानेऽपि हितार्थसिद्धिः
पूर्वोक्तदिक्चक्रफलैरतोऽन्यत् ।
वाच्यं फलं चोत्तममध्यनीच-
शाखास्थितायां वरमध्यनीचम् ॥ ४६ ॥

इत्येवमुक्त इति । इतिशब्दः समाप्तौ । एवमुक्ते कथिते तस्याः पिङ्गलायास्तरुमूर्धगाया वृक्षमस्तके स्थितायाश्चिरिल्विरिल्वीति रुते अर्थसिद्धिर्भवति । दिशिकारेति शब्दे रुतेऽत्याकुलत्वमिति चित्तव्याक्षेपो भवति । कुचाकुचेत्येवंप्रकारे उदाहृते वाऽत्याकुलत्वमेव ॥ ४५ ॥

अवाक्प्रदानेऽपीति । अवाक्प्रदानेऽपि न किञ्चित्सम्भाषणेऽपि हितस्याभीष्टार्थस्य सिद्धिर्भवतीति । अतोऽन्यदस्मादपरं शुभं पूर्वोक्तदिक्चक्रफलैः । यथा दिक्चक्रे द्वात्रिंशद्भागप्रविभक्ते फलान्युक्तानि तद्वदस्या वक्तव्यम् । ऐन्द्र्यां दिशि शान्तायामित्यादि । उत्तमायाः प्रधानायाः स्वशाखास्थिताया वरं श्रेष्ठं फलं वाच्यम् । मध्यमशाखायां स्थितायां मध्यमम् । नीचशाखायां स्थितायां नीचमल्पमिति ॥ ४६ ॥

दिङ्मण्डलेऽभ्यन्तरबाह्यभागे
फलानि विन्द्याद्गृहगोधिकायाः ।
छुच्छुन्दरी चिच्चिडिति प्रदीप्ता
पूर्णा तु सा तित्तिडिति स्वनेन ॥ ४७ ॥

गृहगोधिकायाः कुड्यमत्स्यस्य दिङ्मण्डलेऽष्टासु दिक्षु अभ्यन्तरभाग्यां बाह्यभागे द्वात्रिंशद्भागप्रविभक्ते दिक्चक्रे फलानि विन्द्याज्जानीयात् । अथ शान्ता दिक् सा च मधुरवा तदोत्तमं फलम् । अथ दुष्टरवा तदा मध्यमम् । अथ दीप्ता दिक् सा च मधुरवा तदानीं च शुभफलम् । प्रदीप्ता दिक् सा च दीप्तरवा तदा दुष्टफलमेवं सर्वत्र पिङ्गलाया अप्येवमेव वेदितव्यम् । छुच्छुन्दरीति सुगन्धमूषिका चिच्चिडिति शब्देन प्रदीप्ता । सा तु तित्तिडिति स्वनेन शब्देन पूर्णेति ज्ञेया ॥ ४७ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ सर्वशाकुने विरुतं नाम सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

## अथ श्वचक्रं व्याख्यायते ।

तत्रादावेव चेष्टितमाह ।

नृतुरगकरिकुम्भपर्याणसक्षीरवृक्षेष्टका-
सञ्चयच्छत्रशय्यासनोलूखलानि ध्वजं चामरं
शाद्वलं पुष्पितं वा प्रदेशं यदा श्वावमूत्र्याग्रतो
याति यातुस्तदा कार्यसिद्धिर्भवेदार्द्रके गोमये
मिष्टभोज्यागमः शुष्कसम्मूत्रणे शुष्कमन्नं गुडो
मोदकावाप्तिरेवाथवा ।

ना मनुष्यः । तुरगोऽश्वः । करी हस्ती । कुम्भो घटः । पर्याणं प्रसिद्धम् । सक्षीरवृक्षोऽर्कादिः । इष्टकासञ्चय इष्टकाकूटः । छत्रमातपत्रम् । शय्या आस्तरणम् । आसनं पट्टादि । उलूखलं प्रसिद्धमेव । तथा ध्वजं चिह्नम् । चामरं वालव्यजनम् । शाद्वलं दूर्वा । पुष्पितं वा प्रदेशं सञ्जातपुष्पस्थानम् । यदा श्वा सारमेयः । अवमूत्र्य मूत्रेण सिक्त्वा यातुर्गच्छतोऽग्रतः पुरो याति गच्छति तदा कार्यस्याभीष्टस्य सिद्धिर्भवेत् स्यात् ।

उक्तं च ।

नरतुरगगजातपत्रकुम्भध्वजशयनासनपुष्पचामराणि ।
व्रजति यदि पुरोऽवमूत्र्य प[१]त्रः क्षपयति शत्रुबलं तदा नरेन्द्रः ॥

आर्द्रके गोमय इति । आर्द्रके सरसे गोमये सम्मूत्रणे मिष्टभोज्यस्यागमो लाभः । शुष्कगोमयसम्मूत्रणे शुष्कमन्नं गुडो मोदकानामवाप्तिर्लाभोऽथवा भवति ॥

अन्यदप्याह ।

अथ विषतरुकण्टकीकाष्ठपाषाण-
शुष्कद्रुमास्थिश्मशानानि मूत्र्यावहत्याथवा
यायिनोऽग्रेसरोऽनिष्टमाख्याति शय्याकुलालादि-
भाण्डान्यभुक्तान्यभिन्नानि वा मूत्रयन् कन्यकादोषकृद्-

---

१ पत्रो वा पत्रो न कुत्रापि कुक्कुरवाची शब्द उपलभ्यतेऽतोऽत्र चेच्छ्वा-इति पाठः साधुः ।

भुज्यमानानि चेद्दुष्टतां तद्गृहिण्यास्तथा
स्यादुपानत्फलं गोस्तु सम्मूत्रणेऽवर्णजः सङ्करः ॥

विषतरौ विषवृक्षे । कण्टक्यां सकण्टके वृक्षे । काष्ठे । पाषाणेऽश्मनि । शुष्कद्रुमे शुष्कवृक्षे । अस्थिश्मशाने वा । एषामन्यतमस्थानमवमूत्र्य अथवा हस्तेन पादेन वाऽवहत्य सन्ताड्य यायिनो गच्छतोऽग्रेसरः पुरतो याति तदाऽनिष्टमशुभमाख्याति कथयति । शय्या आस्तरणम् । कुलालादिभाण्डानि कुम्भकारकृतानि मृन्मयानि । आदिग्रहणाद्दारुमयान्यपि । अभुक्तानि अभिनवानि । अभिन्नान्यस्फुटानि वा । अथ मूत्रयन् कन्यकादोषकृत् कुमार्या दौःशील्यं करोति । यदि भुज्यमानानि भाण्डानि अवमूत्रयति तदा तद्गृहिण्या दुष्टतां करोति । उपानत्फलं तथा तेनैव प्रकारेण स्यात् । एतदुक्तं भवति । अभुक्ते उपानद्वाववमूत्रयन् कन्यकादोषकृत् भुज्यमाने चेत् तद्गृहिण्या दुष्टतां करोति । गोस्तु सम्मूत्रणे अवर्णजो निकृष्टवर्णजातः सङ्करोऽस्य गृहे ॥

उक्तं च ।

विषकण्टकशुष्कश्वलोष्टानवमूत्र्यास्थिचितेन याति चेच्छ्वा ।
न शुभोऽभिमुखं भषद्विधुन्वन् पुच्छाङ्गं विलिखन्नखे वसास्य ॥

अन्यदप्याह ।

गमनमुखमुपानहं सम्प्रगृह्योपतिष्ठेद्यदा
स्यात् तदा सिद्धये मांसपूर्णाननेऽर्थाप्तिरार्द्रेण चास्थ्ना
शुभं साग्न्यलातेन शुष्केण चास्थ्ना गृहीतेन मृत्युः
प्रशान्तोल्मुकेनाभिघातोऽथ पुंसः शिरोहस्तपादादिवक्त्रे भुवोऽभ्यागमो वस्त्रचीरादिभिर्व्यापदः
केचिदाहुः सवस्त्रे शुभम् ।
प्रविशति तु गृहं सशुष्कास्थिवक्त्रे प्रधानस्य
तस्मिन् वधः शृङ्खलाशीर्णवल्लीवरत्रादि वा बन्धनं
चोपगृह्योपतिष्ठेद्यदा स्यात् तदा बन्धनं
लेढि पादौ विधुन्वन् स्वकर्णावुपर्याक्रमंश्चापि

**विघ्नाय यातुर्विरोधे विरोधस्तथा स्वाङ्गकण्डूयने स्यात् स्वपंश्चोर्ध्वपादः सदा दोषकृत् ॥ १ ॥**

गमनमुखमिति। यदोपानहं मुखेन सम्प्रगृह्योपतिष्ठेद्गमनमुखं यियासुमुपतिष्ठेत् समीपे तस्य तिष्ठेत् तदा सिद्धयेऽर्थानां स्याद्भवेत्। मांसपूर्णानने आमिषपूरितवदने अर्थाप्रार्थनानां लाभो भवति। आर्द्रेण सरसेनास्थ्ना पूर्णानने शुभम्। अग्निना अलातेन दग्धकाष्ठेन शुष्केण नीरसेन चास्थ्ना गृहीतेन मृत्युर्मरणं यातुर्भवेत्। प्रशान्तेनाग्निरहितेनोल्मुकेनाभिघात उपद्रवः। अथशब्दो विकल्पे। पुंसो मनुष्यस्य। शिरो मूर्धा। हस्तौ पाणी। पादौ चरणौ। आदिग्रहणादन्यमप्यवयवं वक्त्रे गृहीत्वा उपतिष्ठेत् तदा भुवो भूम्या अभ्यागमो लाभो भवति। वस्त्रमम्बरम्। चीराणि वृक्षवल्कलानि। आदिग्रहणाद्वस्त्रचीरैकदेशमपि। एतैर्व्यापदो भवन्ति। केचिन्मुनयः सवस्त्रे सारमेये शुभमाहुः कथयन्ति।

तथा च पराशरः।

गमने यातुर्वस्त्रगृहीतवक्त्रे सारमेये महानर्थलाभ इति।

प्रविशति त्विति। सशुष्कास्थि वक्त्रे मुखे यस्य तथाभूते सारमेये गृहं वेश्म प्रविशति तु तस्मिन् गृहे प्रधानस्य पुरुषस्य गृहपतेर्वधो मरणं भवति। शृङ्खला प्रसिद्धा लोहमयी। शीर्णा पुरातना। वल्ली प्रसिद्धा। वरत्रा चर्ममयी रज्जुः। आदिग्रहणादन्यद्रज्ज्वादिकं बन्धननिगडादिकं चोपगृह्य यद्योपतिष्ठेत् तदा बन्धनं स्याद्भवेत्। यातुः पादौ चरणौ लेढि। स्वकर्णौ स्वश्रोत्रे विधुन्वंश्चालयन्नुपरि यातुर्वा आक्रमन् प्रावितुमिच्छन् यातुर्यात्राविघ्नाय भवेत्। यातुः सविरोधे यातुरेव पथि विरोधः। विरोधोऽथ मार्गरोधो ज्ञेयः।

तथा च गर्गः।

प्रस्थितस्य यदा श्वा वै मार्गे बद्धा तु तिष्ठति।
अवरुद्धं तदाध्वानं चौरैरिति विनिर्दिशेत् ॥

तथा स्वाङ्गस्यात्मीयावयवस्य कण्डूयने यातुर्विरोधः स्यात्। ऊर्ध्वपाद ऊर्ध्वचरणः स्वपन् सदा सर्वस्मिन् काले गमने यातुरेकदेशस्थस्य वा दोषकृद्भवेत् ॥ १ ॥

अथ दिग्विभागेन शुनः फलमाह ।

सूर्योदयेऽर्काभिमुखो विरौति
ग्रामस्य मध्ये यदि सारमेयः ।
एको यदा वा बहवः समेताः
शंसन्ति देशाधिपमन्यमाशु ॥ २ ॥

सारमेयः श्वा ग्रामस्य मध्ये सूर्योदये अर्कोद्गमनकाले यद्यर्काभिमुख आदित्याभिमुखो विरौति शब्दं करोति । एकोऽथवा बहवो यदा प्रभूताः समेताः सहितास्तदाऽऽशु शीघ्रं देशाधिपं देशस्वामिनमन्यं द्वितीयं शंसन्ति ॥ २ ॥

अन्यदप्याह ।

सूर्योन्मुखः श्वानलदिक्स्थितश्च
चौरानलत्रासकरोऽचिरेण ।
मध्याह्नकालेऽनलमृत्युशंसी ।
सशोणितः स्यात् कलहोऽपराह्णे ॥ ३ ॥

श्वा सारमेयः । सूर्योन्मुख आदित्याभिमुखः । अनलदिक्स्थितश्च आग्नेय्यभिमुखो विरौति तदा अचिरेण शीघ्रकालेन चौरानलत्रासकरः । चौरैस्तस्करैरनलेनाग्निना त्रासं भयं करोति । मध्याह्नकाले सूर्याभिमुखो भवन् । अनलमृत्युशंसी । अनलमग्निं मृत्युं मरणं च शंसति कथयति । अपराह्णे तृतीये प्रहरे सूर्याभिमुखो भवन् सशोणितो रक्तसहितः कलहः स्याद्भवेत् ॥ ३ ॥

अन्यदप्याह ।

रुवन् दिनेशाभिमुखोऽस्तकाले
कृषीवलानां भयमाशु दत्ते ।
प्रदोषकालेऽनिलदिङ्मुखश्च
दत्ते भयं मारुततस्करोत्थम् ॥ ४ ॥

अस्तकाले अस्तमये । दिनेशाभिमुखोऽर्कसंमुखः । रुवन् क्रोशन् । कृषीवलानां कार्षिकाणाम् । आशु शीघ्रम् । भयं भीतिम् । दत्ते ददाति ।

प्रदोषकाले रात्रिमुखेऽनिलदिङ्मुखो वायव्याशाभिमुखो रुवन् मारुततस्करोत्थं मारुताद्वायोस्तस्करेभ्यः समुत्थमुत्पन्नं भयं दत्ते ददाति ॥ ४ ॥

अन्यदप्याह ।

उदङ्मुखश्चापि निशार्धकाले
विप्रव्यथां गोहरणं च शास्ति ।
निशावसाने शिवदिङ्मुखश्च
कन्याभिदूषानलगर्भपातान् ॥ ५ ॥

निशार्धकाले अर्धरात्रसमये उदङ्मुख उत्तराभिमुखो भवन् विप्रव्यथां ब्राह्मणपीडां गोहरणं गवां परैरपहरणं शास्ति कथयति । निशावसाने रात्र्यन्ते शिवदिङ्मुख ऐशान्यभिमुखो भवन् कन्याभिदूषं कन्यां कुमारीं दूषयति । अनलमग्निं गर्भपातं गर्भपतनं च स्त्रीणां शास्ति ॥ ५ ॥

अन्यदप्याह ।

उच्चैःस्वराः स्युस्तृणकूटसंस्थाः
प्रासादवेश्मोत्तमसंस्थिता वा ।
वर्षासु वृष्टिं कथयन्ति तीव्रा-
मन्यत्र मृत्युं दहनं रुजश्च ॥ ६ ॥

तृणकूटस्तृणराशिस्तत्र संस्थिताः । प्रासादः प्रसिद्धः । उत्तमं वेश्म प्रधानगृहम् । एतेषु संस्थिता वा यद्युच्चैःस्वरास्तीव्रशब्दाः स्युर्भवेयुः । वर्षासु वर्षाकाले तीव्रां वृष्टिं कथयन्ति उद्दिशन्ति । अन्यत्र वर्षाभ्योऽन्यस्मिन् ऋतौ मृत्युं मरणं दहनमग्निं रुजो रोगांश्च कथयन्ति ॥ ६ ॥

अन्यदप्याह ।

प्रावृट्कालेऽवग्रहेऽम्भोऽवगाह्य
प्रत्यावर्तै रेचकैश्चाप्यभीक्ष्णम् ।
आधुन्वन्तो वा पिबन्तश्च तोयं
वृष्टिं कुर्वन्त्यन्तरे द्वादशाहात् ॥ ७ ॥

प्रावृट्काले वर्षासमये अवग्रहे वृष्टिनिरोधे सति अम्भो जलमवगाह्य तन्मध्ये स्थित्वा प्रत्यावर्तै रेचकैः । पार्श्वपरिवर्तनं प्रत्यावर्तः । पार्श्व-

वलितं कृत्वा पुनस्तदेव व्यत्ययेन करोति। एतैः प्रत्यावर्त्तरेचकैरभीक्ष्णं पुनः पुनर्यद्युपलक्षिता भवन्ति। अथवा तोयं जलमाधुन्वन्तः कम्पयन्तः पिबन्तो वा दृश्यन्ते तदाऽवग्रहे सति वर्षाकाले द्वादशाहात् द्वादशकादन्तरे मध्ये वृष्टिं वर्षणं कुर्वन्ति। द्वादशाहमध्ये देवो वर्षतीत्यर्थः ॥ ७ ॥

अन्यत् श्वचेष्टितमाह।

द्वारे शिरो न्यस्य बहिः शरीरं
रोरूयते श्वा गृहिणीं विलोक्य।
रोगप्रदः स्यादथ मन्दिरान्त-
र्बहिर्मुखो वक्ति च बन्धकीं ताम् ॥ ८ ॥

श्वा सारमेयो द्वारे गृहद्वारे शिरो मस्तकं न्यस्य क्षिप्त्वा शरीरं देहं बहिर्बाह्यभागे न्यस्य गृहणीं विलोक्य रोरूयते तदा तां गृहिणीं बन्धकीं वेश्यामिति च वक्ति कथयति ॥ ८ ॥

अन्यदप्याह।

कुड्यमुत्किरति वेश्मनो यदा
तत्र खानकभयं भवेत् तदा।
गोष्ठमुत्किरति गोग्रहं वदे-
द्धान्यलब्धिमपि धान्यभूमिषु ॥ ९ ॥

वेश्मनो गृहस्य यदा कुड्यं भित्तिमुत्किरति खनति तदा तत्र गृहे खानकभयं सन्धिभेदभीतिर्भवेत् स्यात्। गोष्ठं गोस्थानकं यद्युत्किरति तदा गोग्रहं गोहरणं च वदेत् ब्रूयात्। धान्यभूमिषु खनने धान्यलब्धिर्भवति। यस्यां भूमौ धान्यानि भवन्ति सा धान्यभूमिः ॥ ९ ॥

अथान्यच्चेष्टितमाह।

एकेनाक्ष्णा सास्रुणा दीनदृष्टि-
र्मन्दाहारो दुःखकृत् तद्गृहस्य।
गोभिः साकं क्रीडमाणः सुभिक्षं
क्षेमारोग्यं चाभिधत्ते मुदं च ॥ १० ॥

एकेनाक्ष्णा एकेन नयनेन चाश्रुणाश्रुयुक्तेनोपलक्षितः सच हीनदृष्टि-र्मन्दाहारोऽल्पभोजनो यदि भवति तदा तद्गृहस्य तस्य वेश्मनो दुःख-कृद्भवति । गोभिः साकं गोभिः सह क्रीडमाणः सुभिक्षमभिधत्ते करोति । तथा क्षेमारोग्यं मुदं च हर्षमभिधत्ते करोति ॥ १० ॥

अन्यदप्याह ।

**वामं जिघ्रेज्जानु वित्तागमाय**
**स्त्रीभिः साकं विग्रहो दक्षिणं चेत् ।**
**ऊरुं वामं चेन्द्रियार्थोपभोगः**
**सव्यं जिघ्रेदिष्टमित्रैर्विरोधः ॥ ११ ॥**

सारमेयो यातुर्वामं जानु यदि जिघ्रेत् तदा वित्तागमाय धनलाभाय भवेत् । यदा दक्षिणं जानु जिघ्रेत् तदा स्त्रीभिः साकं योषिद्भिः सह विग्रहो भवति । वाममूरुं यदि जिघ्रेत् तदा इन्द्रियार्थोपभोगो भवति । इन्द्रियाणां बुद्धीन्द्रियाणां येऽर्था विषयास्तदुपभोगो भवति । सव्यं दक्षिणमूरुं जिघ्रेत् तदा इष्टबन्धुभिर्मित्रैः सुहृद्भिः सह विरोधो भवति ॥ ११ ॥

अन्यदप्याह ।

**पादौ जिघ्रेद्यायिनश्चेदयात्रां**
**प्राहार्थाप्तिं वाञ्छितां निश्चलस्य ।**
**स्थानस्थस्योपानहौ चेद्विजिघ्रेत्**
**क्षिप्रं यात्रां सारमेयः करोति ॥ १२ ॥**

सारमेयः श्वा यायिनो गच्छतः पादौ चरणौ जिघ्रेत् तदाऽयात्रां गमननिषेधं प्राह कथयति । निश्चलस्य तत्र स्थितस्यैव वाञ्छितामभीष्टा-मर्थप्राप्तिं धनागमं प्राह । स्थानस्थितस्यैकदेशस्थितस्योपानहौ चेद्यदि विजि-घ्रेत् तदा क्षिप्रमाश्वेव यात्रां गमनं करोति ॥ १२ ॥

अन्यदप्याह ।

**उभयोरपि जिघ्रणे हि बाह्वो-**
**र्विज्ञेयो रिपुचौरसम्प्रयोगः ।**

**अथ भस्मनि गोपयीत् भक्ष्यान्**
**मांसास्थीनि च शीघ्रमग्निकोपः ॥ १३ ॥**

उभयोर्द्वयोरपि बाह्वोर्जिघ्रणे रिपुचोरसम्प्रयोगो विज्ञेयः । रिपुः शत्रुः । चोरास्तस्कराः । एतैः सम्प्रयोगो विज्ञेयो-विज्ञातव्यः । अथ वा भस्मनि भस्ममध्ये भक्ष्यानपूपादीन् गोपयीत स्थगित्वा स्थापयेत् । मांसास्थीनि वा गोपयीत तदा शीघ्रमाश्वेवाग्निकोपो भवति ॥ १३ ॥

तथा च गर्गः ।

यदा श्वा जिघ्रति भुजौ यातुर्द्वावपि निर्दिशेत् ।
रिपुचोरभयं घोरं तस्मिन्नुत्पातदर्शने ॥
आमिषं तु यदाऽऽगृह्य तृणैराच्छाद्य तिष्ठति ।
उत्पातं तादृशं दृष्ट्वा विन्द्यादग्निमुपस्थितम्—इति ॥

अन्यदप्याह ।

**ग्रामे भषित्वा च बहिः श्मशाने**
**भषन्ति चेदुत्तमपुंविनाशः ।**
**यियासतश्चाभिमुखो विरौति**
**यदा तदा श्वा निरुणद्धि यात्राम् ॥ १४ ॥**

ग्रामे भषित्वा शब्दं कृत्वा बहिर्बाह्ये श्मशाने च यदि भषन्ति शब्दं कुर्वन्ति सारमेयास्तदोत्तमस्य प्रधानस्य पुंसो नरस्य मरणं विनाशो भवति । यियासतो यातुमिच्छोरभिमुखः संमुखो विरौति यदा शब्दं कुरुते तदा यात्रां गमनं निरुणद्धि निवर्तयति ॥ १४ ॥

अन्यदप्याह ।

**उकारवर्णे विरुतेऽर्थसिद्धि-**
**रोकारवर्णेन च वामपार्श्वे ।**
**व्याक्षेपमौकाररुतेन विन्द्या-**
**न्निषेधकृत्सर्वरुतैश्च पश्चात् ॥ १५ ॥**

उकारवर्णे विरुते उकारस्वरेण विरुते उच्चारितेऽर्थानां सिद्धिर्भवति । तथा यातुर्वामपार्श्वे वामभागे ओकारवर्णेन रुतेऽर्थसिद्धिरेव । ओका-

.रुतेन व्याक्षेपमाकुलतां विन्द्यात् । यातुः पश्चात् सर्वरुतैः सर्ववर्णानामुच्चारणे निषेधकृद्यात्राप्रतिषेधं करोति ॥ १५ ॥

अन्यदप्याह ।

खंखेति चोच्चैश्च मुहुर्मुहुर्ये
रुवन्ति दण्डैरिव ताड्यमानाः ।
श्वानोऽभिधावन्ति च मण्डलेन
ते शून्यतां मृत्युभयं च कुर्युः ॥ १६ ॥

ये श्वानः कुक्कुरा उच्चैः कृत्वा मुहुर्मुहुः प्रतिक्षणं खंखेति रुवन्ति शब्दं कुर्वन्ति तथैव मुहुर्मुहू रुवन्ति । अथवा मण्डलेन मण्डलाकृतिना समूहेन परिवर्तुलेन धावन्ति गच्छन्ति ते नगरस्य शून्यतां शून्यत्वं मृत्युभयं मरणभयं च कुर्युः ॥ १६ ॥

अन्यदप्याह ।

प्रकाश्य दन्तान् यदि लेढि सृक्किणी
तदाशनं मृष्टमुशन्ति तद्विदः ।
यदाननं लेढि पुनर्न सृक्किणी
प्रवृत्तभोज्येऽपि तदान्नविघ्नकृत् ॥ १७ ॥

दन्तान् रदान् प्रकाश्य सन्दर्श्य सृक्किणी ओष्ठपर्यन्ते यदि लेढि तदा तद्विदः श्वचेष्टितज्ञा मृष्टमशनं भोजनमुशन्ति । यदाननं मुखं लेढि न पुनः सृक्किणी ओष्ठपर्यन्ते लेढि तदा प्रवृत्तभोज्येऽपि भोक्तुं प्रवृत्तेऽपि नरेऽन्नविघ्नं करोति । न भोजनं लभत इति ॥ १७ ॥

अन्यदप्याह ।

ग्रामस्य मध्ये यदि वा पुरस्य
भषन्ति संहत्य मुहुर्मुहुर्ये ।
ते क्लेशमाख्यान्ति तदीश्वरस्य
श्वारण्यसंस्थो मृगवद्विचिन्त्यः ॥ १८ ॥

ये सारमेया ग्रामस्य मध्ये पुरस्य वा संहत्य समेत्य बहवो मुहुर्मुहुः प्रतिक्षणं भषन्ति शब्दं कुर्वन्ति ते तदीश्वरस्य ग्रामस्वामिनः पुर-

स्वामिनो वा क्लेशमाख्यान्ति क्लेशं कथयन्ति । अरण्यसंस्थः श्वा कुक्कुरो मृगवद्विचिन्त्यः । मृगेण तुल्यं मृगवत् । मृगस्य यच्चेष्टितमुक्तं तदारण्यस्यास्य सारमेयस्य विचिन्तनीयमिति । "ओजा:[1] प्रदक्षिणं शस्ता मृगाः सनकुलाण्डजाः" इत्यादि ॥ १८ ॥

अन्यदप्याह ।

**वृक्षोपगे क्रोशति तोयपातः**
**स्यादिन्द्रकीले सचिवस्य पीडा ।**
**वायोर्गृहे सस्यभयं गृहान्तः**
**पीडा पुरस्यैव च गोपुरस्थे ॥ १९ ॥**
**भयं च शय्यासु तदीश्वराणां**
**याने भषन्तो भयदाश्च पश्चात् ।**
**अथापसव्या जनसन्निवेशे**
**भयं भषन्तः कथयन्त्यरीणाम् ॥ २० ॥**

वृक्षोपग इति । वृक्षोपगे वृक्षसमीपवर्तिनि सारमेये क्रोशति सति तोयपातो जलपातः स्याद्भवेत् । देवो वर्षतीत्यर्थः । इन्द्रकीले अर्गलासमीपे सचिवस्य मन्त्रिणः पीडा स्याद्भवेत् । गृहान्तर्गृहमध्ये वायोर्गृहे वा वायव्यां दिशि यदि क्रोशति तदा सस्यस्य भयं भवति । गोपुरस्थे पुरद्वारस्थिते पुरस्यैव पीडा भवेत् ॥ १९ ॥

भयं च शय्यास्विति । शय्यास्वास्तरणेषु तदीश्वराणां शयनस्वामिनां भयं कुर्वन्ति । याने यात्रायां पश्चाद्भषन्तो यातुरेव भयदा भयं ददति । अथशब्दश्चार्थे । जनसन्निवेशे जनसन्निधौ जनानामेवापसव्या वामभागस्था भषन्तोऽरीणां शत्रूणां संबन्धि भयं प्रवदन्ति कथयन्तीति ॥ २० ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ शाकुने श्वचक्रं नामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

१ द्रष्टव्योऽस्यैव ग्रन्थस्य १०२४ पृष्ठे ३४ श्लोकः ।

## अथ शिवारुतं व्याख्यायते ।

तत्रादावेव श्ववदतिदेशं विशेषं चाह ।

श्वभिः शृगालाः सदृशाः फलेन
विशेष एषां शिशिरे मदाप्तिः ।
हूहू रुतान्ते परतश्च टाटा
पूर्णः स्वरोऽन्ये कथिताः प्रदीप्ताः ॥ १ ॥

शृगालाः श्वभिः सारमेयैः फलेन सदृशास्तुल्याः । यादृशं चेष्टितं फलं च शुनामुक्तं तादृशमेव शृगालानां विज्ञातव्यम् । किन्त्वयं विशेषः । एषां शृगालानां शिशिरे माघफाल्गुनयोर्मदाप्तिर्मदप्रादुर्भावो भवति । तस्मात् तेषां शिशिरे निष्फलता । रुतान्ते रुतावसाने हूहूशब्दः परतोऽनन्तरं टाटा एव पूर्णः स्वरः । अन्ये सर्वे स्वराः प्रदीप्ता उक्ताः कथिताः ॥ १ ॥

अथात्र लोमाशिकायाश्चेष्टितमाह ।

लोमाशिकायाः खलुः कक्कशब्दः
पूर्णः स्वभावप्रभवः स तस्याः ।
येऽन्ये स्वरास्ते प्रकृतेरपेताः
सर्वे च दीप्ता इति सम्प्रदिष्टाः ॥ २ ॥

खलुशब्दश्चार्थे । लोमाशिकायाश्च कक्कशब्दः पूर्णः सच लोमाशिकायाः स्वभावप्रभवः स्वभावादेव प्रभवत्युत्पद्यते । येऽन्ये स्वराः शब्दास्ते प्रकृतेः स्वभावतोऽपेता अपगतास्ते च सर्वे दीप्ताः सम्प्रदिष्टाः कथिताः ॥ २ ॥

अथ शिवाचेष्टितमाह ।

पूर्वोदीच्योः शिवा शस्ता शान्ता सर्वत्र पूजिता ।
धूमिताभिमुखी हन्ति स्वरदीप्ता दिगीश्वरान् ॥ ३ ॥

शिवा शृगालिका पूर्वोदीच्योः पूर्वस्यामुत्तरस्यां च दिशि शस्ता शुभफलदा । सा च शान्ता शान्तरवा शान्तदिक्स्था च सर्वेव सर्वस्यां दिशि पूजिता शुभदा । यां दिशमादित्यो यास्यति सा धूमिता । धूमिताभिमुखी

शिवा स्वरदीप्ता च क्रूरशब्दा दिगीश्वरान् हन्ति । तस्यां दिशि योऽधिपतिस्तं विनाशयतीत्यर्थः ॥ ३ ॥

अथ न ज्ञायते कस्यां दिशि क ईश्वरस्तदर्थमाह ।

[1]राजा कुमारो नेता च दूतः श्रेष्ठी चरो द्विजः ।
गजाध्यक्षश्च पूर्वाद्याः क्षत्रियाद्याश्चतुर्दिशाम् ॥ ४ ॥

राजा नृपः पूर्वस्यां दिशि । कुमारो राजपुत्र आग्नेय्याम् । नेता सेनापतिर्दक्षिणस्याम् । दूतो गमागमिको नैर्ऋत्याम् । श्रेष्ठी पश्चिमायाम् । चरो गूढपुरुषो वायव्याम् । द्विजो ब्राह्मण उत्तरस्याम् । गजाध्यक्षो हस्तिशालाध्यक्ष ऐशान्याम् । एते क्रमेण पूर्वाद्या ज्ञेयाः । तथा क्षत्रियाद्याश्चतुर्दिशाम् । पूर्वस्यां क्षत्रियाः । दक्षिणस्यां वैश्याः । पश्चिमायां शूद्राः । उत्तरस्यां ब्राह्मणाः ॥ ४ ॥

अन्यदप्याह ।

सर्वदिक्ष्वशुभा दीप्ता विशेषेणाह्न्यशोभना ।
पुरे सैन्येऽपसव्या च कष्टा सूर्योन्मुखी शिवा ॥ ५ ॥

दीप्ता शिवा सर्वासु दिक्ष्वशुभा अनिष्टफला । अह्नि दिवसे विशेषेणातिशयेनाशोभना । पुरे नगरे सैन्ये सेनायां वा अपसव्या दक्षिणभागस्था सूर्योन्मुखी रव्यभिमुखी शिवा कष्टा कष्टफला । अशुभेत्यर्थः ॥ ५ ॥

अथ रुतविशेषेण फलमाह ।

याहीत्यग्निभयं शास्ति टाटेति मृ[2]तवेदिका ।
धिग्धिग्दुष्कृतिमाचष्टे सज्वाला देशनाशिनी ॥ ६ ॥

याहीति रुते शिवा अग्निभयं हुताशनभीतिं शास्ति कथयति । टाटेति रुते मृतवेदिका मृतं बन्ध्वादिकं वेदयति कथयति । केचिन्मृतिवेदिकेति पठन्ति । धिग्धिगिति रुते दुष्कृतिमतिकष्टमाचष्टे कथयति । सज्वाला ज्वालासंयुता देशनाशिनी देशान् नाशयति ॥ ६ ॥

---

१ इदं पञ्चमस्य ग्रन्थस्य ७५ अध्यायेऽपि । द्रष्टव्योऽस्य ग्रन्थस्य १०२० पृष्ठे ३४ श्लोकः ।
२ मृतिवेदिकेत्यपि पाठान्तरम् ।

अथैव मतान्तरमाह ।

**नैव दारुणतामेके सज्वालायाः प्रचक्षते ।**

**अ[१]र्काद्यनलवत् तस्या वक्त्रं लालास्वभावतः ॥ ७ ॥**

एके काश्यपादयो मुनयः सज्वालायाः शिवाया दारुणतां क्रूरतां नैव प्रचक्षते कथयन्ति । कुतो हेतोः । अर्काद्यनलवदिति । तस्याः शिवाया वक्त्रं मुखं लालास्वभावत अर्काद्यनलवत् । यथार्कादिको ज्योतिष्मान् पदार्थः स्वभावादेव साग्निकस्तेजस्वी । एवमेतस्या वक्त्रं लालास्वभावादेव साग्निकमिति हेतोस्तस्य नैव दारुणता ।

तथा च काश्यपः ।

नैव दारुणता तस्याः सज्वालायाः स्वभावतः ।
लालायाः साग्निकं वक्त्रमतः सा शुभदा शिवा ॥

केचिदाक्रान्तानलवदिति पठन्ति । यथा साग्निकं काष्ठमाक्रान्तं भ्राम्यमाणं साग्निकं सर्वत्र दृश्यते तद्वत् तस्या वक्त्रं लालास्वभावतः साग्निकमिति । एवं मुखमानीयस्वभावात् सा सज्वालेति ॥ ७ ॥

अन्यदप्याह ।

**अन्यप्रतिरुता याम्या सोद्बन्धमृतशंसिनी ।**

**वारुण्यनुरुता सैव शंसते सलिले मृतम् ॥ ८ ॥**

याम्या दक्षिणदिग्भागस्थाऽन्यप्रतिरुताऽन्यया परया शिवया सैव कृतशब्दा सा शिवोद्बन्धमृतशंसिनी। उद्बन्धनेन मृतं शंसति कथयति । सैव शिवा वारुणी पश्चिमदिक्स्थाऽन्ययाऽनुरुता सलिले जले मृतं बन्ध्वादिकं शंसते कथयति ॥ ८ ॥

अस्याः शब्दवशेन फलमाह ।

**अक्षोभः श्रवणं चेष्टं धनप्राप्तिः प्रियागमः ।**

**क्षोभः प्रधानभेदश्च वाहनानां च सम्पदः ॥ ९ ॥**

**फलमासप्तमादेतदग्राह्यं परतो रुतम् ।**

**याम्यायां तद्विपर्यस्तं फलं षट्पञ्चमाद्रुते ॥ १० ॥**

---

१ आक्रान्तानलवत्-इति पाठान्तरम् ।

अक्षोभ इति । सा शिवा एकं वारमुक्त्वा यदि तूष्णीं करोति तस्मिन् देशे अक्षोभोऽनाकुलता भवति । द्वितीये एवमुक्त्वा यदि तूष्णीं करोति तदा श्रवणं चेष्टमिष्टस्याभिप्रेतस्य श्रवणमाकर्णनम् । एवं तृतीये रावे धनप्राप्तिरर्थलाभः । चतुर्थे प्रियस्य वल्लभस्यागमः । पञ्चमे क्षोभ आकुलता । षष्ठे प्रधानभेदः । प्रधानानां राजपुरुषाणां परस्परं भेदो भवति । सप्तमे वाहनानामश्वादीनां च सम्पदो भवन्ति । सम्पदो वृद्धयः ॥ ९ ॥

फलमासप्तमादिति । यदेतत् प्रागुक्तं शिवारुते फलं तदासप्तमाद्रावात् परतो यदि विरौति तदा तद्रुतमग्राह्यं निष्फलत्वात् । याम्यायामिति । याम्यायां दक्षिणदिक्स्थितायां शिवायां तदेव फलं विपर्यस्तं विपरीतगतं ग्राह्यम् । किन्तु षट्पञ्चमाद्रुते षष्ठं पञ्चमं च वर्जयित्वा । तयोः पूर्वोक्तमेव फलमन्येष्वपि विपर्ययः । अयमर्थः । प्रथमे क्षोभः । द्वितीये अनिष्टश्रवणम् । तृतीये धनहानिः । चतुर्थे प्रियविप्रयोगः । पञ्चमे क्षोभ एव । षष्ठे प्रधानभेद एव । सप्तमे वाहनानामसम्पदो हानयः । सप्तमात् परतो न ग्राह्यं निष्फलत्वात् ॥ १० ॥

अथाशुभां शिवामाह ।

**या रोमाञ्चं मनुष्याणां शकृन्मूत्रं च वाजिनाम् ।**
**रावात् त्रासं च जनयेत् सा शिवा न शिवप्रदा ॥ ११ ॥**

या शिवा रावाच्छब्दान्मनुष्याणां पुरुषाणां रोमाञ्चं रोमहर्षं जनयेदुत्पादयेत् । वाजिनामश्वानां शकृत् पुरीषं मूत्रं जनयेत् । जनानां त्रासं भयं च । सा न शिवप्रदा शिवं श्रेयो न ददाति ॥ ११ ॥

अथ शुभलक्षणमाह ।

**मौनं गता प्रतिरुते नरद्विरदवाजिभिः ।**
**या शिवा सा शिवं सैन्ये पुरे वा सम्प्रयच्छति ॥ १२ ॥**

या शिवा नरैर्मनुष्यैः । द्विरदैर्हस्तिभिः । वाजिभिरश्वैः । प्रतिरुते प्रतिवाशिते मौनं गता तूष्णीं करोति । सा सैन्ये सेनायाम् । पुरे नगरे । शिवं श्रेयः । सम्प्रयच्छति ददाति ॥ १२ ॥

अभ्युद्गतलक्षणमाह ।

**भेभेति शिवा भयङ्करी भोभो व्यापदमादिशेच्च सा ।**
**मृतिबन्धनिवेदिनी फिफे हुहु चात्महिता शिवा स्वरे ॥ १३ ॥**

भैभा इति रुते शिवा भयङ्करी भवति भयं करोति । भोभो इति रुते सा शिवा व्यापदं विशेषेणातीवापदमादिशेत् कथयेत् । मृतिबन्धनिवेदिनी फिफे इति । फिफे इति रुते मृतिं मरणं बन्धनं च निवेदयति कथयति । हूहू इति स्वरं शब्दं रुवन्ती शिवा आत्महिता भवति । आत्मनः शिवं श्रेयः करोति श्रोतुः ॥ १३ ॥

अन्यदप्याह ।

शान्ता त्ववर्णात् परमारुवन्ती
टाटामुदीर्णामिति वाश्यमाना ।
टेटे च पूर्वं परतश्च थेथे
तस्याः स्वतुष्टिप्रभवं रुतं तत् ॥ १४ ॥

या शिवा शान्ता शान्तदिक्स्था मधुरस्वरा च । अवर्णादकारात्परात् परमनन्तरमारुवन्ती । अकारमादावुच्चार्य पश्चादाकारमुच्चारयतीत्यर्थः । अथवोदीर्णामुद्भटशब्दां टाटामिति वाश्यमाना रुवन्ती । अथवा पूर्वं प्रथमं टेटे इति रुवन्ती परतः थेथे तस्याः शिवायास्तद्रुतं स्वतुष्टिप्रभवमात्मीयतुष्ट्या प्रभवत्युत्पद्यते । एतच्छोभनम् ॥ १४ ॥

अन्यदप्याह ।

उच्चैर्घोरं वर्णमुच्चार्य पूर्वं
पश्चात् क्रोशेत् क्रोष्टुकस्यानुरूपम् ।
या सा क्षेमं प्राह वित्तस्य चाप्तिं
संयोगं वा प्रोषितेन प्रियेण ॥ १५ ॥

या शिवा उच्चैः कृत्वा पूर्वमादौ घोरं क्रूरं वर्णमक्षरमुच्चार्य पश्चादनन्तरात् क्रोष्टुकस्य शृगालस्यानुरूपं सदृशं क्रोशेद्ब्रूयात् । एवंविधा सा क्षेमं प्राह कथयति । क्षेमं लब्धपालनं वित्तस्य चाप्तिं लब्धिम् । अथवा प्रोषितेन प्रियेण देशान्तरगतेन प्रियेण वल्लभेन संयोगं प्राह कथयति ॥ १५ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ शाकुने शिवारुतं नामैकोननवतितमोऽध्यायः ॥ ८६ ॥

## अथ मृगचेष्टितं व्याख्यायते ।

तत्राह ।

सीमागता वन्यमृगा रुवन्तः
स्थिता व्रजन्तोऽथ समापतन्तः ।
सम्प्रत्यतीतैष्यभयानि दीप्ताः
कुर्वन्ति शून्यं परितो भ्रमन्तः ॥ १ ॥

वने भवा वन्याः । वन्यमृगाः । कृष्णपृषतरुरुप्रभृतयः । सीमागता ग्रामसीमायां स्थिताः तत्र च रुवन्तो वाश्यमानाः । ते च स्थितास्तत्रैव यदि तिष्ठन्ति तदा सम्प्रति तस्मिन्नेव दिने भयमावेदयन्ति यदि च दीप्ताः । अथ तस्मात् सीमाप्रदेशाद्व्रजन्तो गच्छन्तस्तदातीतभयमतीतमतिक्रान्तं भयमावेदयन्ति । अथ समापतन्तः समागच्छन्तो दीप्ताश्च रुवन्तः । तदैष्यभयानि । आगामिभयान्यावेदयन्ति । परितः समन्ततः पुरे भ्रमन्तः शून्यं निर्जनं पुरं कुर्वन्ति ॥ १ ॥

अन्यदप्याह ।

ते ग्राम्यसत्त्वैरनुवाश्यमाना
भयाय रोधाय भवन्ति वन्यैः ।
द्वाभ्यामपि प्रत्यनुवाशितास्ते
वन्दिग्रहार्थे च मृगा रुवन्ति ॥ २ ॥

ते सीमागता मृगा दीप्ताः । ग्राम्यसत्त्वैर्ग्रामीणैः प्राणिभिरनुवाश्यमाना भयाय पुरस्य भवन्ति । वन्यैः प्राणिभिरनुवाश्यमानाः पुरस्य रोधाय च भवन्ति । परैः पुरं रुध्यते । ते सीमागता द्वाभ्यामपि ग्राम्यैर्वन्यैश्च सत्त्वैः प्रत्यनुवाशिताः पश्चात् कृतशब्दा वन्दिग्रहार्थे च भवन्ति । वन्दिग्रहा हठहरणेन या स्त्री नीयते सा वन्दिग्रहा भीता । मृगा वन्दिग्रहार्थे च भवन्ति । तत्पुरं बलादेव शत्रुभिर्नीयत इत्यर्थः ॥ २ ॥

अन्यदप्याह ।

वन्ये सत्त्वे द्वारसंस्थे पुरस्य
रोधो वाच्यः सम्प्रविष्टे विनाशः ।

सूते मृत्युः स्याद्भयं संस्थिते च
गेहं याते बन्धनं सम्प्रदिष्टम् ॥ ३ ॥

वन्ये सत्त्वे वनजाते प्राणिनि द्वारसंस्थे पुरस्य नगरस्यैव रोधो वाच्यः। रोधः परैर्वेष्टनम्। पुरमध्ये सम्प्रविष्टे पुरस्यैव विनाशो वाच्यो वक्तव्यः। तस्मिन्नेव प्रसूते मृत्युर्मरणं स्याद्भवेत्। संस्थिते मृते च भयं स्यात्। गेहं याते गृहं प्रविष्टे गृहस्वामिनो बन्धनं सम्प्रदिष्टम् ॥ ३ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ शाकुने मृगविरुतं नाम नवतितमोऽध्यायः ॥ ९० ॥

## अथ गवेङ्गितं व्याख्यायते।

तदेवाह।

गावो दीनाः पार्थिवस्याशिवाय
पादैर्भूमिं कुट्टयन्त्यश्च रोगान्।
मृत्युं कुर्वन्त्यश्रुपूर्णायताक्ष्यः
पत्युर्भीतास्तस्करानारुवन्त्यः ॥ १ ॥

गावो दीना दैन्यं गता म्लानमुखाः पार्थिवस्य राज्ञोऽशिवाय अश्रेयसे भवन्ति। तथा भूमिमवनिं पादैः खुरैः कुट्टयन्त्यो विदारयन्त्यो रोगान् कुर्वन्ति। अश्रुपूर्णायताक्ष्यः। अश्रुपूर्णे आयते दीर्घे अक्षिणी यासां तास्तथाभूताः पत्युः स्वामिनो मृत्युं मरणं कुर्वन्ति। तथा भीताः सभया आरुवन्त्यः अतीव शब्दं कुर्वत्यः तस्करांश्चोरान् कुर्वन्ति ॥ १ ॥

अन्यदप्याह।

अकारणे क्रोशति चेदनर्थो भयाय रात्रौ वृषभः शिवाय।
भृशं निरुद्धा यदि मक्षिकाभिस्तदाशु वृष्टिं सरमात्मजैर्वा ॥ २ ॥

यदकारणं निष्कारणमेव क्रोशति वाशति तदाऽनर्थो भवति। तस्य जलतृणादिकं कारणं तदुर्जमकारणम्। रात्रौ निशि यदि वाशति तदा भयाय भवति। वृषभो दान्तो रात्रौ वाश्यमानः शिवाय श्रेयसे भवति।

भूश्रमत्यर्थं यदि मक्षिकाभिर्निरुद्धा व्याप्ता । सरमात्मजैः श्वभिर्वा निरुद्धा व्याप्ता तदा आशु शीघ्रमेव वृष्टिं करोति ॥ २ ॥

अन्यदप्याह ।

आ[1]गच्छन्त्यो वेश्मबम्भारवेण
संसेवन्त्यो गोष्ठवृद्ध्यै गवां गाः ।
आर्द्राङ्ग्यो वा हृष्टरोमण्यः प्रहृष्टा
धन्या गावः स्युर्महिष्योऽपि चैवम् ॥ ३ ॥

वेश्म गृहमागच्छन्त्यो बम्भारवेण मधुरस्वरेण संयुक्ता गागावः संसेवन्त्यो निषेवन्त्यो गवां गोष्ठवृद्ध्यै गोष्ठसंवर्धनाय धन्याः प्रशस्ताः स्युर्भवन्ति । अर्थवशाद्विभक्तिलिङ्गवचनविपरिणामः । गोवृद्धिं कुर्वन्ति । केचिदागव्यूतेरिति पठन्ति । गव्यूतिः क्रोशद्वयम् । तस्माद्बम्भारवेणेति पूर्ववद्योज्यम् । आर्द्राङ्ग्यो वेति । आर्द्राणि जलेन क्लिन्नानि अङ्गानि अवयवानि यासाम् । हृष्टरोमण्यः संजातपुलकाः । प्रहृष्टा हर्षसंयुक्ताः । एवंविधाश्च गोष्ठवृद्ध्यै धन्याः । महिष्योऽपि चैवम् । एवमनेन प्रकारेण "आगच्छन्त्यो वेश्म बम्भारवेणे" त्यादिकेन । तथा "दीनाः पार्थिवास्याशिवाये" त्यादिकेन शुभाशुभेन महिष्योऽपि स्युर्भवेयुरिति । यद्गवामिङ्गितं तन्महिषीणामित्यर्थः ॥ ३ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ शाकुने गवेङ्गितं नामैकनवतितमोऽध्यायः ॥ ९१ ॥

## अथाश्वेङ्गितं व्याख्यायते ।

तत्राह ।

उत्सर्गान्न शुभदमासनात् परस्थं
वामे च ज्वलनमतोऽपरं प्रशस्तम् ।
सर्वाङ्गज्वलनमवृद्धिदं हयानां
द्वे वर्षे दहनकणाश्च धूपनं वा ॥ १ ॥

१ आगव्यूतेः-इति पाठान्तरम् ।

उत्सर्गान्न शुभदमिति । हयानामश्वानामुत्सर्गादयं नियमो यथाप- वादो नास्ति । आसनात् परस्थम् । आस्यते यस्मिन्नित्यासनं पर्याण- स्थानम् । तस्मादपरस्थं पश्चिमभागे स्थितं ज्वलनं न शुभदमप्रशस्तम् । वामे च वामभागे वामपार्श्वे तस्मादेवासनस्थानान्न शुभदम् । अतोऽस्मादपरं प्राग्भागे दक्षिणे च प्रशस्तमिष्टतरम् । अश्वानामुत्पातवशेन ज्वालाङ्कमवय- वेषु दृश्यते तत् सर्वाङ्गज्वलनम् । तत् सर्वाङ्गानां समस्तावयवानां ज्वल- नमवृद्धिदम् । अवृद्धिं विनाशं ददाति ।

उक्तं च ।

तथोत्सर्गेणासनपश्चिमभागाश्रये ज्वलनमेवम् ।

नेष्टमितरच्च शस्तं वामेतरपार्श्वयोस्तद्वत्—इति ।।

द्वे वर्षे दहनकणाश्च धूपनं वेति । यस्य हयस्य द्वे वर्षे वर्षद्वयमवि- च्छिन्नं कृत्वा दहनकणा अग्निविस्फुलिङ्गा धूपनं धूमो वा दृश्यते तदा तस्यावृद्धिदमेव ॥ १ ॥

अथान्येष्वप्याह ।

अन्तः पुरं नाशमुपैति मेढ्रे
कोशः क्षयं यात्युदरे प्रदीप्ते ।
पायौ च पुच्छे च पराजयः स्याद्-
वक्त्रोत्तमाङ्गज्वलने जयश्च ॥ २ ॥

अश्वानां मेढ्रे लिङ्गे प्रदीप्ते राज्ञोऽन्तःपुरं नाशमुपैति विनाशं प्राप्नोति । उदरे जठरे प्रदीप्ते ज्वलिते कोशो गञ्जः क्षयं नाशं याति । पायावुपस्थे पुच्छे लाङ्गूले च प्रदीप्ते पराजयः स्याद्भवेत् । वक्त्रं मुखम् । उत्तमाङ्गं शिरः । वक्त्रोत्तमाङ्गज्वलने जयश्च भवति ॥ २ ॥

अथान्येष्वङ्गेष्वप्याह ।

स्कन्धासनांसज्वलनं जयाय
बन्धाय पादज्वलनं प्रदिष्टम् ।
ललाटवक्षोऽक्षिभुजे च धूमः
पराभवाय ज्वलनं जयाय ॥ ३ ॥

स्कन्धावंसौ । आसनं पर्याणस्थानम् । ग्रीवापार्श्वगौ तदंसौ । एतेषां स्कन्धासनांसानां ज्वलनं जयाय भवति । पादाः शफाः । पादज्वलनं स्वामिनो बन्धाय प्रदिष्टं कथितम् । तत्र स्वामिनो बन्धनं भवति । ललाटेत्यादि । ललाटं मुखपृष्ठभागः । वक्षमुरःप्रदेशः । अक्षिणी नेत्रे । भुजौ बाहू । एषामन्यतमेऽङ्गेऽश्वानां यदि धूमो दृश्यते तदा पराभवाय भवति । शत्रोः सकाशात् पराभव उत्पद्यते । एतेषामन्यतमेऽङ्गे ज्वलनं जयाय भवति ॥ ३ ॥

अन्यदप्याह ।

नासापुटप्रोथशिरोऽश्रुपात-
नेत्रे च रात्रौ ज्वलनं जयाय ।
पलाशताम्रासितकर्बुराणां
नित्यं शुकाभस्य सितस्य चेष्टम् ॥ ४ ॥

नासापुटौ नासारन्ध्रौ । प्रोथो नासामध्यभागः । शिरो मूर्धा । अश्रुपातोऽश्रूणां पातो यत्र । गण्डाधोभागः । नेत्रे चक्षुषी । एतेषामन्यतमस्य रात्रौ निशि ज्वलनं जयाय भवति । पलाशः पलाशवर्णः । ताम्रो लोहितवर्णः । असितः कृष्णः । कर्बुरः शुक्लकृष्णवर्णो व्यामिश्रः । कपोतवर्ण इत्यर्थः । एषां वर्णानां तथा तस्य शुकवर्णस्य सितस्य श्वेतवर्णस्य चैतेषामङ्गानामेकतमे द्वयोर्बहुषु वा ज्वलनं नित्यं सर्वकालं दिने निशायां चेष्टं शोभनं भवति ॥ ४ ॥

उक्तं च ।

समभन्यत्पदकेसरपुच्छेषु ज्वलनदहनकणधूमाः ।
राष्ट्रभयशोकसम्भ्रमसपत्नवक्रापमर्दकराः ॥
प्राक्फलतुल्यं पृष्ठे जघने वालेषु चैव निर्दिष्टम् ।
अन्तःपुरप्रकोपो मेढ्रज्वलने सधूमे वा ॥
नित्यं च वालकिरणे दाहज्वालास्फुलिङ्गानाम् ।
स्कन्धासनांसदेशे धूमा बन्धाय चरणेषु ॥
वक्षोऽक्षिललाटभुजे त्वश्वानां क्ष्वेषितं च वदनेभ्यः ।
ज्वालोत्पत्तिर्जयदा धूमोत्पत्तिस्त्वभावाय ॥

नाशापुटाग्रपातप्रोथविरोलोचने च रजनीषु ।
विजयाय प्रज्वलनं ताम्रासितहरितशबलानाम् ॥
विजयाय सर्वदैव हि शुशुक्रशुकवर्णयोरुज्ज्वलनमेषु ।
एवं च यथासम्भवमन्येष्वपि वाहनेषु फलम्—इति ॥

अन्यदपि चेष्टितमाह ।

**प्रद्वेषो यवसाम्भसां प्रपतनं स्वेदो निमित्ताद्विना**
**कम्पो वा वदनाच्च रक्तपतनं धूमस्य वा सम्भवः ।**
**अस्वप्नश्च विरोधिनां निशि दिवा निद्रालसध्यानता**
**सादोऽधोमुखता विचेष्टितमिदं नेष्टं स्मृतं वाजिनाम् ॥ ५ ॥**

प्रद्वेषो यवसेति । यवसस्य तृणादेरम्भसामपां च । प्रद्वेषो विरक्तता । तथा प्रपतनं प्रपातः । स्वेदो घर्मः । निमित्तं कारणम् । तस्माद्विना तद्व्यतिरेकेण । कम्पो वा निमित्ताद्विना । वदनान्मुखाद्वा कर्णादे रक्तस्य शोणितस्य पतनं स्रावः । अस्वप्नश्च विरोधिनां निशीति । निशि रात्रौ विरोधिनां वैरं कुर्वतामस्वप्नो जागरणम् । दिवा दिवसे निद्रालसत्वं ध्यानता चिन्ता । सादो वसाधः । अधोमुखताऽनूर्ध्वनिरीक्षणम् । वाजिनामश्वानामिदं विचेष्टितं चेष्टितं नेष्टमशुभं स्मृतमुक्तम् ॥ ५ ॥

उक्तं च ।

निद्रानिरोधालसनीलनेत्राः प्रध्यामशून्यस्मृतयो दिनेषु ।
निशासु चान्योन्यविरोधनिद्रानष्टास्तुरङ्गा न शिवाय भर्तुः ॥

अन्यदपि चेष्टितमाह ।

**आरोहणमन्यवाजिनां पर्याणादियुतस्य वाजिनः ।**
**उपवाह्यतुरङ्गमस्य वा कल्पस्यैव विपन्नशोभना ॥ ६ ॥**

वाजिनोऽश्वस्य पर्याणादियुतस्य पार्याणसंयुक्तस्य । आदिग्रहणात् पुरुषसहितस्य । अन्यवाजिनामन्याश्वानामारोहणम् । पर्याणादियुतस्यान्योऽश्व आरोहति तन्न शोभनम् । उपवाह्यतुरङ्गमस्य चेति । यस्मिन्नारुह्य गमनं प्रत्युपवाह्यते तस्योपवाह्यतुरङ्गमस्याश्वस्य कल्पस्यारोग्यस्य विपन्नशोभना नेष्टेति ॥ ६ ॥

अधुना ह्रेषितलक्षणमाह ।

क्रौञ्चवद्रिपुवधाय ह्रेषितं
ग्रीवया त्वचलया च सोन्मुखम् ।
स्निग्धमुच्चमनुनादि हृष्टवद्-
ग्रासरुद्धवदनैश्च वाजिभिः ॥ ७ ॥

क्रौञ्चः पक्षी । यस्य ह्रेषितं शब्दितं क्रौञ्चपक्षिसदृशं तद्रिपुवधाय शत्रुविनाशाय । तथा ग्रीवया कन्धरया त्वचलया स्थिरया च सोन्मुखं सह ऊर्ध्वेन मुखेन वर्तत इति सोन्मुखम् । तदपि रिपुवधायैव । स्निग्धं मधुरमुच्चमुच्चैः कृत्वा स्पष्टतरम् । अनुनादि घण्टाशब्दवदनुनदति पश्चाच्छब्दं करोति । हृष्टवत् परितोषयुक्तैर्ग्रासरुद्धवदनैः । ग्रासेन कवलेन रुद्धं वदनं मुखं येषां तैस्तथाभूतैस्तद्धेषितं रिपुवधायैव भवति ॥ ७ ॥

अन्यदप्याह ।

पूर्णपात्रदधिविप्रदेवता-
गन्धपुष्पफलकाञ्चनादि वा ।
द्रव्यमिष्टमथवा परं भवेद्-
ध्रेषतां यदि समीपतो जयः ॥ ८ ॥

पूर्णं च तत् पात्रं च पूर्णपात्रम् । पात्रं भाजनम् । पूर्णं केनचिच्छुभद्रव्येण सर्षपाक्षततण्डुलादिकेनेति । दधि क्षीरविकारः । विप्रो ब्राह्मणः । देव एव देवता । गन्धः सुगन्धद्रव्यविशेषः । अगुरुकर्पूरकस्तूरिकादिः । पुष्पाणि कुसुमानि । फलं श्रीफलादि । काञ्चनं सुवर्णम् । आदिग्रहणाद्रजतमणिमुक्ताफलादि । अथवा परमन्यदिष्टं शुभद्रव्यं सिद्धार्थगोरोचनादि वा । ह्रेषतां शब्दं कुर्वतामश्वानां यदि समीपतः सन्निकर्षे निकटे भवेत् । तदा जयो भवति ॥ ८ ॥

अन्यदप्याह ।

भक्ष्यपानखलिनाभिनन्दिनः
पत्युरौपयिकनन्दिनोऽथवा ।
सव्यपार्श्वगतदृष्टयोऽथवा
वाञ्छितार्थफलदास्तुरङ्गमाः ॥ ९ ॥

भक्ष्यं भक्षणीयं द्रव्यम्। पानं जलम्। खलिनं कविका। एतानि यद्यभिनन्दयन्ति। अथवा पत्युर्भर्तुरौपयिकं यदुपयुज्यते तदभिनन्दयन्ति। अथवा सव्यपार्श्वे आत्मीयदक्षिणपार्श्वे गतदृष्टयो वीक्ष्यमाणाः। एवंविधा-स्तुरङ्गमा वाञ्छितार्थफलदा वाञ्छितस्याभीष्टस्यार्थस्य फलं ददति॥ ९॥

उक्तं च।

इष्टानिष्टव्यञ्जकमतः परं ह्रेषितं समवधार्यम्।
तच्च चलितप्रसारितशिरोधरोद्भूतमिष्टफलम्॥
याप्तान्तर्वक्त्राणामुच्चैः स्निग्धानुनादि गम्भीरम्।
द्विजपूर्णभाजनेष्टद्रव्यस्रग्गन्धसुरमूलेः॥
खलिनान्नपानधर्मस्वाम्युपकरणाभिनन्दिता चेषाम्।
सर्वार्थसिद्धये स्याद्दक्षिणपार्श्वे विलोकयताम्॥

अधुनाशुभचेष्टितमाह।

**वामैश्च पादैरभिताडयन्तो**
**मह्रीं प्रवासाय भवन्ति भर्त्तुः।**
**सन्ध्यासु दीप्तामवलोकयन्तो**
**ह्रेषन्ति चेद्बन्धपराजयाय॥ १०॥**

मह्रीं भूमिं वामैश्च पादैरपसव्यचरणैरभिताडयन्तो घ्नन्तो भर्तुः पत्युः प्रवासाय भवन्ति। सन्ध्यासु चतसृषु सूर्योदयमध्याह्नास्तमयार्धरा-त्रिषु। दीप्तां दिशमवलोकयन्तः प्रेक्षमाणा यदि ह्रेषन्ति शब्दं कुर्वन्ति तदा बन्धपराजयाय भवन्ति। स्वामिनो बन्धनं पराजयं च कुर्वन्ति—इति॥ १०॥

अन्यदप्याह।

**अतीव ह्रेषन्ति किरन्ति वालान्**
**निद्रारताश्च प्रवदन्ति यात्राम्।**
**रोमत्यजो दीनखरस्वराश्च**
**पांशून् ग्रसन्तश्च भयाय दृष्टाः॥ ११॥**

अतीवात्यर्थं ह्रेषन्ति शब्दं कुर्वन्ति तथा वालान् पुच्छवालान् किरन्ति विक्षिपन्ति। निद्रारताः स्वप्नशीलाश्च यात्रां गमनं प्रवदन्ति। तथा रोमत्याजो

रोमाणि त्यजन्त्युत्सृजन्ति । दीनखरस्वराः । दीनस्वनाः क्षामशब्दाः । खर-स्वना रूक्षध्वनयः । पांशून् मृत्तिका ग्रसन्तो भक्षयन्तो भयाय दृष्टाः । स्वामिनो भयमावेदयन्ति ॥ ११ ॥

उक्तं च ।

सन्ध्यासु दीप्तदिङ्मुखसम्भ्रमगाढप्रनष्टनिद्राश्च ।
ह्रेषन्तो भयजनना बधबन्धपराजयकराश्च ॥
वक्रीकृतवालधयो दक्षिणपार्श्वानुशायिनो नेष्टाः ।
वामचरणैः क्षितितलं घ्नन्तो ज्ञेयाः प्रवासाय ॥

अथ शुभनिमित्तान्याह ।

**समुद्गवद्दक्षिणपार्श्वशायिनः**
**पदं समुत्क्षिप्य च दक्षिणं स्थिताः ।**
**जयाय शेषेष्वपि वाहनेष्विदं**
**फलं यथासम्भवमादिशेद्बुधः ॥ १२ ॥**

समुद्गवज्जानुनी ठौकयित्वा समुद्गसंपुटविशेषेण सव्येन पार्श्वेण शरीरार्द्धेन स्वप्नशीलाः । तथा सव्यं दक्षिणं पदं चरणं समुत्क्षिप्य भूमावनवस्थाप्य च स्थितास्तिष्ठन्ति । एवंभूतास्तुरगाः प्रभोर्जयाय भवन्ति । शेषेष्वपीति । शेषेष्वन्येषु गजकरभादिषु वाहनेष्विदं शुभाशुभं फलं यथासम्भवं यत् सम्भवति । धूमाग्निकणाश्च न सम्भवन्ति । अन्यत् सम्भवति । तद्बुधः पण्डितं आदिशेत् कथयेत् ॥ १२ ॥

अथान्यदपि शुभचेष्टितमाह ।

**आरोहति क्षितिपतौ विनयोपपन्नो**
**यात्रानुगोऽन्यतुरगं प्रतिह्रेषते च ।**
**वक्त्रेण वा स्पृशति दक्षिणमात्मपार्श्वं**
**योऽश्वः स भर्त्तुरचिरात् प्रचिनोति लक्ष्मीम् ॥ १३ ॥**

क्षितिपतौ राज्ञि राजनि वाऽऽरोहति उत्कषति योऽश्वस्तुरगो विनयोपपन्नो नीतिसंयुक्तो भवति । तथा यात्रानुगो यात्रादिगभिमुखः । यां दिशं

गच्छति राजा तस्यामेव गच्छति । अन्यतुरगं प्रतिहेषते च । अन्यस्मिन् तुरगे हेषिते शब्दं कुर्वति सति प्रतिहेषितं करोति । अथवा वक्त्रेण मुखेनात्मपार्श्वे दक्षिणं सव्यं स्पृशति स भर्तुः प्रभोरचिराच्छीघ्रमेव लक्ष्मीं श्रियं प्रचिनोति वृद्धिं नयति ॥ १३ ॥

अथाशुभनिमित्तान्याह ।

**मुहुर्मुहुर्मूत्रशकृत् करोति**
**न ताड्यमानोऽप्यनुलोमयायी ।**
**अकार्यभीतोऽश्रुविलोचनश्च**
**शिवं न भर्त्तुस्तुरगोऽभिधत्ते ॥ १४ ॥**

यस्तुरगोऽश्वो मुहुर्मुहुः प्रतिक्षणं मूत्रं शकृत् पुरीषं च करोति । ताड्यमानोऽपि कशादिभिर्नानुलोमयायी अनुलोमामभीष्टां दिशं न गमनशीलः । अकार्यभीतः । अकार्यादनिमित्ताद्भीतः । महिषसूकरादिभिर्विना भयमाशङ्कते । अश्रुविलोचनोऽश्रुपरिपूर्णनयनः । स भर्त्तुः पत्युः शिवं श्रेयो नाभिधत्ते न ददाति ॥ १४ ॥

**उक्तमिदं हयचेष्टितमत ऊर्ध्वं दन्तिनां प्रवक्ष्यामि ।**
**तेषां तु दन्तकल्पनभङ्गम्लानादिचेष्टाभिः ॥ १५ ॥**

इदं हयानामश्वानां चेष्टितं कथितम् । अतोऽस्मादूर्ध्वमनन्तरं दन्तिनां गजानां सम्प्रवक्ष्यामि कथयिष्यामि । तेषां तु दन्तकल्पनेन दन्तभङ्गेनास्फोटनेन दन्तानां म्लानत्वेन वैकल्येन चेष्टया चेष्टितेन । आदिग्रहणादन्यैः पार्थिवोपकरणादिभिः फलानि भवन्ति ॥ १५ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ शाकुनेऽश्वेङ्गितं नाम द्विनवतितमोऽध्यायः ॥ ९२ ॥

## अथ हस्तिचेष्टितं[१] व्याख्यायते ।

तत्रादावेव दन्तकल्पनविधानमाह ।

**दन्तस्य मूलपरिधिं द्विरायतं प्रोह्य कल्पयेच्छेषम् ।**
**अधिकमनूपचराणां न्यूनं गिरिचारिणां किञ्चित् ॥ १ ॥**

---

१ अयमध्यायस्तत्रैव यथा अध्यायमलक्षणे गजदन्तलक्षणम् । द्रष्टव्या अस्य ग्रन्थस्य ९७८ पृष्ठे ३०-३५ श्लोकाः ।

मूले परिधिर्मूलपरिधिः । परिधिः पारिमण्डल्यम् । दन्तस्य रदस्य मूले यः परिधिः परिणाहस्तं द्विरायतं द्वौ वारौ द्विगुणमायतं दीर्घं प्रोह्य त्यक्त्वा शेषं कल्पयेत् छिन्द्यात् । एतदुक्तं भवति । दन्तमूलात् पारिमण्डल्येन सूत्रेण मित्वा तत् सूत्रं द्विगुणं कृत्वा यद्भवति तावत्प्रमाणं दन्तमूलाद्दैर्घ्यं त्यक्त्वा शेषं कल्पयेत् । अधिकमनूपचराणामिति । अनूपो बहूदको देशः । अनूपचराणां हस्तिनां दन्तमूलपरिधिं द्विरायताधिकं प्रोह्य शेषं कल्पयेत् । गिरिचराणां पर्वते सदैव ये चरन्ति तेषां न्यूनं किञ्चिद्दन्तमूलपरिधिं द्विरायतं प्रोह्य शेषं कल्पयेत् ॥ १ ॥

उक्तं च ।

दन्तमूलपरिणाहदीर्घतां द्विः प्रमुच्य परतोऽपि कल्पयेत्-इति ।

अथ परिकल्पितस्य दन्तस्य लक्षणमाह ।

**श्रीव[1]त्सवर्धमानच्छत्रध्वजचामरानुरूपेषु ।**
**छेदे दृष्टेष्वारोग्यविजयधनवृद्धिसौख्यानि ॥ २ ॥**

श्रीवत्सो वर्धमानः । एतौ चिह्नविशेषौ । छत्रमातपत्रम् । ध्वजः सिद्धः । चामरं बालव्यजनम् । एषामनुरूपेषु सदृशेषु चिह्नेषु छेदे दृष्टेषु अवलोकितेष्वारोग्यमरोगित्वं विजयो धनवृद्धिः सौख्यमेतानि भवन्ति ॥ २ ॥

अन्यदप्याह ।

**प्रहरणसदृशेषु जयो नन्द्यावर्त्ते प्रनष्टदेशाप्तिः ।**
**लोष्टे तु लब्धपूर्वस्य भवति देशस्य सम्प्राप्तिः ॥ ३ ॥**

प्रहरणं खड्गादि । प्रहरणसदृशेषु तदाकारेषु छेदे दृष्टेषु जयो भवति । नन्द्यावर्तश्चिह्नविशेषः । नद्यावर्तसदृशच्छेदे दृष्टे प्रनष्टस्यापहृतस्य देशस्याप्तिर्लाभो भवति । लोष्टे लोष्टसदृशे तु मृत्खण्डाकृतौ लब्धपूर्वस्य देशस्य सम्प्राप्तिर्भवति । पूर्वं लब्धो लब्धपूर्वः । नाममात्रेण लब्धो न हस्तीभूतस्तस्य सम्प्राप्तिर्लाभो भवति ॥ ३ ॥

अन्यदप्याह ।

**स्त्रीरूपेऽस्वविनाशो भृङ्गारेऽभ्युत्थिते सुतोत्पत्तिः ।**
**कुम्भेन निधिप्राप्तिर्यात्राविघ्नश्च दण्डेन ॥ ४ ॥**

---

[1] अस्य ग्रन्थस्य ६७८ पृष्ठे २१ श्लोके श्रीवत्स-स्थाने श्रीवृक्ष-इति पाठान्तरम् ।

स्त्रीरूपे योषिदाकृतौ छेदे दृष्टेऽश्वानां तुरगाणां विनाशः क्षये भवति। भृङ्गारो वार्धानी। भृङ्गाराकृतावभ्युत्थिते उत्पन्ने सुतस्य पुत्रस्योत्पत्ति सम्भवो भवति। कुम्भेन घटसदृशेन निधिप्राप्तिर्निधिलाभो भवति। दण्डेन दण्डाकारेण यात्राविघ्नो गमननिषेधो भवति ॥ ४ ॥

अन्यदप्याह।

**कृकलासकपिभुजङ्गेष्वसुभिक्षव्याधयो रिपुवशित्वम्।**
**गृध्रोलूकध्वाङ्क्षश्येनाकारेषु जनमरकः ॥ ५ ॥**

कृकलासः प्राणिविशेषः। कपिर्वानरः। भुजङ्गः सर्पः। एतेषु छेदे दृष्टेषु असुभिक्षं व्याधयः पीडा रिपुवशित्वं शत्रूणां विधेयत्वमिति। गृध्रः। उलूकः। एतौ प्रसिद्धौ पक्षिणौ। ध्वाङ्क्षः काकः। श्येनो वाजिकः। एषामाकारेषु सदृशेषु छेदे दृष्टेषु जनमरको जनानां मरको भवति ॥ ५ ॥

अन्यदप्याह।

**पाशेऽथवा कबन्धे नृपमृत्युर्जनविपत् स्रुते रक्ते।**
**कृष्णे श्यावे रूक्षे दुर्गन्धे चाशुभं भवति ॥ ६ ॥**

पाशः सर्पाकारः। कबन्धो विच्छिन्नशिराः पुरुषः। तत्सदृशे छेदे दृष्टे नृपमृत्युर्नृपस्य राज्ञो मृत्युर्मरणं भवति। रक्ते शोणिते स्रुते जनानां विपदापदो भवन्ति। कृष्णे कृष्णवर्णे। श्यावे मलिने। रूक्षे अस्निग्धे। दुर्गन्धे दुष्टगन्धे। छेदे दृष्टे अशुभमनिष्टं भवति ॥ ६ ॥

उक्तं च।

श्यावपूतिमलरक्तदर्शनं सर्पसत्त्वसदृशं च पापदम्—इति।

अथ शुभच्छेदलक्षणमाह।

**शुक्लः समः सुगन्धिः स्निग्धश्च शुभावहो भवेच्छेदः।**
**गलनम्लानफलानि च दन्तस्य समानि भङ्गेन ॥ ७ ॥**

शुक्लः। समः सर्वभागेषु तुल्यः। सुगन्धिः शोभनगन्धिः। स्निग्धः सस्नेहः। एवंविधश्छेदः शुभावहः शुभं करोति।

उक्तं च ।

पार्थिवोपकरणोपमं यदा चिह्नमुद्वहति कल्पिते रदे ।
ओजयार्थबलवृद्धयस्तदा स्निग्धशुक्लरुचिराश्च शोभनाः ॥

गलनम्लानफलानीति । गलनं स्थानस्येव विशरणं स्रावो वा । म्लानं म्लानता वैवर्ण्यम् । एतेषां यानि फलानि तानि दन्तस्य भङ्गेन स्फोटनेन समानि । यादृशं दन्तभङ्गफलं वक्ष्यमाणं तादृशमपि गलनम्लानफलम् ॥ ७ ॥

अन्यच्छुभाशुभमाह ।

मूलमध्यदशनाग्रसंस्थिता
देवदैत्यमनुजाः क्रमात् ततः ।
स्फीतमध्यपरिपेलवं फलं
शीघ्रमध्यचिरकालसम्भवम् ॥ ८ ॥

यथाक्रमं गजस्य दन्तमूले दन्तमध्ये दन्ताग्रे च देवदैत्यमनुजाः क्रमात् स्थिताः । तद्यथा । दन्तमूले देवा व्यवस्थिताः । दन्तमध्ये दैत्याः । दन्ताग्रे मनुजा देवविशेषाः । ततस्तस्माद्भागत्रयात् स्फीतमध्यपरिपेलवं फलं भवति । तत्र मूले वक्ष्यमाणं फलं स्फीतं परिपुष्टं भवति । मध्ये मध्यमं नात्यल्पं नातिबहु । प्रान्ते परिपेलवं स्वल्पम् । तथा शीघ्रमध्यचिरकालसम्भवम् । मूले वक्ष्यमाणं फलं शीघ्रकालेन सप्ताहमध्ये सम्भवति । मध्ये मध्यमेन कालेन मासान्तः । प्रान्ते चिरकालेन मासान्ते सम्भवतीत्यागमविधिः ॥ ८ ॥

अत्रैव पुनरपि विशेषमाह ।

दन्तभङ्गफलमत्र दक्षिणे
भूपदेशबलविद्रवप्रदम् ।
वामतः सुतपुरोहितेभयान्
हन्ति साटविकदारनायकान् ॥ ९ ॥

अत्रास्मिन् भागत्रये दन्तभङ्गफलम् । दक्षिणे मूलाद्भग्ने भूपस्य राज्ञो विद्रवप्रदं विद्रवं पलायनभयं ददाति । मध्याद्भग्ने देशस्य जनपदस्य विद्रवप्रदम् । प्रान्तभग्ने बलस्य सेनाया विद्रवप्रदम् । वामतः सुतपुरो-

हितेभयानिति। वामतो वामे रदे मूलाद्भग्ने सुतं राजपुत्रं हन्ति। मध्याद्भग्ने पुरोहितमाचार्यं हन्ति। अग्रे इभयान् साधनपतीन् हन्ति। तथा साटविकदारनायकान् क्रमेण। वामदन्ते मूलाद्भग्ने साटविकं बलं हन्ति। मध्याद्भग्ने दाराः कलत्रम्। अग्राद्भग्ने नायकान् प्रधानपुरुषान् हन्ति। गलनम्लानफलान्येवमेव ज्ञातव्यानि ॥ ९ ॥

पुनरप्यत्र विशेषफलमाह।

**आदिशेदुभयभङ्गदर्शनात्**
**पार्थिवस्य सकलं कुलक्षयम्।**
**सौम्यलग्नतिथिभादिभिः शुभं**
**वर्धतेऽशुभमतोऽन्यथा वदेत् ॥ १० ॥**

उभयोर्दन्तयोर्द्वयोर्भङ्गदर्शनात्। भङ्गः स्फोटनं यदि दृश्यते तदा पार्थिवस्य राज्ञः सकलं निःशेषं कुलक्षयं वंशविनाशमादिशेद्वदेत्। निःशेषं नृपकुलं विनश्यति। गलनम्लानफलान्येवमेव। सौम्यलग्नतिथिभादिभिः शुभं वर्धते। सौम्यस्य शुभग्रहस्य लग्नेन। सौम्यग्रहाणां लग्नानि वृषमिथुनकर्कटकन्यातुलधन्विमीनाः। येषां शुक्रबुधाक्षीणेन्दुजीवा अधिपतयः। एवं सौम्यलग्नेन। सौम्यतिथिना रिक्तावर्जितः सौम्यस्तिथिः। नन्दाभद्राविजयापूर्णाः सौम्यास्तिथयः। सौम्यं भं नक्षत्रं दारुणोग्रवर्जम्। आदिग्रहणात् सौम्यदर्शनेन लग्नस्य सौम्यसंस्थित्या वा सन्नामदर्शनादिना पूर्णं शुभं चिह्नं शुभेनोत्पन्नं वर्धते वृद्धिं याति। अशुभमतोऽन्यथा वदेत्। अतोऽस्मादुक्तादन्यथा पापलग्नेन पापसंस्थित्या पापदर्शनेन सदोषतिथिना नक्षत्रेण चाधिकमशुभं पापचिह्नं वर्धते वृद्धिं याति। व्यामिश्रेण व्यामिश्रम्। अशुभेन लग्नादिना वाऽशुभं चिह्नं शुभेन वा शुभं यत्र तत्र व्यामिश्रं वा फलमूह्यमिति ॥ १० ॥

अधुना दन्तभङ्गस्य विशेषफलमाह।

**क्षीरमृष्टफलपुष्पपादपे-**
**ष्वापगातटविघट्टितेन वा।**
**वाममध्यरदभङ्गखण्डने**
**शत्रुनाशकृदतोऽन्यथा परम् ॥ ११ ॥**

अथ वामस्यापसव्यस्य रदस्य दन्तस्य मध्याद्भङ्गः स्फोटनं खण्डनं भेदनं वा यदि क्षीरवृक्षस्यार्कादेर्घट्टितेन चालनेन भवति । मृष्टफलपादपस्य मधुरफलवृक्षस्य वा चालनेन भवति । पुष्पपादपस्य कुसुमवृक्षस्य वा चालनेनोत्पद्यते । तदा शत्रुनाशकृच्छत्रुनाशं करोति । आपगातटविघट्टितेन वा । आपो गच्छन्ति यासु ता आपगा नद्यस्तासां तटविघट्टितेन तीरचालनेन चोत्पद्यते । तथापि शत्रुनाशं करोति । अतोऽन्यथा परम् । अतोऽस्मादुक्तप्रकारात् अन्यथा दुष्टवृक्षादिघट्टितेन वामस्य दन्तस्य मूले वाग्रे यो भङ्गः खण्डनं वा तदा शत्रुवृद्धिकृदित्यर्थः । दक्षिणस्य मूलमध्याग्रेष्वपि भङ्गदर्शनाच्छत्रुवृद्धिकृदिति ॥ ११ ॥

अधुना गजेङ्गितमाह ।

**स्खलितगतिरकस्मात् त्रस्तकर्णोऽतिदीनः**
**श्वसिति मृदु सुदीर्घं न्यस्तहस्तः पृथिव्याम् ।**
**द्रुतमुकुलितदृष्टिः स्वप्नशीलो विलोमो**
**भयकृदहितभक्षी नैकशोऽसृक्शकृत्कृत् ॥ १२ ॥**

स्खलितगतिरकस्मादिति । अकस्माद्विना निमित्तं स्खलितगतिः । स्खलिता गतिर्यस्य सः । अकस्मात् त्रस्तकर्णो विवस्तश्रोत्रः । अतिदीनोऽतीव दैन्यं गतः । श्वसिति मृदु सुदीर्घमिति । पृथिव्यां भूमौ न्यस्तहस्तो विन्यस्तकरो मृदु कृत्वा सुदीर्घं चिरकालं श्वसिति श्वासं विमुञ्चति । द्रुतमुकुलितदृष्टिः । द्रुता चकिता मुकुलितार्द्धोन्मीलिता वा दृष्टिश्चक्षुषी यस्य सः । स्वप्नशीलो बहुकालं स्वपिति । विलोमो विपरीतगतिः । यत्र प्रेर्यते तत्र न याति । एवंविधो भयकृद्भयं करोति । तथाहितभक्षी । अहितमनिष्टं भक्षयति । अपथ्याशी । नैकशोऽसृक्शकृत्कृत् । नैकशो बहून् वारानसृग्रक्तं शकृत् पुरीषं करोति । तदापि भयकृत् ॥ १२ ॥

अधुना शुभचेष्टितमाह ।

**वल्मीकस्थाणुगुल्मक्षुपतरुमथनस्वेच्छया हृष्टदृष्टि-**
**र्यायाद्यात्रानुलोमं त्वरितपदगतिर्वक्त्रमुन्नाम्य चोच्चैः ।**

**कक्ष्यासन्नाहकाले जनयति च मुहुः शीकरं बृंहितं वा**
**तत्काले वा मदाप्तिर्जयकृदथ रदं वेष्टयन् दक्षिणं च ॥ १३ ॥**

वल्मीकस्थाणुगुल्मेति । एवंविधो गजो जयकृत् राज्ञो जयं करोति । यदि वल्मीककृतं मृत्स्तूपं मथ्नाति । स्थाणुर्निःशेषशाखाच्छिन्नो वृक्षः शुष्कवृक्षो वा । गुल्म एकमूलः शाखासमूहः । क्षुपं शष्पम् । तरुर्वृक्षः । एतेषामन्यतमं यदि स्वेच्छया आत्मेच्छया मथ्नाति । तथा हृष्टदृष्टिः । हृष्टा दृष्टिर्यस्य सः । यायाद्यात्रानुलोममिति । त्वरितपदगतिः शीघ्रगामी वक्त्रं मुखमुच्चैरुन्नाम्योत्क्षिप्य यात्रानुलोमं यात्रादिशं यायाद्गच्छेत् । तथा कक्ष्यासन्नाहकाले मध्यबन्धनप्रतिवेलायां जनयत्युत्पादयति मुहुर्मुहुः पुनःपुनः शीकरं वक्त्रोदककणान् मुञ्चति । बृंहितं घनगर्जितं वा करोति । तत्काले वा मदाप्तिर्मदप्रादुर्भावः । तथा रदं दन्तं दक्षिणं वेष्टयन् करेणालम्बयन् इति ॥ १३ ॥

अन्यदपि चेष्टितमाह ।

**प्रवेशनं वारिणि वारणस्य**
**ग्राहेण नाशाय भवेन्नृपस्य ।**
**ग्राहं गृहीत्वोत्तरणं नृपस्य**
**तोयात् स्थलं वृद्धिकरं नृभर्त्तुः ॥ १४ ॥**

वारणस्य गजस्य ग्राहेण जलप्राणिना वारिणि जलमध्ये प्रवेशनं नृपस्य राज्ञो नाशाय भवेत् स्यात् । तथा द्विपस्य हस्तिनो ग्राहं जलप्राणिनं नीत्वाऽऽक्रम्य तोयाज्जलात् स्थलं उत्तरणं नृभर्त्तू राज्ञो वृद्धिकरं भवतीति ॥ १४ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ शाकुने हस्तिचेष्टितं नाम त्रिनवतितमोऽध्यायः ॥ ९३ ॥

## अथ वायसविरुतं व्याख्यायते ।

तत्रादावेव प्रविभागप्रदर्शनार्थमाह ।

**प्राच्यानां दक्षिणतः शुभदाः काकाः करायिका वामाः ।**
**विपरीतमन्यदेशेष्ववधिर्लोकप्रसिद्धैव ॥ १ ॥**

प्राच्यां पूर्वस्यां दिशि भवाः प्राच्यः । तेषां प्राच्यानां दक्षिणतो दक्षिणभागे काका वायसाः शुभदाः । करायिकाः कूटपूर्यः । वामा वामभागस्थास्तेषामेव शुभदाः । अन्यदेशेषु प्राग्देशवर्जितेषु विपरीतं विपर्यस्तम् । काको वामः करायिका दक्षिणेति देशे प्रविभागमाह ।

अवधिर्लोकप्रसिद्ध्यैव । अवधिः परिच्छित्तिः सा च लोकप्रसिद्ध्यैव लोकप्रसिद्ध्या लोकतो विज्ञेया । यथा इमे जनाः प्राच्याः । इमे दक्षिणाः । इमे पश्चिमाः । इम उत्तरा इति । आचार्येणापि कूर्मप्रविभागे प्रदर्शिता इति ॥ १ ॥

अथ वेष्टितमाह ।

**वैशाखे निरुपहते वृक्षे नीडः सुभिक्षशिवदाता ।**
**निन्दितकण्टकिशुष्केष्वसुभिक्षभयानि तद्देशे ॥ २ ॥**

वैशाखे वैशाखमासे निरुपहते निरुपद्रवे वृक्षे तरौ नीड आलयः सुभिक्षशिवदाता भवति सुभिक्षं श्रेयश्च ददाति । निन्दिते कुत्सिते । कण्टकिनि सकण्टके । शुष्के नीरसे वृक्षे । यस्मिन् देशे एतेषु नीडं करोति । तद्देशे असुभिक्षभयानि भवन्ति ॥ २ ॥

अथ नीडवशेन फलमाह ।

**नीडे प्राक्शाखायां शरदि भवेत् प्रथमवृष्टिरपरस्याम् ।**
**याम्योत्तरयोर्मध्यात् प्रधानवृष्टिस्तरोरुपरि ॥ ३ ॥**
**शिखिदिशि मण्डलवृष्टिर्नैर्ऋत्यां शारदस्य निष्पत्तिः ।**
**परिशेषयोः सुभिक्षं मूषकसम्पच्च वायव्ये ॥ ४ ॥**

नीडे प्राक्शाखायामिति । नीडे आलये तरौ वृक्षे प्राक्शाखायां पूर्वस्यां दिशि शाखायां कृते शरदि शरत्काले । आश्वयुजकार्तिकयोर्वृष्टिर्वर्षणं भवेत् । अपरस्यां पश्चिमायां दिशि स्थिते नीडे प्रथमवृष्टिर्वर्षासु श्रावणभाद्रपदयोर्वृष्टिर्भवति । याम्योत्तरयोर्दक्षिणसौम्ययोर्दिशि स्थिते नीडे मध्यात् भाद्रपदाश्वयुजयोर्वृष्टिर्भवति । तरोर्वृक्षस्योपरि प्रधानशाखायां दिशि स्थिते नीडे प्रधाना श्रेष्ठा चतुर्ष्वपि मासेषु श्रावणादिषु वृष्टिर्भवति ॥ ३ ॥

शिखिदिशीति। शिखिदिशि आग्नेयदिशि स्थिते नीडे मण्डलवृष्टिर्भवति। क्वचिद्वृष्टिः क्वचिदवृष्टिः। नैर्ऋत्यां दिशि स्थिते नीडे शारदस्य सस्यस्य निष्पत्तिर्भवति। परिशेषयोर्वायव्यैशान्योः स्थिते नीडे सुभिक्षं भवति। वायव्ये कोणे मूषकानां सम्पद्बाहुल्यं भवति ॥ ४ ॥

अथान्यच्चेष्टितमाह।

**शरदर्भगुल्मवल्लीधान्यप्रासादगेहनिम्नेषु।**
**शून्यो भवति स देशश्चौरानावृष्टिरोगार्त्तः ॥ ५ ॥**

शरः प्रसिद्धः। दर्भः प्रसिद्ध एव। गुल्म एकमूलः शाखासमूहः। वल्ली प्रसिद्धा। धान्यं प्रसिद्धम्। प्रासादो देवप्रासादः। गेहं वेश्म। निम्नं श्वभ्रम्। एतेषु स्थानेषु यत्र काकस्य नीडो भवति स देशः शून्यो भवति। स देशश्चौरानावृष्टिरोगार्तः। चौरैस्तस्करैरनावृष्ट्या अवर्षणेन रोगैर्गदैश्चार्तः पीडितो भवति ॥ ५ ॥

उक्तं च यात्रायाम्।

शस्तो नीडस्तु वैशाखे पादपे निरुपद्रवे।
देशोत्थानं तु वल्मीकचैत्यधान्यगृहादिषु ॥

अन्यच्चेष्टितमाह।

**द्वित्रिचतुःशावत्वं सुभिक्षदं पञ्चभिर्नृपान्यत्वम् ॥**
**अण्डावकिरणमेकाण्डता प्रसूतिश्च न शिवाय ॥ ६ ॥**

शावः शिशुः। अपत्यमित्यर्थः। द्वित्रिचतुःशावत्वं द्वयोस्त्रयाणां चतुर्णां वा शावकानां भावो द्वित्रिचतुःशावत्वम्। तच्च सुभिक्षदम्। पञ्चभिः शावैर्नृपान्यत्वमन्यस्य राज्यं करोति। द्वितीयो राजा भवतीत्यर्थः। अण्डावकिरणमण्डविक्षेपः। एकाण्डता एकाण्डभावः। अप्रसूतिश्च प्रसवाभावः। एते सर्वे एव न शिवाय न श्रेयसे भवन्ति ॥ ६ ॥

अथैतेषामेव विशेषमाह।

**चोरकवर्णैश्चौराश्चित्रैर्मृत्युः सितैस्तु वह्निभयम्।**
**विकलैर्दुर्भिक्षभयं काकानां निर्दिशेच्छिशुभिः ॥ ७ ॥**

चोरकं गन्धद्रव्यम् । तद्वर्णैः शिशुभिश्चौरास्तस्करा भवन्ति । चित्रैश्चित्रवर्णैर्नानाकारैर्मृत्युर्भवति । सितैः शुक्लैस्तु वह्निभयमग्निभयम् । विकलैर्दुर्भिक्षभयम् । विकलैरङ्गहीनैः काकानां ध्वाङ्क्षाणां शिशुभिर्बालैर्दुर्भिक्षभयं निर्दिशेद्वदेत् ॥ ७ ॥

उक्तं च ।

काकानां प्रसवे द्वित्रिचतुःशावाः शुभावहाः ।
चोरचित्रकश्वेताश्च वर्णाश्चौराग्निमृत्युदाः ॥
अण्डावकिरणे ध्वाङ्क्षा दुर्भिक्षमरकावुभौ ।
शावानां विकलत्वे वा निःशावत्वे कृते तथा ॥

अन्यदप्याह ।

**अनिमित्तसंहतैर्ग्राममध्यगैः क्षुद्भयं प्रविरुवद्भिः ।**
**रोधश्चक्राकारैरभिघातो वर्गवर्गस्थैः ॥ ८ ॥**

अनिमित्तमकारणं संहतैः समेतैर्ग्राममध्यगैर्ग्राममध्यस्थितैर्वायसैः प्रविरुवद्भिर्वाशितैः क्षुद्भयं दुर्भिक्षभयं भवति । चक्राकारैश्चक्रवत्पारिमण्डल्येन स्थितै रोधः पुररोधो भवति । वर्गवर्गस्थैरकारणसमेतैर्बहुभिः समूहैः स्थितैरभिघात उपद्रवो भवति ॥ ८ ॥

उक्तं च ।

अकार्यसंहतैर्भेदो रोधश्चक्राकृतिस्थितैः ।
वर्गगैश्चाभिघातः स्याद्विपुवृद्धिश्च निर्भयैः ॥

अन्यदप्याह ।

**अभयाश्च तुण्डपक्षैश्चरणविघातैर्जनानभिभवन्तः ।**
**कुर्वन्ति शत्रुवृद्धिं निशि विचरन्तो जनविनाशम् ॥ ९ ॥**

अभया भयरहिताः । तुण्डैश्चञ्चुभिः । पक्षैरङ्गरुहैः । चरणविघातैः पादप्रहारैः । जनान् लोकानभिभवन्तः पराभवन्तः शत्रुवृद्धिं रिपुवृद्धिं कुर्वन्ति । निशि रात्रौ विचरन्तो जनानां लोकानां विनाशं कुर्वन्ति ॥ ९ ॥

अन्यदप्याह ।

**सव्येन खे भ्रमद्भिः स्वभयं विपरीतमण्डलैश्च परात् ।**
**अत्याकुलं भ्रमद्भिर्वातोद्भ्रामो भवति काकैः ॥ १० ॥**

सव्येन प्रादक्षिण्येन खे आकाशे भ्रमद्भिः काकैर्वायसैः पूर्वदक्षिणपश्चिमोत्तरा इत्यनेन क्रमेण भ्रमद्भिः स्वेभ्य आत्मीयेभ्यो भयं भवति । विपरीतमण्डलैः पूर्वोत्तरपश्चिमदक्षिणा इत्यनेन क्रमेण भ्रमद्भिः पराच्छत्रोर्भयं भवति । अत्याकुलं सोद्यमं भ्रमद्भिः काकैर्वातोद्भ्रामो भवत्यनवस्थितिरित्यर्थः ॥ १० ॥

उक्तं च ।

पुरसैन्योपरि व्योम्नि व्याकुलैरनिलाद्भयम् ।
सव्यमण्डलगैः स्वोत्यमपसव्यैः पराद्भयम् ॥

अन्यदप्याह ।

**ऊर्ध्वमुखाश्चलपक्षाः पथि भयदाः क्षुद्भयाय धान्यमुषः ।**
**सेनाङ्गस्था युद्धं परिमोषं चान्यभृतपक्षाः ॥ ११ ॥**

ऊर्ध्वमुखा ऊर्ध्ववदनाः । चलपक्षाः चलिताङ्गरुहाः । पथि भयदाः अध्वनि भयं ददति । धान्यमुषो धान्यं चोरयन्तः क्षुद्भयाय दुर्भिक्षाय भवन्ति । सेनाङ्गानि पर्याणखलीनप्रभृतीनि तेषु स्थिता युद्धं सङ्ग्रामं सूचयन्ति । अन्यभृतः कोकिलः । अन्यभृतस्येव पक्षा येषामतिकृष्णपक्षास्ते परिमोषं चोरभयं कुर्वन्ति ॥ ११ ॥

उक्तं च ।

युद्धं सेनाङ्गसंस्थेषु मोषकृत् स्वविलेखने ।
चरन्निशि विनाशाय दुर्भिक्षं चान्नमोषकृत् ॥

अन्यदप्याह ।

**भस्मास्थिकेशपत्त्राणि विन्यसन् पतिबधाय शय्यायाम् ।**
**मणिकुसुमाद्यवहनने सुतस्य जन्माप्ययाङ्गनायाश्च ॥ १२ ॥**

शय्यायामास्तरणे । भस्म । अस्थि । केशा मूर्धजाः । पत्त्रं पर्णम् । एतानि विन्यसन् विक्षिपन् पतिबधाय भवन्ति । शय्याया यः पतिः स्वामी तस्य ।

उक्तं च ।

तृणभस्मास्थिकेशाश्च शयने स्वामिमृत्युदाः ।

मणिकुसुमाद्यवहनन इति । मणिना रत्नेन । कुसुमेन पुष्पेण ।

आदिग्रहणात् फलेन । यदि शय्यायामवहननं ताडनं करोति । तदा सुतस्य पुत्रस्य जन्म भवति । अन्यथाऽनेन प्रकारेण मणिकुसुमानि वर्जयित्वा तृणकाष्ठादिनाऽवहननं करोति तदाङ्गनायाः स्त्रिया जन्म भवति ॥ १२ ॥

अन्यदप्याह ।

**पूर्णाननेऽर्थलाभः सिकताधान्यार्द्रमृत्कुसुमपूर्वैः ।**
**भयदो जनसंवासाद्यदि भाण्डान्यपनयेत् काकः ॥ १३ ॥**

सिकता वालुका । धान्यं प्रसिद्धम् । आर्द्रमृत् सरसा मृत्तिका । कुसुमं पुष्पम् । पूर्वग्रहणात् फलं शाद्वलं च । एतैः पूर्णानने परिपूरितवदने काकेऽर्थलाभो भवति । तथा काको जनसंवासाज्जननिकटाद्यदि भाण्डान्यपनयेदपनयति तदा भयदो भयं ददाति ॥ १३ ॥

अन्यदप्याह ।

**वाहनशस्त्रोपानच्छत्रच्छायाङ्गकुट्टने मरणम् ।**
**तत्पूजायां पूजा विष्ठाकरणेऽन्नसम्प्राप्तिः ॥ १४ ॥**

वाहनं यानम् । शस्त्रं खड्गादि । उपानत् प्रसिद्धा । छत्रच्छाया आतपत्रच्छाया । अङ्गं शरीरम् । एषां कुट्टने ताडने मरणं भवति । तत्पूजायां तेषामेव वाहनादीनां पूजायां पुष्पादिपूजनेन पूजा भवति । एषामेव विष्ठाकरणे पुरीषकरणे अन्नसम्प्राप्तिर्भोजनलाभो भवति ॥ १४ ॥

उक्तं च ।

उपानच्छस्त्रयानाङ्गच्छत्रच्छायावकुट्टने ।
मृत्युं तत्स्वामिनो ब्रूयात् पूजा स्यात् तत्प्रपूजने ॥

अन्यदप्याह ।

**यद्द्रव्यमुपनयेत् तस्य लब्धिरपहरति चेत् प्रणाशः स्यात् ।**
**पीतद्रव्यैः कनकं वस्त्रं कार्पासिकैः सितै रूप्यम् ॥ १५ ॥**

काको यद्द्रव्यमुपनयेत् समीपे आनयेत् तस्य द्रव्यस्य लब्धिर्भवति । चेद्यदि यद्द्रव्यमपहरति तदा तद्द्रव्यस्य प्रणाशो नाशो भवति । पीतद्रव्यैः कनकं सुवर्णं लभ्यते । अपहृते तदेव नश्यति । एवं सर्वत्र । कार्पासिकैर्वस्त्रमम्बरम् । सितैः श्वेतवर्णै रूप्यम् ॥ १५ ॥

उक्तं च ।

हरेदुपनयेद्वापि यद्द्रव्यं वायसोऽग्रतः ।
तन्नाशलब्ध्यो[१] विज्ञेयो हेम पीते विनिर्दिशेत् ॥

अन्यदप्याह ।

**सक्षीरार्जुनवञ्जुलकूलद्वयपुलिनगा रुवन्तश्च ।**
**प्रावृषि वृष्टिं दुर्दिनमनृतौ स्नाताश्च पांशुजलैः ॥ १६ ॥**

सह क्षीरेण वर्तते यो वृक्षः स सक्षीरः । अर्जुनः । वञ्जुलः । एते वृक्षविशेषाः । एतेषु तथा कूलद्वयपुलिनगा नद्याः कूलद्वये यो पुलिनो तयोर्गताः । रुवन्तश्च वाशमानाः । प्रावृषि वर्षासु वृष्टिं कुर्वन्ति । अनृतावन्यस्मिन् ऋतौ वर्षावर्जिते दुर्दिनं दुष्टं दिनं कुर्वन्ति । तथा पांशुभिर्जलैश्चाद्भिः स्नाताः प्रावृषि वृष्टिं कुर्वन्ति । अन्यस्मिन् ऋतौ दुर्दिनमेवेति ॥ १६ ॥

अन्यदप्याह ।

**दारुणनादस्तरुकोटरोपगो वायसो महाभयदः ।**
**सलिलमवलोक्य विरुवन् वृष्टिकरोऽब्दानुरावी च ॥ १७ ॥**

वायसः काकस्तरुकोटरे वृक्षगर्भे स्थितः । कीदृशो दारुणनादो दारुणः क्रूरो नादः शब्दो यस्य स महाभयदो महद्भयं ददाति । सलिलं जलमवलोक्य दृष्ट्वा विरुवन् क्रोशन् वृष्टिकरः । अब्दस्य मेघस्यानुरावी पश्चाद्रौति तदा वृष्टिकर एव ॥ १७ ॥

अन्यदप्याह ।

**दीप्तोद्विग्नो विटपे विकुट्टयन् वह्निकृद्विधुतपक्षः ।**
**रक्तद्रव्यं दग्धं तृणकाष्ठं वा गृहे विदधत् ॥ १८ ॥**

विटपे लताविताने दीप्तोद्विग्नो दीप्तः सूर्याभिमुख उद्विग्नो दुःखितो विकुट्टयन् चञ्च्वा भिन्दन् । विधुतपक्षः चलत्पक्षः । वह्निकृदग्निभयं करोति । गृहे वेश्मनि रक्तद्रव्यं रक्तवर्णद्रव्यं दग्धं तृणं काष्ठं वा विदधत् कुर्वद्वह्निकृदेव ॥ १८ ॥

---

१ तन्नाशलब्धी विज्ञेये-इति ग· पु· पाठः ।

उक्तं च ।

रक्तद्रव्यं प्रदग्धं च धान्यं गेहेऽग्निदः स्मृतः ।

अथ दिक्फलमाह ।

**ऐन्द्र्यादिदिगवलोकी सूर्याभिमुखो रुवन् गृहे गृहिणः ।**
**राजभयचोरबन्धनकलहाः स्युः पशुभयं चेति ॥ १९ ॥**

ऐन्द्र्यादिदिगवलोकीति । ऐन्द्र्यादीनां पूर्वादीनां दिशामवलोकयति तच्छील: । सूर्याभिमुखोऽर्कसम्मुखो गृहे वेश्मनि स्थितो रुवन् शब्दं कुर्वन् गृहिणो गृहस्वामिनो राजभयादीन् दोषान् करोति । ऐन्द्रीं दिशं दीप्तामवलोकयन् निरीक्षयन् गृहे स्थितो विरौति तदा गृहिणो राजभयं करोति । एवमाग्नेय्यां दक्षिणस्यां चोरभयम् । एवं नैर्ऋत्यां पश्चिमायां बन्धनभयं भवति । एवमेव वायव्यामुत्तरस्यां कलहः । पशूनां चतुष्पदानां भयं च । एवमेवैशान्यामिति च । अथवा विदिक्षु सर्वासु पशुभयमिति ॥ १६ ॥

एवं दीप्तासु दिग्विदिक्षु फलमभिधायाधुना शान्तामाह ।

**शान्तामैन्द्रीमवलोकयन् रुयाद्राजपुरुषमित्राप्तिः ।**
**भवति च सुवर्णलब्धिः शाल्यन्नगुडाशनाप्तिश्च ॥ २० ॥**

शान्तामैन्द्रीं पूर्वां दिशमवलोकयन्नीक्षन् रुयाच्छब्दं करोति तदा राजपुरुषस्य प्राप्तिर्मित्रप्राप्तिश्च भवति । अथवा राजपुरुष एव मित्रं तस्य प्राप्तिरागमः । तथा सुवर्णस्य काञ्चनस्य लब्धिर्लाभः । शाल्यन्नस्य शालिभक्तस्य गुडाशनस्य गुडसंयुक्तस्य च भोजनस्याप्तिः प्राप्तिर्भवति ॥ २० ॥

अन्यदप्याह ।

**आग्नेय्यामनलाजीविकयुवतिप्रवरधातुलाभश्च ।**
**याम्ये माषकुलुत्थाभोज्यं गान्धर्विकैर्योगः ॥ २१ ॥**

आग्नेय्यां शान्तां दिशमवलोकयन् यदा रौति तदाऽनलजीविकोऽग्न्युपजीविकः सुवर्णकारादिकः । युवती स्त्री । प्रवरः प्रकृष्टः । धातुः सुवर्णादिकः । एतेषां लाभश्च भवति । याम्ये दक्षिणस्यां दिशि शान्तामवलोकयन् माषकुलुत्थाभोज्यं भवति । गान्धर्विकैर्गेयप्रवीणैश्च सह योगः संयोगो भवति ॥ २१ ॥

अन्यदप्याह ।

**नैर्ऋत्यां दूताश्वोपकरणदधितैलपललभोज्याप्तिः ।**
**वारुण्यां मांससुरासवधान्यसमुद्ररत्नाप्तिः ॥ २२ ॥**

नैर्ऋत्यां दिशि स्थितः काकः । शान्ता च या दिशा तामवलोकयन् रुयात् तदा दूतस्य । अश्वस्य तुरगस्य । उपकरणानामुपकरणभाण्डानाम् । उपयुज्यते यत् तदुपकरणम् । अश्वोपयोगिभाण्डानाम् । दधि दुग्धविकारः । तैलं तिलतैलम् । पललमर्धपीडितास्तिलाः । भोज्यमशनम् । एषां प्राप्तिर्लाभो भवति । वारुण्यां पश्चिमायां शान्तामवलोकयन् रुयात् । मांसमामिषम् । सुरा वारुणी । आसवं पानम् । अथवा सुरैरासवम् । धान्यं शालयः । समुद्ररत्नानां समुद्रजातानां रत्नानां प्राप्तिर्भवति ॥ २२ ॥

अन्यदप्याह ।

**मारुत्यां शस्त्रायुधसरोजवल्लीफलाशनाप्तिश्च ।**
**सौम्यायां परमान्नाशनं तुरङ्गाम्बरप्राप्तिः ॥ २३ ॥**

मारुत्यां वायव्यां शान्तामवलोकयन् ब्रूयात् । शस्त्रं लोहम् । आयुधं खड्गादि । सरोजं पद्मम् । वल्लीफलानि कूष्माण्डादीनि । अशनं भोजनम् । एतेषामाप्तिः प्राप्तिर्भवति । सौम्यायामुत्तरस्यां परमान्नाशनं परमान्नं पायसं तदेवाशनम् । तुरङ्गोऽश्वः । अम्बरं वस्त्रम् । एतेषां च प्राप्तिर्भवति ॥ २३ ॥

अन्यदप्याह ।

**ऐशान्यां सम्प्राप्तिर्घृतपूर्णानां भवेदनडुहश्च ।**
**एवं फलं गृहपतेर्गृहपृष्ठसमाश्रिते भवति ॥ २४ ॥**

ऐशान्यां दिशि शान्तायां ब्रूयात् घृतपूर्णानां भक्ष्यविशेषाणामनडुहो वृषभस्य च सम्प्राप्तिर्लाभो भवेत् स्यात् । एवमनेन प्रकारेण गृहस्य वेश्मनः पृष्ठे समाश्रिते काके गृहपतेर्गृहस्वामिनः फलं भवति ॥ २४ ॥

**गमने कर्णसमश्चेत् क्षेमाय न कार्यसिद्धये भवति ।**
**अभिमुखमुपैति यातुर्विरुवन् विनिवर्त्तयेद्यात्राम् ॥ २५ ॥**

चेच्छब्दो यद्यर्थे । गमने यात्रायां यदि कर्णसमो भवति काकः । कर्णप्रदेशे यातुर्गच्छति तदा क्षेमाय भवति । न कार्यसिद्धये क्षेमं करोति

न कार्यसिद्धिं करोति । यदर्थं यात्रा तत्कार्यसिद्धिं न करोति । यातुरभिमुखं संमुखं विरुवन् शब्दं कुर्वन्नुपेत्यागच्छति तदा यात्रां निवर्तयेद्यात्राविघ्नं करोति ॥ २५ ॥

उक्तं च ।

यातुः कर्णसमो ध्वाङ्क्षः क्षेमे नार्थप्रसाधकः ।

अन्यदप्याह ।

**वामे वाशित्वादौ दक्षिणपार्श्वेऽनुवाशते यातुः ।**
**अर्थापहारकारी तद्विपरीतोऽर्थसिद्धिकरः ॥ २६ ॥**

यातुः प्रथममादौ वामभागे वाशित्वा रुतं कृत्वा ततो यदि दक्षिणपार्श्वे वाशते तदार्थस्य धनस्यापहारकारी भवति । तद्विपरीतः पूर्वोक्ताद्विपर्यस्तो दक्षिणपार्श्वे वाशित्वा वामे वाशते तदार्थसिद्धिं करोति ॥ २६ ॥

अन्यदप्याह ।

**यदि वाम एव विरुवन् मुहुर्मुहुर्यायिनोऽनुलोमगतिः ।**
**अर्थस्य भवति सिद्ध्यै प्राच्यानां दक्षिणश्चैवम् ॥ २७ ॥**

यदि वाम एव वामभागे यायिनोऽनुलोमगतिर्यातुः पश्चाद्गमनशीलः स मुहुर्मुहुः पुनःपुनर्विरुयात् वाशते तदार्थस्य सिद्ध्यै सिद्धये भवति । एवमनेन प्रकारेण प्राच्यानां दक्षिणः काकोऽपीष्यते । तेनैतदुक्तं भवति । दक्षिणे मुहुर्मुहुर्वाशते यायिनोऽनुलोमगतिस्तदेष्यत इति ॥ २७ ॥

अन्यदप्याह ।

**वामः प्रतिलोमगतिर्विरुवन् गमनस्य विघ्नकृद्भवति ।**
**तत्रस्थस्यैव फलं कथयति तद्वाञ्छितं गमने ॥ २८ ॥**

वामे यातुर्वामभागस्थः प्रतिलोमगतिर्यायिनोऽभिमुखमागच्छति स च विरुवन् क्रोशन् । गमनस्य यात्राया विघ्नकृद्भवति । गमने यात्रायां यद्वाञ्छितमभिलषितं फलं तत्रस्थस्यैव यातुर्निश्चलस्य कथयति वक्ति ॥ २८ ॥

अन्यदप्याह ।

**दक्षिणविरुतं कृत्वा वामे विरुयाद्यथेप्सितावाप्तिः ।**
**प्रतिवाश्य पुरो यायाद्द्रुतमत्यर्थागमो भवति ॥ २९ ॥**

दक्षिणे यातुर्दक्षिणभागे विरुतं कृत्वा वामे वामभागे विरुयाद्यदि याचते तदा यथेप्सितस्य यथाभिलषितस्यार्थस्यावाप्तिर्लाभो भवति ।

उक्तं च ।

वामपार्श्वस्थितायाति दक्षिणाद्वापि वामगः ।

प्रतिवाश्य शब्दं कृत्वा पुरोऽग्रतो द्रुतं त्वरितं यायाद् याति तदा-ग्रत एव यातुरत्यर्थस्य महाधनस्यागमो लाभो भवति ॥ २९ ॥

अन्यदप्याह ।

**प्रतिवाश्य पृष्ठतो दक्षिणेन यायाद्द्रुतं क्षतजकारी ।**
**एकचरणोऽर्कमीक्षन् विरुवंश्च पुरो रुधिरहेतुः ॥ ३० ॥**

पृष्ठतः पश्चात् प्रतिवाश्य दक्षिणेन पार्श्वेन द्रुतं त्वरितं यायाद्ग-च्छेत् तदा क्षतजकारी क्षतजं रक्तं करोति । एकचरण एकपादः । एकेनैव पादेन स्थितोऽर्कमादित्यमीक्षन् पश्यन् विरुवन् शब्दं कुर्वन् पुरोऽग्रतो रुधिरस्य रक्तस्रावस्य हेतुः कारणम् ॥ ३० ॥

अन्यदप्याह ।

**दृष्ट्वार्कमेकपादस्तुण्डेन लिखेद्यदा स्वपिच्छानि ।**
**पुरतो जनस्य महतो बधमभिधत्ते तदा बलिभुक् ॥ ३१ ॥**

अर्कमादित्यं दृष्ट्वा अवलोक्य एकपाद एकेनैव पादेन स्थितस्तुण्डेन चञ्च्वा स्वपिच्छान्यात्मीयान्यङ्गरुहाणि यदा बलिभुक् काको लिखेत् तदा पुरतो महतः प्रधानस्य जनस्य बधं मृत्युमभिधत्ते ददाति ॥ ३१ ॥

अन्यदप्याह ।

**सस्योपेते क्षेत्रे विरुवति शान्ते ससस्यभूलब्धिः ।**
**आकुलचेष्टो विरुवन् सीमान्ते क्लेशकृद्यातुः ॥ ३२ ॥**

सस्योपेते सस्यसंयुक्ते क्षेत्रे शान्ते काके विरुवति ससस्यायाः सस्य-संयुक्ताया भुवो भूमेर्लब्धिर्लाभो भवति । सीमान्ते ग्रामसीमान्ते स्थितस्तत्र चाकुलचेष्टः सोद्यमो विरुवन् यातुः क्लेशकृद्भवति ॥ ३२ ॥

अन्यदप्याह ।

**सुस्निग्धपत्त्रपल्लवकुसुमफलानम्रसुरभिमधुरेषु ।**
**सक्षीराव्रणसंस्थितमनोज्ञवृक्षेषु चार्थसिद्धिकरः ॥ ३३ ॥**

सुस्निग्धेष्वभक्तेष्वक्षोटादिषु । सुस्निग्धपत्त्रेषु सुस्निग्धपल्लवेषु च । पत्त्राणि सामान्यवाचकानि । पल्लवान्यभिनवपत्त्राणि । कुसुमैः पुष्पैः फलैश्चानम्रेषु विनतेषु । सुरभिषु सुगन्धिषु मधुरेषु सक्षीरेष्वर्कादिषु । अव्रणेषु अच्छिद्रेषु । मनोज्ञेषु चित्ताह्लादकेषु वृक्षेषु स्थितोऽर्थसिद्धिकरोऽर्थानां सिद्धिं साधनं करोति ॥ ३३ ॥

अन्यदप्याह ।

**निष्पन्नसस्यशाद्वलभवनप्रासादहर्म्यहरितेषु ।**
**धन्योच्छ्रयमङ्गल्येषु चैव विरुवन् धनागमदः ॥ ३४ ॥**

निष्पन्नसस्येति । निष्पन्नानि सञ्जातानि सुपर्वाणि वा सस्यानि यत्र । शाद्वलैर्दूर्वाभिर्युक्ते भवने गृहे । प्रासादे देवप्रासादे गृहे वा । हर्म्ये गृहपृष्ठे हरिते हरितवर्णे स्थाने । अथवा हरितं विद्यते यत्र एतेषु स्थानेषु । तथा धन्ये शुभे शुभस्थाने । उच्छ्रये उच्छ्रिते । मङ्गल्ये प्रशस्ते देशे । एतेषु स्थानेषु काको विरुवन् धनागमदो धनस्य वित्तस्यागमं प्राप्तिं ददाति ॥ ३४ ॥

**गोपुच्छस्थे वल्मीकगेऽथवा दर्शनं भुजङ्गस्य ।**
**सद्यो ज्वरो महिषगे विरुवति गुल्मे फलं स्वल्पम् ॥ ३५ ॥**

गोपुच्छस्थे गोलाङ्गूलस्थिते काकेऽथवा वल्मीकगे वल्मीककृतमृत्स्तूपगे । भुजङ्गस्य सर्पस्य दर्शनं भवति । महिषगे काके विरुवति सद्यस्तस्मिन्नेवाहनि ज्वर उत्पद्यते । गुल्म एकमूलः शाखासमूहः । तस्मिन् स्थिते काके विरुवति स्वल्पमत्यल्पं शुभाशुभं फलं ज्ञेयमिति ॥ ३५ ॥

अन्यदप्याह ।

**कार्यस्य व्याघातस्तृणकूटे वामगेऽम्बुसंस्थे वा ।**
**ऊर्ध्वाऽग्निप्लुष्टेऽशनिहते च काके बधो भवति ॥ ३६ ॥**

वामे वामभागस्थिते काके तत्र च तृणकूटे तृणराशौ स्थिते विरुवति क्रोशति कार्यस्य व्याघातो विनाशो भवति । वामभागे गतेऽम्बुसंस्थे जलस्थे च रुवति कार्यस्य व्याघात एव । ऊर्ध्वाग्निप्लुष्टे ऊर्ध्वभागेऽग्निना दग्धे वृक्षे च स्थिते विरुवति काके बधो भवति ॥ ३६ ॥

अन्यदप्याह ।

कण्टकिमिश्रे सौम्ये सिद्धिः कार्यस्य भवति कलहश्च ।
कण्टकिनि भवति कलहो वल्लीपरिवेष्टिते बन्धः ॥ ३७ ॥

सौम्ये सौम्यवृक्षे सक्षीरे सफले कण्टकिमिश्रे सकण्टके वृक्षे स्थिते काके कार्यस्य सिद्धिर्भवति तत्र च कलहो भवति । तथा काके कण्टकिनि स्थिते कलहो भवति नार्थसिद्धिः । वल्लीभिः परिवेष्टिते वृक्षे बन्धो बन्धनं भवति ॥ ३७ ॥

अन्यदप्याह ।

छिन्नाग्रेऽङ्गच्छेदः कलहः शुष्कद्रुमस्थिते ध्वाङ्क्षे ।
पुरतश्च पृष्ठतो वा गोमयसंस्थे धनप्राप्तिः ॥ ३८ ॥

छिन्नं कल्पितमग्रं प्रान्तं यस्मिन् वृक्षे तत्रस्थे काकेऽङ्गच्छेदो भवति । तथा ध्वाङ्क्षे काके शुष्कद्रुमसंस्थिते नीरसवृक्षस्थिते कलहो भवति । पुरतोऽग्रतः पृष्ठतः पश्चाद्वा गोमयसंस्थे धनप्राप्तिर्वित्तलाभो भवति ॥ ३८ ॥

अन्यदप्याह ।

मृतपुरुषाङ्गावयवस्थितोऽभिविरुवन् करोति मृत्युभयम् ।
भञ्जन्नस्थि च चञ्च्वा यदि विरुवत्यस्थिभङ्गाय ॥ ३९ ॥

मृतपुरुषाङ्गं मृतकशरीरावयवमन्यद्वाह्वादिकम् । तत्र च स्थितः । शवशरीरे तदवयवस्थितोऽभितः सम्मुखो यातुर्विरुवंश्च मृत्युभयं करोति । अस्थि चञ्च्वा भञ्जन् विदारयन् यदि विरुवति वाशते तदा यातुरस्थिभङ्गाय भवति ॥ ३९ ॥

अन्यदप्याह ।

रज्ज्वस्थिकाष्ठकण्टकिनिःसारशिरोरुहानने रुवति ।
भुजगगददंष्ट्रितस्करशस्त्राग्निभयान्यनुक्रमशः ॥ ४० ॥

रज्जुः प्रसिद्धा । अस्थि काष्ठं कण्टकिः प्रसिद्धः । निःसारा असाराः । शिरोरुहाः केशाः । काके रज्ज्वाद्यानने मुखे गृहीत्वा रुवति सत्यनुक्रमशो यथाक्रमं भुजगादीनां भयानि भवन्ति । तद्यथा । रज्जुमुखे काके विरुवति भुजगस्य सर्पस्य संबन्धि भयं भवति । अस्थिमुखे गदो रोगः । काष्ठमुखे

दंष्ट्रिभयम् । दंष्ट्रिणो वराहादयः । तेभ्यो भयं भवति । कण्टकिमुखे तस्करभयम् । निःसारमुखे शस्त्रभयम् । शिरोरुहमुखे काकेऽग्निभयं भवति ॥ ४० ॥

उक्तं च ।

काष्ठरज्ज्वस्थिनिःसारकेशकण्टकिभृद्रुवन् ।
व्यालाहिव्याधिशस्त्राग्नितस्करेभ्यो भयङ्करः ॥

अन्यदप्याह ।

**सितकुसुमाशुचिमांसाननेऽर्थसिद्धिर्यथेप्सिता यातुः ।**
**पक्षौ धुन्वन्नूर्ध्वानने च विघ्नं मुहुः क्वणति ॥ ४१ ॥**

सितकुसुमं श्वेतपुष्पम् । अशुचि अमेध्यम् । मांसमामिषम् । एतान्याननेमुखे गृहीत्वा यदि क्वणति विरुवति तदा यातुर्यथेप्सिता यथाभिलषिताऽर्थसिद्धिर्भवति । पक्षावङ्गरुहौ धुन्वन् कम्पयंस्तथाभूते काके ऊर्ध्वमुखे च क्वणति मुहुः शीघ्रमेव यात्राविघ्नं करोति ॥ ४१ ॥

अन्यदप्याह ।

**यदि शृङ्खलां वरत्रां वल्लीं वादाय वाशते बन्धः ।**
**पाषाणस्थे च भयं क्लिष्टापूर्वाध्विकयुतिश्च ॥ ४२ ॥**

यदि शृङ्खलां लोहमयीं वरत्रां चर्ममयीं रज्जुं वल्लीं वादाय गृहीत्वा वाशते विरौति तदा यातुर्बन्धो भवति । पाषाणस्थेऽश्मनि स्थिते काके भयं भवति । क्लिष्टेन क्लेशसंयुक्तेन अपूर्वेण यो न कदापि निर्दिष्टस्तेनाध्विकेन पान्थेन युतिः संयोगो भवति ॥ ४२ ॥

अन्यदप्याह ।

**अन्योऽन्यभक्ष्यसङ्क्रामितानने तुष्टिरुत्तमा भवति ।**
**विज्ञेयः स्त्रीलाभो दम्पत्योर्विरुवतोर्युगपत् ॥ ४३ ॥**

अन्योऽन्यं परस्परं भक्ष्यसङ्क्रामितानने काके भक्ष्यक्षिप्रमुखे यातुरुत्तमा प्रधाना तुष्टिर्भवति । दम्पत्योर्जायापत्योर्युगपत् तुल्यकालं कृत्वा विरुवतोः क्वणतोः स्त्रीलाभो योषित्प्राप्तिर्विशेषो विज्ञातव्यः ॥ ४३ ॥

अन्यदप्याह ।

**प्रमदाशिरउपगतपूर्णकुम्भसंस्थेऽङ्गनार्थसम्प्राप्तिः ।**
**घटकुट्टने सुतविपद्घटोपहदनेऽन्नसम्प्राप्तिः ॥ ४४ ॥**

प्रमदा स्त्री । तस्याः शिरउपगतो मूर्ध्नि स्थितो यः पूर्णकुम्भस्तत्रस्थे काके ऽङ्गनार्थसम्प्राप्तिः । स्त्रीलाभोऽर्थप्राप्तिश्च भवति । घटकुट्टने कुम्भताडने सुतविपत् पुत्रमरणं भवति । घटोपहदने कुम्भपुरीषकरणेऽन्नसम्प्राप्तिर्भोजन-लाभो भवति ॥ ४४ ॥

अन्यदप्याह ।

**स्कन्धावारादीनां निवेशसमये रुवंश्चलत्पक्षः ।**
**सूचयतेऽन्यत्स्थानं निश्चलपक्षस्तु भयमात्रम् ॥ ४५ ॥**

यात्रायां गतो राजा यत्र निवसति स स्कन्धावारः । स्कन्धावारादीना-म् । आदिग्रहणात् प्रवासिनामन्येषामपि जनानां निवेशसमये निवेशनकाले । निवेशनमावासकादीनां रचनम् । तस्मिंश्चलत्पक्षः चलिताङ्गरुहः काको रुवन् शब्दं कुर्वन् । अन्यत् द्वितीयं स्थानं सूचयते कथयति । यत्रान्यत्र भवद्भि-र्वस्तव्यम् । निश्चलपक्षस्तु रुवन् भयमात्रं सूचयते नान्यत् स्थानम् ॥ ४५ ॥

तथा च पराशरः ।

सेनानिविष्टः सार्थे वा वासो दृष्टो न वाश्यते ।
तस्य देशप्रयातस्य भयमात्रोपजायते ॥

अन्यदप्याह ।

**प्रविशद्भिः सैन्यादीन् सगृध्रकङ्कैर्विनामिषं ध्वाङ्क्षैः ।**
**अविरुद्धैस्तैः प्रीतिर्द्विषतां युद्धं विरुद्धैश्च ॥ ४६ ॥**

ध्वाङ्क्षैः काकैः । सगृध्रकङ्कैः गृध्रकङ्कसहितैः । विनामिषं मांसं विना । सैन्यादीन् सैन्यपुरग्रामान् प्रविशद्भिस्तैश्च परस्परमविरुद्धैर्विरोधमकुर्व-द्भिर्द्विषता शत्रुणा सह प्रीतिर्भवति । तैश्च विरुद्धैः सकलहैर्द्विषता सह युद्धं सङ्ग्रामो भवति ॥ ४६ ॥

अन्यदप्याह ।

**बन्धः सूकरसंस्थे पङ्काक्ते सूकरे द्विकेऽर्थाप्तिः ।**
**क्षेमं खरोष्ट्रसंस्थे केचित् प्राहुर्वधं तु खरे ॥ ४७ ॥**

सूकरसंस्थे द्विके काके बन्धो बन्धनं भवति । पङ्काक्ते पङ्केन कर्दमेन लिप्ते सूकरे स्थितेऽर्थाप्तिरर्थलाभो भवति । खरगते गर्दभस्थे । उष्ट्र-

गते करभस्थे काके क्षेमं भवति । केचित् तु मुनयः खरसंस्थे बधं मरणं प्राहुः कथयन्ति ॥ ४७ ॥

उक्तं च ।

बधबन्धकरः क्रोशन् खरसूकरपृष्ठगः ।
पङ्कदिग्धशरीरस्य वराहस्योपरिस्थितः ॥
वायसः शस्यते यातुस्तूष्णीभूतो रुवन्नपि ।

अन्यदप्याह ।

**वाहनलाभोऽश्वगते विरुवत्यनुयायिनि क्षतजपातः ।**
**अन्येऽप्यनुव्रजन्तो यातारं काकवद्विहगाः ॥ ४८ ॥**

अश्वगते तुरगस्थे काके विरुवति वाहनानामश्वादीनां लाभो भवति । अनुयायिनि पश्चाद्गम्यमाने काके विरुवति यातुः क्षतजपातो रक्तस्य पातः पतनं भवति । अन्येऽपरे येऽप्यनुक्ता विहगाः पक्षिणस्ते यातारमनुव्रजन्तः पश्चाद्गच्छन्तः काकवद्वायसवज्ज्ञेया ज्ञातव्याः । यथा काकस्य फलं पूर्वमुक्तं तथा तेषामपीति ॥ ४८ ॥

तथा च काश्यपः ।

उलूककङ्कप्लवगा गृध्रश्येनादयश्च ये ।
मांसाशिनश्च विहगास्तुल्या वायसचेष्टितैः ॥

अथ विशेषमाह ।

**द्वात्रिंशत्प्रविभक्ते दिक्चक्रे यद्यथा समुद्दिष्टम् ।**
**तत्तत् तथा विधेयं गुणदोषफलं यियासूनाम् ॥ ४९ ॥**

दिक्चक्रे दिङ्मण्डले द्वात्रिंशद्भागप्रविभक्ते यद्यत्फलं यथा येन प्रकारेण समुद्दिष्टं कथितं तत्तत् फलं तथा तेनैव प्रकारेण यियासूनां जिगमिषूणां गुणदोषफलं विधेयं वक्तव्यम् । यथा । प्राच्यां शान्तायां वा शुभचेष्टे पूजाफलं महद्वक्ति । अशुभचेष्टायां मध्यस्थं तस्यामेव दीप्तायां क्रूरचेष्टो नृपाद्भयमेवमन्यास्वपि विज्ञेयम् ॥ ४९ ॥

अथ रुतलक्षणफलमाह ।

**का इति काकस्य रुतं स्वनिलयसंस्थस्य निष्फलं प्रोक्तम् ।**
**कव इति चात्मप्रीत्यै केति रुते स्निग्धमित्राप्तिः ॥ ५० ॥**
**करेति कलहं कुरुकुरु च हर्षमथ कटकटेति दधिभक्तम् ।**
**केके विरुतं कुकु वा धनलाभं यायिनः प्राह ॥ ५१ ॥**

का इति काकस्य रुतमिति । काकस्य वायसस्य स्वनिलयसंस्थस्य आत्मीयनीडस्थितस्य का—इति यद्रुतं तन्निष्फलं प्रोक्तं कथितम् । तस्य च शुभाशुभं फलं न किञ्चिदित्यर्थः । कव इति रुतं चात्मप्रीत्यै स्वप्रीतये भवति । क—इति रुते स्निग्धस्य वल्लभस्य मित्रस्य सुहृद आप्तिः प्राप्तिर्भवति ॥ ५० ॥

कर—इति रुते कलहः कलिर्भवति । कुरुकुरु च रुते हर्षं भवति । अथशब्दश्चार्थे । कटकटेति रुते दधिभक्तं भोजनं भवति । केके—इति विरुते कुकु इति विरुते वा यायिनो गच्छतो धनलाभं वित्तप्राप्तिं प्राह कथयति ॥ ५१ ॥

अन्यदप्याह ।

**खरेखरे पथिकागममाह कखाखेति यायिनो मृत्युम् ।**
**गमनप्रतिषेधिकमा कखला सद्योऽभिवर्षाय ॥ ५२ ॥**

खरेखरे इति रुते पथिकस्य पान्थस्यागमो भवति इत्याह कथयति वायसः । कखाखेति—रुते यायिनो मृत्युं मरणमाह । आ—इति रुतं गमनप्रतिषेधिकं गमनविघ्नं करोति । कखला इति रुतं सद्योऽभिवर्षाय तद्यस्मिन्नेवाहनि वर्षतीत्यर्थः ॥ ५२ ॥

अन्यदप्याह ।

**काकेति विघातः काकटीति चाहारदूषणं प्राह ।**
**[1]प्रीत्यास्पदं कवकवेति बन्धमेवं कगाकुरिति ॥ ५३ ॥**

काक—इति विरुते विघातो विनाशो भवति । काकटीति विरुते आहारस्य भोजनस्य दूषणं सदोषत्वं विषादिकेन प्राह कथयति । कवकव इति रुते प्रीत्यास्पदम् । प्रीत्याः स्नेहस्य आस्पदं स्थानं प्रीत्यास्पदम् । केनचित्

---

[1] प्रीत्या स्वप्नमती कवकव—इति पाठान्तरम् ।

सह प्रीतिर्भवति । अन्ये प्रीत्या स्वदम्पती कवकवेति पठन्ति । यथा स्वदम्पती भार्यापती कवकवेति प्रीत्या स्नेहेन कवकवेति रुतं कुर्वतः । एतन्न शोभनम् ।

यस्माद्गर्गः ।

रुते कवकवेति स्यात् प्रस्थिते वायसस्य तु ।
अपूर्वप्रीतये तच्च धनलाभाय निर्दिशेत् ॥

एवं कगाकु इति रुते बन्धो बन्धनं भवति ॥ ५३ ॥

अन्यदप्याह ।

करगो विरुते वर्षं गुडवत् त्रासाय वडिति वस्त्राप्तिः ।
कलयेति च संयोगः शूद्रस्य ब्राह्मणैः साकम् ॥ ५४ ॥

करगो इति रुते वृष्टिर्वर्षणं भवति । गुड इति त्रासाय भयाय भवति । वड् इति रुते वस्त्रप्राप्तिरम्बरलाभः । कलय इति च रुते शूद्रस्य शूद्रजातेर्ब्राह्मणैः साकं सह संयोगो भवति ॥ ५४ ॥

अन्यदप्याह ।

कडिति फलाप्तिः फलदा-
हिदर्शनं टङ्गिति प्रहाराः स्युः ।
स्त्रीलाभः स्त्रीति रुते
गडिति गवां पुडिति पुष्पाणाम् ॥ ५५ ॥

कड्डिति रुते फलाप्तिरभीष्टफलप्राप्तिर्भवति । अथवा फलाप्तिः फललाभः । तथा फलदाहिदर्शनं फलप्रदस्याहेः शुभफलप्रदस्य सर्पस्य दर्शनमवलोकनं भवति । अथवा फलाप्तिर्भवति सदाप्तिः । फलदा फलप्रदा ततोऽपि विशिष्टतरं फलं लभ्यते । तथाऽहिदर्शनं भवति । टङ्गिति रुते प्रहारा घाताः स्युर्भवेयुः । स्त्री–इति रुते स्त्रीलाभो भवति । गडिति रुते गवां लाभः । पुडिति रुते पुष्पाणां लाभः ॥ ५५ ॥

अन्यदप्याह ।

युद्धाय टाकुटाक्किति गुहु वह्निभयं कटेकटे कलहः ।
टाकुलि चिघिटचि केकेकेति पुरं चेति दोषाय ॥ ५६ ॥

टाकुटाक्किति रुतं युद्धाय सङ्ग्रामाय भवति । गुडु इति रुते वह्नि-भयमग्निभयं भवति । कटेकटे–इति रुते कलहः । टाकुलि चिचिटिचि केकेकेति पुरं चेति इत्येवं रुतं दोषाय भवति ॥ ५६ ॥

अन्यद्विशेषमाह ।

काकद्वयस्यापि समानमेतत्
फलं यदुक्तं रुतचेष्टिताद्यैः ।
पतत्रिणोऽन्येपि यथैव काको
वन्याः श्ववच्चोपरिदंष्ट्रिणो ये ॥ ५७ ॥

रुतचेष्टिताद्यैः । रुतेन चेष्टितेनाऽऽसनाद्युपवेशनेन चैकस्य काकस्य यत् फलमुक्तं तत्काकद्वयस्य । अपिशब्दात् त्रयस्य चतुष्कस्य च समानं वाच्यम् । अन्ये येऽत्रानुक्ताः पतत्रिणः पक्षिणस्तेऽपि तेन प्रकारेण ज्ञेयाः । वन्या वने भवाः प्राणिनो ये नोक्तास्ते श्ववत्सारमेयवत् । ये चोपरिदंष्ट्रिणः सूकरादयस्ते श्ववच्छुनो यत्फलमुक्तं तत् तेषामपि ॥ ५७ ॥

तथा च पराशरः ।

शकुनाः पुंसनामानो वायसेन प्रकीर्तिताः ।
तथैव स्त्रीसनामानः पिपील्या परिकीर्तिताः ॥

अथान्येषु प्राणिषु चेष्टितमाह ।

स्थलसलिलचराणां व्यत्ययो मेघकाले
प्रचुरसलिलवृष्ट्यै शेषकाले भयाय ।
मधु भवननिलीनं तत्करोत्याशु शून्यं
मरणमपि च नीला मक्षिका मूर्ध्नि लीना ॥ ५८ ॥

मेघकाले वर्षासमये स्थलसलिलचराणां व्यत्ययो विपरीतः । स्थल-चरा अजादयो जलचारिणः । जलचरा मत्स्यादयः स्थलचारिणो यदा भवन्ति तदा ते प्रचुरसलिलवृष्ट्यै प्रभूतवृष्टये भवन्ति । शेषकाले वर्षातोऽ-न्यस्मिन् समये स्थलसलिलचराणां व्यत्ययो भयाय भवति । मधुशब्देन मधुकर्यो मक्षिका उच्यन्ते । मधु भवने स्वयमेव निलीनं संश्लिष्टं तदेव

भवनमाशु क्षिप्रं शून्यं निर्जनं करोति । नीला नीलवर्णा मक्षिका मूर्ध्नि शिरसि जन्तोर्लीना श्लिष्टा मरणं मृत्युमपि करोति ॥ ५८ ॥

पिपीलिकाचेष्टितमाह ।

विनिक्षिपन्त्यः सलिलेऽण्डकानि
पिपीलिका वृष्टिनिरोधमाहुः ।
तरुं स्थलं वापि नयन्ति निम्नाद्-
यदा तदा ताः कथयन्ति वृष्टिम् ॥ ५९ ॥

पिपीलिकाः सलिले जले अण्डकानि विनिक्षिपन्त्यो वृष्टिनिरोधं वृष्ट्यभावमाहुः कथयन्ति । निम्नात् तलात् तरुं वृक्षं स्थलमुच्चस्थानं वापि यदि नयन्ति तदा वृष्टिं वर्षणं कथयन्ति वदन्ति ताः पिपीलिकाः ॥ ५९ ॥

अथ शकुननिश्चयमाह ।

कार्यं तु मूलशकुनेऽन्तरजे तदह्नि
विन्द्यात् फलं नियतमेवमिमे विचिन्त्याः ।
प्रारम्भयानसमयेषु तथा प्रवेशे
ग्राह्यं क्षुतं न शुभदं क्वचिदप्युशन्ति ॥ ६० ॥

मूलशकुनः प्रथमशकुनः । तस्मिन् कार्यं यात्राकार्यं विन्द्याज्जानीयात् । तस्मिन् शुभे यात्रासिद्धिः । अशुभेऽसिद्धिरिति । अन्तरजे तदह्नीति । यातुर्मूलशकुनात् परतो यात्रापरिसमाप्तिं यावत् तदन्तरे मध्ये योऽन्यः शकुनः शुभाशुभो भवति तदन्तरजे तस्मिन्नन्तरजे मध्यजाते तस्य यत् फलं तदह्नि तस्मिन्नेव दिने विन्द्यात् । इमेऽस्मिन्नध्याये शकुना उक्तास्ते नियतं सर्वकालं विचिन्त्याश्चिन्तनीयाः । प्रारम्भे सर्वकर्मणां यानसमये यात्राकाले तथा प्रवेशे गृहप्रवेशादौ । एतेषु कार्येषु सर्वेषु शकुनाश्चिन्तनीयाः । तथा क्षुतं नाशाशब्दः सर्वथा ग्राह्यम् । क्षुतं श्रुत्वा न किञ्चित् कार्यमित्यर्थः । यतः क्वचिदपि न शुभदमुशन्ति कथयन्ति । सर्वत्राशुभं क्षुतमिति ॥ ६० ॥

एतेषामेव शकुनानां प्रशंसार्थमाह ।

शुभं दशापाकमविघ्नसिद्धिं
मूलाभिरक्षामथवा सहायान् ।

**दुष्टस्य संसिद्धिमनामयत्वं**
**वदन्ति ते मानयितुर्नृपस्य ॥ ६१ ॥**

ते शकुना नृपस्य राज्ञो मानयितुः पूजयितुस्तेषां मानयति पूजयति । तस्य शकुनं वदन्ति कथयन्ति । शुभं शोभनं दशापाकं दशाफलमविघ्नसिद्धिमविघ्नेन कार्याणां साधनम् । मूलाभिरक्षा। मूलं मूलस्थानम् । तस्याभिरक्षामभि मुख्येन पालनम् । अथवा पथि गच्छतः सहायान् सार्थकान् । दुष्टस्य दुःसाध्यस्य शत्रोः संसिद्धिं सुखेनाक्लेशेन साधनम् । अनामयत्वं नीरोगत्वमेतत्सर्वं शुभसूचनं वदन्ति कथयन्ति—इति ॥ ६१ ॥

अथानिष्टशकुनविरुते दृष्टे यत्कर्तव्यं तदाह ।

**क्रोशादूर्ध्वं शकुनविरुतं निष्फलं प्राहुरेके**
**तत्रानिष्टे प्रथमशकुने मानयेत् पञ्च षट् च ।**
**प्राणायामान्नृपतिरशुभे षोडशैव द्वितीये**
**प्रत्यागच्छेत् स्वभवनमतो यद्यनिष्टस्तृतीयः ॥ ६२ ॥**

एके आचार्याः काश्यपादयः क्रोशादूर्ध्वं क्रोशादनन्तरं यच्छकुनविरुतं तन्निष्फलं प्राहुरुक्तवन्तः ।

तथा च काश्यपः ।

क्रोशादनन्तरं यत् स्याच्छुभं वा यदि वाऽशुभम् ।
निष्फलं तच्च विज्ञेयं शकुनानां विचेष्टितम् ॥

एवं क्रोशं यावच्छ्रूयमाणं सफलं क्रोशादनन्तरं निष्फलमिति । एतदाचार्यस्य नाभिप्रेतम् । तत्रानिष्टे प्रथमशकुन इति । तत्र तस्मिन् यात्राकाले प्रथमशकुनेऽनिष्टे अशुभे सति नृपती राजा विहितमना निर्मलचित्तः पञ्च षट् च एकादश प्राणायामान् मानयेत् पूजयेत् । कुर्यादित्यर्थः ।

अथ प्राणायामलक्षणमाह ।

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥

व्याहृतयः सप्त भवन्ति । ॐभूः । ॐभुवः । ॐस्वः । ॐमहः । ॐजनः । ॐतपः । ॐसत्यम् । प्रणवः ॐकारः । शिरः आपोज्योती

रसोमृतम् । गायत्री प्रसिद्धा चतुर्विंशत्यक्षरा । आयतप्राणः परित्यक्तश्वासः । त्रिः त्रीन् वारान् पठेत् । अशुभे षोडशैव द्वितीये । द्वितीये शकुने अशुभे षोडश प्राणायामान् मानयेत् पूजयेत् ततो व्रजेत्। अथ यदि तृतीयः शकुनोऽनिष्टोऽशुभः तदा स्वभवनमात्मीयगृहं प्रत्यागच्छेत् प्रतीपमागच्छेदिति ॥ ६२ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ शाकुने वायसविरुतं नाम चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

## अथ शाकुनोत्तरं व्याख्यायते ।

**दिग्देशचेष्टास्वरवासरर्क्ष-**
**मुहूर्त्तहोराकरणोदयांशान् ।**
**चरस्थिरोन्मिश्रबलाबलं च**
**बुद्ध्वा फलानि प्रवदेद्रुतज्ञः ॥ १ ॥**

दिक् पूर्वाद्याद्यारिताद्या च । देशः स्थानं शुभमशुभं वा। चेष्टा विहरणं व्यापारः। स्वरः शब्दो दीप्तः शान्तश्च । वासरो दिनम् । ग्रहचारतः शुभमशुभं च । ऋक्षं नक्षत्रं ध्रुवमृदुदारुणक्षिप्रोग्रचरसाधारणम् । मुहूर्तः शिवादिकः । होरा राश्यर्धम् । कालहोराश्च । शुभग्रहस्य संबन्धिन्योऽशुभस्य वा । करणं बवादिकरणं शुभमशुभं वा । उदयो लग्नम् । अंशो भागस्तेन द्रेष्काणनवांशद्वादशांशत्रिंशद्भागात्मकः । तथा चरा मेषकर्कटतुलमकराः । स्थिरा वृषसिंहवृश्चिककुम्भाः । उन्मिश्रा द्विस्वभावाः । ते च मिथुनकन्याधन्विमीनाः । एषां शकुनानां राशीनां च बलाबलं बुद्ध्वा रुतज्ञः शकुनरुतज्ञः फलानि प्रवदेद्ब्रूयादित्यर्थः ॥ १ ॥

अथ तद्भेदप्रदर्शनार्थमाह ।

**द्विविधं कथयन्ति संस्थिताना-**
**मागामिस्थिरसञ्ज्ञितं च कार्यम् ।**
**नृपदूतचरान्यदेशजाता-**
**न्यभिघातः स्वजनादि चागमाख्यम् ॥ २ ॥**

शकुनसंस्थितानामेकदेशसंस्थानां पुंसां द्विविधं द्विप्रकारं कार्यं प्रवदन्ति कथयन्ति । कीदृशमागामि स्थिरसञ्ज्ञितं च । आगाम्येष्यत् । स्थिरं

च वर्तमानमतीतं वा । तथान्यानि कार्याणि नृपदूतचरान्यदेशजातानि। नृपो राजा । दूतो गमागमिकः । चरः प्रसिद्धो गूढपुरुषः । अन्यदेशः परदेशः । एभ्यो जातान्युत्पन्नानि कथयन्ति । तथाभिघात उपद्रवः । स्वजनानां बन्धुसुहृदां चागम आगमनं तस्य चागतस्याख्यां नाम कथयन्ति ॥ २ ॥

अथ स्थिरचराणां ज्ञानमाह ।

**उद्बद्धसङ्ग्रहणभोजनचौरवह्नि-**
**वर्षोत्सवात्मजबधाः कलहो भयं च ।**
**वर्गः स्थिरोऽयमुदयेन्दुयुते स्थिरर्क्षे**
**विन्द्यात् स्थिरं चरगृहे च चरं यदुक्तम् ॥ ३ ॥**

उद्बद्धं संलग्नं तत्रैव संस्थितं गमागमवर्जितम् । सङ्ग्रहणं संयोगः केनचित् सह । भोजनमशनम् । चौरास्तस्कराः । वह्निरग्निः । वर्षो वर्षणम् । उत्सवो विवाहादिः । आत्मजः पुत्रः । बधो मरणम् । एते । तथा कलहो डमरम् । भयं भीतिश्च । अयं वर्गः स्थिरः । चेच्छब्दोऽत्र लुप्तो द्रष्टव्यः । एष वर्गो यदि स्थिरस्थानेषूत्पन्नः स्थिरस्थानस्थितेन शकुनेन सूचितस्तदा चरसञ्ज्ञः । एतदुक्तं भवति । प्रागुक्तेन चेष्टितेन वक्ष्यमाणेनैव यद्येतानि कार्याणि शकुनेन सूचितानि तदैतानि वृत्तान्युत वेतानि एष्याणीत्येतदर्थमुक्तम् । उदयेन्दुयुते स्थिरर्क्षे इति । यद्येष वर्गः स्थिरो भवति तथोदयलग्ने स्थिरराशिर्भवति । इन्दुयुतं चन्द्रसंयुक्तं स्थिरर्क्षं स्थिरराशिर्भवेत् तदैव तत्स्थितं वर्तमानं तस्मिन्नेवाहनि भवति भूतं वेति विन्द्याज्जानीयात् । चरगृहे लग्ने चरराशाविन्दुसंयुक्ते चरस्थानस्थे च शकुने यदुक्तमुद्बन्धादि तत्सर्वमेव चरं विन्द्यात् पुरस्ताद्भविष्यतीति ॥ ३ ॥

अथ स्थिरचरयोर्लक्षणमाह ।

**स्थिरप्रदेशोपलमन्दिरेषु**
**सुरालये भूजलसन्निधौ च ।**
**स्थिराणि कार्याणि चराणि यानि**
**चलप्रदेशादिषु चागमाय ॥ ४ ॥**

स्थिरप्रदेश: स्थिरस्थानम्। निश्चलम्। उपलोऽश्मं। मन्दिरं गृहम्। एतेषु स्थानेषु। सुरालये देवगृहे। भूजलसन्निधौ भूमौ तथा जलसन्निधौ तत्समीपे। एतेषु स्थानेषु शकुनेषु स्थिराणि कार्याणि शुभाशुभानि भवन्ति। ये शकुनाश्चलप्रदेशादिषु चलेषु स्थिरेषु प्राणिष्वादिग्रहणात्तृणेषु तृणकाष्ठादिषु यानि चराणि। ते आगमायागामिने पक्षावसानानि पुन: पुरस्ताद्भविष्यन्ति ॥ ४ ॥

अथ वर्षज्ञानमाह।

आप्योदयर्क्षवरुणदिग्जलेषु
पक्षावसानेषु च ये प्रदीप्ताः।
सर्वेऽपि ते वृष्टिकरा रुवन्तः
शान्तोऽपि वृष्टिं कुरुतेऽम्बुचारी ॥ ५ ॥

आप्योदया: कर्कटमकरमीना:। आप्यमृक्षं पूर्वाषाढा शतभिषक् च। आप्यं मुहूर्तं जलसञ्ज्ञं वारुणा च। आप्या दिग्वारुणी यत्र जलं सन्निहितं तज्जलस्थानम्। एतेष्वाप्योदयर्क्षवरुणदिग्जलेषु ये स्थिता उत्पाता: शकुनास्तथा पक्षावसाने अमावस्यायां पौर्णमास्यां वान्ते ये स्थितास्ते च दीप्ता देवदीप्ता: क्रियादीप्ताश्च भूता रुवन्त: क्रोशन्त: सर्वे निश्शेषा अपि वृष्टिकरा वृष्टिं वर्षणं कुर्वन्ति। अम्बुचारी य: शकुनो जलचर: स शान्तोऽप्याप्यादिषु स्थितो वृष्टिं कुरुते ॥ ५ ॥

अथाग्नेयभयदोषज्ञानमाह।

आग्नेयदिग्लग्नमुहूर्त्तदेशे-
ष्वर्कप्रदीप्तोऽग्निभयाय रौति।
विष्ट्यां यमर्क्षोदयकण्टकेषु
निष्पत्रवल्लीषु च दोषकृत् स्यात् ॥ ६ ॥

आग्नेयी दिक् पूर्वदक्षिणा। आग्नेयलग्ना: क्रूरराशय:। यथा मेषसिंहवृश्चिकमकरकुम्भा:। आग्नेयो मुहूर्तोऽग्निनामा। आग्नेयमपि नक्षत्रं कृत्तिका:। आग्नेयो देशो यत्राग्निरस्ति। एतेषु स्थानेष्वर्कप्रदीप्त: शकुनो विरौति क्रोशति यदि तदाग्निभयाय भवति। विष्ट्यामिति। विष्ट्यां करणे। यम: सौर:। तस्यर्क्षे मकरकुम्भौ। तयोरुदये। तथा कण्टकेषु कण्ट-

किवृक्षेषु । तथा निष्पत्रासु पत्ररहितासु वल्लीषु स्थितोऽर्कप्रदीप्तो दोषकृद्दोषं करोति ॥ ६ ॥

अथ कलहज्ञानमाह ।

ग्राम्यः प्रदीप्तः स्वरचेष्टिताभ्या-
मुग्रो रुवन् कण्टकिनि स्थितश्च ।
भौमर्क्षलग्ने यदि नैर्ऋतीं च
स्थितोऽभितश्चेत् कलहाय दृष्टः ॥ ७ ॥

ग्रामे भवो ग्राम्यः शकुनः स च स्वरचेष्टिताभ्यां प्रदीप्तः । स्वरेण शब्देन चेष्टया वा प्रदीप्तः । उग्रस्तीव्रो रुवन् क्रोशन् । कण्टकिनि सकण्टके वृक्षे स्थितः । भौमर्क्षे मेषवृश्चिकयो तयोरन्यतमे लग्ने । स च शकुनो यदि नैर्ऋतीं च स्थितो भवति । नैर्ऋत्यां दिशि समवस्थितः । अभितः सम्मुख उभयतश्चेद्यदि वामद-क्षिणपार्श्वयोस्तदा स दृष्टोऽवलोकितः कलहाय भवति कलहं करोति ॥ ७ ॥

अथ सङ्ग्रहणमाह ।

लग्नेऽथवेन्दोर्भृगुभांशसंस्थे
विदिक्स्थितोऽधोवदनश्च रौति ।
दीप्तः स चेत् सङ्ग्रहणं करोति
[1]योन्या तया या विदिशि प्रदिष्टा ॥ ८ ॥

अथवा इन्दोर्लग्ने कर्कटे तस्मिंश्च भृगुभांशसंस्थे । भृगोः शुक्रस्य भांशो नवांशको भृगुभांशः । कर्कटस्य तुलनवांशक इत्यर्थः । तस्मिँल्लग्नस्थे शकुनो विदिक्स्थितो विदिशमवस्थितः । स चाधोवदनोऽधोमुखश्च विरौति शब्दं करोति । स चेद्यदि दीप्तः स्यात्प्रदीप्तः शब्ददीप्तश्च तदा सङ्ग्रहणं संयोगं करोति कया स्त्रिया सह । योन्या तया वा विदिशि प्रदिष्टा तस्यां विदिशि यस्या योनिरुत्पत्तिः प्रदिष्टोक्ता स्त्रीणां विकल्पे बृहती कुमारीत्यादि । तया सह सङ्ग्रहणं करोति । केषाञ्चित् पाठो योऽन्योऽनुयायाद्दिशि सम्प्रदिष्टः । तस्यां दिशि अनुपश्चात् सम्प्रदिष्टः सम्यक्प्रेषितो योऽन्योऽपरो यायाद्गच्छेत् तेन सह संयोग इति ॥ ८ ॥

[1] योऽन्योऽनुयायाद्दिशि सम्प्रदिष्टः-इति पाठान्तरम् ।

पुनरप्याह ।

पुंराशिलग्ने विषमे तिथौ च
दिक्स्थः प्रदीप्तः शकुनो नराख्यः ।
वाच्यं तदा सङ्ग्रहणं नराणां
मिश्रे भवेत् षण्डकसम्प्रयोगः ॥ ९ ॥

पुंराशयो मेषादयः षड्विषमा मेषमिथुनसिंहतुलाधन्विकुम्भाः । विषमास्तिथयः सङ्ख्यया प्रतिपत् तृतीया पञ्चमी सप्तमी नवमी एकादशी त्रयोदशी पञ्चदशी चेति । नराख्यः पुरुषाख्यः शकुनो दिक्स्थितो दिशि पूर्वस्यां दक्षिणस्यां पश्चिमायामुत्तरस्यां वा स्थितः प्रदीप्तश्च यदि भवति तदा नराणां पुरुषाणां वा सङ्ग्रहणं संयोगो वाच्यं वक्तव्यम् । मिश्रे भवेत् षण्डकसम्प्रयोगः । पुंराश्यादिषु वर्गे मिश्रे स्थिते पुरुषराशिवर्गे लग्ने समायां तिथौ व्यत्यये वा । विदिक्स्थितः पुरुषः शकुनो विदिक्स्थितः स्त्रीसञ्ज्ञो वा तदा षण्डकसम्प्रयोगो नपुंसकेन सह समायोगो भवति ॥ ९ ॥

पुनरप्याह ।

एवं रवेः क्षेत्रनवांशलग्ने
लग्ने स्थिते वा स्वयमेव सूर्ये ।
दीप्तोऽभिधत्ते शकुनो विरौति
पुंसः प्रधानस्य हि कारणं तत् ॥ १० ॥

पुंराशिवर्ग इति सर्वमनुवर्त्तते । एवमनेन प्रकारेण रवेरादित्यस्य क्षेत्रनवांशलग्ने । रविक्षेत्रं सिंह एव । तात्कालिकगते रविक्षेत्रे सिंहेऽथवान्यस्मिन् राशौ लग्नगते तत्काले सिंहनवांशके । अथवा स्वयमेव सूर्ये रवौ तात्कालिके लग्ने स्थिते दीप्तः शकुनो विरौति क्रोशते । तदा प्रधानस्य पुंसो मनुष्यस्य तत्कारणमागमनमभिधत्ते करोति ॥ १० ॥

अथ प्रकारान्तरेण कर्मणां विधानमाह ।

प्रारभ्यमाणेषु च सर्वकार्येष्वर्कान्विताद्द्वादृगणयेद्विलग्नम् ।
सम्पद्विपच्चेति यथा क्रमेण सम्पद्विपच्चेति तथैव वाच्या ॥ ११ ॥

सर्वेकार्येषु सर्वकर्मसु प्रारभ्यमाणेषु क्रियमाणेषु अर्कान्वितांशात् अर्क आदित्यस्तेनान्वितं युक्तं यदूं राशिस्तस्मादारभ्य विलग्नराशिं यावद्गणयेत्-इति सम्पद्विपच्चेति । यस्मिन् राशावर्कः स्थितः स सम्पत् ततो द्वितीयो विपत्सञ्ज्ञः । ततस्तृतीयः सम्पत्सञ्ज्ञः । एवं क्रमेण गणयेद्यावल्लग्नराशिम् । येन लग्नप्रारम्भस्तथा तेनैव प्रकारेण कर्मणां सम्पद्विपच्चेति वाच्या । एवं कार्याणां सम्पत्तिर्विपत्तिश्च विज्ञातव्या ॥ ११ ॥

अथागतस्याकृतिज्ञानमाह ।

काणेनाक्ष्णा दक्षिणेनैति सूर्ये
चन्द्रे लग्नाद्द्वादशे चेतरेण ।
लग्नस्थेऽर्के पापदृष्टेऽन्ध एव
कुब्जः स्वर्क्षे श्रोत्रहीनो जडो वा ॥ १२ ॥
क्रूरः षष्ठे क्रूरदृष्टो विलग्नाद्-
यस्मिन् राशौ तद्गृहाङ्के व्रणोऽस्य ।
एवं प्रोक्तं यन्मया जन्मकाले
चिह्नं रूपं तत्तदस्मिन् विचिन्त्यम् ॥ १३ ॥

काणेनाक्ष्णा दक्षिणेनेति । येन सह संयोगो जातः स च कीदृगिति । यदि तात्कालिकाल्लग्नात् सूर्य आदित्यो द्वादशे स्थाने स्थितः स पुरुषो दक्षिणेनाक्ष्णा काण एवाऽऽगच्छति । चन्द्रे लग्नाद्द्वादशे स्थाने स्थिते चेतरेण वामेनाक्ष्णा काण एवेति । अर्थादेवार्कचन्द्रयोर्द्वयोरपि द्वादशयोरन्ध एव । लग्नस्थेऽर्के प्राग्लग्नस्थिते सूर्ये पापाभ्यां भौमसौराभ्यामीक्षितेऽन्ध एव नेत्रहीनः । स्वर्क्षे सिंहलग्नगते तत्रस्थे चार्के कुब्जः श्रोत्रहीनो बधिरो जडो वा मूर्खः प्रभवति ॥ १२ ॥

क्रूरः षष्ठ इति । विलग्नात् स्पष्टलग्नात् षष्ठस्थाने क्रूरः पापग्रहः आदित्याङ्गारकशनैश्चराणामन्यतमो भवति स च क्रूरदृष्टः पापावलोकितो यदि भवति । तदा तद्गृहाङ्के । स च षष्ठस्थानस्थो राशिः कालपुरुषस्य यस्मिन् "का[1]लाङ्गानि वराङ्गमित्यादिना" ग्रन्थेनोक्तः । तस्मिन्नङ्गे तस्य व्रणो वक्त-

१ बृहज्जातके १-अध्यायस्य ४ श्लोकः ।

ध्यः । एवमनेन प्रकारेण जन्मकाले जातकसमये यदुक्तं कथितं चिह्नं लक्ष्म रूपमाकारं तत्सर्वमस्मिन् प्रकरणे चिन्त्यं चिन्तनीयम् । यथा[1] त्रिकोणगे "क्रूरे विबलैस्तथाऽपरैर्मुखाङ्घ्रिहस्तैर्द्विगुणैस्तदा भवेत् ।

तथा ।

सौम्यर्क्षांशे रविजरुधिरौ चेत् सदन्तोऽत्र जातः
कुब्जः स्वर्क्षे शशिनि तनुगे मन्दमाहेयदृष्टे ।
पङ्गुर्मीने यमशशिकुजैर्वीक्षिते लग्नसंस्थे
सन्धौ पापे शशिनि च जडः स्यान्न चेत् सौम्यदृष्टिः ॥
सौरशशाङ्कदिवाकरदृष्टे वामनको मकरान्त्यविलग्ने ।
धीनवमोदयगैश्च दृकाणैः पापयुतैरभुजाङ्घ्रिशिराः स्यात् ॥
रविशशियुते सिंहे लग्ने कुजार्किनिरीक्षिते
नयनरहितः सौम्यासौम्यैः सबुद्बुदलोचनः ।
व्ययगृहगतश्चन्द्रो वामं हिनस्त्यपरं रवि-
रशुभगदिता योगा याप्या भवन्ति शुभेक्षिताः ॥

एवमादि । तथानिष्टयोगाध्यायोक्तं सर्वं चिन्तनीयमिति ॥ १३ ॥

अथाऽऽगतस्याख्याज्ञानमाचार्यः करोति । तच्चाल्पबहुलं स्वल्पग्रन्थं मृदुबुद्धीनामगम्यमतोऽस्माभिस्तदेव बोधियाचायां य[3]वनेश्वरकृतश्चाक्षरकोशो व्याख्यायते ।

तत्रादावेव प्रयोजनप्रदर्शनार्थमाह ।

**अतः परं लोकनिरूपितानि**
**द्रव्येषु नानाक्षरसङ्ग्रहाणि ।**
**दृष्टप्रणीतानि विभाजितानि**
**नामानि केन्द्रक्रमशः प्रवक्ष्ये ॥ १ ॥**

अतोऽस्मात् प्रश्नज्ञानात् परमनन्तरं लोकनिरूपितानि लोकैर्जनैर्निरूपितानि सर्वलोकप्रसिद्धानि द्रव्येषु धातुमूलजीवेषु नानाक्षरेभ्योऽनेकप्रकार-

---

१ बृहज्जातके ४ अध्यायस्य १७ श्लोकः ।

२ बृहज्जातके ४ अध्यायस्य १८–२० श्लोकाः ।

३ धनेश्वरकृतः–इति ख. पु. पाठः ।

वर्णेभ्यः सङ्ग्रहो येषां तानि । सङ्ग्रह एकीकरणम् । इष्टप्रणीतानि इष्टै-रग्नेरायणार्कवसिष्ठपराशरमयप्रभृतिभिः प्रणीतानि निर्मितानि । विभाजितानि विभागीकृतानि नामानि सञ्ज्ञारूपाण्यभिधानानि केन्द्रक्रमशश्चतुष्टयपरिपाट्या प्रवक्ष्ये कथयिष्ये ॥ १४ ॥

तत्र क्रमज्ञानमाह ।

लग्नाम्बुसंस्थास्तनभःस्थितेषु
चैतेषु ये लग्नगता गृहांशाः ।
तेभ्योऽक्षराण्यात्मगृहाश्रयाणि
विन्द्याद्ग्रहाणां स्वगणक्रमेण ॥ २ ॥

लग्नसंस्थो विलग्नस्थः । अम्बुसंस्थश्चतुर्थस्थानस्थः । अस्तस्थितः सप्तमस्थः । नभःस्थितो दशमस्थः । एतेषु च चैतेषु राशिषु ये लग्नगता गृहांशाः । गृहाणां राशीनां मेषादीनां येषां नवभागा लग्नगताः प्राग्लग्नादिष्वाश्रितास्तेभ्यो गृहांशेभ्योऽक्षराणि वर्णा आत्मगृहाश्रयाणि आत्मगृहं स्वभवनमाश्रयः स्थानं येषां तानि विन्द्यात् जानीयात् ग्रहाणां रव्यादीनां स्वगणक्रमेण स्ववर्गपरिपाट्या ॥ २ ॥

अथ ग्रहाणां वर्गानाह ।

कवर्गपूर्वान् कुजशुक्रचान्द्रि-
जीवार्कजानां प्रवदन्ति वर्गान् ।
यकारपूर्वाः शशिनो निरुक्ता
वर्णास्त्वकारप्रभवा रवेः स्युः ॥ ३ ॥

कवर्गपूर्वान् कवर्गाद्यान् वर्गान् यथाक्रमेण कुजादीनां ग्रहाणां परिपाट्या प्रवदन्ति मुनयः । तद्यथा । कवर्गः कुजस्य भौमस्य । चवर्गः शुक्रस्य । टवर्गश्चान्द्रेर्बुधस्य । तवर्गो जीवस्य गुरोः । पवर्गोऽर्कजस्य सौरस्य । यकारपूर्वा यकाराद्यष्टौ वर्णाः शशिनश्चन्द्रस्य निरुक्ताः कथिताः । अकारः प्रभव आद्यो येषां वर्णानामक्षराणां ते अकारप्रभवा रवेरर्कस्य स्युर्भवेयुः । तद्यथा । अ आ इ ई उ ऊ ए ऐ ओ औ अं अः रवेः । क ख ग घ ङ भौमस्य ।

च छ ज झ ञ शुक्रस्य । ट ठ ड ढ ण बुधस्य । त थ द ध न गुरोः । प फ ब भ म सौरस्य । य र ल व श ष स ह चन्द्रस्य ॥ ३ ॥

अथ राशिवशेन द्रेष्काणवशेन च नामाक्षरसङ्ख्याज्ञानमाह ।

द्रेष्काणवृद्धया प्रवदन्ति नाम
त्रिपञ्चसप्ताक्षरमोजराशौ ।
युग्मे तु विन्द्याद्द्विचतुष्कषट्कं
नामाक्षराणि ग्रहदृष्टिवृद्धया ॥ ४ ॥

द्रेष्काणो राशित्रिभागः । तस्य वृद्धया वर्धनेनौजराशौ विषमर्क्षे त्रिपञ्चसप्ताक्षरं नाम । प्रथमे त्र्यक्षरं द्वितीये पञ्चाक्षरं तृतीये सप्ताक्षरमिति । युग्मे समराशौ लग्नगते प्रथमे द्रेष्काणे द्व्यक्षरं नाम विन्द्याज्ज्ञानीयात् । द्वितीये चतुष्कं चतुरक्षरम् । तृतीये षट्कं षडक्षरम् । तानि च नामाक्षराणि नामवर्णा ग्रहदृष्टिवृद्धया । यतः केन्द्रस्थराशिभिरक्षराण्यानीयन्ते केन्द्रचतुष्टयस्य प्रस्तुतत्वात् किल योगद्वयेनाचिन्त्यमिदं शास्त्रम् । तत्रैकः स्थितियोगो द्वितीयो दृष्टियोगः । स्थितियोगं परिहृत्य दृष्टियोगेनानीयन्ते । दृष्टियोगे तु बलाबलविचारः ॥ ४ ॥

उक्तं च ।

त्रि[१]दशत्रिकोणचतुरस्रसप्तमान्यवलोकयन्ति चरणाभिवृद्धितः ।
रविजामरेज्यरुधिराः परे च ये क्रमशो भवन्ति किल वीक्षणेऽधिकाः—इति
एवं ग्रहदर्शनवृद्धया नामाक्षराण्यानीयन्ते ॥ ४ ॥

अथ नवांशकवशेन नामाक्षरसङ्ख्याज्ञानमाह ।

वर्गोत्तमे द्व्यक्षरकं चरांशे
स्थिरर्क्षभागे चतुरक्षरं तत् ।
ओजेषु चैभ्यो विषमाक्षराणि
स्युर्द्विस्वभावेषु तु राशिवच्च ॥ ५ ॥

---

१ बृहज्जातके २ अध्यायस्य १३ श्लोकः ।

"वर्गोत्तमाश्चरगृहादिषु पूर्वमध्यपर्यन्तगा" इति । वर्गोत्तमाख्या नवांशका उक्ताः । अयत ओजशब्दकरणादिह समराशावेव ज्ञायते । समराशौ कर्कटे मकरे वा यदा वर्गोत्तमश्चरांशो भवति तदा त्र्यक्षरं नाम । स्थिरर्क्षभागे स्थिरराशौ वृषसिंहवृश्चिककुम्भानामन्यतमे यदा स्थिरांशो वर्गोत्तमो भवति तदा चतुरक्षरं नाम । ओजेषु विषमराशिषु मेषे तुले वा एभ्यो वर्गोत्तमांशकेभ्यो विषमाक्षराणि स्युर्भवेयुः । एतदुक्तं भवति । यदा विषमराशौ वर्गोत्तमश्चरांशो भवति तदा विषमाक्षराणि त्रीणि नाम्नि भवेयुः । अथ तस्मिन्नेव वर्गोत्तमः स्थिरांशो भवति तदा विषमाणि पञ्चाक्षराणि नाम्नि भवेयुः । द्विस्वभावेषु राशिवच्च । द्विस्वभावेषु द्विमूर्तिषु लग्नेषु राशिवद्राशितुल्यं स्यात् । एतदुक्तं भवति । द्विस्वभावेषु मिथुनधनुषोरन्यतरे यदि विषमांशको वर्गोत्तमो भवति तदा त्र्यक्षरं सप्ताक्षरं नामेति । अथ द्विस्वभावेषु समो वर्गोत्तमांशो भवति कन्यामीनयोरन्यतरस्तदा चतुरक्षरं नाम षडक्षरं नाम । यत उक्तम् ।

त्रिपञ्चसप्ताक्षरमोजराशौ युग्मे तु विन्द्याद्द्विचतुष्कषट्कम्—इति । वर्गोत्तमांशो यस्मिन् द्रेष्काणभागे स्थितस्तद्वशाद्वाच्यमिति ॥ ५ ॥

अथैव विशेषमाह ।

**द्विमूर्त्तिसञ्ज्ञे तु वदेद्द्विनाम**
**सौम्येक्षिते द्विप्रकृतौ च राशौ ।**
**यावान् गणः स्वोदयगोंऽशकानां**
**तावान् ग्रहः सङ्ग्रहकेऽक्षराणाम् ॥ ६ ॥**

द्विमूर्तिसञ्ज्ञे द्विस्वभावे राशौ द्विनाम वदेद्ब्रूयात् । द्वे नामनी यस्य । तथा द्विप्रकृतौ द्विस्वभावराशौ सौम्येक्षिते बुधसन्दृष्टे चशब्दात् द्विनाम वदेत् । यत्परिमाणस्य यावान् अंशकानां नवभागानां गणः समूहः स्वोदयगः प्रश्नसमयेऽतिक्रान्तस्तावानेव गणः समूहोऽक्षराणां वर्णानां सङ्ग्रहके नाम्नि भवति ॥ ६ ॥

---

१ बृहज्जातके १ अध्यायस्य १४ श्लोकः ।

अथ संयोगाक्षरमाह ।

**संयोगमादौ बहुलेषु विन्द्यात्**
**कूटेषु संयोगपरं वदन्ति ।**
**स्वोच्चांशके द्विष्कृतमृक्षयोगाद्-**
**गुर्वक्षरं तद्भवनांशके स्यात् ॥ ७ ॥**

बहुलेष्वोजेषु विषमराशिषु नाम्नामादौ प्रथममेव संयोगं संयोगाक्षरं विन्द्याज्जानीयात् । वर्णद्वयसंयोगः संश्लेषः । हलोऽनन्तराः संयोग इति केचित् । बहुभेदाः केचित् । द्विष्कृताः केचिद्गुरवः । केचित् संयोगान्तवद्-द्विष्कृताः । यथा । यण्ण । वल्ला । यस्सा । लस्सा । गुरवो द्वाभ्यां प्रकाराभ्यां भवन्ति । वर्गाक्षरैः स्वतनुना । प्रथमप्रथमैः । तृतीयतृतीयैः । पञ्चमपञ्चमैः । प्रथमप्रथमैर्यथा । कक्कः । दत्तः । कुट्टः । तृतीयतृतीयैर्यथा । लल्लः । गग्गः । दद्दः । जज्जः । पञ्चमपञ्चमैः । शङ्कः । नण्णः । धम्मः । परतनुना प्रथम-द्वितीयैस्तृतीयचतुर्थैश्च । प्रथमद्वितीयैः । यथा । खुक्खः । इच्छः । डित्थः । तृतीयचतुर्थैः । यथा । बाग्घः । टाड्ढः । शुद्धः । एते गुरवः । अन्येषां यथा परतनुना । पञ्चमप्रथमैः पञ्चमद्वितीयैः पञ्चमतृतीयैः पञ्चमचतुर्थैश्च । एते संयोगा एव । पञ्चमप्रथमैर्यथा । षङ्कः । पञ्चमद्वितीयैर्यथा शङ्खः । पञ्चमतृ-तीयैर्यथा शृङ्गम् । पञ्चमचतुर्थैर्यथा सङ्घः । केचिदन्यथा कथयन्ति । यथा स्वतनुना संयोगास्तेऽपि द्विष्कृता उच्यन्ते । यथा । धम्मः । दत्तः । कक्कः । प्रथमद्वितीयैस्तृतीयचतुर्थैश्च संयोगः । संयोगसञ्ज्ञास्ते गुरव उच्यन्ते । अन्ये ये सञ्ज्ञास्ते संयोगा एव न भवन्ति । यथा । धर्मः । वत्सः । आदि-संयोगो यथा । श्रीधरः । वीरः । स्मर इति । एवं संयोगमादौ बहुलेषु विन्द्यादिति । कूटेषु संयोगपरं वदन्ति । कूटेषु समराशिषु संयोगपरम् । संयोगः परो यस्मिंस्तत्संयोगपरं वदन्ति कथयन्ति तन्नारायणादयः । द्व्यक्षरे नाम्नि यथा । पद्मम् । धर्मः । वत्स इत्येवमादयः । चतुरक्षरे नाम्नि यथा । वसुदत्तः । वसुगुप्त इत्येवमादयः । स्वोच्चांशके द्विष्कृतमिति । स्वस्थास्वावुच्चांशः स्वोच्चांशः ।

अ[1]जवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः ।
दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः—इति ॥

तस्मिन् स्वोच्चांशके द्विष्कृतमक्षरं नाम्नि भवति । द्वौ वारौ कृतौ द्विष्कृतौ । कथम् । स्ववयोगाद्राशियोगाद्धेतोः । अक्षरदाता ग्रहः स्वोच्चांशकस्थो द्विष्कृतमक्षरं करोति । एतदुक्तं भवति । पृच्छालग्ने यदोजराशिस्तदौजाक्षरं द्विष्कृतं भवति । यथा ददद: । दामोदरः । अथ युग्मराशिस्तदा युग्माक्षरं द्विष्कृतं भवति । यथा देवदेवः । धराधरः । द्व्यक्षरे यथा । कण्वः । यज्ञः । वल्ल इत्येवमादयः । गुर्वक्षरं तद्भवनांशके स्यात् । गुर्वक्षरं यस्मिन् नाम्नि तद्गुर्वक्षरम् । तदित्यनेन लग्नं परामृश्यते । तस्य भवनस्यांशकः । तस्मिन्नक्षरे सति गुर्वक्षरं स्याद्भवेत् । अत्र स्ववयोगादिभिर्वर्तते । ओजराशौ ओजाक्षरमेव गुर्वक्षरं भवति । कपित्थः । अश्वत्थः । युग्मराशौ युग्माक्षरमेव । यथा । खुक्खः । घग्घः । शुद्धः । चतुरक्षरे शुद्धोदन इत्येवमादयः ॥ ७ ॥

अन्यदपि विशेषमाह ।

**मात्रादियुक् स्याद्ग्रहयुक्त्रिकोणे**
**द्रेष्काणपर्यायवदक्षरेषु ।**
**नभोबलेषूर्ध्वमधोऽम्बुजेषु**
**ज्ञेयो विसर्गस्तु बलान्वितेषु ॥ ८ ॥**

पृच्छालग्नस्य मेषादेस्त्रिकोणे नवमे पञ्चमे वा स्थाने ग्रहैरादित्यादिभिर्युग्योगो यथा भवति तथा मात्रादियुक् स्यात् । नाम्नो मात्राभिरादौ प्रथमं युग्योगः स्याद्भवेत् । यथा शिवः । द्रेष्काणपर्यायवदक्षरेष्विति । द्रेष्काणानां पर्यायो द्रेष्काणपर्यायः । प्रसिद्धोच्चारणम् । स यथा भवति तद्वदक्षरेषु मात्रादियोगो भवति । युग्मद्रेष्काणेषु युग्माक्षरेषु मात्रादियोगो भवति । ओजाक्षरेषु यथा । श्रीधरः । युग्मेषु यथा । ईश्वरः । नभोबलेषूर्ध्वमिति । नभसि दशमे स्थाने राशयो ये बलिनस्ते नभोबलिनः ॥

तथा चोक्तम् ।

मनुष्यरूपा बलिनो विलग्नाश्चतुष्पदाश्चाम्बरमध्यसंस्थाः ।
जलोद्भवाख्या बलिनो जलस्थाः कीटोऽस्तगो व्योमतले द्विमूर्तीः ॥

[1] बृहज्जातके १ अध्यायस्य १३ श्लोकः ।

अथ ।

क[1]ण्टककेन्द्रचतुष्टयसंज्ञाः सप्तमलग्नचतुर्थखमानाम् ।

तेषु यथा विहितेषु बलाढ्याः कीटनराम्बुचराः पशवश्च—इति ॥

तेषु नभोबलेषूर्ध्वमात्राक्षरमुशन्ति कथयन्ति । यथा । श्रीवत्सः । वासुदेवः । वैश्रवणः । शेषाङः । अधोऽम्बुजेष्विति । अम्बुजेषु चतुर्थस्थानेषु बलवत्सु अधोमात्राक्षरं भवति । यथा । सुहिरण्यः । शूरवर्मा । क्षेयो विसर्गोऽस्तबलान्वितेष्विति । अस्तबलान्वितेषु सप्तमे स्थाने बलवति विसर्गो विसर्जनीयो क्षेयो ज्ञातव्यः ॥ ८ ॥

अन्यदप्याह ।

शीर्षोदयेषूर्ध्वमुशन्ति मात्रा-
मधश्च पृष्ठोदयशब्दितेषु ।
तीर्यक् च विन्द्यादुभयोदये तां
दीर्घेषु दीर्घामितरेषु चान्याम् ॥ ९ ॥

शीर्षोदया मूर्ध्वोदयाः ।

तथा चोक्तम् ।

शीर्षोदया मानुषसर्वरूपाः सिंहकीटा यवनैर्निरुक्ताः ।
मत्स्यद्वयं तूभयतः प्रवृत्तं पृष्ठेन शेषास्तु सदोदयन्ति ॥

तथा च ।

गो[2]जाश्विकर्किमिथुनाः समृगा निशाख्याः
पृष्ठोदया विमिथुनाः कथितास्त एव ।
शीर्षोदया दिनबलाश्च भवन्ति शेषा
लग्नं समेत्युभयतः पृथुरोमयुग्मम्—इति ॥

एवं शीर्षोदयेषु लग्नेषूर्ध्वे मात्रामुशन्ति कथयन्ति । यथा । श्रो श्रो । पृष्ठोदयशब्दिता ये राशयस्तेषु पृष्ठोदयसञ्ज्ञितेष्वधो मात्रामुशन्ति कथयन्ति । यथा । उ ऊ । तिर्यक् चेति । उभयोदयो मीनस्तस्मिन् तां मात्रां तिर्यक् च विन्द्याज्जानीयात् । ए ऐ । यथा । देवदेवः । ऐन्द्र इत्यादि । दीर्घेषु दीर्घामि-

---

[1] बृहज्जातके १ अध्यायस्य १७ श्लोकः । [2] बृहज्जातके १ अध्यायस्य १० श्लोकः ।

ति । दीर्घेष्वायतेषु राशिषु । तां मात्रां दीर्घां विन्द्यात् । यथा । आ ई ऊ ए ऐ ओ औ । इतरेष्वन्येषु मध्यह्रस्वेष्वतोऽन्यां परिशिष्टां ह्रस्वामिति । यथा । अ इ उ । अत्र दीर्घाः सिंहकन्यातुलवृश्चिकाः । मध्या मिथुनकर्कि-धन्विमकराः । ह्रस्वा मेषवृषकुम्भमीनाः ॥ ९ ॥

तथा चोक्तम् ।

आद्यन्तराश्योरुदयप्रमाणं द्वौ द्वौ मुहूर्तौ नियतं प्रदिष्टम् ।
क्रमोत्क्रमाभ्यामतिपञ्चमं स्याच्चक्रार्द्धयोर्विद्धुदयप्रमाणम् ॥
एवं प्रमाणानि गृहाणि बुद्ध्वा ह्रस्वानि मध्यानि तथायतानि ।
चक्राङ्गभेदैः सदृशीकृतानि मार्गप्रमाणान्यपि कल्पयन्ति—इति ॥

तथा च ।

पूर्वार्धे विषयादयः कृतगुणा मानं प्रतीपं च तत्—इति ।

अथात्र विशेषमाह ।

**प्राग्लग्नतोयास्तनभःस्थितेषु**
**भेष्वंशकेभ्योऽक्षरसङ्ग्रहः स्यात् ।**
**क्रूरोऽक्षरं हन्ति चतुष्टयस्थो**
**दृष्ट्यापि मात्रां च त्रिकोणगो वा ॥ १० ॥**

प्राग्लग्नं विलग्नम् । तोयसञ्ज्ञश्चतुर्थः । अस्तः सप्तमः । नभःसञ्ज्ञो दशमः । एतेषु स्थानेषु स्थिता राशयः । भशब्देन राशय उच्यन्ते । तेषु भेषु तथाभूतेष्वेव येंऽशका नवभागास्तेभ्योऽक्षरसङ्ग्रहो वर्णसमुच्चयो नाम्नि स्यात् । क्रूरोऽक्षरमिति । क्रूरः पापो ग्रहश्चतुष्टयस्थः केन्द्रस्थोऽक्षरं वर्णं हन्त्यपहरति । स एव क्रूरस्त्रिकोणगो दृष्ट्या दर्शनेनापि मात्रां हन्ति । नवपञ्चमे त्रिकोण इति । अपिशब्दः समुच्चये । वाशब्दो विकल्पे ॥ १० ॥

अन्यद्विशेषमाह ।

**शुभग्रहस्तूर्जितवीर्यभागी**
**स्थानांशतुल्याक्षरदः स चोक्तः ।**
**पश्यन् स्थितः केन्द्रत्रिकोणयोर्वा**
**स्वोच्चेऽपि वर्णद्वयमात्मभागी ॥ ११ ॥**

---

१ बृहज्जातके १ अध्यायस्य १९ श्लोकः ।

शुभग्रहः सौम्यः । तुशब्दः समुच्चये । यद्यार्जितमतीव वीर्यं भजति तच्छीलः । अर्जितवीर्यभागी । स च स्थानांशतुल्याक्षरदः । यस्मिन् स्थाने यावत्सङ्ख्यांशे नवभागे स्थितस्तत्तुल्याक्षराणि ददाति । एवं तत्तुल्याक्षरद उक्तः कथितः । पश्यन् स्थित इति । अथवा स एव शुभग्रह अर्जितवीर्यभागी केन्द्रेषु त्रिकोणयोर्नवपञ्चमयोर्वा स्थितः पश्यन्नवलोकयन् । स्वोच्चे आत्मीयोच्चराशौ वा स्थितः पश्यन्नात्मभागे स्वे नवांशके स्थितः पश्यन् वर्णद्वयमक्षरद्वयमपि ददाति । अपिशब्दो विकल्पार्थः ॥ ११ ॥

अन्यद्विशेषमाह ।

**क्षेत्रेश्वरे क्षीणबलेंऽशके च**
**मात्राक्षरं नाशमुपैति तज्जम् ।**
**असम्भवेऽप्युद्भवमेति तस्मिन्**
**वर्गाद्यमुच्चांशयुजीशदृष्टे ॥ १२ ॥**

क्षेत्रेश्वरे लग्नस्वामिनि क्षीणबले परिक्षीणवीर्ये क्षीणांशके क्षीणनवभागे तज्जं मात्राक्षरं नाशमुपैति । मात्रा चाक्षरं च तन्मात्राक्षरम् । तस्माज्जातं उत्पन्नं तज्जम् । नाशमुपैति क्षयं प्राप्नोति । असम्भवेऽपीति । तस्मिन्नेव क्षीणेश्वरे क्षीणबलांशके चासम्भवे तस्य मात्राक्षरस्य नाश उद्भवमेत्युद्भूतिं लभते । किं वर्गाद्यं वर्गप्रथमम् । तस्मिन् कीदृशे । उच्चांशयुजि उच्चस्थे तथेशदृष्टे स्वामिनावलोकिते ॥ १२ ॥

अनिश्चयीकरणमाह ।

**केन्द्रे यथास्थानबलप्रकर्षं**
**क्षेत्रस्य तत्क्षेत्रपतेश्च बुद्ध्वा ।**
**कार्योऽक्षराणामनुपूर्वयोगो**
**मात्रादिसंयोगविकल्पना च ॥ १३ ॥**

केन्द्रे लग्नचतुर्थसप्तमदशमानामन्यतमे । क्षेत्रस्य राशेः । तत्क्षेत्रपतेश्च तत्स्वामिनः । यथास्थानबलप्रकर्षम् । स्थानं च बलं च स्थानबले तयोः प्रकर्ष उत्कृष्टता । स्थानबलेन प्रथमो लभ्यते दृष्टिबलेन द्वितीयादयः । एवं बुद्ध्वा ततोऽक्षराणां वर्णानामनुपूर्वयोगः । अनुपूर्वेण अनुक्रमेण योगः

संयोगः कार्यः कर्तव्यः। तथा मात्रादिसंयोगविकल्पना च कार्या। मात्रा आदि-र्यस्य स मात्रादिसंयोगस्तस्य विकल्पना संयोगविकल्पना आदिसंयोगोऽन्त-संयोगश्च। एतदुक्तं भवति। अधोमात्रा उर्ध्वमात्रास्तिर्यङ्मात्राश्च संयोग-विकल्पनया कार्याः ॥ १३ ॥

अथांशकक्रमेण राशीनामक्षराण्याह।

तत्रादिराश्यादिचतुर्विलग्न-
माद्यंशकादिक्रमपर्ययेण।
ग्रहांशकेभ्यः स्वगणाक्षराणा-
मन्वर्थने प्राप्तिरियं विधार्या ॥ १४ ॥

तत्र तस्मिन्नामानयने। आदिराश्यादि। आदिराशिर्मेषस्तदादि तत्प्रथमं यच्चतुर्विलग्नं मेषकर्किंतुलामकराख्यं तस्याद्यंशकादिक्रमपर्ययेण। प्रथमनवांशकपरिपाट्या ग्रहांशकेभ्यो नवग्रहभागेभ्यः स्वगणाक्षराणां स्ववर्ग-कथितवर्णानां "क[1]वर्गपूर्वान् कुजशुक्रचान्द्रिजीवार्कजाना" मित्यनेन विहि-तानामन्वर्थने प्राप्तिर्निष्पत्तिरियं विधार्या कर्तव्या ॥ १४ ॥

अथादिराश्यादिक्रमेण वर्णानाह।

मेषे ककारो हिबुके यकार-
स्तुले चकारो मकरे पकारः।
मेषे ङकारो हिबुकेऽप्यकार-
स्तुले खकारो मकरे फकारः ॥ १५ ॥

मेषे लग्ने केन्द्रस्था मेषकर्किंतुलमकरा भवन्ति। एत एव स्वांशे-नोदयं कुर्वन्ति तत्र मेषस्य प्रथमो नवांशो मेष एव तस्य स्वामी भौमः। मेषस्य प्रथमनवांशकत्वाद्भौमवर्गात् प्रथममक्षरं ककारमापतति। हिबुके चतुर्थे कर्कटकस्तस्य स्वामी चन्द्रः तस्यापि प्रथमनवांशकोदयत्वाच्चन्द्राद्यवर्गात् प्रथमं वर्गाक्षरं यकारमापतति। सप्तमस्थाने तुलो भवति। तस्य स्वामी शुक्रः। तत्प्रथमनवमांशत्वाच्छुक्रवर्गात् प्रथममक्षरं चकारमापतति। दशम-

---

१ षष्ठीवाध्यायस्य ३ श्लोकः।

स्थाने मकरो भवति । तस्य स्वामी शनैश्चरः । तत्प्रथमनवांशकोदयस्वा-च्छनैश्चरात् पवर्गात् प्रथममक्षरं पकारमापतति । अत एवोक्तम् ।

मेषे ककारो हिबुके यकारस्तुले चकारो मकरे पकारः ।

एवं द्वितीयादिष्वंशकेषु स्वामिविहितवर्गक्रमगणनयांशकतुल्यं वर्णो ग्राह्यम् । मृदुबुद्धिप्रबोधनायास्माभिः किञ्चित् क्रियते । तत्र मेषद्वितीयनवांशकस्य शुक्रोऽधिपतिस्तद्वर्गाद्द्वितीयमक्षरं छकारमापतति । कर्कटकद्वितीयस्य सूर्योऽधिपतिस्तद्वर्गात् प्रथममक्षरमकारमापतति । तुलद्वितीयस्य भौमोऽधिपतिस्तद्वर्गाद्द्वितीयमक्षरं खकारमापतति । मकरद्वितीयनवांशकस्य सौरोऽधिपतिस्तदीयवर्गाद्द्वितीयमक्षरं फकारमापतति । अत एवोक्तम् ।

मेषे छकारो हिबुकेऽप्यकारस्तुले खकारो मकरे फकारः ॥ १५ ॥

अन्येष्वप्याह ।

**मेषे टकारो हिबुके ठकार-**
**स्तुले तकारो मकरे थकारः ।**
**मेषे तु रेफो हिबुके जकार-**
**स्तुले बकारो मकरे गकारः ॥ १६ ॥**

मेषे तृतीयनवांशकस्य बुधोऽधिपतिस्तदीयवर्गात् प्रथममक्षरं टकारमापतति । कर्कटतृतीयनवांशकस्य बुध एवाधिपतिस्तदीयवर्गाद्द्वितीयमक्षरं ठकारमापतति । तुलतृतीयनवांशकस्य जीवोऽधिपतिस्तदीयवर्गात् प्रथममक्षरं तकारमापतति । मकरतृतीयनवांशकस्य जीवोऽधिपतिस्तदीयवर्गाद्द्वितीयमक्षरं थकारमापतति । अत एवोक्तम् ।

मेषे टकारो हिबुके ठकारस्तुले तकारो मकरे थकारः ।

मेषस्य चतुर्थनवांशकाधिपतिश्चन्द्रस्तदीयवर्गाद्द्वितीयमक्षरं रेफमापतति । कर्कटचतुर्थनवांशकाधिपतिः शुक्रस्तदीयवर्गात् तृतीयमक्षरं जकारमापतति । तुलस्य चतुर्थनवांशकाधिपतिः सौरस्तदीयवर्गात् तृतीयमक्षरं बकारमापतति । मकरस्य चतुर्थनवांशाधिपतिर्भौमस्तदीयवर्गात् तृतीयमक्षरं गकारमापतति । अत एवोक्तम् ।

मेषे तु रेफो हिबुके जकारस्तुले बकारो मकरे गकारः ॥ १६ ॥

अन्येऽप्याहुः ।

आकारमाद्येऽम्बुगते घकार-
मस्ते भकारं मकरे झकारम् ।
लग्ने ङकारं हिबुके दकार-
मस्ते धकारं मकरे ढकारम् ॥ १७ ॥

मेषे पञ्चमनवांशकस्याधिपतिः सूर्यस्तदीयवर्गाद्द्वितीयमक्षरमाकारमापतति । कर्कटे पञ्चमनवांशकाधिपतिर्भौमस्तदीयवर्गाच्चतुर्थमक्षरं घकारमापतति । तुले पञ्चमनवांशकस्य सौरोऽधिपतिस्तद्वर्गाच्चतुर्थमक्षरं भकारमापतति । मकरे पञ्चमनवांशकस्य शुक्रोऽधिपतिस्तदीयवर्गाच्चतुर्थमक्षरं झकारमापतति । अत एवोक्तम् ।

आकारमाद्येऽम्बुगते घकारमस्ते भकारं मकरे झकारम् ।

मेषे षष्ठनवांशकस्य बुधोऽधिपतिस्तदीयवर्गात् तृतीयवर्गात् तृतीयमक्षरं ङकारमापतति । कर्कटके षष्ठनवांशाधिपतिर्जीवस्तदीयवर्गात् तृतीयमक्षरं दकारमापतति । तुले षष्ठनवांशाधिपतिर्जीव एव तदीयवर्गाच्चतुर्थमक्षरं धकारमापतति । मकरे षष्ठनवांशाधिपतिर्बुधस्तदीयवर्गाच्चतुर्थमक्षरं ढकारमापतति । अत एवोक्तम् ।

लग्ने ङकारं हिबुके दकारमस्ते धकारं मकरे ढकारम् ॥ १७ ॥

अन्येऽप्याहुः ।

लग्ने अकारो हिबुके मकारः
तुले ङकारो मकरे लकारः ।
लग्ने ककारो हिबुके पकार-
स्तुले चकारो मकरे ङकारः ॥ १८ ॥

मेषस्य सप्तनवांशकाधिपतिः शुक्रस्तदीयवर्गात् पञ्चममक्षरं अकारमापतति । कर्कटस्य सप्तनवांशकाधिपतिः सौरस्तदीयवर्गात् पञ्चममक्षरं मकारमापतति । तुलस्य सप्तनवांशकाधिपतिर्भौमस्तदीयवर्गात् पञ्चममक्षरं ङकारमापतति । मकरस्य सप्तनवांशकाधिपतिश्चन्द्रस्तद्वर्गात् तृतीयमक्षरं लकारमापतति । अत एवोक्तम् ।

लग्ने कारो हिबुके मकारस्तुले ककारो मकरे लकार: ।

मेषस्याष्टमनवांशकाधिपतिर्भौमस्तद्वर्गात् प्रथममक्षरं ककारमापतति । कर्कटस्याष्टमनवांशकाधिपतिः सौरस्तद्वर्गात् प्रथममक्षरं पकारमापतति । तुलस्याष्टमनवांशकाधिपतिशुक्रस्तद्वर्गात् प्रथममक्षरं चकारमापतति । मकरस्याष्टमनवांशकाधिपतिः सूर्यस्तद्वर्गात् तृतीयमक्षरमिकारमापतति । अत एवोक्तम् ॥

लग्ने ककारो हिबुके पकार इत्यादि ॥ १८ ॥

अन्येष्वप्याह ।

**लग्ने नकारो हिबुके तकार-**
**स्तुले णकारो मकरो टकारः ।**
**इत्येतदुक्तं चरसञ्ज्ञकस्य वक्ष्ये**
**स्थिराख्यस्य चतुष्टयस्य ॥ १९ ॥**

मेषस्य नवमनवांशकाधिपतिर्जीवस्तदीयवर्गात् पञ्चममक्षरं नकारमापतति । कर्कटस्य नवमनवांशाधिपतिर्जीवस्तदीयवर्गात् प्रथममक्षरं तकारमापतति । तुलस्य नवमनवांशकाधिपतिर्बुधस्तदीयवर्गात् पञ्चममक्षरं णकारमापतति । मकरस्य नवमनवांशकाधिपतिर्बुधस्तद्वर्गात् प्रथममक्षरं टकारमापतति । अत एवोक्तम् ।

लग्ने नकारो हिबुके तकारस्तुले णकारो मकरे टकार इत्यादि ।

इत्येतदुक्तमिति । इत्यनेन प्रकारेणैतदुक्तम् । तच्चरसञ्ज्ञकस्य चतुष्टयस्य । स्थिरसञ्ज्ञकस्य वृषसिंहवृश्चिककुम्भाख्यस्येदानीं वक्ष्ये कथयिष्ये ॥ १९ ॥

अधुना तदेवाह ।

**वृषे फकारो हिबुके खकारः कीटे वकारो नृघटे ङकारः ।**
**आद्यांशकेभ्यो मतिमान् विदध्यादनुक्रमेण स्थिरसञ्ज्ञकेषु ॥२०॥**

स्थिरसञ्ज्ञा वृषसिंहवृश्चिककुम्भाः । ते च यथासङ्ख्यं मकरमेषकर्कटतुलेभ्य उदयं यान्ति । वृषस्य प्रथमनवांशको मकरस्तत्स्वामी सौरस्तदीयद्वितीयमक्षरं फकारमापतति । सिंहस्य प्रथमनवांशको मेषः तत्स्वामी

भौमस्तदीयाद्वर्गाद्द्वितीयमक्षरं खकारमापतति । वृश्चिकस्य प्रथम-नवांशकः कर्की तस्य स्वामी चन्द्रस्तदीयाद्यवर्गाच्चतुर्थमक्षरं वकारमाप-तति । कुम्भस्य प्रथमनवांशकस्तुलस्तत्स्वामी शुक्रस्तदीयवर्गाद्द्वितीयम-क्षरं छकारमापतति । अत एवोक्तम् ।

वृषे फकारो हिबुके खकारः कीटे वकारो नृघटे छकारः ।

एवं स्थिरसञ्ज्ञकेषु स्थिरराशिषु मतिमान् पण्डित आद्यांशकेषु प्रथमनवां-शकेष्वनुक्रमेण परिपाट्या विदध्यात् कारयेत् ॥ २० ॥

अथान्येष्वाह ।

लग्ने बकारो हिबुके जकार
ईकारमस्तेऽम्बरगे गकारः ।
वृषे यकारो हिबुके टकारः
कीटे डकारो नृघटे दकारः ॥ २१ ॥

वृषद्वितीयनवांशकस्य सौरः स्वामी तदीयवर्गात् तृतीयमक्षरं बकार-मापतति । सिंहद्वितीनवांशकस्य स्वामी शुक्रस्तदीयवर्गात् तृतीयमक्षरं जका-रमापतति । वृश्चिकद्वितीयनवांशकस्य स्वामी सूर्यस्तदीयवर्गाच्चतुर्थमक्षरमी-कारमापतति । कुम्भस्य द्वितीयनवांशकस्वामी भौमस्तदीयवर्गात् तृती-यमक्षरं गकारमापतति । अत एवोक्तम् ।

लग्ने बकारो हिबुके जकार ईकारमस्तेऽम्बरगे गकारः ।

वृषतृतीयनवांशकस्वामी जीवस्तदीयवर्गाद्द्वितीयमक्षरं यकार-मापतति । सिंहस्य तृतीयनवांशकस्वामी बुधस्तद्वर्गात् प्रथममक्षरं टका-रमापतति । वृश्चिकस्य तृतीयनवांशकस्वामी बुधस्तदीयवर्गात् तृतीयमक्षरं डकारमापतति । कुम्भस्य तृतीयनवांशकस्वामी जीवस्तदीयवर्गात् तृतीय-मक्षरं दकारमापतति । अत एवोक्तम् ।

वृषे यकारो हिबुके टकारः कीटे डकारो नृघटे दकारः ॥ २१ ॥

अन्येष्वाह ।

वृषे घकारो हिबुके शकारः
कीटे भकारो नृघटे भकारः ।

**लग्ने जकारो हिबुके उकारः**

**कीटे ङकारो नृघटे मकारः ॥ २२ ॥**

वृषस्य चतुर्थनवांशकाधिपो भौमस्तदीयवर्गाच्चतुर्थमक्षरं घकारमापतति । सिंहस्य चतुर्थनवांशकाधिपतिश्चन्द्रस्तदीयवर्गात् पञ्चममक्षरं शकारमापतति । वृश्चिकस्य चतुर्थनवांशकाधिपतिः शुक्रस्तदीयवर्गाच्चतुर्थमक्षरं फकारमापतति । कुम्भस्य चतुर्थनवांशकाधिपतिः सौरस्तदीयवर्गाच्चतुर्थमक्षरं भकारमापतति । अत एवोक्तम् ।

वृषे घकारो हिबुके शकारः कीटे फकारो नृघटे भकारः ।

वृषस्य पञ्चमनवांशकाधिपतिः शुक्रस्तदीयवर्गात् पञ्चममक्षरं जकारमापतति । सिंहस्य पञ्चमनवांशकाधिपतिः सूर्यस्तदीयवर्गात् पञ्चममक्षरमुकारमापतति । वृश्चिकस्य पञ्चमनवांशकाधिपतिर्भौमस्तदीयवर्गात् पञ्चममक्षरं ङकारमापतति । कुम्भस्य पञ्चमनवांशकाधिपतिः सौरस्तदीयवर्गात् पञ्चममक्षरं मकारमापतति । अत एवोक्तम् ।

लग्ने जकारो हिबुके उकारः कीटे ङकारो नृघटे मकारः ॥ २२ ॥

अन्येष्वप्याह ।

**लग्ने ठकारोऽथ जले णकार-**

**श्चास्ते धकारोऽम्बरगे नकारः ।**

**वृषे षकारो हिबुके चकारः**

**कीटे पकारो नृघटे ककारः ॥ २३ ॥**

वृषस्य षष्ठनवांशकाधिपतिर्बुधस्तदीयवर्गाच्चतुर्थमक्षरं ठकारमापतति । सिंहस्य षष्ठनवांशाधिपतिर्बुधस्तदीयवर्गात् पञ्चममक्षरं णकारमापतति । वृश्चिकस्य षष्ठनवांशकाधिपतिर्जीवस्तदीयवर्गाच्चतुर्थमक्षरं धकारमापतति । कुम्भस्य षष्ठनवांशाधिपतिर्जीवस्तदीयवर्गात् पञ्चममक्षरं नकारमापतति । अत एवोक्तम् ।

लग्ने ठकारोऽथ जले णकारश्चास्ते धकारोऽम्बरगे नकारः ।

वृषस्य सप्तमनवांशकाधिपतिश्चन्द्रस्तदीयवर्गात् षष्ठमक्षरं षकारमापतति । सिंहस्य सप्तमनवांशकाधिपतिः शुक्रस्तदीयवर्गात् प्रथममक्षरं चकार-

मापतति । वृश्चिकस्य सप्तमनवांशकाधिपतिः सौरस्तदीयवर्गात् प्रथममक्षरं पकारमापतति । कुम्भस्य सप्तमनवांशकाधिपतिर्भौमस्तदीयवर्गात् प्रथममक्षरं ककारमापतति । अत एवोक्तम् ।

वृषे चकारो हिबुके चकारः कीटे पकारो नृघटे ककारः ॥ २३ ॥

अन्येष्वप्याह ।

ऊकारमाहुर्वृषभे जले ख-
मस्ते फकारो नृघटे छकारः ।
अन्त्ये वृषे टं तमुशन्ति सिंहे
थं सप्तगे ठं प्रवदन्ति कुम्भे ॥ २४ ॥

वृषस्याष्टमनवांशकाधिपतिः सूर्यस्तदीयवर्गात् षष्ठमक्षरमूकारमापतति । सिंहस्याष्टमनवांशकाधिपतिर्भौमस्तदीयवर्गाद्द्वितीयमक्षरं खकारमापतति । वृश्चिकस्याष्टमनवांशकाधिपतिः शनिस्तदीयवर्गाद्द्वितीयमक्षरं फकारमापतति । कुम्भस्याष्टमनवांशकाधिपतिः शुक्रस्तदीयवर्गाद्द्वितीयमक्षरं छकारमापतति । अत एवोक्तम् ।

ऊकारमाहुर्वृषभे जले खमस्ते फकारो नृघटे छकारः ।

वृषस्य नवमनवांशकाधिपतिर्बुधस्तदीयवर्गात् प्रथममक्षरं टकारमापतति । सिंहस्य नवमनवांशकाधिपतिर्जीवस्तदीयवर्गात् प्रथममक्षरं तकारमापतति । वृश्चिकस्य नवमनवांशकाधिपतिर्जीवस्तदीयवर्गाद्द्वितीयमक्षरं थकारमापतति । कुम्भस्य नवमनवांशकाधिपतिर्बुधस्तदीयवर्गाद्द्वितीयमक्षरं ठकारमापतति । अत एवोक्तम् ।

अन्त्ये वृषे टं तमुशन्ति सिंहे थं सप्तगे ठं प्रवदन्ति कुम्भे ॥ २४ ॥

अथ द्विस्वभावेष्वाह ।

द्विमूर्त्तिसञ्ज्ञे मिथुने जकारः
षष्ठे बकारः प्रथमांशके स्यात् ।
धनुर्धरेऽस्तोपगते गकारो
मीनद्वये चाम्बरगे सकारः ॥ २५ ॥

द्विमूर्त्तिसञ्ज्ञा मिथुनकन्याधन्विमीनाः । तुलमकरमेषकर्कटेभ्य उदयं यान्ति । मिथुनस्य प्रथमनवांशकस्तुलस्तस्य स्वामी शुक्रस्तदीयाच्चवर्गात् तृतीयमक्षरं जकारमापतति । कन्यायाः प्रथमनवांशको मकरस्तस्य स्वामी सौरस्तदीयात् पवर्गात् तृतीयमक्षरं बकारमापतति । धनुषः प्रथमनवांशको मेषस्तस्य स्वामी भौमस्तदीयवर्गात् तृतीयमक्षरं गकारमापतति । मीनस्य प्रथमनवांशकः कर्कटस्तस्य स्वामी चन्द्रस्तदीयवर्गात् सप्तममक्षरं सकारमापतति । अत एवोक्तम् ।

द्विमूर्त्तिसञ्ज्ञे मिथुने जकारः षष्ठे बकारः प्रथमांशके स्यात् ।
धनुर्धरेऽस्तोपगते गकारो मीनद्वये चाम्बरगे सकारः ॥ २५ ॥

अन्येष्वप्याह ।

**लग्ने घकारो हिबुके भकार-**
**श्चास्ते झकारोऽम्बरमध्यगे ई ।**
**लग्ने दकारो हिबुके धकार-**
**मस्ते डकारं विदुरम्बरे ढम् ॥ २६ ॥**

मिथुनस्य द्वितीयनवांशस्वामी भौमस्तदीयवर्गाच्चतुर्थमक्षरं घकारमापतति । कन्याया द्वितीयनवांशकस्वामी सौरस्तदीयवर्गाच्चतुर्थमक्षरं भकारमापतति । धन्विनो द्वितीयनवांशकस्वामी शुक्रस्तदीयवर्गाच्चतुर्थमक्षरं झकारमापतति । मीनस्य द्वितीयनवांशकस्वामी सूर्यस्तदीयवर्गाच्चतुर्थमक्षरमीकारमापतति । अत एवोक्तम् ।

लग्ने घकारो हिबुके भकारश्चास्ते झकारोऽम्बरमध्यगे ई ।

मिथुनतृतीयनवांशकाधिपतिर्जीवस्तदीयवर्गात् तृतीयमक्षरं दकारमापतति । कन्यातृतीयनवांशकपतिर्जीवस्तदीयवर्गाच्चतुर्थमक्षरं धकारमापतति । धन्विनस्तृतीयनवांशकाधिपतिर्बुधस्तदीयवर्गात् तृतीयमक्षरं डकारमापतति । मीनस्य तृतीयनवांशकाधिपतिर्बुधस्तदीयवर्गाच्चतुर्थमक्षरं ढकारमापतति । अत एवोक्तम् ।

लग्ने दकारो हिबुके धकारमस्ते डकारं विदुरम्बरे ढम् ॥ २६ ॥

अन्येप्याह ।

लग्ने मकारो हिबुके ङकार-
श्चास्ते ढकारोऽम्बरगे अकारः ।
लग्ने पकारो जलगे चकार
ऐकारमस्तेऽम्बरगे ककारः ॥ २७ ॥

मिथुनस्य चतुर्थनवांशकस्वामी सौरस्तदीयवर्गात् पञ्चममक्षरं मकारमापतति । कन्यायाश्चतुर्थनवांशकस्वामी भौमस्तदीयवर्गात् पञ्चममक्षरं ङकारमापतति । धन्विनश्चतुर्थनवांशकाधिपतिश्चन्द्रस्तदीयवर्गादष्टममक्षरं ढकारमापतति । मीनस्य चतुर्थनवांशकाधिपतिः शुक्रस्तदीयवर्गात् पञ्चममक्षरं अकारमापतति । अत एवोक्तम् ।

लग्ने मकारो हिबुके ङकारश्चास्ते ढकारोऽम्बरगे अकारः ।

मिथुनस्य पञ्चमनवांशकाधिपतिः सौरस्तदीयवर्गात् प्रथममक्षरं पकारमापतति । कन्यायाः पञ्चमनवांशकाधिपतिः शुक्रस्तदीयवर्गात् प्रथममक्षरं चकारमापतति । धनुषः पञ्चमनवांशकाधिपतिः सूर्यस्तदीयवर्गादष्टममक्षरमैकारमापतति । मीनस्य पञ्चमनवांशकाधिपतिर्भौमस्तदीयवर्गात् प्रथममक्षरं ककारमापतति । अत एवोक्तम् ।

लग्ने पकारो जलगे चकार ऐकारमस्तेऽम्बरगे ककारः ॥ २७ ॥

अन्येप्याह ।

प्राग्लग्नगे नं जलगे णमाहु-
रस्तं गते टं नभसि स्थिते तम् ।
प्राग्लग्नगे खं जलगे यमाहु-
रस्तं गते छं नभसि स्थिते फम् ॥ २८ ॥

मिथुनस्य षष्ठनवांशकाधिपतिर्जीवस्तदीयवर्गात् पञ्चममक्षरं नकारमापतति । कन्यायाः षष्ठनवांशकाधिपतिर्बुधस्तदीयवर्गात् पञ्चममक्षरं णकारमापतति । धन्विनः षष्ठनवांशकाधिपतिर्बुधस्तदीयवर्गात् प्रथममक्षरं टकारमापतति । मीनस्य षष्ठनवांशकाधिपतिर्जीवस्तदीयवर्गात् प्रथममक्षरं तकारमापतति । अत एवोक्तम् ।

प्राग्लग्नगे नं जलगे यमाहुरस्तं गते टं नभसि स्थिते तम् ।

मिथुनस्य सप्तमनवांशकाधिपतिर्भौमस्तदीयवर्गाद्द्वितीयमक्षरं खकारमापतति । कन्यायाः सप्तमनवांशकाधिपतिश्चन्द्रस्तदीयवर्गात् प्रथममक्षरं यकारमापतति । धन्विनः सप्तमनवांशकाधिपतिः शुक्रस्तदीयवर्गाद्द्वितीयमक्षरं छकारमापतति । मीनस्य सप्तमनवांशकाधिपतिः सौरस्तदीयवर्गाद्द्वितीयमक्षरं फकारमापतति । अत एवोक्तम् ।

प्राग्लग्नगे खं जलगे यमाहुरस्तं गते छं नभसि स्थते फम् ॥ २८ ॥

अन्योऽप्याह ।

**लग्ने जमोकारमथाम्बुसंस्थे गमस्तसंस्थे विदुरम्बरे बम् ।**
**ठं लग्नगेऽन्त्ये हिबुकाश्रिते डं थमस्तगे दं नभसि स्थिते वै॥२९॥**

मिथुनस्याष्टमनवांशकाधिपतिः शुक्रस्तदीयवर्गात् तृतीयमक्षरं जकारमापतति । कन्याया अष्टमनवांशकाधिपतिः सूर्यस्तदीयवर्गान्नवममक्षरमोकारमापतति । धन्विनोऽष्टमनवांशकाधिपतिर्भौमस्तदीयवर्गात् तृतीयमक्षरं गकारमापतति । मीनस्याष्टमनवांशकाधिपतिः सौरस्तदीयवर्गात् तृतीयमक्षरं बकारमापतति । अत एवोक्तम् ।

लग्ने जमोकारमथाम्बुसंस्थे गमस्तसंस्थे विदुरम्बरे बम् ।

मिथुनस्य नवमनवांशकाधिपतिर्बुधस्तदीयवर्गाद्द्वितीयमक्षरं ठकारमापतति । कन्याया नवमनवांशकाधिपतिर्बुधस्तदीयवर्गात् तृतीयमक्षरं डकारमापतति । धन्विनो नवमनवांशकाधिपतिर्जीवस्तदीयवर्गाद्द्वितीयमक्षरं थकारमापतति । मीनस्य नवमनवांशकाधिपतिर्जीवस्तदीयवर्गात् तृतीयमक्षरं दकारमापतति .अत एवोक्तम् ।

ठं लग्नगेऽन्त्ये हिबुकाश्रिते डं थमस्तगे दं नभसि स्थिते वै । २९ ॥

अथ प्रविभागमाह ।

**एवं विकल्पोऽक्षरसङ्ग्रहोऽयं**
**नाम्नां निरुद्दिष्टविधान उक्तः ।**
**सर्वेषु लग्नेषु च केचिदेव-**
**मिच्छन्ति पूर्वोक्तविधानवत् तु ॥ ३० ॥**

एवमनेनानन्तरोक्तेन प्रकारेण विकल्पो विकल्पना यस्याक्षरसङ्घस्य वर्णसङ्घातस्य सोऽयं नाम्नामभिधानानां निर्विशेषेणोद्दिष्टमुक्तं विधानं विधिर्येन । उक्तः कथितः । सर्वेष्वखिलेषु लग्नेषु मेषादिषु राशिषु केचिदाचार्या एवमनेन प्रकारेणेच्छन्ति वाञ्छन्ति । पूर्वोक्तविधानवत् तु । पूर्वोक्तेन प्रागुद्दिष्टेन विधानेन तुल्यं वर्तत इति पूर्वोक्तविधानवत् । मेषे ककार इत्यादिनेति ॥ ३० ॥

अथैव नामानयने प्रकारान्तरमाह ।

**केन्द्राणि वा केन्द्रगतांशकैः स्वैः**
**पृथक्पृथक् सङ्गुणितानि कृत्वा ।**
**त्रिकृद्विभक्ते विदुरक्षरं तत्**
**जीवेश्वरस्यांशपरिक्रमस्वम् ॥ ३१ ॥**

मेषादयः पृच्छालग्ना द्वादश तेषां त्रयो भेदाश्चरस्थिरद्विस्वभावाख्याः । तत्र चरा मेषकर्कितुलमकराः । स्थिरा वृषसिंहवृश्चिककुम्भाः । द्विस्वभावा मिथुनकन्याधन्विमीनाः । मेषादिषु चतुर्षु मध्यादन्यतममारभ्य पृच्छा भवति । तत आरभ्य चराणि चत्वारि केन्द्राणि भवन्ति राश्यादिष्विति ।

अथ स्थिरेषु वृषादिषु चतुर्षु मध्याद्यन्तमारभ्य पृच्छा भवति । तत आरभ्य स्थिराणि चत्वारि केन्द्राणि भवन्ति ।

अथ द्विस्वभावेषु मिथुनादिषु चतुर्ष्वपि मध्याद्यन्तमारभ्य पृच्छा भवति । तत एवारभ्य द्विस्वभावानि चत्वारि केन्द्राणि भवन्ति नान्यानि । केन्द्राणि च लग्नचतुर्थसप्तमदशमानि । वाशब्दो भावान्तरोक्तविकल्पप्रदर्शनार्थः । मेषे ककार इत्येतच्चक्रं प्रागुक्तं प्रदर्शितम् ।

| मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कुं | मी |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ड | फ | झि | य | ख | ब | च | ख | ग | प | ड | स |
| ढ | श | घ | ऋ | ञ | भ | ख | ई | भ | फ | ग | ई |
| ट | थ | ढ | ठ | ट | ध | त | ह | ढ | थ | ढ | ठ |
| र | घ | म | ञ | श | ड | ब | भ | ह | न | भ | अ |
| चा | ऊ | प | घ | उ | च | भ | हे | ऐ | भ | म | क |
| ह | ठ | न | ढ | ण | ण | थ | ध | ट | ठ | म | त |
| अ | ब | ख | म | च | प | ड | प | छ | ल | क | फ |
| क | ऊ | ञ | प | ख | ओ | च | ठ | ग | द | छ | ब |
| न | ट | ठ | त | स | ह | ष | च | च | ट | ठ | ढ |

वा केन्द्रगतांशकैः स्वैरिति । केन्द्रेषु चतुर्षु ये गताः समवस्थिता अंशका नवभागास्तैरात्मीयैः पृथक्पृथक् प्रत्येकं सङ्गुणितानि संहतानि कृत्वा विधाय । एतदुक्तं भवति । केन्द्रस्थितं राशिं मेषादिकं नवांशैरभिविभज्य यद्भवति

तावत्सङ्ख्यमङ्कं संस्थाप्योदितनवांशकैः स्वैर्गुणयेत् । ततस्तत्केन्द्रचतुष्टयं त्रिकृता त्रिकृत्या भक्तं कार्यम् । यथाशां कृद्वर्गस्त्रिकृत् नव इत्यर्थः । तया विभक्तं विभाजितम् । तदक्षरं वर्णं त्रिदुर्जानते । एतल्लब्धं तदक्षरम् । कस्य । खेचरेश्वरस्य राश्यधिपतेः । अंशपरिक्रमेण नवांशपरिपाट्या स्वसमात्मीयम् । अयमभिप्रायोऽत्र त्रैराशिकात्मकः । यदि नवभिर्नवभिर्नवाक्षराणि लभ्यन्ते तदैभिर्नावांशकैः कत्यक्षराणीति । चरेषु चतुर्ष्वपि केन्द्रेषु सर्वेषां भौमादीनां षष्ठनवांशा भवन्ति । तैश्चैतावत एव सङ्ख्याय प्रतक्षराणि भवन्ति । एष्वेव केन्द्रेषु सर्वेषां भौमादीनां यस्मिन् यस्मिन् केन्द्रे यावन्तो नवांशका आपतन्ति तस्मिन् तस्मिन् सर्वेषां स्ववर्गाक्षराणि परिपाट्या भवन्ति । प्रथमनवांशके स्ववर्गे प्रथममक्षरं द्वितीये द्वितीयं तृतीये तृतीयमेतावता चरकेन्द्रचतुष्टये । सप्तमे द्वितीयम् । अष्टमे तृतीयं । नवमे चतुर्थम् । दशमे पञ्चमम् । एकादशे पुनर्निवृत्य स्ववर्गात् प्रथमम् । द्वादशे द्वितीयम् । अर्कचन्द्रयोस्तु चतुर्थे चतुर्थे पञ्चमे पञ्चमं षष्ठे षष्ठम् । एतावता स्थिरे केन्द्रचतुष्टये समाप्ते द्विमूर्तिकेन्द्रचतुष्टये त्रयोदशे तृतीयं चतुर्दशे चतुर्थं पञ्चदशे पञ्चमम् । षोडशे पुनर्निवृत्य स्ववर्गात् प्रथमं सप्तदशे द्वितीयमष्टादशे तृतीयमिति । अर्कचन्द्रयोस्तु सप्तमे सप्तमम् । अष्टमे अष्टमम् । नवमे नवमम् । चन्द्रस्य पुनर्निवृत्य नवमं स्ववर्गवर्णेभ्यः प्रथममक्षरमिति ॥ ३१ ॥

अथ व्याप्तिप्रदर्शनार्थमाह ।

**सञ्चिन्तितप्रार्थितनिर्गतेषु**
**नष्टक्षतस्त्रीरतिभोजनेषु ।**
**स्वप्नर्क्षचिन्तापुरुषादिवर्ग-**
**ष्वेतेषु सामान्युपलक्षयेत ॥ ३२ ॥**

सञ्चिन्तितं मनसा पदार्थानां परिकल्पनम् । प्रार्थितं याचोक्तम् । इदं सम्पद्यतामिति । निर्गतं निर्गमनम् । नष्टं दृष्टिविषयादपहृतं यद्वस्तु । क्षतं हिंसितम् । स्त्रीरतिः स्तनमादिस्त्रिया सह रमणम् । भोजनमाहारविशेषो मांसादि । एतेषु पदार्थेषु । तथा स्वप्नं सुप्तस्य स्वप्नावस्थायां नानाप्रकारवस्तुदर्शनम् । ऋक्षं नक्षत्रं तन्नामम् । चिन्ता मनसा परिकल्पनम् । पुरुषादिः । पुरुषो नर आदिर्येषाम् । आदिग्रहणात् स्त्रीनपुंसकयोर्ग्रहणम् ।

पुरुषादीनां वर्गेषु समूहेषु एतेषु नामान्यभिधानान्युपलक्षयेत विन्द्यात् । कथं यथासङ्ख्यं केन्द्रचतुष्टयस्य प्रस्तुतत्वात् । अथ यथासङ्ख्यं प्रदर्श्यते । लग्नादारभ्य सञ्चिन्तितनामान्युपलक्षयेत् । चतुर्थादारभ्य प्रार्थितनामान्युपलक्षयेत् । सप्तमादारभ्य निर्गतनामान्युपलक्षयेत् । दशमादारभ्य नष्टनामान्युपलक्षयेत् । पुनर्निवृत्य लग्नादारभ्य क्षतनामान्युपलक्षयेत् चतुर्थादारभ्य स्त्रीनामान्युपलक्षयेत् । सप्तमादारभ्य रतिनामान्युपलक्षयेत् । दशमादारभ्य भोजननामान्युपलक्षयेत् । पुनर्निवृत्य लग्नादारभ्य स्वप्ननामान्युपलक्षयेत् । चतुर्थादारभ्य क्षत्रनामान्युपलक्षयेत् । सप्तमादारभ्य चिन्तानामान्युपलक्षयेत् । दशमादारभ्य पुरुषादिनामान्युपलक्षयेदिति भद्रम् ॥ १२ ॥

रचिताक्षरकोशस्य टीका शिष्यहितावहा ।
भट्टोत्पलेन सुस्पष्टा श्लोकैः खाङ्गाश्विसम्मितैः—इति ॥

एवमेव गतेऽक्षरकोशे आगतस्य नामानयनमाह ।

**द्व्यक्षरं चरगृहांशकोदये**
**नाम चास्य चतुरक्षरं स्थिरे ।**
**नामयुग्ममपि च द्विमूर्त्तिषु**
**त्र्यक्षरं भवति चास्य पञ्चभिः ॥ १४ ॥**

यस्मिन् तस्मिन् राशौ लग्नगते चरगृहांशकोदये तत्काले तस्य चरराश्यंशको लग्नगतो भवति । तदा तस्यागन्तुः प्रष्टुर्वा द्व्यक्षरं नाम । लग्ननवांशकयोर्भेदे यो बलवांस्तद्वशान्नाम । एवं स्थिरलग्ने स्थिरनवांशकोदये च चतुरक्षरं नाम । द्विमूर्तिषु द्विस्वभावेषु लग्नगतेषु तन्नवांशकेषु चास्य नामयुग्मं नामद्वितयं भवति । तत्रैकं नाम त्र्यक्षरम् । द्वितीयं पञ्चभिरक्षरैर्भवति । एवं चरलग्ने चरांशके विज्ञेयम् ॥ १४ ॥

अथ नामवर्णानयनमाह ।

**काद्यास्तु वर्गाः कुजशुक्रसौम्य-**
**जीवार्कजानां क्रमशः प्रदिष्टाः ।**
**वर्णाष्टकं यादि च शीतरश्मे-**
**रवेरकारात् क्रमशः स्वराः स्युः ॥ १५ ॥**

नामानि चाग्न्यम्बुकुमारविष्णु-
शक्रेन्द्रपत्नीचतुराननानाम् ।
तुल्यानि सूर्यात् क्रमशो विचिन्त्य
द्वित्र्यादिवर्णैर्घटयेत् स्वबुद्ध्या ॥ १६ ॥

काद्यास्तु वर्गा इति । ककाराद्या वर्गाः कुजादीनां भौमादीनां क्रमशः परिपाट्या उक्ताः । तद्यथा । कवर्गः कुजस्य । चवर्गः शुक्रस्य । टवर्गः सौम्यस्य बुधस्य । तवर्गो जीवस्य गुरोः । पवर्गोऽर्कजस्य सौरस्य । यादि यकारादिवर्णाष्टकं शीतरश्मेश्चन्द्रस्य । रवेरादित्यस्याकारात् प्रभृति क्रमशो द्वादश स्वराः स्युर्भवेयुः । प्रयोजनम् । चतुर्षु लग्नादिषु केन्द्रेषु ये तत्कालं नवांशकाः समुद्गताः । तेषां येऽधिपतयो ग्रहास्तेषां ये वर्गा उक्तास्तैर्वर्गैरंशकगणनया प्राग्वदक्षरकोशाभिहितं प्राग्वद्वर्णमुत्पाद्य तैर्वर्णैस्तस्य नामोत्पादनीयमिति । अत एव मेषे ककार इत्यादिकस्याक्षरचक्रस्य न्यासः प्रदर्शितः । किन्तु तत्रस्थो ग्रहो वर्गोत्तमस्वराशिद्रेष्काणनवांशोच्चवक्रस्थितो भवति तदायुर्दायगणनावद्द्विस्त्रिगुणत्वमक्षराणां कार्यम् । [1]द्विस्त्रिगुणत्वे सकृत् त्रिगुणमिति च । वर्गोत्तमादिवर्जितोऽन्यतः स्थितः पापोऽक्षरं हन्ति । एवं स्वरान् व्यञ्जनानि च सङ्गृह्य ततो नामरचना । लग्नकेन्द्रादारभ्याक्षरक्रमेणोर्ध्वाधोभागयोजनां कृत्वा नामरचनायै लग्नकेन्द्रस्य तनुत्वात् प्राधान्यात् प्रथमं तद्वर्णं नाम्नि योजयेत् । ततश्चतुर्थोत्पन्नान् ततः सप्तमजान् ततो दशमजानिति । अथवा केन्द्रांशकस्वामिबलवशादिति । अन्ये एवमक्षरानयनं व्याचक्षते । यथार्कस्य राशौ सार्धलिप्ताशते भुक्ते स्ववर्गादेकैकमक्षरं भवति । चन्द्रस्य पञ्चविंशत्यधिके शतद्वये भुक्ते एकैकमक्षरं स्ववर्गाद्भवति । अन्येषां लिप्ताशतद्वयेनैकैकमक्षरं भवति । द्विस्त्रिगुणत्वं नामानीति । आदित्ये लग्नपतावंशपतौ वाग्निपर्यायस्तस्य नाम । लग्नांशकपयोर्बलाधिक्यात् । एवं चन्द्र अम्बुपर्यायः । कुजः कुमारपर्यायः । कुमारः कार्त्तिकेयः । बुधो विष्णुपर्यायः । बृहस्पतिः शक्रपर्यायः । शक्र इन्द्रः । शुक्र इन्द्रपत्नीपर्यायः । इन्द्रपत्नी शची ।

---

१ लघुजातके ७ अध्यायस्य २ श्लोकः ।

सोऽश्चतुराननपर्यायः । चतुराननश्चतुर्मुखो ब्रह्मा । सूर्यादादित्यात् प्रभृत्येषां तुल्यानि सदृशानि नामानि क्रमशः परिपाट्या विचिन्त्य विचार्य द्वित्र्यादिवर्णैर्वर्णद्वयेन वर्णत्रयेण वर्णचतुष्टयेन वर्णपञ्चकेन वा स्वबुद्ध्यात्मीयया बुद्ध्या नाम घटयेदुत्पादयेत् । एतदुक्तं भवति । ह्यक्षरादिकं नाम बहुभिर्वर्णैर्लब्धैः स्वबुद्ध्योत्तरमध्याधरक्रमेण विचार्याऽऽपादिकं नाम घटयेत् । बलिनो ग्रहस्याक्षरमुत्तरम् । मध्यबलस्य मध्यगतम् । बलहीनस्याधो योज्यम् । अनेन न्यायेन नामानयनं कार्यमिति ॥ १५–१६ ॥

अथ तेषामेवागतनाम्नां वयोज्ञानमाह ।

**वयांसि तेषां स्तनपानबाल्य-**
**व्रतस्थिता यौवनमध्यवृद्धाः ।**
**अतीववृद्धा इति चन्द्रभौम-**
**ज्ञशुक्रजीवार्कशनैश्चराणाम् ॥ १७ ॥**

तेषां लब्धनाम्नां सर्वग्रहेभ्यश्चन्द्रे बलवत्यंशकपतौ लग्नपतौ वा स्तनपानं वयः । शिशुरित्यर्थः । एवं भौमे बाल्यं वर्षद्वयाद्वर्षषट्कं यावत् । बुधे व्रतस्थितो ब्रह्मचारी । आसप्तमात् षोडशवर्षः । शुक्रे यौवनोपेतस्त्रिंशद्वर्षं यावत् । जीवे मध्यः पञ्चाशद्वर्षः । अर्के सूर्ये वृद्धोऽशीतिवर्षः । शनैश्चरेऽतीववृद्धाः शतवार्षिका इति ॥ १७ ॥

समाप्तं सर्वं शाकुनम् ।

वराहमिहिराचार्यरचिते शाकुनार्णवे ।

अर्थिनामुत्पलश्चक्रेऽर्थाप्तये विवृतिप्लवम् ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ शाकुनोत्तरं

नाम पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

## अथ पाकाध्यायो व्याख्यायते ।

तत्रादावेव ग्रहाणां चारोक्तफलस्य पाककालज्ञानमाह ।

**पक्षाद्भानोः सोमस्य मासिकोऽङ्गारकस्य वक्त्रोक्तः ।**
**आदर्शनाच्च पाको बुधस्य जीवस्य वर्षेण ॥ १ ॥**

**षड्भिः सितस्य मासैरब्देन शनेः सुरद्विषोऽब्दार्धात् ।**
**वर्षात् सूर्यग्रहणे सद्यः स्यात् त्वाष्ट्रकीलकयोः ॥ २ ॥**
**त्रिभिरेव धूमकेतोर्मासैः श्वेतस्य सप्तरात्रान्ते ।**
**सप्ताहात् परिवेषेन्द्रचापसन्ध्याभ्रसूचीनाम् ॥ ३ ॥**

पश्चाद्भानोरिति । भानोरादित्यस्य यत् फलमर्कचारोक्तं शुभमशुभं वा तत् पश्चात् पञ्चदशभिर्दिनैर्भवति । एवं सोमस्य मासिको मासप्रमाणमस्य मासिको मासेन भवति । अङ्गारकस्य भौमस्य वक्रोक्तो वक्रे कथितः । यथा

[1]तद्वक्रमुष्णमुदये पीडाकरमग्निवार्त्तानाम् ।

" दूष[2]यति रसानुदये " " व्यालं चयोदशाच्चतुर्दशाद्वा त्रिप[3]च्यते-ऽस्तमये " ॥

"त[4]त्कालं मुखरोग"मिति । "तद[5]नुवक्रे दस्युगणेभ्यः पीडा"मिति । अन्यदपि नक्षत्राश्रितं यत्फलं तदेवमेव यस्मिन् वक्रे तन्नक्षत्रं पठ्यते । उदयर्क्षाद-नन्तरं तस्य नक्षत्रस्य तद्वक्रोक्तसमः पाककाल इति परिशेषनक्षत्राणां नक्षत्र-पाककालमिति आगमविदः । बुधस्यादर्शनात् पाकः सूर्यमण्डलान्निर्गतो याव-त्कालो दृश्यते तावानेव तस्य पाकः । जीवस्य बृहस्पतेर्वर्षेण पाकः ॥ १ ॥

षड्भिः सितस्य मासैरिति । सितस्य शुक्रस्य स्वचारे यदुक्तं फलं वी[6]थि-मण्डलनक्षत्राश्रितं तस्य षड्भिर्मासैः पाकः । अब्देन वर्षेण शनेः सौरस्य । सुरद्विषो राहोश्चन्द्रस्य ग्रहणे अब्दार्धात् षड्भिर्मासैः पाकः । सूर्यग्रहणेऽ-र्कोपरागे वर्षात् फलम् । सत[7]मस्कं पर्व विनेति यस्त्वष्टा नाम ग्रह उक्त-स्तस्य त्वष्टुस्तामसकीलकानां च सद्यस्तस्मिन्नेवाहनि पाकः स्याद्भवेत् ॥ २ ॥

त्रिभिरेवेति । धूमकेतोस्त्रिभिरेव मासैः फलं पच्यते । श्वेतस्य श्वेत-केतोः सप्तरात्रान्ते सप्तभिर्दिनैः । परिवेषः सूर्याचन्द्रमसोः । इन्द्रचापम् । सन्ध्याफलम् । अभ्रसूची । एषां सर्वेषां सप्ताहात् फलमिति ॥ ३ ॥

---

१ द्रष्टव्योऽस्य ग्रन्थस्य १६३ पृष्ठे १ श्लोकः ।
२ द्रष्टव्योऽस्य ग्रन्थस्य १६४ पृष्ठे २ श्लोकः ।
३ द्रष्टव्योऽस्य ग्रन्थस्य १६४ पृष्ठे ३ श्लोकः ।
४ द्रष्टव्योऽस्य ग्रन्थस्य १६५ पृष्ठे ४ श्लोकः ।
५ द्रष्टव्योऽस्य ग्रन्थस्य १६५ पृष्ठे ५ श्लोकः ।
६ द्रष्टव्यान्यस्य ग्रन्थस्य २१३-२२३ पृष्ठानि ।
७ द्रष्टव्योऽस्य ग्रन्थस्य ८६ पृष्ठे ६ श्लोकः ।

अन्येष्वप्याह ।

**शीतोष्णविपर्यासः फलपुष्पमकालजं दिशां दाहः ।**
**स्थिरचरयोरन्यत्वं प्रसूतिविकृतिश्च षण्मासात् ॥ ४ ॥**

शीतोष्णविपर्यासः । उष्णकाले शीतता शीतकाले तूष्णता । अथवा स्वभावशीतगतस्य वस्तुन उष्णता । स्वभावोष्णस्य शीतता । फलं पुष्पं वा अकालजं अनृतावुत्पन्नम् । दिशां दाहो दिग्दाहः । स्थिरचरयोरन्यत्वं विपर्ययः । स्थिरस्य वृक्षादेश्चरता । चतुष्पदादेरचलत्वम् । प्रसूतिविकृतिरतिप्रसवविकारश्च । षण्मासात् पच्यत इत्यर्थः ॥ ४ ॥

अन्येष्वप्याह ।

**अक्रियमाणककरणं भूकम्पोऽनुत्सवो दुरिष्टं च ।**
**शोषश्चाशोष्याणां स्रोतोऽन्यत्वं च वर्षार्धात् ॥ ५ ॥**

अक्रियमाणकस्याप्रीप्रचारस्य करणम् । अथवा यत्किञ्चित्कर्म कर्ता न करोति स्वयमेव कर्तुमायाति तदक्रियमाणकर्मकरणम् । अथवा यन्न कदाचित् कृतमकस्मात् क्रियते तदप्यक्रियमाणककरणम् । भूकम्पः क्षितिचलनम् । अनुत्सवः प्राप्तोत्सवस्याकरणम् । दुरिष्टं दुष्टमतीवाशोभनं यदरिष्टमनभिमतं वा यत् । अशोष्याणां सरःप्रभृतीनां शोषः । स्रोतसां नदनदीनामन्यत्वं प्रतीपगमनम् । ह्रदादीनामन्यत्वं शोषो जलाधिक्यं वा । वर्षार्धात् षण्मासात् पच्यते ॥ ५ ॥

अन्येष्वप्याह ।

**स्तम्भकुसूलार्चानां जल्पितरुदितप्रकम्पितस्वेदाः ।**
**मासत्रयेण कलहेन्द्रचापनिर्घातपाकाश्च ॥ ६ ॥**

स्तम्भः प्रसिद्धः । कुसूलं मृन्मयं यत्रान्नादिकं स्थाप्यते । अर्चा प्रतिमा । एतासां जल्पितं सम्भाषणं रुदितमश्रुविमोचनम् । प्रकम्पितं चलनम् । स्वेदो घर्मः । एते सर्वे मासत्रयेण पच्यन्ते । तथा कलहः । इन्द्रचापम् । निर्घातः । एतेषां च पाको मासत्रयेण परिपच्यते । इन्द्रचापस्य पूर्वं सप्ता[1]हात् फलमुक्तम् । सप्ताहाद्यदि न परिपच्यते तदा मासत्रयेणेति ॥ ६ ॥

---

१ द्रष्टव्यो ऽस्यैवाध्यायस्य ३ श्लोकः ।

अन्येऽप्याहुः ।

**कीटाखुमक्षिकोरगबाहुल्यं मृगविहङ्गविरुतं च ।**
**लोष्टस्य चाप्सु तरणं त्रिभिरेव विपच्यते मासैः ॥ ७ ॥**

कीटः कृमिः । आखुर्मूषकः । मक्षिका प्रसिद्धा । उरगाः सर्पाः । एषां बाहुल्यं प्रभूतता । मृगाणां मृगजातीनाम् । विहङ्गानां पक्षिणां च विरुतम् । लोष्टस्य मृन्मयस्य चाप्सु जले तरणं मज्जनं त्रिभिरेव मासैर्विपच्यते ॥ ७ ॥

अन्येऽप्याहुः ।

**प्रसवः शुनामरण्ये वन्यानां ग्रामसम्प्रवेशश्च ।**
**मधुनिलयतोरणेन्द्रध्वजाश्च वर्षात् समधिकाद्वा ॥ ८ ॥**

शुनां सारमेयाणामरण्ये निर्जने प्रसवः । वन्यानां सत्त्वानां ग्रामे सम्प्रवेशः । मधुनिलयो माक्षिकस्थानम् । तोरणं प्रसिद्धम् । इन्द्रध्वज इन्द्रयष्टिः । एते सर्वे एव वर्षात् परिपच्यन्ते समधिकाद्वा ॥ ८ ॥

अन्येऽप्याहुः ।

**गोमायुगृध्रसङ्घा दशाहिकाः सद्य एव तूर्यरवः ।**
**आक्रुष्टं पक्षफलं वल्मीको विदरणं च भुवः ॥ ९ ॥**

गोमायुः शृगालः । गृध्राणां सङ्घाः समूहाः । एते दशाहिका दशभिर्दिनैः पच्यन्ते । तूर्यरवः तूर्यशब्दः । अनाहतस्य स्वयमेव शब्दः । आहतस्य विस्वनत्वं वा सद्यस्तस्मिन्नेवाहनि पच्यते । आक्रुष्टं शपमानं पक्षफलं पक्षेण पच्यते । तथा वल्मीको गृहादुत्पन्नो भुवो भूमेर्विदरं स्फोटनं च पक्षेण पच्यते ॥ ९ ॥

**अहुताशप्रज्वलनं घृततैलवसादिवर्षणं चापि ।**
**सद्यः परिपच्यन्ते मासेऽध्यर्धे च जनवादः ॥ १० ॥**

अहुताशप्रज्वलनमनग्निज्वलनम् । घृतवर्षणम् । तैलवर्षणम् । वसावर्षणम् । आदिग्रहणान्मांसरक्तान्नपानपुष्पफलपर्णमृत्तिकापाषाणवर्षणं च । एते सर्वे सद्य एव तस्मिन्नहनि परिपच्यन्ते । जनवादो जनैरपवादोऽध्यर्धेन मासेन सार्धेन परिपच्यते ॥ १० ॥

अन्येष्वप्याह ।

छत्रचितियूपहुतवहबीजानां सप्तभिर्भवति पक्षैः ।
छत्रस्य तोरणस्य च केचिन्मासात् फलं प्राहुः ॥ ११ ॥

छत्रमातपत्रम् । चितिर्येष्टकचितिः । यूपो याज्ञिकः । हुतवहोऽग्निः । बीजानि प्रविष्टानि यान्युप्यन्ते । एतेषां सर्वेषां यद्वैकृतं तत् सप्तभिः पक्षैः सार्धैस्त्रिभिर्मासैः पच्यते । केचिन्मुनयश्छत्रस्य तोरणस्य च मासात् फलं प्राहुरुक्तवन्तः ॥ ११ ॥

तथा च गर्गः ।

चितियूपहुताशेषु फलं पक्षैस्तु सप्तभिः ।
आतपत्रफलं मासात् तोरणस्यैवमस्त्विति ॥

अन्येष्वप्याह ।

अत्यन्तविरुद्धानां स्नेहः शब्दश्च वियति भूतानाम् ।
मार्जारनकुलयोर्मूषकेण सङ्गश्च मासेन ॥ १२ ॥

अत्यन्तविरुद्धानामनिशत्रूणां च प्राणिनां स्नेहः प्रीतिः परस्परम् । वियत्याकाशे भूतानां प्राणिनां शब्दः । मार्जारस्य बिडालस्य । नकुलः प्रसिद्धस्तस्य च । मूषकेण सङ्गो युतिः । मासेन पच्यते ॥ १२ ॥

अन्येष्वप्याह ।

गन्धर्वपुरं मासाद्रसवैकृत्यं हिरण्यविकृतिश्च ।
ध्वजवेश्मपांशुधूमाकुला दिशश्चापि मासफलाः ॥ १३ ॥

गन्धर्वपुरं गन्धर्वनगरं मासात् पच्यते । रसादीनां मधुरादीनां वैकृत्यं विकारः । हिरण्यस्य सुवर्णादिकस्य च विकृतिर्विकारोऽन्यवर्णत्वम् । ध्वजस्य पताकाया भङ्गो वा वेश्मनो गृहस्य च विकारः । पांशुना रजसा धूमेन चाकुला व्याप्ता दिशः । सर्वे एते मासफला मासेन पच्यन्ते ॥ १३ ॥

अथाश्विन्यादीनां पाककालज्ञानमाह ।

नवकैकाष्टदशैकैकषट्त्रिकत्रिकसप्तमासपाकानि ।
नक्षत्राण्यश्विनिपूर्वकाणि सद्यःफलाश्लेषा ॥ १४ ॥

नक्षत्राण्यश्विनिपूर्वकाणि । अश्विनी पूर्वं येषां तानि माससङ्ख्यया-कानि । तद्यथा । अश्विन्या योगताराया उपसर्गेण नवभिर्मासैः पाकः । एकेन मासेन भरण्याः । अष्टाभिः कृत्तिकायाः । दशभी रोहिण्याः । एकेन मासेन मृगशिरसः । षड्भिरार्द्रायाः । त्रिभिः पुनर्वसोः । त्रिभिरेव पुष्यस्य । आश्लेषा सद्यःफला । तस्मिन्नेवाहनि फलपाकं करोति ॥ १४ ॥

अथ मघादीनां नक्षत्राणां फलपाकमाह ।

**पित्र्यान्मासः षट् षट् त्रयोऽर्द्धमष्टौ च त्रिषडेकैकाः ।**
**मासचतुष्केऽषाढे सद्यःपाकाभिजित्तारा ॥ १५ ॥**

पित्र्यं मघा । मघाया योगतारकोपसर्गे मासेन पाकः । पूर्वफल्गुन्याः षड्भिः । उत्तरफल्गुन्याश्च षड्भिरेव । हस्तस्य त्रिभिः । चित्राया अर्धमासेन पक्षेण । अष्टभिः स्वातेः । त्रिभिर्विशाखायाः । षड्भिरनुराधायाः । एकेन ज्येष्ठायाः । एकेन मूलस्य । अषाढे द्वे पूर्वोत्तराषाढे मासचतुष्के चतुर्भिर्मासैस्तयोः पाकः । अभिजित्तारा सद्यःपाका तस्मिन्नेवाहनि पाकं करोति ॥ १५ ॥

अथ श्रवणादीनां पाककालज्ञानमाह ।

**सप्ताष्टावध्यर्द्धं त्रयस्त्रयः पञ्च चैव मासाः स्युः ।**
**श्रवणादीनां पाको नक्षत्राणां यथासङ्ख्यम् ॥ १६ ॥**

यथाक्रमेण श्रवणादीनां नक्षत्राणां पाकः । तद्यथा । सप्तभिर्मासैः श्रवणस्य पाकः । अष्टभिर्धनिष्ठायाः । अध्यर्धेन सार्धेन मासेन शतभिषजः । त्रिभिः पूर्वायाः । त्रिभिरुत्तरायाः । पञ्चभी रेवत्याः । एवमनेन क्रमेण श्रवणादीनां नक्षत्राणां पाकः ॥ १६ ॥

अथ पाकाध्याये येषामुत्पातानां पाको नोक्तस्तेषां भूकम्पाध्याये उक्तः । यथा ।

पक्षैश्चतुर्भिरनिलस्त्रिभिरग्निर्देवराट् च सप्ताहात् ।
सद्यः फलति च वरुणो येषु न कालोऽद्भुतेषूक्तः ॥

अद्भुते दृष्टे शान्त्यादिकं कृत्वाऽद्भुतशान्तिं नयेत् । अन्यथा पाकभेदो भवत्येतज्ज्ञापयितुमाह ।

---

१ द्रष्टव्योऽस्यैव ग्रन्थस्य ४५४ पृष्ठे २७ श्लोकः ।

निगदितसमये न दृश्यते चे-
दधिकतरं द्विगुणे प्रपच्यते तत् ।
यदि न कनकरत्नगोप्रदानै-
रुपशमितं विधिवद्द्विजैश्च शान्त्या ॥ १७ ॥

निगदितसमये यथोक्तकाले चेद्यदि न दृश्यते पाकस्तदा तस्मात् पाकोऽधिकतरं द्विगुणे काले प्रपच्यते पाकमायाति । यदि कनकप्रदानेन सुवर्णदानेन । रत्नानां मणीनां प्रदानेन । गवां धेनूनां प्रदानेन । एतैस्तथा द्विजैर्ब्राह्मणैश्च विधिवत् शान्त्या नोपशमितम् । तदाधिकतरमतीवाधिकं द्विगुणे काले समये । यस्माद्यस्य काल उक्तस्तस्मिन् द्विगुणे तत् प्रपच्यते पाकमायातीति ॥ १७ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ पाकाध्यायो नाम एकाणवतितमोऽध्यायः ॥ ९६ ॥

## अथ नक्षत्रकर्मगुणाध्यायो व्याख्यायते ।

तत्रादावेवाश्विन्यादीनां तारकाप्रमाणज्ञानमाह ।

शिखिगुणरसेन्द्रियानलशशिविषयगुणर्तुपञ्चवसुपक्षाः ।
विषयैकचन्द्रभूतार्णवाग्निरुद्राश्विवसुदहनाः ॥ १ ॥
भूत[1]शतपक्षवसवो द्वात्रिंशच्चेति तारकामानम् ।
क्रमशोऽश्विन्यादीनां कालस्ताराप्रमाणेन ॥ २ ॥
नक्षत्रजमुद्वाहे फलमब्दैस्तारकामितैः सदसत् ।
दिवसैर्ज्वरस्य नाशो व्याधेरन्यस्य वा वाच्यः ॥ ३ ॥

शिखिगुणेति । शिखिनोऽग्नयस्त्रयोऽश्विन्यास्तारकाप्रमाणम् । गुणास्त्रयः सत्त्वरजस्तमांसि भरण्यास्तारकाप्रमाणम् । रसाः षण्मधुरादयः कृत्तिकायाः । इन्द्रियाणि श्रोत्रादीनि पञ्च रोहिण्याः । अनलास्त्रयोऽग्नयो मृगशिरसः । शशी चन्द्र एक आर्द्रायाः । विषयाः शब्दादयः पञ्च पुनर्वसोः । गुणास्त्रयस्तिष्यस्य । ऋतवः शिशिरादयः षडाश्लेषायाः । पञ्च मघायाः ।

[1] भूतशरपक्षवसवः-इति पाठान्तरम् ।

वसवोऽष्टौ पूर्वफल्गुन्या: । पक्षौ द्वौ उत्तरफल्गुन्या: । विषया: पञ्च हस्तस्य । एकश्चित्राया: । चन्द्र एक एव स्वाते: । भूतानि पञ्च विशाखाया: । अर्णवा: समुद्राश्चत्वारोऽनुराधाया: । अग्नयस्त्रयो ज्येष्ठाया: । रुद्रा एकादश मूलस्य । अश्विनौ द्वौ पूर्वाषाढाया: । वसवोऽष्ट उत्तराषाढाया: । दहना अग्नयस्त्रय: श्रवणस्य । भूतानि पञ्च पृथिव्यादीनि धनिष्ठाया: । शतं शतभिषज: । केचिच्छरा: पञ्चेति पठन्ति । पक्षौ द्वौ पूर्वभद्रपदाया: । वसवोऽष्ट उत्तरभद्रपदाया: । द्वात्रिंशत् रेवत्या: । इत्येवंप्रकारं तारकामानम् । नक्षत्राणामेषां च क्रमश: परिपाट्या ताराप्रमाणेन तत्सङ्ख्यया कालो ज्ञेयश्चेत्याह । नक्षत्रजमुद्वाह इति । उद्वाहे विवाहे नक्षत्रस्य यत् फलं सदसच्छुभमशुभं वा तारकामितैस्तारकासङ्ख्यैरब्दैर्वक्तव्यम् ।

यथा ।

मृगशिरसि मघायामिति ।

यथा ।

बहुसुखसुतदासीवित्तसौभाग्ययुक्तेति ।

यत् फलं संक्षोभनं तथार्द्राद्ये भचतुष्टये नेति । सदसत्फलं शुभं दुष्टं ततारकामितैस्तारकासङ्ख्यैरब्दैर्भवति । दिवसैर्ज्वरस्य नाश इति । तारकामितैर्दिवसैर्ज्वरस्योत्पन्नस्य नाशो वाच्यो वक्तव्य: । इति तारकामानम् ॥ १–३ ॥

अथ नक्षत्रदेवता आह ।

**अश्वियमदहनकमलजशशिशूलभृददितिजीवफणिपितर: ।**
**योन्यर्यमदिनकृत्त्वष्टृपवनशक्राग्निमित्राश्च ॥ ४ ॥**
**शक्रो निर्ऋतिस्तोयं विश्वे ब्रह्मा हरिर्वसुर्वरुण: ।**
**अजपादोऽहिर्बुध्न्य: पूषा चेतीश्वरा भानाम् ॥ ५ ॥**

अश्वियमदहनेति । अश्व्यादीनां क्रमेण भानां नक्षत्राणामीश्वरा: । तद्यथा । अश्विनावश्विन्या: । यमो भरण्या: । दहनोऽग्नि: कृत्तिकाया: । कमलजो ब्रह्मा रोहिण्या: । शशी चन्द्रो मृगशिरस: । शूलभृद्रुद्र आर्द्राया: । आदित्य: पुनर्वसो: । जीवो बृहस्पतिस्तिष्यस्य । फणी सर्प आश्लेषायां: । पितरो मघाया: । योनिर्भग: पूर्वफल्गुन्या: । अर्यमा उत्तरफल्गुन्या: । दिनकृदादित्यो हस्तस्य । त्वष्टा चित्राया: । पवनो

वायुः स्वातेः । शक्राग्नी इन्द्राग्नी विशाखायाः । मित्रोऽनुराधायाः । शक्र इन्द्रो ज्येष्ठायाः । निर्ऋती राक्षसो मूलस्य । तोयं जलं पूर्वाषाढायाः । विश्वे देवा उत्तराषाढायाः । ब्रह्माऽभिजितः । हरिर्विष्णुः श्रवणस्य । वसुर्धनिष्ठायाः । वरुणोऽपाम्पतिः शतभिषजः । अजपादोऽजैकपात् पूर्वभद्रपदायाः । अहिर्बुध्न्य उत्तरभद्रपदायाः । पूषा रेवत्याः । चशब्दः समुच्चये । इत्येवंप्रकारा भानां नक्षत्राणामीश्वराः स्वामिनो नक्षत्रदेवताः ॥ ४–५ ॥

अधुना ध्रुवाणि नक्षत्राणि तैश्च यानि कर्माणि क्रियन्ते तानि चाह ।

**त्रीण्युत्तराणि तेभ्यो रोहिण्यश्च ध्रुवाणि तैः कुर्यात् ।**
**अभिषेकशान्तितरुनगरधर्मबीजध्रुवारम्भान् ॥ ६ ॥**

तेभ्यो नक्षत्रेभ्यस्त्रीण्युत्तराणि । उत्तरफल्गुनी उत्तराषाढोत्तरभाद्रपदा तथा रोहिण्यः । एतानि नक्षत्राणि चत्वारि ध्रुवाणि स्थिराणीत्यर्थः । तैश्च ध्रुवैः किं तत् । अभिषेको नृपादेः । शान्तिः शान्तिकमुत्पातप्रतीकारः । तरुर्वृक्षस्तस्य रोपणम् । नगरं पत्तनं तत्प्रतिष्ठादि । धर्मो धर्मक्रिया । बीजं बीजवपनम् । अन्येषां ध्रुवाणां स्थिराणां कर्मणामारम्भात् कुर्यादिति ॥ ६ ॥

तथा च पराशरः ।

चत्वारो हि चतुष्का ध्रुवो मृदुर्दारुणस्तथा क्षिप्रः ।
उग्राणि पञ्च पञ्च चराणि साधारणे द्वे च ॥

चत्वारि खलु नक्षत्रेषु ध्रुवाणि भवन्ति । प्राजापत्यं त्रीण्युत्तराणि । तेषु पुरनगरग्रामकाननोपवनभवनानि । वेशनतरुकुसुमबीजवपनस्थिरनिधिनिधानकृषिधनगोऽश्वमित्रसङ्ग्रहणस्नपनाङ्कुरणपव्युद्वहनचरणाभिगमननृपतिनायकाभिषेकमन्त्रेज्याव्रतनियमायुष्यपौष्टिकशान्तिकधान्यान्यन्यानि स्थिराणि कारयेत् । ऋणधनप्रयोगपथगमनमद्यचौरचोराणि च वर्जयेत् ।

अथ तीक्ष्णानि नक्षत्राणि तैर्यानि कर्माणि क्रियन्ते तानि चाह ।

**मूलशिवशक्रभुजगाधिपानि तीक्ष्णानि तेषु सिध्यन्ति ।**
**अभिघातमन्त्रवेतालबन्धवधभेदसंबन्धाः ॥ ७ ॥**

मूलं प्रसिद्धम् । शिवाधिपमार्द्रा । शक्राधिपं ज्येष्ठा । भुजगाधिपं सर्पदैवत्यमाश्लेषा । एतानि चत्वारि नक्षत्राणि तीक्ष्णानि दारुणानीत्यर्थः ।

तेषु तीक्ष्णेषु सिद्ध्यन्ति। के ते। अभिघात उपद्रवः । मन्त्रो मन्त्रसाधनप्रयोगः । वेतालं वेतालोत्थापनादिकर्म । बन्धो बन्धनम् । बधस्ताडनम् । भेदः पृथक्करणं श्लिष्टयोर्द्वयोः । संबन्धो राजकुल आवेदनम् । एते सिद्ध्यन्ति ॥ ७॥

तथा च पराशरः ।

चत्वारि नक्षत्रेषु दारुणानि भवन्ति । आर्द्रा श्लेषा ज्येष्ठा मूलमित्येतेष्वरिनगरस्कन्धावारावरोधनमथ नरेन्द्राभिघातयुद्धकलहकूटसाहसोपधानभेदवञ्चनविवादचौर्यानृतशपथकितवच्छलनपलायनायुधग्रहणकरणदर्शनाभिचारगदवियोगबधभृत्यनिग्रहचतुष्पददमनभटनियोगान् विशेषतो मूले मूलकर्म । रुद्रर्क्षेषु पीडनवपनधान्यतरुकुसुमबीजवेश्मप्रवेशस्थिरनिधिनियोगांश्च कारयेत् । सर्वेषु च सर्वं दारुणं कर्म ॥

अथोग्राणि नक्षत्राणि तैश्च यत् कर्म कर्तव्यं तच्चाह ।

**उग्राणि पूर्वभरणीपित्र्याण्युत्सादनाशशाठ्येषु ।**
**योज्यानि बन्धविषदहनशस्त्रघातादिषु च सिद्ध्यै ॥ ८ ॥**

पूर्वत्रयं पूर्वफल्गुनी पूर्वाषाढा पूर्वभद्रपदा इति । भरणी । पित्र्यं मघा । एतानि पञ्च नक्षत्राण्युग्राणि भवन्ति । तानि चोत्सादे उत्सादने । परस्यार्थादीनां नाशे । शाठ्ये शठभावे च । एतेषु कार्येषु योज्यानि । तथा बन्धे बन्धने । विषे शत्रूणां विषप्रयोगे । दहनेऽग्निदाहे । शस्त्रे शस्त्रप्रहरणे । घाते मारणे । आदिग्रहणादन्येषूपद्रवकरणेषु ज्वरातीसारोत्पादनेषु सर्वकर्मसु सिद्ध्यै सिद्ध्यर्थं योज्यानि प्रयोक्तव्यानि ॥ ८ ॥

तथा च पराशरः ।

पञ्च नक्षत्राण्युग्राणि भवन्ति । मघा भरणी त्रीणि पूर्वाणीति । एषु भटचोरगुल्मपुरुषदूतकारशौल्क्यशाठिकक्षुद्रान् स्थापयेत् । तथा निभृतनियमनप्रणिधिसम्प्रयोगवैरोत्थानकलहकोलाहलसम्प्रहारवञ्चनविवादान्यद्रव्यहरणान्यदारगमनद्यूताभिसारविलप्रवर्तनयुद्धयोद्धायुधग्रहणकरणदर्शनारम्भाणि । नगरग्रामजनपदपुराभिघातयन्त्रोपकरणदुर्गक्रियाणां परायिकप्रयोगान् । युद्धसङ्ग्रामाभियोगेषु प्रथममरयोऽभिहन्तव्या इत्यादिषु विषप्रयोगानलविसर्गाभिचारं कारयेत् । विशेषतः पित्र्येऽपितृपिण्डसम्प्रदानकोष्ठागारविविधाकारनि-

धानानि । भाग्ये सौभाग्यकर्मस्थापनानि । आप्ये जलवाहपुरासवकूपनदीवा-
हकुल्याखननानि । सर्वेषु सर्वमुयं च ॥

अथ क्षिप्राणि नक्षत्राणि तैश्च यानि कर्माणि क्रियन्ते तानि चाह ।

**लघु हस्ताश्विनपुष्याः पण्यरतिज्ञानभूषणकलासु ।**
**शिल्पौषधयानादिषु सिद्धिकराणि प्रदिष्टानि ॥ ९ ॥**

हस्तः प्रसिद्धः । आश्विनमश्विनी । पुष्यस्तिष्यः । केचिदभिजितमपी-
च्छन्ति । एतन्नक्षत्रत्रयं चतुष्टयं वा लघु क्षिप्रमित्यर्थः । एतानि पण्ये
विक्रये । रतौ पुंरतौ । ज्ञाने शास्त्रारम्भे । भूषणे अलङ्करणे । कलासु चित्र-
गीतवाद्यनृत्यादिषु । शिल्पकर्मणि तक्षककर्मलोहकारकर्मादौ । औषधे द्रव्य-
प्रयोगे । याने यात्रायाम् । आदिग्रहणाद्दृणग्रहणे धनप्रयोगे च । एतेषु कार्येषु
सिद्धिकराण्युक्तानि ॥ ९ ॥

तथा च पराशरः ।

चत्वारि नक्षत्राणि क्षिप्राणि भवन्ति । हस्तः पुष्योऽभिजिदश्विनमित्ये-
तेषु विविधपण्यविक्रयधनप्रयोगगोऽश्वाश्वतरखरकरभदमनस्कन्धावारब-
लसार्थनिर्याणदूतचरसम्प्रेषणाध्वगमनयजनयाजनाध्ययनाध्यापनशिल्पारम्भ-
ध्वजपताकातपत्रबालव्यजनसमुच्छ्रयस्नपनगजग्रहणारोहणभेषज्यरसायनगदग-
दौषधग्रहणधारणानि सर्वाण्येव चात्र क्षिप्राणि कर्माणि कारयेत् ॥

अथ मृदूनि नक्षत्राणि तैश्च यानि कर्माणि क्रियन्ते तानि चाह ।

**मृदुवर्गोऽनूराधाचित्रापौष्णैन्दवानि मित्रार्थे ।**
**सुरतविधिवस्त्रभूषणमङ्गलगीतेषु च हितानि ॥ १० ॥**

अनूराधा । चित्रा । पौष्णं रेवती । ऐन्दवं मृगशिरः । एतानि चत्वारि
नक्षत्राणि मृदुवर्गः । तानि च मित्रार्थे मित्रकरणार्थे अवणादिप्रयोगे । सुरत-
विधौ सुरतकर्मणि । वस्त्रेषु वस्त्रकर्मादिषु । भूषणेष्वलङ्करणेषु । मङ्गलेषु विवाहो-
पनयनचूडाकरणेषु । गीते च । एतेषु च कर्मसु च हितानि श्रेष्ठानि ॥ १० ॥

तथा च पराशरः ।

चत्वारि नक्षत्रेषु मृदूनि भवन्ति । मृगशिरश्चित्रानूराधा रेवतीत्येतेषू-
पनयनचूडाकरणगोदानादिव्रतनियमजप्यस्वस्त्ययनवहनवपनविस्मापनको-

तुक्रमङ्गलयज्ञत्राहनाध्ययनाध्यापनकन्यावरणपाणिग्रहणधनप्रयोगान् गुरुनरेन्द्राणां वाद्यगीतनृत्ताभिनयालापहास्योद्यानहर्षपरिवर्धनान्यारभेत। मणिरजतालङ्काराम्बरधारणकरणसङ्ग्रहणविक्रयशिल्पप्रयोगगमनप्रयोगसुहृत्संबन्धिबान्धवसंबन्धान्यायुष्यपौष्टिकधर्मार्थकामयुक्तानि सर्वाण्येव चात्र नयनाञ्जनसौभाग्यविचित्रचित्राणि विशेषतः सर्वेषु सर्वाणि मृदूनि कर्माणि कारयेत् ॥

अथ साधारणे नक्षत्रे ताभ्यां यानि च कर्माणि कारयेत् तथा चराणि नक्षत्राणि तैश्च यानि कर्माणि क्रियन्ते तानि चाह ।

**हौतभुजं सविशाखं मृदुतीक्ष्णं तद्विमिश्रफलकारि ।**
**श्रवणत्रयमादित्यानिले च चरकर्मणि हितानि ॥ ११ ॥**

हौतभुजं कृत्तिका । हुतं भुङ्क्ते हुतभुगग्निः । हुतभुज इदं हौतभुजम् । त[1]स्येदमित्यण् । त[2]द्धितेष्वचामादेरिति वृद्धिः । तच्च सविशाखं विशाखासहितम् । एतन्नक्षत्रद्वयं मृदुतीक्ष्णं मृदुसाधारणमित्यर्थः । तच्च विमिश्रफलकारि विमिश्रफलं करोति । मृदूनि दारुणानि च कर्माणि कुर्यादित्यर्थः ॥

तथा च पराशरः ।

द्वे नक्षत्रे साधारणे भवतः । कृत्तिका विशाखेति । तयोर्मृदूनि दारुणानि कर्माणि कुर्यात् । धातून्यादनावर्तनभाण्डागारविपणिगण्योपकरणानि । यज्ञाग्निदहनोपतापनेक्षुघृतविपाचनं वृषभोत्सर्गपशुसङ्कलनदमनान्यारभेत । सर्वप्रहरणानि कारयेत् । ग्रामशिबिरपुरव्रजननगरव्युत्पथग्रन्थम् । विशाखायां विशेषेणेक्षुवृक्षबीजलताकुसुमानि वापयेत् ॥

श्रवणत्रयमिति । श्रवणत्रयं श्रवणं धनिष्ठा शतभिषगिति । आदित्यं पुनर्वसुः । आनिलं स्वातिः । ते आदित्यानिले च । एतानि पञ्च नक्षत्राणि । तानि च चरकर्मण्यस्थिरे कर्मणि हितानि प्रशस्तानि ॥ ११ ॥

तथा च पराशरः ।

पञ्च नक्षत्राणि चराणि भवन्ति । स्वातिः पुनर्वसुः श्रवणं धनिष्ठा शतभिषगिति । एतेषु कुञ्जरमृगमहिषतुरगखरकरभगवां समावहनानि

---

१ पाणिनिव्याकरणस्य ४ । ३ । १२० सूत्रम् ।
२ पाणिनिव्याकरणस्य ७ । २ । ११७ सूत्रम् ।

विशेषेण पुनर्वसौ पुनर्भूगमनं विटकरणम्। वारुणे सुरासवसन्धानसरःसरित्से-त्वौषधविधानानि। सर्वेषु विशेषेण सर्वं चरकर्म कुर्यात्॥

अथ क्षौरनक्षत्राण्याह।

**हस्तत्रयं मृगशिराः श्रवणत्रयं च**
**पूषाश्विशक्रगुरुभानि पुनर्वसुश्च।**
**क्षौरे तु कर्मणि हितान्युदये क्षणे वा**
**युक्तानि चोडुपतिना शुभतारया च॥ १२॥**

हस्तात् प्रभृति नक्षत्रत्रयम्। हस्तः चित्रा स्वातिः मृगशिराः। श्रवणत्रयं श्रवणात् प्रभृति नक्षत्रत्रयम्। श्रवणं धनिष्ठा शतभिषक् इति। पूषभं रेवती। अश्विभमश्विनी। शक्र इन्द्रस्तत्तु ज्येष्ठा। गुरुभं तिष्यम्। एतानि। तथा पुनर्वसुश्च। एतानि नक्षत्राणि क्षौरे क्षुरकर्मणि तु हितानि शस्तानि। उदये च यथा मेषलग्नोदये यावन्मेषस्य त्रयोदश त्रिंशद्भागाः सविंशतिलिप्ता उदयं यान्ति तावदश्विनीनक्षत्रमुदयं याति। तत्प-रतो यावत् तावन्त एव भागा उदयं यान्ति तावद्भरणीत्यनेन न्यायेन सर्वे-षामुदयो योज्यः। तस्मिन्नुदये विहितानि। क्षणे च क्षणस्योदये। क्षणो मुहूर्तः। येन नक्षत्रेण क्षुरकर्म क्रियते तस्य या देवता तन्नामा यो मुहूर्त-स्तस्योदये। यथा हस्तदेवता सूर्यस्तन्नामा यो मुहूर्तस्तस्योदये मित्रपूष्णो-रुदये वेत्यादि। तद्यथा। मुहूर्ता यात्रायामुक्ताः।

शिव[1]भुजगमित्रपितृवसुजलविश्वविरञ्चिपङ्कजप्रभवाः।
इन्द्राग्नीन्द्रनिशाचरवरुणार्यमयोनयश्चाह्नि॥
रुद्राजाहिर्बुध्न्याः पूषा दस्रान्तकाग्निधातारः।
इन्द्वदितिगुरुहरिरवित्वष्टृनिलाख्याः क्षणा रात्रौ॥
अह्नः पञ्चदशांशो रात्रेश्चैवं मुहूर्त इति।
स च विज्ञेयस्तज्ज्ञैश्छायायन्त्राम्बुभिर्युक्त्या—इति॥

तानि च नक्षत्राणि यद्युडुपतिना चन्द्रेण शोभनेन जन्मतृतीय-षष्ठसप्तमदशमैकादशानामन्यतमेन युक्तानि भवन्ति तदा चन्द्रानुकूल्यं च

---

१ द्रष्टव्यमस्य ग्रन्थस्य ५०३ पृष्ठे-इदं वचनं कुत्रचित्पाठान्तररूपम्।

भवति । शुभतारया च । तारा यदि शुभाऽनुकूला सम्पत्क्षेमसाधकमैत्राणामन्यतमा भवति । एतदुक्तं भवति । यदि चन्द्रानुकूल्यं तारानुकूल्यं च भवति तदेति ॥ १२ ॥

अथ क्षुरकर्मणि परिशेषार्थमाह ।

न स्नातमात्रगमनोन्मुखभूषितानाम्-
मभ्यक्तभुक्तरणकालनिरासनानाम् ।
सन्ध्यानिशाशनिकुजार्कतिथौ च रिक्ते
क्षौरं हितं [1]न नवमेऽह्नि न चापि विष्ट्याम् ॥ १३ ॥

स्नातमात्रस्य कृतस्नानस्य क्षौरं न हितं न शस्तम् । गमनोन्मुखस्य गन्तुं प्रवृत्तस्य क्षौरं न हितम् । तथा भूषितस्यालङ्कृतस्य । अभ्यक्तस्य तैलादिना कृताभ्यङ्गस्य । भुक्तस्य कृताहारस्य । रणकाले सङ्ग्रामसमये । निरासनस्य आसनरहितस्य । एतेषां क्षौरं न हितं न शोभनम् । तथा सन्ध्याकाले सन्ध्यासमये । सन्ध्यालक्षणं प्रागेवोक्तम् ।

अर्धा[2]स्तमितानुदितात् सूर्यादस्पष्टभं नभो यावत् ।

तावत् सन्ध्याकाल इति ।

निशायां रात्रौ । शनिकुजार्कवारे ; शनिवारे शनैश्चरवारे । कुजवारे भौमवारे । अर्कवारे आदित्यवारे च । केचिदप्यर्कवारे नेच्छन्ति । तिथौ च रिक्ते । चतुर्थी नवमी चतुर्दशी चेति रिक्ता तिथिः । तस्यां क्षौरं न हितम् । नवमेऽह्नि नवमे दिवसे न कार्यम् । विष्ट्यां करणे क्षौरं हितं न । नवमेऽह्नि न चापि विष्ट्यामित्यत्र केचिदन्यथा व्याख्यानं कुर्वन्ति । नवमदिवसग्रहणमत्यन्तनिषेधार्थम् । चतुर्थ्यां चतुर्दश्यामपि कार्यप्रतिपत्तौ कर्तव्यं क्षुरम् । न नवम्याम् । तथा च । न नवम्यङ्गारकवर्जमिति लोकवचनं प्रदर्शयन्ति । एतेन तिथौ च रिक्ते इत्यनेनैव गतार्थत्वात् व्यासमहर्षिणा चतुर्थ्याद्या निषिद्धां नवमी सामान्यनिषेधेनापि न निषिद्धा ।

---

१ न च नवमेऽह्नि न चापि विष्ट्याम्-इति पाठान्तरम् ।
२ द्रष्टव्योऽस्य ग्रन्थस्य ४२८ पृष्ठे १ श्लोकः ।

तथा चाह ।

चतुर्थीं चैव षष्ठीं च अष्टमीं च चतुर्दशीम् ।
तथा पञ्चदशीं चैव ब्रह्मचारी भवेत् सदा ॥
श्मश्रुकर्मशिरोऽभ्यङ्गमञ्जनं दन्तधावनम् ।
पर्वस्वेतानि यः कुर्याल्लक्ष्मीस्तत्र न तिष्ठति ॥

एतच्च यद्याचार्यस्य निषेध आधिक्येनाभ्युपगतं स्यात् तदा रिक्तातिथिनिर्देशं न कृतं स्यात् । एतावद्वक्तव्यं नवम्यामिति । तथापि परे चकारेण पाठान्तरं कृत्वा न च नवेऽह्नि न चापि विष्ट्यामिति प्रतिपद्दिवसमेव नेच्छन्ति । नवं च तदहो नवाहस्तस्मिन् नवेऽह्नि । तन्त्रान्तरोक्तं च निदर्शनं पठन्ति ।

क्षौरं न निशि न भुक्ते न पक्षसन्धौ न जन्मनक्षत्रे ।
न प्रसवेनोपवासे न देवपितृकार्ययोरन्तः ॥

अत्र रिक्ताग्रहणं नास्ति ।

तथा च पराशरोक्तम् ।

प्रतिपत्षष्ठ्योर्विवाहचोलावपवास्तुबीजवपनमित्रधनसङ्ग्रहाभिषेकसचादि स्थिरमिष्टमनिष्टमध्याप्यापनमध्ययनं क्षुरकर्मेति ।

तथा च लोके वचनम् ।

प्रतिपत्सु न वापयेत्—इति ।

यद्याचार्येण नवदिवसग्रहणे प्रतिपन्निषिद्धा तदा षष्ठ्या सहास्य को विरोधो येन न निषेधः कृत इति । वयं तत्र ब्रूमः । यत्र क्षौरे कृते अनायुष्यं भवति तन्निषिद्धं न शेषम् । तथा च "क्षौरं न निशि न भुक्ते न पक्षसन्धौ"इत्यनन्तरोक्तश्लोकस्यानन्तरश्लोकः ।

सन्ध्यायामशुभे चन्द्रे विष्ट्यां सोमदिनोदये ।
क्षुरकर्म कृतं विन्द्यादनायुष्यकरं नृणाम् ॥

नवमदिवसग्रहणेनापि क्षौरदिवसनवमदिवसो निषिद्धः । गम्यत इति । उच्यते । आचार्येण प्रदेशान्तरेण प्रदर्शितम् ।

राज्ञः कार्ये पञ्चमे पञ्चमेऽह्नि क्षौरर्क्षे वा श्मश्रु तस्योदये ?
स्यकान्तारा सप्तमी च विपूर्वा यात्राकाले नैव कार्यं न युद्ध ॥

तथानन्तरोक्तानन्तरश्लोकः ।

मासादूर्ध्वमनायुष्यमधः पक्षान्न सम्पदः ।
पञ्चमे पञ्चमे वाऽपि राज्ञः क्षौरं प्रशस्यते ॥

तथा च वैदिकैः पठ्यते ।

पञ्चमकं दशमकं वा प्रत्यायुष्यम् । आयुष्यं क्षौरपर्यायः । प्रति प्रति आयुष्यं प्रत्यायुष्यम् । पञ्चमे पञ्चमे दिवसे कर्तव्यम् । क्षौरदिवसात् पञ्चमे दिवसे यदि क्षौरं न कृतं ततस्तस्मात् प्रथमदिवसाद्दशमे दिवसे क्षौरं कर्तव्यम् । न नवमदिवसे । अस्मिन्नेवार्थे स्पष्टतरः श्लोकः ।

क्षौरं राज्ञः सदा शस्तं पञ्चमे पञ्चमे दिने ।
क्षौराहान्नवमे त्वह्नि नेष्टमात्ययिकेष्वपि ॥

तथा च गृहप्रवेशादिष्वपि नवमदिवसो निषिद्धः । गृहप्रवेशदिवसान्नवमदिवसे निर्गमनं न कुर्यात् ।

तन्त्रान्तरे पठ्यते ।

निर्गमान्नवमे त्वह्नि प्रवेशं चात्र वर्जयेत् ।
शुभनक्षत्रयोगेऽपि प्रवेशाद्वापि निर्गमम्—इति ॥

तस्मात् क्षौराहान्नवमेऽह्नि क्षौरं न कर्तव्यमिति स्थितमेतत् ॥ १३ ॥

अथ सर्वनक्षत्रेषु क्षुरकर्माह ।

**नृपाज्ञया ब्राह्मणसम्मते च विवाहकाले मृतसूतके च ।**
**बद्धस्य मोक्षे क्रतुदीक्षणासु सर्वेषु शस्तं क्षुरकर्म भेषु ॥ १४ ॥**

नृपाज्ञया राजाज्ञया । ब्राह्मणानां द्विजानां च सम्मतेऽभिमते । विवाहकाले उद्वाहसमये । मृतसूतके । मृतस्य सूतको मृतसूतकस्तस्मिन् । बद्धस्य मोक्षे बन्धनमोक्षे । क्रतुषु यज्ञेषु । दीक्षणासु दीक्षासु । एतेषु कालेषु । सर्वेषु निःशेषेषु भेषु नक्षत्रेषु क्षुरकर्म शस्तं शोभनमित्यर्थः ॥ १४ ॥

अथ संस्कारनक्षत्राण्याह ।

**सावित्रपौष्णानिलमैत्रतिष्यत्वाष्ट्रे तथा चोडुगणाधिपर्क्षे ।**
**संस्कारदीक्षाव्रतमेखलादि कुर्याद्गुरौ शुक्रबुधेन्दुयुक्ते ॥ १५ ॥**

सावित्रं हस्तः । पौष्णं रेवती । अनिलं स्वातिः । मैत्रमनुराधा । तिष्यः पुष्यः । त्वाष्ट्रं चित्रा । उडुगणाधिपर्क्षे मृगशिरसि । उडुगणो नक्ष-

भसमूहस्तस्याधिपश्चन्द्रस्तद्दैवत्ये ।, एतस्मिन्नक्षत्रगणे किं कुर्यादित्याह । संस्कारो नामकरणादि । दीक्षा यज्ञदीक्षा । व्रतं व्रतबन्धः । मेखला मौञ्जी । आदिग्रहणात् क्षुरकर्मविद्याग्रहणम् । गुरौ जीवे । केन्द्रैर्युक्त इति । शुक्रेण बुधेन इन्दुना चन्द्रेण च युक्ते । एतेषां दिनेष्वित्यर्थः ॥ १५ ॥

अधुना सर्वकर्मणां लग्नशुद्धिमाह ।

**शुद्धैर्द्वादशकेन्द्रनैधनगृहैः पापैस्त्रिषष्ठायगै-**
**र्लग्ने केन्द्रगतेऽथवा सुरगुरौ दैत्येन्द्रपूज्येऽपि वा ।**
**सर्वारम्भफलप्रसिद्धिरुदये राशौ च कर्त्तुः शुभे**
**सग्राम्यस्थिरभोदये च भवनं कार्यं प्रवेशोऽपि वा ॥ १६ ॥**

शुद्धैर्द्वादशकेन्द्रनैधनगृहैरिति । द्वादशं प्रसिद्धम् । केन्द्राणि लग्नचतुर्थसप्तमदशमानि । नैधनगृहमष्टमस्थानम् । एतैः शुद्धैः सौम्यग्रहाधिष्ठितैः पापग्रहवियुतैः । तथा पापैः पापग्रहैरादित्याङ्गारकशनैश्चरैस्त्रिषष्ठायगैः तृतीयषष्ठैकादशस्थानस्थितैः । सुरगुरुर्जीवः । तस्मिन् लग्ने स्थितेऽथवा केन्द्रगते । वा दैत्येन्द्रपूज्येऽपि । दैत्यानामिन्द्रा दैत्येन्द्रा दैत्यप्रधानाः । तेषां पूज्यो गुरुः शुक्रः तस्मिन् लग्नगते केन्द्रगते वा । एवंविध उदये लग्ने सर्वारम्भाणां सर्वकार्यप्रारम्भाणां फलेऽभिमते प्रसिद्धिर्भवति । तथा च कर्तुः कर्मकर्तू राशौ लग्ने शुभे जन्मलग्नस्य राशेः सर्वानुकूल्ये अनष्टमद्वादशे । तथा सग्राम्यस्थिरभोदये । ग्राम्या मेषमिथुनकन्यातुलधन्विकुम्भाः स्थिरराशयः । ते च सग्राम्याः । यतः सिंहवृश्चिकौ स्थिरावपि न ग्राम्यौ । एतेषु यथोक्तेषु सग्राम्यस्थिरभेषु राशिषूदयं प्राप्तेषु भवनं गृहं कार्यं विधेयम् । प्रवेशोऽपि वा गृहप्रवेशोऽपि वा कार्यः ॥ १६ ॥

तथा च यवनेश्वरः ।

लग्नेषु जीवेन्दवभार्गवेषु पश्यत्सु चैतेषु गृहस्य संभवम् ।
राशावथो वा विचरे गृहस्थे गृहांशयोर्वा भृगुनन्दनेन्द्वोः ॥
जलाशये वा गृहमागतेषु गृहे स्वनाथाग्नितलचिते वा ।
चन्द्रे शुभस्थे च शुभानि विन्द्याद्वास्तुप्रवेशादिनिवेशनानि ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ नक्षत्रकर्मगुणो नाम सप्तनवतितमोऽध्यायः ॥ ६७ ॥

# अथ तिथिकर्मगुणाध्यायो व्याख्यायते ।

कमलजविधातृहरियमशशाङ्कषड्वक्त्रशक्रवसुभुजगाः ।
धर्मेशसवितृमन्मथकलयो विश्वे च तिथिपतयः ॥ १ ॥
पितरोऽमावस्यायां सञ्ज्ञासदृशाश्च तैः क्रियाः कार्याः ।
नन्दा भद्रा विजया रिक्ता पूर्णा च तास्त्रिविधाः ॥ २ ॥
यत् कार्यं नक्षत्रे तद्दैवत्यासु तिथिषु तत् कार्यम् ।
करणमुहूर्त्तेष्वपि तत् सिद्धिकरं देवतासदृशम् ॥ ३ ॥

कमलजेति । कमलजादयः प्रतिपदादीनां तिथीनां पतयः । कमलजो ब्रह्मा प्रतिपदधिपतिः । विधाता द्वितीयस्याम् । हरिर्विष्णुस्तृतीयस्याम् । यमश्चतुर्थ्याम् । शशाङ्कश्चन्द्रमाः पञ्चम्याम् । षड्वक्त्रः कुमारः षष्ठ्याम् । शक्र इन्द्रः सप्तम्याम् । वसवोऽष्टम्याम् । भुजगः सर्पो नवम्याम् । धर्मो दशम्याम् । ईशो रुद्र एकादश्याम् । सविता आदित्यो द्वादश्याम् । मन्मथः कामस्त्रयोदश्याम् । कलिश्चतुर्दश्याम् । विश्वे देवाः पञ्चदश्यां पौर्णमास्यामित्यर्थः । एवं शुक्लपक्षे ॥ १ ॥

कृष्णपक्षे एतास्वेव तिथिषु एत एवाधिपतयः किन्तु पितरोऽमावस्यायाम् । अमावास्यायां पितरः । तैस्तिथिस्वामिभिः सञ्ज्ञासदृशा नामतुल्याः क्रियाः कार्याः । यथा प्रतिपदि ब्रह्मकर्म विवाहादि । द्वितीयस्यां भवननिवेशादि । तृतीयस्यां चौलकरणदमनादि । चतुर्थ्यां शत्रुमथनादि । पञ्चम्यां वमनौषधिपौष्टिकादि । षष्ठ्यां मित्रसङ्ग्रहाभिषेकादि । सप्तम्यां शकटयानक्रियाध्वगमनादि । अष्टम्यामायुधग्रहणदुर्गोपकरणादि । नवम्यां परविघातमारणादि । दशम्यां धर्मब्राह्मणतर्पणादि । एकादश्यां स्थिरचरसौम्यमृदुकर्मादि । द्वादश्यामग्न्याधानादि । त्रयोदश्यां मित्रकरणकामानुसेवादि । चतुर्दश्यां विषरसप्रयोगादि । पञ्चदश्यां पितृतर्पणादि ।

तथा च पराशरः ।

तिथयस्तु नन्दा भद्रा जया रिक्ता पूर्णा मासा मित्रा महाबलोग्रसेना सुधन्वा सुनन्दा यमा जयोया सिद्धिरिति । तासु कर्माणि । प्रतिपत्षष्ठ्योर्विवाहचोराववास्तुबीजवपनमित्रधनसङ्ग्रहाभिषेकस्रवादि स्थिरमिष्टमनिष्टमध्वाध्या-

पनमध्ययनं सुरकर्मेति । द्वितीयासप्तमीत्रयोदशीषु पत्युद्वहनंभवनशयनशकटयानक्रियाध्वगमनाम्बरालङ्कारधारणशिल्पभैषज्यस्वस्त्ययनपौष्टिकव्रतायुष्याणि । विशेषतो मित्रायां मित्रकर्मनृपनिशासनसन्धानानि । तृतीयायां बलकरणदमनानि । प्रतिपदि द्वितीयायां चतुर्थ्यामपि विषमथनदमनबन्धनानि चारभेदकवाटाभियोगाग्निविषसम्प्रयोगक्रियोग्रसेनयोश्च । पञ्चमीदशम्येकादशीषु भवनशयनस्वस्त्ययनौषधपौष्टिकसुभगाध्वगमनकेदारव्यवहारभूषणकन्यावरणोद्वहनस्थिरचरसौम्यमृदुकर्माणि । एकादश्यां स्त्रीभृत्यनिग्रहो विशेषेण । अष्टम्यां बलोपकरणदर्शनायुधग्रहणदुर्गोपकरणावरणपरिखाभिखननकेदारव्यवहारभूषणकन्यावरणोद्वहनस्थिरचरसौम्यगुप्तिकरणानि । द्वादश्यां स्थिरचरकर्मान्याधानयज्ञोपनयननिधिनिधानपाणिग्रहणानि । पञ्चदश्यां पितृयज्ञदेवगोगुरुत्रस्त्युपवासेष्टिक्रियाः प्रशस्यन्ते । अपि च । ब्रह्मामरमन्त्रिजनार्दनयमसोमकुमारमुनिवसुपिशाचधर्मरुद्ररविकामरुद्रपितरस्तिथिदेवाः ।

. नन्दा भद्रा विजया रिक्ता पूर्णा चेति । ताश्च तिथयो नन्दाद्यास्त्रिविधास्त्रिप्रकाराः । यथा प्रतिपन्नन्दा । द्वितीया भद्रा । तृतीया विजया । चतुर्थी रिक्ता । पञ्चमी पूर्णा । एवं षष्ठ्याद्या एकादशाद्याश्च ॥ २ ॥

यत् कार्यमिति । नक्षत्रे यत् कार्यमुक्तं तस्यां या देवता सा यस्यां तिथौ देवता भवति तस्यामपि तदेव कर्म कार्यम् । यथा रोहिण्यां यत्कार्यमुक्तं तस्या या देवता ब्रह्मा तद्दैवत्यायां प्रतिपदि तदेव कार्यं कर्तव्यम् । एवं यदभिजिति तद्द्वितीयस्याम् । श्रवणे तृतीयस्याम् । भरण्यां चतुर्थ्याम् । मृगशिरसि पञ्चम्याम् । कृत्तिकासु षष्ठ्याम् । ज्येष्ठासु सप्तम्याम् । हस्ते द्वादश्याम् । पूर्वफल्गुन्यां त्रयोदश्याम् । श्लेषायां चतुर्दश्याम् । उत्तराषाढायां पञ्चदश्याम् । मघास्वमावस्यायामिति ।

तथा च गर्गः ।

नन्दा प्रतिपदित्युक्ता प्रशस्ता ध्रुवकर्मसु ।
यानस्य च समारम्भे प्रवासे च विगर्हिता ॥
नाद्यादन्नं तपः कुर्यात् पुष्टिसौभाग्यमेव च ।
अन्न चावोत्तमं विन्द्यात् स्वयंभूर्देवता यतः ॥

भद्रेत्युक्ता द्वितीया तु शिल्पिव्यायामिनां हिता ।
आरम्भे भेषजानां च प्रवासे च प्रवासिनाम् ॥
आवाहांश्च विवाहांश्च वास्तुवेश्मगृहाणि च ।
पुष्टिकर्मकरश्रेष्ठा देवता च बृहस्पतिः ॥
बलेत्युक्ता तृतीया तु बलसम्पच्च कारयेत् ।
गोऽश्वकुञ्जरभृत्यानां दमनं मानसानि च ॥
कुर्यादासवकर्माणि बीजान्यपि च वापयेत् ।
बलकर्मारभेतैव विष्णुं विन्द्याच्च दैवतम् ॥
रिक्ता प्रोक्ता चतुर्थी च क्षुद्रकर्म प्रयोजयेत् ।
गोग्रहं दारुणं कुर्यात् कूटशास्त्रं समारभेत् ॥
अथ सम्मारणं कुर्यादभिघाताश्रयाणि च ।
ध्रुवसेनावधं कुर्याद्यमं विन्द्याच्च दैवतम् ॥
पूर्णा च पञ्चमी प्रोक्ता प्रशस्ता ध्रुवकर्मणि ।
नवान्नाशयणानां च शयनासनवेश्मनाम् ॥
जन्मवेश्मविभूषार्थो व्यवहारौषधिक्रिया ।
प्रशान्तं पौष्टिकं कर्म सोमं विन्द्याच्च दैवतम्
षष्ठी माषा तिथिर्नाम प्रशस्ता ध्रुवकर्मसु ।
वेश्मारम्भं गृहं कुर्याद्देवतायतनानि च ॥
कारयेत् सङ्क्रमद्वारगोपुराद्यालयानि च ।
आधानं च न कर्तव्यं कुमारश्चात्र दैवतम् ॥
सप्तमी मित्रनामा तु मित्रकार्याध्रुवाणि च ।
कुर्याद्राज्ञो ध्वजं छत्रमासनं शयनानि च ॥
रत्नानि मणिमुक्तादि वस्त्राण्याभरणानि च ।
कारयेद्भूषणाद्यांश्च देवाः सप्तर्षयस्तथा ॥
महाबलाष्टमी चैव कुर्याद्बालनिदर्शनम् ।
अधिकारान् प्रयुञ्जीत यन्त्राकारधनूंषि च ॥
कुर्याच्च नगरे गुप्तिं सुरङ्गान् परिखास्तथा ।
हस्त्यश्वांश्च प्रयुञ्जीत वसवश्चात्र देवतम् ॥

उग्रसेना तु नवमी बन्धने वधबन्धने ।
अमित्रदमनार्थे च हिता शस्त्रबधाय च ॥
अध्वानं च न गच्छेत प्रोष्यं न प्रविशेद्गृहम् ।
संहरेत विषादीनि रुद्राणी चात्र देवतम् ॥
सुधन्वा दशमीं प्राह ध्रुवं विन्द्याद्यशस्करम् ।
कूपान् खनेन्नदीश्चैव कूपं पुष्करणीयुतम् ॥
आरामान् नगरीश्चैव क्षेत्राणि च गृहाणि च ।
पुण्यशालां सभां कुर्याद्रुमं विन्द्याच्च देवतम् ॥
सुनन्दैकादशीमाह ध्रुवं विन्द्यान्महानसम् ।
निवेशनगरग्रामयज्ञविप्रसभास्तथा ॥
स्त्रीषु चोग्रं प्रवर्तेत दासकर्मकरेषु च ।
गूढार्थं न प्रयुञ्जीत कामशत्रुश्च देवता ॥
द्वादशीं तु यमामाह ध्रुवं विन्द्याद्यशस्करम् ।
मङ्गल्यान्यत्र कुर्वीत चूडोपनयनानि च ॥
कोष्ठागाराणि कुर्वीत निधानं च निधापयेत् ।
ऋणं चात्र न गृह्णीयादादित्यश्चात्र देवता ॥
जया त्रयोदशीमाह कर्तव्यं कर्म शोभनम् ।
वस्त्रमाल्यमलङ्कारविप्राण्याभरणानि च ॥
सौभाग्यकरणं स्त्रीणां कन्यावरणमेव च ।
मुण्डनं युग्मवसनं कामं विन्द्याच्च देवताम् ॥
उग्रां चतुर्दशीं विन्द्याद्दारुणान्यत्र कारयेत् ।
बन्धनं रोधनं चैव घातनं च विशेषतः ॥
पूर्वाभिहननं चैव दारुणं वधघातनम् ।
ग्रामसेनावधं कुर्याद्विन्द्याद्रुद्रोऽत्र देवताम् ॥
अमावस्या तु सिद्धार्था पितृयज्ञोऽत्र शस्यते ।
देवकार्याणि कुर्वीत गोकुलं तु निवेशयेत् ॥
पुरोहिताय शरणं कुर्याद्यज्ञक्रियां तथा ।
बलिं चैवोपहारांश्च पितरश्चात्र देवता ॥

कल्याणी पौर्णमासी तु देवकर्माधिकारिणी ।
शिल्पकार्येऽग्निकार्ये च गवां घोषे निवेशयेत् ॥
राज्ञः पुरोहितं कुर्याद्यानानि विविधानि च ।
शुभं कर्म च कर्तव्यं सोमं विन्द्याच्च देवताम्—इति ॥

करणमुहूर्तेष्वपि तत् सिद्धिकरं देवतासदृशं कार्यं सिद्धिकरम् । येन नक्षत्रेण यत् कार्यमभिहितं तस्य नक्षत्रस्य या देवता सैव यस्य करणस्य तस्मिंस्तत् कार्यम् । यथा ज्येष्ठायां यत् कार्यमभिहितं तद्बवेऽपि कर्तव्यम् । यतस्तस्य देवता शक्रः । एवं रोहिण्यां बालवस्य । अनुराधायां कौलवस्य । उत्तरफल्गुन्यां तैतिलस्य । गरस्य ज्येष्ठायाम् । श्रवणे वणिजः । विष्टिर्भरण्याम् । श्लेषायां शकुनेः । रोहिण्यां चतुष्पदस्य । नागस्य पुनराश्लेषायाम् । स्वातौ किंस्तुघ्नस्येति ।

तथा च पराशरः ।

शकुनौ शकुनिग्रहणप्रहरणभृत्ययोद्धृयुद्धोपकरणक्रियाः सर्वमुग्रं कुर्यात् । चतुष्पदे नृपतिविजयाभिषेकपितृदेवधर्मक्रियाचतुष्पददानानि । नागे सलिलोपकरणाग्निशनप्रवेशागदगदौषधधारणानि । किंस्तुघ्ने सुरगुरुतीर्थव्रतदीक्षाभिगमनस्नपनानि । बवे मणिकनकरजतालङ्कारवास्तुक्रियाभिप्रयाणासवकुसुमगन्धाधिकाराणि । बालवे व्रतोपवासनियमसञ्चयच्छद्विजगुरुसेवनानि । कौलवे पुरसेचलेख्यगन्धगान्धर्वपितृदेवधर्मक्रियाः । तैतिले निष्कर्मसाहसद्यूतयुद्धाभिषेकमङ्गलव्रतदीक्षागृहप्रवेशाः । गरे दारुद्यानवनाधिकारिकोपभोगा वैवाहिकादिकरणानि । वणिजि वणिक्प्रयोगाध्ययनशिल्पसंबन्धार्थाभिवादावनवलिकर्मविधिभिर्यद्यारभ्यते क्रिया काचित् । विष्ट्यां न किमपि समृद्धिमेति बीजमिव यथोषरप्राप्तमिति ।

एवं मुहूर्तेष्वित्यपि । यस्मिन् नक्षत्रे यत् कार्यमुक्तं तस्य नक्षत्रस्य या देवता तस्या यो मुहूर्तस्तस्मिंस्तदेव कार्यं कर्तव्यम् । यथाऽऽर्द्रायां यत् कार्यं क्रियते तच्छिवे मुहूर्तेऽपि कार्यम् । यतस्तयोरेका देवता रुद्रः । एवं श्लेषायां भुजगे । अनुराधायां मित्रे । मघायां पितरि । धनिष्ठायां वसौ । पूर्वाषाढायां जले । उत्तराषाढायां विश्वे । अभिजिति विरञ्चौ । रोहिण्यां पङ्कजप्रभवे । विशाखायामैन्द्राग्नौ । मूले नैर्ऋते । शतभिषजि वारुणे । उत्त-

रफल्गुन्यामर्यम्णि । पूर्वफल्गुन्यां भाग्ये । पूर्वभद्रपदायामजैकपादे । उत्तरभद्रपदायामहिर्बुध्न्ये । रेवत्यां पूषणि । अश्विन्यां दस्रे । भरण्यामन्तके । कृत्तिकायामाग्नेये । मृगशिरसीन्दौ । पुनर्वसौ अदितौ । पुष्ये गुरौ । श्रवणे हरौ । हस्ते रवौ । चित्रायां त्वष्टरि । स्वातावनिलाख्ये ॥ ३ ॥

उक्तं च ।

शिवभुजगमित्रपितृवसुजलविश्वविरिञ्चिपङ्कजप्रभवाः[1] ।
इन्द्राग्नीन्द्रनिशाचरवरुणार्यमयोनयश्चाह्नि ॥
रुद्राजाहिर्बुध्न्याः पूषा दस्रान्तकाग्निधातारः ।
इन्द्वदितिगुरुहरिरवित्वष्ट्रनिलाख्याः क्षणा रात्रौ ॥
अह्नः पञ्चदशांशो रात्रेश्चैवं मुहूर्त इति ।
सच दिनेऽस्तलग्ने छायायन्त्राम्बुभिर्युक्त्या ॥
नक्षत्रतत्त्वगानां परिघानादीश्वरैः समं चिन्त्यम् ।
फलमपि तदेव दृष्टं गर्गाद्यपराशरश्लोकैः ।
अहोरात्रं च सम्पूर्णं चन्द्रनक्षत्रयोर्जितम् ।
तन्नक्षत्रमुहूर्ताश्च समकर्मगुणाः स्मृताः—इति ॥

तथा च पराशरः ।

रौद्रमित्रमैत्रसाधनसारभटात्मसहवैश्वदेवाभिजिद्रोहिणीन्द्रबलजयविध्यभाग्यवरुणानैर्ऋताग्नेययाम्यगन्धर्वध्यानपदराक्षसेन्द्राग्नेयप्राजापत्याश्विनेन्द्रब्रह्मगुरुमादित्यवैष्णवपौष्णाः । तेषां यत्समानदैवतनक्षत्रं तन्नक्षत्रवत्कर्मण्यारभेत विशेषोपदेशमुपदेक्ष्यामः । तत्र श्वेतमैत्रात्मसहरोहिणीषु रोहिणीव सर्वसाधनम् । इष्टिव्रताधानाध्ययनानि । सारभटे अभिचारवधघातान् । अभिजिति सर्वकर्माणि । बले नृपतिबलसमारम्भाः । जयेऽन्नप्रमाणम् । गन्धर्वे गान्धर्वरतिविवाहाः । ध्यानपदेऽभिषेकभूषणमङ्गल्यानि । सन्ध्ययोस्तु पूर्वाऽग्निदेवता पश्चिमा रौद्री तयोर्न किञ्चित् कर्मारम्भो नान्यत्र नियमात् प्रयतमुपतिष्ठन्नोपासीत । पश्चिमायां विशेषतश्चाग्नौ न प्रविशेन्नाश्नीयान्न मैथुनमभिगच्छेत् ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ तिथिकर्मगुणो नामाष्टनवतितमोऽध्यायः ॥ ९८ ॥

---

[1] द्रष्टव्यमस्य ग्रन्थस्य ५०३ पृष्ठे-इदं वचनं कुत्रचित्पाठान्तरकम् ।

## अथ करणगुणाध्यायो व्याख्यायते ॥

तत्रादावेव सप्त चलकरणानि भवन्ति तेषां नामान्यधिपतींश्चाह ।

**बवबालवकौलवतैतिलाख्यगरवणिजविष्टिसञ्ज्ञानाम् ।**
**पतयः स्युरिन्द्रकमलजमित्रार्यमभूश्रियः सयमाः ॥ १ ॥**

बवादीनां करणानामिन्द्रादयः सयमाः पतयः स्वामिनः । तद्यथा । बवस्येन्द्रोऽधिपतिः । बालवस्य कमलजो ब्रह्मा । कौलवस्य मित्रः । तैतिलाख्यस्यार्यमा । गरस्य भूर्भूमिः । वणिजस्य श्रीर्लक्ष्मीः । विष्टेर्यमः ॥ १ ॥

अथ स्थिरकरणानां नामान्यधिपतींश्चाह ।

**कृष्णचतुर्दश्यर्धाद्ध्रुवाणि शकुनिश्चतुष्पदं नागम् ।**
**किंस्तुघ्नमिति च तेषां कलिवृषफणिमारुताः पतयः ॥ २ ॥**

कृष्णचतुर्दशीद्वितीयार्द्धादारभ्य ध्रुवाणि स्थिराणि करणानि शकुन्यादीनि भवन्ति । तद्यथा । कृष्णचतुर्दश्यामपरभागे शकुनिः । चतुष्पदनागावमावस्यायाम् । किंस्तुघ्नः प्रतिपत्पूर्वभागे । एतानि स्थिराणि मासेन सकृदेव भवन्ति । प्रतिपद्यपरभागे ववः । बालवकौलवौ द्वितीयस्याम् । तैतिलगरौ तृतीयायाम् । वणिग्विष्टी चतुर्थ्याम् । पुनरपि ववबालवौ पञ्चम्याम् । अतः करणे द्वे प्रतिदिनं यावदष्टमीपूर्वभागे विष्टिः । अपरभागे ववः । नवम्यां बालवकौलवौ । दशम्यां तैतिलाख्यगरौ । एकादश्यां वणिग्विष्टी । द्वादश्यां ववबालवौ । त्रयोदश्यां कौलवतैतिलौ । चतुर्दश्यां गरवणिजौ । पौर्णमास्यां प्राग्भागे विष्टिः । अपरे ववः । ततः प्रतिपदादि प्रत्यहं द्वे द्वे करणे यावत्तृतीयायामपरभागे विष्टिः । ततः क्रमेण करणषट्कम् । सप्तम्यां प्राग्भागे विष्टिः । अपरे ववः । ततः करणषट्कम् । क्रमेण यावद्दशम्यामपरभागे विष्टिः । ततो ववादिकरणषट्कं यावत् त्रयोदशीम् । चतुर्दशीपूर्वभागे विष्टिः । अपरभागे शकुनिरिति । एवमेतानि चलकरणानि मासमध्ये प्रत्येकमष्टौ वारान् भवन्ति । स्थिरकरणानि मासेन सकृदेव । नियताः पतय इति । तेषां शकुनिचतुष्पदनागकिंस्तुघ्नानां यथाक्रमेण कलिवृषफणिमारुताः पतयो भवन्ति । तद्यथा शकुनेः कलिः । चतुष्पदस्य वृषः । नागस्य फणी सर्पः । किंस्तुघ्नस्य मारुतो वायुः ॥ २ ॥

अथैतेष्वेतत् कर्तव्यं तदाह ।

कुर्याद्ववे शुभचरस्थिरपौष्टिकानि
धर्मक्रियाद्विजहितानि च बालवाख्ये ।
सम्प्रीतिमित्रवरणानि च कौलवे स्युः
सौभाग्यसंश्रयगृहाणि च तैतिलाख्ये ॥ ३ ॥

कृषिबीजगृहाश्रयजानि गरे
वणिजि ध्रुवकार्यवणिग्युतयः ।
न हि विष्टिकृतं विदधाति शुभं
परघातविषादिषु सिद्धिकरम् ॥ ४ ॥

कुर्याद्वव इति । ववे ववाख्ये करणे । शुभानि प्रशस्तानि यानि धर्मादीनि कार्याणि । तथा चराणि स्वल्पकालसाध्यानि क्षिप्रोपयोगीनि । स्थिराणि कालान्तरस्थायीनि । तथा पौष्टिकानि शरीरपुष्टिं यानि जनयन्ति । तानि कुर्यात् । बालवाख्ये धर्मक्रिया धर्मसमायुक्ताः क्रियाः । तथा द्विजानां ब्राह्मणानां च हितान्यनुकूलानि कार्याणि । सम्प्रीतिः केनचित् स्नेहः । मित्रं सुहृत् । वरणं कन्यावरणम् । एतानि च कार्याणि कौलवे स्युर्भवेयुः । सौभाग्यं सुभगत्वं येन कर्मणा सर्वजनवाल्लभ्यं भवति तत्सौभाग्यम् । संश्रयः कश्चित् प्रधानजनः संश्लिष्यते । गृहं भवनम् । एतानि तैतिलाख्ये कार्याणि ॥ ३ ॥

कृषिबीजेति । कृषिः कर्षणम् । बीजानि प्रसिद्धानि यान्युप्यन्ते । गृहाश्रयजम् । गृहं वेश्म आश्रित्य यज्जायते उत्पद्यते । एतानि सर्वाणि गरे कार्याणि । ध्रुवाणि स्थिराणि यानि कार्याणि । वणिक् वाणिज्यम् । युतिः केनचित् सह संयोगः । एतान्येव वणिजि कार्याणि । विष्टिकृतं कर्म न हि शुभं श्रेयस्करं फलं विदधाति करोति । केवलं पराणां शत्रूणां घाते निपाते विषादिषु विषप्रयोगेऽग्निदाहादौ च सिद्धिकरम् ॥ ४ ॥

तथा स्थिरकरणेष्वेतत् कर्तव्यं तदाह ।

कार्यं पौष्टिकमौषधादि शकुनौ मूलानि मन्त्रास्तथा
गोकार्याणि चतुष्पदे द्विजपितॄनुद्दिश्य राज्यानि च ।

नागे स्थावरदारुणानि हरणं दौर्भाग्यकर्माण्यतः
किंस्तुघ्ने शुभमिष्टिपुष्टिकरणं मङ्गल्यसिद्धिक्रियाः ॥ ५ ॥

कार्यं पौष्टिकमिति । पौष्टिकं शरीरपुष्टिकरम् । औषधं यद्व्याधिविनाशायोपयुज्यते । आदिग्रहणादन्यौषधादीनां ग्रहणं पचनं पाचनम् । मूलानि मूलकर्माणि । मूलानां ग्रहणं रोपणं भक्षणं च । तथा मन्त्रा मन्त्रसाधनानि । एतत् सर्वं शकुनौ कार्यम् । गोकार्याणि गवां संबन्धीनि यानि कार्याणि शुभं ग्रहणं दानेन तत्पालनं च । तथा द्विजान् ब्राह्मणान् पितॄनुद्दिश्य तदर्थे यानि तानि चतुष्पदे कार्याणि । राज्यानि राजकार्याणि । स्थावरं स्थावराश्रयं कार्यम् । दारुणानि क्रूराणि च यानि कार्याणि परोपतापकरणानि । हरणं परधनदारस्थावरादीनाम् । दौर्भाग्यकर्माणि दुर्भगत्वं सर्वजनद्वेष्यं यैरवाप्यते तानि नागे कार्याणि । शुभं धर्मसंयुक्तं कर्म । इष्टयः पुत्रकाम्यादयः । पुष्टिकरणं शरीरपोषणम् । मङ्गल्यानि विवाहादीनि । सिद्धिक्रिया याभिः क्रियाभिरेते सिद्ध्यन्ति । सर्वमेतत् किंस्तुघ्ने कार्यम् ॥ ५ ॥

तथा च गर्गः ।

आद्यं तु शकुनिर्नाम रात्रौ कृष्णचतुर्दशी ।
आदानग्रहणे चैवमिष्टमत्र पलायनम् ॥
योधानां शकुनानां च ग्रहणं पोषणं तथा ।
चिकित्सा चैव युद्धं च सर्वमेतत् प्रशस्यते ॥
ततश्चतुष्पदं नाम कृष्णपञ्चदशी दिवा ।
चतुष्पदानां सर्वेषां कर्मारम्भेषु शस्यते ॥
पितॄंश्च पूजयेद्देव प्रेतकार्यं च कारयेत् ।
नष्टं दृष्टिपथाल्लब्धं ब्रूयादत्र न संशयः ॥
नागं तु करणं रात्रौ कृष्णपञ्चदशी भवेत् ।
तत्रावमर्दसाध्यानि प्रसह्य हरणानि च ॥
भेदनानि च कर्माणि मूलानि च फलानि च ।
कर्माणि चोदनीयानि सर्वाण्येव प्रकल्पयेत् ॥
अतः परं प्रवक्ष्यामि किंस्तुघ्नं करणं ध्रुवम् ।
तत्तु शुक्लप्रतिपदि दिवसे प्रतिपद्यते ॥

तस्मिन् दिव्यानि कार्याणि वैश्वदेवमथानलम् ।
प्राजापत्यं च यत् कर्म सर्वमत्र प्रयोजयेत् ॥
इत्येतानि निबद्धानि ध्रुवाणि करणानि च ।
अतः परं प्रवक्ष्यामि चलान्यन्यानि सप्त वै ॥
बवं च बालवं चैव कौलवं तैतिलं तथा ।
गराख्यं वणिजं चैव विष्टिर्ज्ञेया तु सप्तमी ॥
बवे तु ध्रुवकर्माणि चिप्राण्यपि च कारयेत् ।
निर्याणे च प्रवेशे च तद्धि सर्वार्थसाधकम् ॥
बालवं ब्राह्मणानां तु सर्वारम्भेषु शस्यते ।
अनारम्भोऽन्यवर्णानां शेषाणामिति निश्चयः ॥
मित्रयुक्तं च यत् कर्म यच्च स्यात् सिद्धिकारणम् ।
स्थावराणि च सर्वाणि कौलवे सम्प्रयोजयेत् ॥
तैतिलेन च कर्तव्यं राजद्वारिकमेव यत् ।
अलङ्कारांश्च विविधान् सर्वाधिकरणानि च ॥
गरादिना च कर्तव्यं कर्म गृहसमुद्भवम् ।
कृषिं प्रवेशं वस्तूनां यथार्थं चैवकर्मणाम् ॥
सर्वकार्याणि वणिजि विवादोत्थानि कारयेत् ।
पण्यविक्रयणं चैव शस्त्रारम्भं च कारयेत् ॥
विष्टिर्नामेह करणं येन कर्म न कारयेत् ।
यत्नेनापि कृतं कर्म भवत्यल्पफलोदयम्—इति ॥

अथ कर्णवेधनलक्षणमाह ।

**लाभे तृतीये च शुभैः समेते पापैर्विहीने शुभराशिलग्ने ।**
**वेध्यौ च कर्णावमरेज्यलग्ने पुष्येन्दुचित्राहरिपौष्णभेषु ॥ ६ ॥**

लाभस्थानमेकादशम् । तृतीयं प्रसिद्धम् । लाभे तृतीये च स्थाने शुभैः शुभग्रहैर्बुधजीवशुक्रैः । समेते संयुक्ते । शुभराशिलग्ने पापैर्विहीने । शुभा राशयो वृषमिथुनकन्यातुलाधन्विमीनाः । शुक्लपक्षे कर्कटश्च । एतेषामन्यतमे लग्ने । पापैः पापग्रहैरादित्याङ्गारकशनैश्चरैर्विहीने रहिते । अम-

रेज्यो बृहस्पतिस्तस्मिन् लग्ने लग्नगते । कर्णौ च वेध्यौ वेधनार्हौ । एवं लग्नशुद्धिमभिधायाधुना नक्षत्राण्याह । पुष्येन्दुचित्राहरिपौष्णभेष्विति । पुष्यस्तिष्यः । इन्दुर्मृगशिरः । चित्रा । हरिः श्रवणः । पौष्णभं रेवती । एतेषु नक्षत्रेषु कर्णौ वेध्याविति ॥ ६ ॥

इदानीं सङ्क्षेपेणावसरप्राप्तं विवाहपटलमाह ।

रोहिण्युत्तररेवतीमृगशिरोमूलानुराधामघा-
हस्तस्वातिषु षष्ठतौलिमिथुनेषूद्यत्सु पाणिग्रहः ।
सप्ताष्टान्त्यबहिःशुभैरुडुपतावेकादशद्वित्रिगे
क्रूरैस्त्र्यायषडष्टगैर्न तु भृगौ षष्ठे कुजे चाष्टमे ॥ ७ ॥
दम्पत्योर्द्विनवाष्टराशिरहिते चारानुकूले रवौ
चन्द्रे चार्ककुजार्किशुक्रवियुते मध्येऽथवा पापयोः ।
त्यक्त्वा च व्यतिपातवैधृतिदिनं विष्टिं च रिक्तां तिथिं
क्रूराह्वायनपौषचैत्रविरहे लग्नांशके मानुषे ॥ ८ ॥

रोहिण्युत्तररेवतीति । रोहिणी । उत्तरत्रयम् । उत्तरफल्गुन्युत्तराषाढोत्तरभद्रपदा चेति । रेवती । मृगशिरः । मूलम् । अनुराधा । मघा । हस्तः । स्वातिः । एतेषु नक्षत्रेषु पाणिग्रहो विवाहः कार्यः । तथा षष्ठतौलिमिथुनेषूद्यत्सु । षष्ठः कन्या । तौली तुलः । मिथुनः प्रसिद्धः । एतेषूद्यत्सूदयं गच्छत्सु लग्नतां प्राप्तेष्वित्यर्थः ।

उक्तं च ।

हस्तोत्तरास्वातिमघानुराधाप्राजेशपौष्णेन्दवनैर्ऋतेषु ।
उद्वाहसौभाग्यसुखानि कन्या प्राप्नोति शेषैः सुतभर्तृशोकम् ॥
कन्यातुलावन्मिथुनेषु साध्वी शेषेष्वसाध्वी धनवर्जिता च ।
अन्येषु मेषु द्विपदांश इष्टः कन्यात्रिलग्नेषु न चान्त्यभागः—इति ॥

एतानि नक्षत्राणि लग्नानि चाभिधाय ग्रहकुण्डलिकामाह । सप्ताष्टान्त्यबहिःशुभैरिति । शुभग्रहैर्बुधजीवशुक्रैः । सप्ताष्टान्त्यबहिःस्थितैः । सप्तममष्टममन्त्यं च द्वादशस्थानं बहिः कृत्वा वर्जयित्वान्यत्र स्थितैः । लग्नद्वितीयतृतीयचतुर्थपञ्चमषष्ठनवमदशमैकादशस्थानेषु स्थितैरित्यर्थः ।

उडुपतौ चन्द्रे एकादशद्वितीयतृतीयस्थानानामन्यतमस्थानगते । क्रूरैः पापग्रहैरादित्याङ्गारशनैश्चरैः । व्यायषडष्टगैः । त्रिस्तृतीयम् । आयमेकादशम् । षडष्टके षष्ठाष्टमस्थाने प्रविष्टे । एतेषु स्थानेषु एतैः संस्थितैः पापैः । न तु भृगौ षष्ठे सौम्यत्वाच्छुक्रस्य षष्ठे स्थाने शुभं फलं प्रागभिहितं तस्यानेन प्रतिषेधः कार्यः । कुजेऽष्टमे च ॥ ७ ॥

उक्तं च ।

सौम्यान् व्ययास्तनिधनेष्वरिमे च शुक्रं
हित्वा स्थितस्त्रिधनलाभगतः शशाङ्कः ।
पापास्त्रिषड्निधनलाभगता विवाहे
हित्वाऽष्टमं क्षितिजमिष्टफलानि दद्युः—इति ॥

अथ कन्याकुमारयोः परस्परमानुकूल्यमाह । दम्पत्योर्द्विनवाष्टराशिरहित इति । दम्पत्योर्जायापत्योः । द्विद्वादशनवमपञ्चमाष्टषष्ठराशिभी रहिते वर्जिते । परस्परं यदि द्विद्वादशे नवमपञ्चमे षष्ठाष्टमे न भवतः । एकराशौ तृतीयेकादशराशौ चतुर्थदशमराशौ सप्तमराशौ भवतस्तदा कार्य इत्यर्थः ।

उक्तं च ।

त्रिकोणषष्ठाष्टधनव्ययेषु पापप्रदानं शुभमन्यभेषु ।

चारानुकूले रवौ । रवावादित्ये चारानुकूले चारस्य जन्मराशेस्तृतीयषष्ठदशमैकादशस्थानानामन्यतमस्थ इत्यर्थः । कन्यायाश्चन्द्रे गोचरानुकूले ।

उक्तं च ।

गोचरशुद्धाविन्दुं कन्याया यत्नतः शुभं वीक्ष्य ।
तिग्मकिरणं च पुंसां शेषैरबलैरपि विवाहः ॥

अथ समागमफलं प्रदर्शयति । चन्द्रे वार्ककुजार्किशुक्रवियुत इति । अर्क आदित्यः । कुजोऽङ्गारकः । आर्किः सौरः । शुक्रो भार्गवः । एतैर्वियुते रहिते चन्द्रे । एतेषामन्यतमेन सह मार्गस्थो यदि न भवति । अर्थादेव बुधगुरुयुक्तश्चन्द्रमाः शुभः ।

उक्तं च ।

नान्यैः समेतः शुभकृच्छशाङ्कः, केषां चिदिष्टो बुधजीवयुक्त इति ।
मध्येऽथवा पापयोः । पापग्रहयोर्मध्येऽन्तश्चन्द्रो यदि न भवति ।

उक्तं च ।

मध्ये पापग्रहयो: पाणिग्रहणे शशी न सौख्यकर: ।
तस्माद्यत्नाच्चन्द्र: कन्याया: सुस्थितो देय: ॥

एक: पापश्चन्द्राद्द्वितीयेऽन्यो द्वादशे यदि भवति, तदा स पापयोर्मध्यगतो भवति । त्यक्त्वा च व्यतिपातवैधृतिदिनमिति । यस्मिन् दिने व्यतिपातो भवति । तद्व्यतिपातदिनम् । यस्मिन् दिने वैधृतिर्भवति तद्वैधृतिदिनम् । एवं व्यतिपातवैधृतिदिनं त्यक्त्वा विहाय ।

उक्तं च ।

न वैधृतिदिने कुर्याद्व्यतीपातयुतेऽहनि ।

विष्टिं करणं रिक्तां च तिथिं चतुर्थीं नवमीं चतुर्दशीं च त्यक्त्वा विहाय ।

उक्तं च ।

रिक्तासु च न कर्तव्यं न विष्टिदिवसे तथा ।

क्रूराहायनेति । क्रूरस्याह: क्रूराह: पापग्रहवासर: । तस्मिन् पापदिने न कर्तव्यम् । अर्थादेव शुभग्रहदिने कर्तव्यम् ।

उक्तं च ।

आग्नेयग्रहवासरेषु कलह: प्रीतिस्तु सत्सूत्तमा ।
केचित् स्थैर्यमुशन्ति सौरदिवसे चन्द्रे सदापत्यकम्—इति ॥

क्रूरमयनं दक्षिणायनम् । तत्र न कार्यम् । उत्तरायणेऽर्थादेव कार्यम् ।

उक्तं च ।

उत्तरां भजमानेन काष्ठां वै सप्तसप्तिना ।
चतुर्णामपि वर्णानां विवाह: श्रेष्ठ उच्यते ॥

पौषचैत्रविरह इति । पौषमासं चैत्रं च वर्जयित्वा पौषचैत्रयोर्न कार्य: । नन्वत्र पौषो दक्षिणायने भवति । दक्षिणायननिषेधात् पौषस्यापि निषेधं प्राप्नोति । तत्किमर्थमुक्तं पौषविरह इति । अथोच्यते । अयमभिप्राय आचार्यस्य । यथा दक्षिणायनेऽपि कार्तिकमार्गशीर्षयो: कर्तव्य: । उत्तरायणे सिद्धेऽपि विवाहविधौ चैत्रो न कार्य: ।

तथा च ।

माघफाल्गुनवैशाखा ऐन्द्रसौम्यानलास्तथा ।
षडेते पूजिता मासाश्चातुर्वर्ण्येऽपि नित्यशः ॥
सूढा सुभगा साध्वी पुत्रिणी धर्मवत्सला ।
धनिनी देवभक्ता च यथासङ्ख्यं प्रकीर्तिता ॥
आषाढचैत्रपौषाश्च नभस्यः श्रावणस्तथा ।
कुत्सिताः सर्ववर्णानां विवाहेषु मनीषिभिः ॥
आषाढे नष्टशौचा तु खला सन्तानवर्जिता ।
वैशाखे सर्वसामान्या चैत्रे चातृप्तमैथुना ॥
पौषे भर्तृविहीना स्यान्नभस्येऽपि च दुर्भगा ।
एवमाश्वयुजोढा तु श्रावणे तु मृतप्रजा ॥

लग्नांशके मानुषे । द्विपदाख्ये मिथुनकन्यातुलानामन्यतमे कार्यः । अनेनैतत् प्रतिपादितं भवति । यथा सर्व एव राशयो द्विपदनवांशकोदयगताः पाणिग्रहणे शस्ताः । तस्मिंश्च मानुषांशके स्वामिदृष्टे ।

उक्तं च ।

द्विपदभवनं प्राप्तो योंशः शुभोऽन्यगृहोदये ।
द्विपदभवनेष्वप्यन्यांशा भवन्त्यशुभावहाः ॥

तथा च ।

विलग्नांशः स्वनाथेन यद्युद्वाहे न दृश्यते ।
पुंविनाशस्ततोऽस्तांशो यद्येवं योषितस्ततः ॥

लग्नांशकादस्तांशकस्यापि स्वामिदृष्टिर्विधेयेति ॥ ८ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ तिथिकरणगुणो नामैकोनशततमोऽध्यायः ॥ ९९ ॥

## अथ [1]नक्षत्रजातकाध्यायो व्याख्यायते ।

तत्रादावेवाश्विनीभरण्योर्जातस्य स्वभावमाह ।

**प्रियभूषणः स्वरूपः सुभगो दक्षोऽश्विनीषु मतिमांश्च ।**
**कृतनिश्चयसत्यारुग्दक्षः सुखितश्च भरणीषु ॥ १ ॥**

[1] क्वचिदध्यायो नक्षत्रजातकोऽपि ।

प्रियभूषणोऽलङ्करणवल्लभः । स्वरूपः शोभनाकृतिः । सुभगः सर्वजनवल्लभः । दक्षः शीघ्रकारी । मतिमान् बुद्धिमान् । अष्टाङ्गबुद्धियुक्तः ।

शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा ।
ऊहापोहार्थविज्ञानं तत्त्वज्ञानं च धीगुणाः—इति ॥

एवंविधोऽश्विनीजातो भवति । तारकापेक्षया च बहुवचनम् ।

तथा च पराशरः ।

विज्ञानवानरोगो भिषक् प्रदातार्थभृत्यवनितेशः ।
दक्षः क्षितिपतिसेवी जातः स्यादाश्विने शूरः ॥

कृतनिश्चय इति । कृतनिश्चयः कार्याणामन्तगः । सत्यः सत्यवाक् । अरुक् स्वच्छदेहः । दक्षः शीघ्रकारी । सुखितः सञ्जातसुखः । एवंविधो भरणीषु जातो भवति ॥ १ ॥

तथा च पराशरः ।

धीरः क्रूरोऽनृतवाक् परवित्तहरो नरश्चपलबुद्धिः ।
बहुशत्रुपुत्रभृत्यो याम्ये प्रियमांसमद्यश्च ॥

अथ कृत्तिकारोहिण्योर्जातस्य स्वरूपमाह ।

**बहुभुक् परदाररतस्तेजस्वी कृत्तिकासु विख्यातः ।**
**रोहिण्यां सत्यशुचिः प्रियंवदः स्थिरः स्वरूपश्च ॥ २ ॥**

बहुभुक् यः प्रभूतं भुङ्क्ते । परदाररतः परस्त्रीषु रतः । तेजस्वी सहिष्णुः । विख्यातः कीर्तियुक्तः । एवंविधः कृत्तिकासु जातो भवति ।

तथा च पराशरः ।

धर्ममतिर्बहुवित्तः स्वाध्यायाभिजनरूपसम्पन्नः ।
अकृपणमतिः यशोयुते जातः स्यादग्निदैवत्ये ॥

रोहिण्यामिति । सत्यः सत्यवाक् । शुचिः शास्त्रोक्तशौचानुष्ठानपरो धनाद्यलुब्धश्च । प्रियंवदोऽभिमतवक्ता । स्थिर एकमतिः । स्वरूपः शोभनाकृतिः । एवंविधो रोहिण्यां जातो भवति ॥ २ ॥

तथा च पराशरः ।

सुतधनपशुमान् विद्वान् दाता धीरोऽल्पवाक् क्षितिपतिश्च ।
सुभगतिस्तेजस्वी प्राजापत्ये नरो जातः ॥

अथ मृगशिरआर्द्रयोर्जातस्य स्वरूपमाह ।

**चपलश्चतुरो भीरुः पटुरुत्साही धनी मृगे भोगी ।**
**शठगर्वितचण्डकृतघ्नहिंस्रपापश्च रौद्रर्क्षे ॥ ३ ॥**

चपलोऽनेकमतिः । चतुरो दक्षः । भीरुर्भयार्त्तः । पटुः प्रवक्ता । उत्साही सोद्यमः । धनी धनवान् । भोगी भोगसंयुक्तः । एवंविधो मृगशिरसि जातो भवति ।

तथा च पराशरः ।

अतिशीलरूपदृष्टः सौम्यमतिः सोद्यमः श्रुतिरहस्यः ।
चपलमतिः सुविनीतो जातः स्यादिन्दुदैवत्ये ॥

शठगर्वितेति । शठः परकार्यविमुखः । गर्वितो मानी । चण्डः प्रकोपनः । कृतघ्नो निरुपकारशीलः । हिंस्रः क्रूरः । पापः पापसमेतः । एवंविधो रौद्रर्क्षे आर्द्रायां जातो भवति ॥ ३ ॥

तथा च पराशरः ।

रौद्रः क्रूरः क्रोधी परदारार्थापहारशीलश्च ।
वाग् निष्ठुरोऽतिधीरो जातः स्याद्रुद्रदैवत्ये ॥

अथ पुनर्वसुजातस्य स्वरूपमाह ।

**दान्तः सुखी सुशीलो दुर्मेधा रोगभाक् पिपासुश्च ।**
**अल्पेन च सन्तुष्टः पुनर्वसौ जायते मनुजः ॥ ४ ॥**

दान्तो दमसंयुक्तो जितेन्द्रियः । सुखी सुखितः । सुशीलः शोभनचरित्रः । दुर्मेधा दुष्टमतिः । रोगभाग्रोगपीडितः । पिपासुस्तृषार्तः । अल्पेन स्तोकमात्रेण सन्तुष्टो हृष्टः । एवंविधो मनुष्यः पुनर्वसौ जायत उत्पद्यते ॥ ४ ॥

तथा च पराशरः ।

धनवृद्धिभावनायां प्रयांति विदिशो भवन्ति कृच्छ्राणि ।
व्याधिबहुलो बहुसुतः पुनर्वसौ जायते मनुजः ॥

अथ तिष्याश्लेषयोर्जातस्य स्वरूपमाह ।

**शान्तात्मा सुभगः पण्डितो धनी धर्मसंश्रितः पुष्ये ।**
**शठसर्वभक्ष्यपापः कृतघ्नधूर्त्तश्च भौजङ्गे ॥ ५ ॥**

शान्तात्मा जितेन्द्रियः । सुभगः सर्वजनप्रियः । पण्डितः शास्त्रवित् । धनी वित्तवान् । धर्मसंश्रितो धार्मिकः । एवंविधः पुष्ये जातो भवति ।

तथा च पराशरः ।

द्युतिकान्तिसत्त्वयुक्तो बहुश्रुतो दारदासधनचेष्टः ।
विपुलकुलवंशकर्ता वक्ता पुष्ये नरो जातः ॥

शठः परकार्यविमुखः । सर्वभक्ष्यः सर्वभक्षकः । पापः पापसमेतः । कृतघ्नो दुर्जनः । धूर्तः परवञ्चकः । एवंविधो भोजङ्गे श्लेषायां जातो भवति ॥ ५ ॥

तथा च पराशरः ।

स्वल्पगतिर्जिह्माक्षः क्रूरः क्रोधी नरः सदामर्षः ।
दाता हन्ता भोक्ता सार्पे जातो बहुव्यसनः ॥

अथ मघापूर्वफल्गुन्योर्जातस्य स्वरूपमाह ।

**बहुभृत्यधनी भोगी सुरपितृभक्तो महोद्यमः पित्र्ये ।**
**प्रियवाग्दाता द्युतिमानटनो नृपसेवको भाग्ये ॥ ६ ॥**

बहुभृत्यः प्रभूतपरिवारः । बहुधनी अतिवित्तः । भोगी भोगसंयुक्तः । सुराणां देवानां पितॄणां च भक्तः पूजाकरः । महोद्यमो महोत्साहः । एवंविधः पित्र्ये मघायां जातो भवति ।

तथा च पराशरः ।

पितृभक्तः क्रोधवशो मानी पितृयज्ञसत्रयाजी च ।
द्विपचतुष्पदमिश्राढ्यो बहुरिपुर्मघो नरः पित्र्ये ॥

प्रियवागिति । प्रियवाग्अभिमतवक्ता । दाता दानशीलः । द्युतिमान् कान्तियुक्तः । अटनः परिभ्रमणशीलः । नृपसेवको राजधनतत्परः । एवंविधो भाग्ये पूर्वफल्गुन्यां जातो भवति ॥ ६ ॥

तथा च पराशरः ।

बहुभाग्योऽल्पापत्यः सुभगः प्रियदर्शनो नरोऽल्पधनः ।
नातिप्रबुद्धबुद्धिः परभाग्यविभुर्भवति भाग्ये ॥

अथोत्तरफल्गुनीहस्तयोर्जातस्य स्वरूपमाह ।

**सुभगो विद्याप्तधनो भोगी सुखभाग्द्वितीयफल्गुन्याम् ।**
**उत्साही धृष्टः पानपोऽघृणी तस्करो हस्ते ॥ ७ ॥**

सुभगः सर्वजनप्रियः । विद्याप्तधनो विद्ययाऽऽप्तं धनं वित्तं येन । भोगी भोगवान् । सुखभाक् सुखी । एवंविधो द्वितीयफल्गुन्यामुत्तरफल्गुन्यां जातो भवति ।

तथा च पराशरः ।

हयगजरथप्रयायी दाता भोक्ता विहाररतिशीलः ।
मृदुवाग्गीतरतिः स्यादार्यम्णे मानवो विद्वान् ॥

उत्साही धृष्ट इति । उत्साही सोद्यमः । धृष्टः प्रगल्भः । पानपः पानसक्तः । अघृणी निर्दयः । तस्करश्चोरः । एवंविधो हस्ते जातो भवति ॥ ७ ॥

तथा च पराशरः ।

उपचितकरचरणभुजो बहुविधधनधान्यतायशीः सेर्ष्यः ।
धर्मार्थकामभागी हस्ते सुतवान् नरो जातः ॥

अथ चित्रास्वात्योर्जातस्य स्वरूपमाह ।

**चित्राम्बरमाल्यधरः सुलोचनाङ्गश्च चित्रायाम् ।**
**दान्तो वणिक् [1]तृषालुः प्रियवाग्धर्माश्रितः स्वातौ ॥ ८ ॥**

चित्राणि नानाप्रकाराणि अम्बराणि वस्त्राणि माल्यानि च धारयति । सुलोचनाङ्गः । शुभे लोचने अक्षिणी अङ्गान्यवयवानि च यस्य । एवंविधः चित्रायां जातो भवति ।

तथा च पराशरः ।

वेदार्थशास्त्रकुशलः पशुमानत्यन्तशिल्पकर्मा च ।
चित्राक्षश्चित्रायां सुभगश्च नरस्त्रिपुत्रश्च ॥

दान्तो वणिगिति । दान्तो जितेन्द्रियः । वणिक् क्रयविक्रयकुशलः । तृषालुस्तृषार्तस्तृषां न सहते । अन्ये कृपालुर्दयालुरितीच्छन्ति । प्रियवाग्भिमतवक्ता । धर्माश्रितो धर्मपरः । एवंविधः स्वातौ जातो भवति ॥ ८ ॥

---

१ कृपालुरिति पाठान्तरम् ।

तथा च पराशरः ।

बहुजनभर्ता वक्ता त्रिवर्गभोक्ता प्रियो महोत्साहः ।
वामाचारोऽल्परिपुः स्वातौ जातः कुलाढ्यश्च ॥

अथ विशाखानुराधयोर्जातस्य स्वरूपमाह ।

**ईर्षुर्लुब्धो द्युतिमान् वचनपटुः कलहकृद्विशाखासु ।**
**आढ्यो विदेशवासी क्षुधालुरटनोऽनुराधासु ॥ ९ ॥**

ईर्षुः परक्लिष्टः मत्सरः । लुब्धो लोभाभिभूतः । द्युतिमान् कान्तियुक्तः । वचनपटुः सम्भाषणदक्षः । कलहकृत् कलहशीलः । एवंविधो विशाखासु जातो भवति ।

तथा च पराशरः ।

श्रीमानीज्याभिरतः प्राज्ञोऽनुपसाधुकृत् कृतार्थपतिः ।
तीक्ष्णोऽभिमानयुक्तश्चैन्द्राग्नौ ख्यातकीर्तिश्च ॥

आढ्य इति । आढ्य ईश्वरः । विदेशवासी परदेशनिवसनशीलः । क्षुधालुः क्षुधां बुभुक्षां न सहते । अटनः परिभ्रमणशीलः । एवंविधोऽनुराधासु जातो भवति ॥ ९ ॥

तथा च पराशरः ।

स्थिरमित्रस्तेजस्वी सुतवानत्यन्तसौख्यभागी च ।
ख्यातिप्रख्योऽर्थपरो जातः स्यान्मित्रदैवत्ये ॥

अथ ज्येष्ठामूलयोर्जातस्य स्वरूपमाह ।

**ज्येष्ठासु न बहुमित्रः सन्तुष्टो धर्मकृत् प्रचुरकोपः ।**
**मूले मानी धनवान् सुखी न हिंस्रः स्थिरो भोगी ॥ १० ॥**

न बहुमित्रः स्वल्पसुहृत् । सन्तुष्टः सन्तोषशीलः । धर्मकृद्धर्मानुरतः । प्रचुरकोपः क्रोधशीलः । एवंविधो ज्येष्ठासु जातो भवति ॥

तथा च पराशरः ।

ख्यातिषु गुणेषु राजसु पूजां प्राप्नोति नाशयति शत्रून् ।
तेजोऽधिकोऽर्थभागी जातः स्यादिन्द्रदैवत्ये ॥

मूले मानी धनवानिति । मानी गर्वितः । धनवान् वित्तवान् । सुखी खितः । न हिंस्रोऽक्रूरः । स्थिर एकमतिः । भोगी भोगवान् । एवंविधो ले जातो भवति ॥ १० ॥

तथा च पराशरः ।

धनधान्याढ्यो दाता परवित्तहरो नरः कलहशीलः ।
क्रूरः परोपतापी मूले मूलोपजीवी च ॥

अथ पूर्वाषाढोत्तराषाढयोर्जातस्य स्वरूपमाह ।

**इष्टानन्दकलत्रो [1]वीरो दृढसौहृदश्च जलदेवे ।**
**वैश्वे विनीतधार्मिकबहुमित्रकृतज्ञसुभगश्च ॥ ११ ॥**

इष्टं वल्लभं सानन्दं कलत्रं भार्या यस्य । वीरः सङ्ग्रामशूरः । केचित् मानी गर्वीतीच्छन्ति । दृढसौहृदः स्थिरमित्रः । एवंविधो जलदेवे पूर्वाषाढायां जातो भवति ।

तथा च पराशरः ।

सलिलपथकर्मसिद्धः क्लेशसहिष्णुः परस्य दारेच्छुः ।
नित्यमकल्पशरीरः प्रियमद्यः पूर्वषाढासु ॥

वैश्वे विनीत इति । विनीतो विनयोपेतः । धार्मिको धर्मपरः । बहुमित्रः प्रभूतसुहृत् । कृतज्ञः प्रत्युपकारनिरतः । सुभगः सर्वजनप्रियः । एवंविधो वैश्वे उत्तराषाढायां जातो भवति ॥ ११ ॥

तथा च पराशरः ।

यानोद्यानवनरतिः प्रवासपुरतीर्थसाधुसेवी च ।
बहुशिल्पार्थः प्रियवाक् जातः स्य द्विश्वदैवे च ॥

अथ श्रवणधनिष्ठयोर्जातस्य स्वरूपमाह ।

**श्रीमान् श्रवणे श्रुतवानुदारदारो धनान्वितः ख्यातः ।**
**दाताऽऽढ्यशूरगीतप्रियो धनिष्ठासु धनलुब्धः ॥ १२ ॥**

श्रीमानीश्वरः । श्रुतवान् पण्डितः । उदारदार उदारेषु दारः । अथवोदारा दारा यस्य । उदारा दातारः । धनान्वितो धनसंयुक्तः । ख्यातः कीर्तियुक्तः । एवंविधः श्रवणे जातो भवति ।

[1] मानी—इति पाठान्तरम् ।

तथा च पराशरः ।

धनिष्ठासु धनवान् दानरुचिर्भवति दक्षिणो दक्षः ।
नित्यमरोगशरीरः श्रवणे हतशत्रुपक्षश्च ॥

दाताऽऽढ्यशूरेति । दाता दानशीलः । आढ्य ईश्वरः । शूरः सङ्ग्रामप्रियः । गीतप्रियो स्वरगीतरतिः । धनलुब्धो वित्तलोभाभिभूतः । एवंविधो धनिष्ठासु जातो भवति ॥ १२ ॥

तथा च पराशरः ।

धनधान्यसञ्चयानामीशः स्यान्नृपतिसत्कृतो यज्वा ।
अक्लेशभाक् जितरिपुः श्रविष्ठयाभीष्टतारश्च ॥

अथ शतभिषक्पूर्वभद्रपदयोर्जातस्य स्वरूपमाह ।

**स्फुटवाग्व्यसनी रिपुहा साहसिकः शतभिषक्सु दुर्ग्राह्यः ।**
**भद्रपदासूद्विग्नः स्त्रीजितधनपटुरदाता च ॥ १३ ॥**

स्फुटवाक् निष्ठुरभाषी । व्यसनी मृगयादिव्यसनोपेतः । रिपुहा शत्रुहन्ता । साहसिकः असमीक्षितकार्यवान् । दुर्ग्राह्यो दुराराध्यः । एवंविधः शतभिषक्सु जातो भवति ।

तथा च पराशरः ।

परदारमद्यसेवी क्लेशसहो वारुणे नरो धीरः ।
स्थिरसञ्चयः स्थिरसुहृद्भिषक्क्रियापण्डितो रोगी ॥

भद्रपदास्विति । उद्विग्नो दुःखितः । स्त्रीजितधनः स्त्रिया जितं धनं यस्य स्त्रीभिर्वा । पटुः प्रवक्ता । अदाता च लुब्धः । एवंविधो भद्रपदासु जातो भवति ॥ १३ ॥

तथा च पराशरः ।

दारुणकर्मा क्रोधी निशाचरस्तीक्ष्णविक्रमश्चपलः ।
जिह्मः प्रसह्य हन्ता प्राक्प्रोष्ठपदे भवति जातः ॥

अथोत्तरभद्रपदारेवत्योर्जातस्य स्वरूपमाह ।

**वक्ता सुखी प्रजावान् जितशत्रुर्धार्मिको द्वितीयासु ।**
**सम्पूर्णाङ्गः सुभगः शूरः शुचिरर्थवान् पौष्णे ॥ १४ ॥**

वक्ता सम्भाषणदक्षः । सुखी सुखभाक् । प्रजावान् पुत्रपौत्रदौहितृसंयुक्तः । जितशत्रुर्जिताः शत्रवो रिपवो येन । धार्मिको धर्मरतः । एवंविधो द्वितीयासूत्तरासु जातो भवति ।

तथा च पराशरः ।

नृपसत्कृतो बहुसुतः प्रदानशीलो जले सततभीरुः ।
इज्याध्ययनरतिः स्यादाहिर्बुध्न्ये नरो जातः ॥

सम्पूर्णाङ्ग इति । सम्पूर्णाङ्गोऽविकलावयवः । सुभगः सौभाग्ययुक्तः । शूरः सङ्ग्रामप्रियः । शुचिः शौचयुक्तः परस्वाद्यलुब्धः । अर्थवान् धनोपेतः । एवंविधः पौष्णे रेवत्यां जातो भवति ॥ १४ ॥

तथा च पराशरः ।

सर्वार्थभुक् प्रदाता प्रवासनिरतो विशुद्धकुलशीलः ।
गोमाननल्पपुत्रः पौष्णे विद्वान् नरो जातः ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ नक्षत्रजातकं नाम शततमोऽध्यायः ॥ १०० ॥

## अथ राशिविभागो व्याख्यायते ।

तत्रादावेव मेषवृषयोर्नक्षत्रजातप्रविभागमाह ।

**अश्विन्योऽथ भरण्यो बहुलापादश्च कीर्त्यते मेषः ।**
**वृषभो बहुलाशेषं रोहिण्योऽर्धं च मृगशिरसः ॥ १ ॥**

अश्विन्यः सकलाः पादचतुष्टयम् । अथशब्दश्चार्थे । भरण्यः सकला एव पादचतुष्टयम् । बहुला कृत्तिका । तस्याश्चतुर्थमंशम् । एष मेष इति मेषराशिः कीर्त्यते कथ्यते । अत्र नक्षत्रं चतुष्पादम् । पादमूनद्वयं राशिर्भवति । एवं नक्षत्रनवपादाः प्रत्येकस्य राशेः प्रमाणम् । उक्तं च । "मेषाश्विप्रथमा नवर्क्षचरणाश्चक्रस्थिता राशयः" इति । बहुलाशेषं कृत्तिकापादत्रयम् । रोहिणी सकला । अर्धं च मृगशिरसो मृगशिरसः पादद्वयं वृषभो राशिः कीर्त्यते ॥ १ ॥

---

१ बृहज्जातकस्य १ अध्याये ४ श्लोकः ।

अथ मिथुनकर्कटयोर्नक्षत्रविभागमाह ।

**मृगशिरसोऽर्धं रौद्रं पुनर्वसोरंशकत्रयं मिथुनः ।**
**पादश्च पुनर्वसुतस्तिष्यः श्लेषा च कर्कटकः ॥ २ ॥**

मृगशिरसोऽर्धं पादद्वयम् । रौद्रमार्द्रा सकला । पुनर्वसोरंशकत्रयम् । एष मिथुनराशिः । पादश्चेति । पुनर्वसुतः पुनर्वसोः पादः । तिष्यः सकलः । श्लेषा च सकला । एष कर्कटराशिः ॥ २ ॥

सिंहकन्ययोर्नक्षत्रविभागमाह ।

**सिंहोऽथ मघा पूर्वा च फल्गुनीपाद उत्तरायाश्च ।**
**तत्परिशेषं हस्तश्चित्राद्यर्धं च कन्याख्यः ॥ ३ ॥**

मघा सकला । पूर्वा च फल्गुनी सकला । उत्तरायाश्च पादः । इति सिंहः । तत्परिशेषमिति । तदित्युत्तरायाः परामर्शः । तत्परिशेषमुत्तरापादत्रयम् । हस्तः सकलः । चित्राया अर्धं प्रथमं पादद्वयम् । इति कन्याराशिः ॥ ३ ॥

अथ तुलावृश्चिकयोर्नक्षत्रविभागमाह ।

**तौलिनि चित्रान्त्यार्धं स्वातिः पादत्रयं विशाखायाः ।**
**अलिनि विशाखापादस्तथानुराधान्विता ज्येष्ठा ॥ ४ ॥**

चित्राया अन्त्यमर्धं पश्चिमं पादद्वयम् । स्वातिः सकला । विशाखायाः पादत्रयम् । एतत्तौलिनि तुले स्थितम् । विशाखायाः पश्चिमः पादः । अनुराधा सकला । तथा तयान्विता संयुक्ता ज्येष्ठा सकलैव । एतदलिनि वृश्चिके ॥ ४ ॥

अथ धन्विमकरयोर्नक्षत्रविभागमाह ।

**मूलमषाढा पूर्वा प्रथमश्चाप्युत्तरांशको धन्वी ।**
**मकरस्तत्परिशेषं श्रवणः पूर्वं धनिष्ठार्धम् ॥ ५ ॥**

मूलं सकलम् । अषाढा पूर्वा सकलैव । उत्तरांशकः प्रथम आद्यः पादः । एष धन्वी । मकरस्तत्परिशेषमिति । तदित्युत्तरायाः परामर्शः । तत्परिशेषमुत्तरापादत्रयमन्त्यम् । श्रवणः सकलः । पूर्वं धनिष्ठार्धम् । धनिष्ठाया आद्यं पादद्वयम् । एष मकरः ॥ ५ ॥

अथ कुम्भमीनयोः नक्षत्रविभागमाह ।

**कुम्भोऽन्त्यधनिष्ठार्धं शतभिषगंशत्रयं च पूर्वायाः ।**
**भद्रपदायाः शेषं तथोत्तरा रेवती च झषः ॥ ६ ॥**

धनिष्ठायामन्त्यमर्धं पश्चिमं पादद्वयम् । शतभिषक् सकला । पूर्वाया अंशत्रयमाद्यं पादत्रयम् । एष कुम्भः । भद्रपदायाः शेषमिति । भद्रपदायाः पूर्वभद्रपदायाः शेषमेकमंशम् । तथोत्तरा सकला । रेवती च सकलैव । एष झषो मीन इति ॥ ६ ॥

अथैतदेव सङ्क्षेपेणाह ।

**अश्विनीपित्र्यमूलाद्या मेषसिंहहयादयः ।**
**विषमर्क्षान्निवर्त्तन्ते पादवृद्ध्या यथोत्तरम् ॥ ७ ॥**

मेषादयश्चत्वारः । सिंहादयश्चत्वारः । हयादयश्चत्वार एव । अश्विन्यादौ मेषस्यादि ।·पित्र्यादौ सिंहस्यादि । मूलादौ हयादि धनुषः प्रारम्भः । ते च यथोत्तरं पादवृद्ध्या स्थिताः । विषमर्क्षात् तृतीयपञ्चमसप्तमनवमनक्षत्राद्यथोत्तरं पादवर्धनेन स्थिताः । निवर्तन्ते निर्वृतिं यान्ति । यथा कृत्तिका गणनया अश्विन्यादितृतीयनक्षत्रम् । तत्प्रथमपादे मेषस्य निवृत्तिः समाप्तिः । मृगशिरो गणनया पञ्चमः । तत्पादद्वये वृषस्य निवृत्तिः । पुनर्वसुर्गणनयासप्तमः । तत्पादत्रये मिथुनस्य निवृत्तिः । श्लेषा गणनया नवमः । तत्पादचतुष्टये कर्कटस्य निवृत्तिः । एवं सिंहधनुषोर्योज्यमिति ॥ ७ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ राशिविभागो नामैकशततमोऽध्यायः ॥ ॥ १०१ ॥

## अथ प्रसङ्गागतं विन्ध्यवासिकृतं विवाहपटलं व्याख्यायते ।

लग्नादावेव लग्नस्थितानां सर्वग्रहाणां फलान्याह ।

**मूर्त्तौ करोति दिनकृद्विधवां कुजश्च**
**राहुर्विपन्नतनयां रविजो दरिद्राम् ।**
**शुक्रः शशाङ्कतनयश्च गुरुश्च साध्वी-**
**मायुःक्षयं प्रकुरुतेऽथ विभावरीशः ॥ १ ॥**

दिनकृदादित्यो मूर्तौ वैवाहिके लग्ने स्थितो विधवां मृतभर्तृकां कन्यकां करोति । कुजोऽङ्गारकस्त्वशब्दाद्विधवामेव करोति । राहुः सैंहिकेयो विपन्नतनयां मृतपुत्रां करोति । रविजो दरिद्रां निर्धनाम् । शुक्रो भार्गवः । शशाङ्कतनयो बुधः । गुरुश्च जीवः । एते साध्वीं सच्छीलां कुर्वन्ति । विभावरी रात्रिः । तस्या ईशश्चन्द्रः । आयुषो जीवितस्य क्षयं विनाशं प्रकुरुते ॥ १ ॥

अथ द्वितीयस्थानस्थितानां सर्वग्रहाणां फलान्याह ।

**कुर्वन्ति भास्करशनैश्चरराहुभौमा**
**दारिद्र्यदुःखमतुलं नियतं द्वितीये ।**
**वित्तेश्वरीमविधवां गुरुशुक्रसौम्या**
**नारीं प्रभूततनयां कुरुते शशाङ्कः ॥ २ ॥**

द्वितीये लग्नाद्द्वितीयस्थाने । भास्कर आदित्यः । शनैश्चरः सौरिः । राहुः सैंहिकेयः । भौमोऽङ्गारकः । अतुलमसमं दारिद्र्यं दुःखं विगतधनेन क्लेशं नियतं सर्वकालं कुर्वन्ति । गुरुर्बृहस्पतिः । शुक्रः । सौम्यो बुधः । वित्तेश्वरीं धनस्य स्वामिनीम् । अविधवां जीवद्भर्तृकां च कुर्वन्ति । शशाङ्कश्चन्द्रः । नारीं कन्यां प्रभूततनयां बहुप्रजां कुरुते ॥ २ ॥

अथ तृतीयस्थानस्थितानां सर्वग्रहाणां फलान्याह ।

**सूर्येन्दुभौमगुरुशुक्रबुधास्तृतीये**
**कुर्युः सदा बहुसुतां धनभागिनीं च ।**
**व्यक्तां दिवाकरसुतः सुभगां करोति**
**मृत्युं ददाति नियमात् खलु सैंहिकेयः ॥ ३ ॥**

तृतीये तृतीयस्थाने स्थिताः । सूर्य आदित्यः । इन्दुश्चन्द्रः । भौमोऽङ्गारकः । गुरुर्जीवः । शुक्रः । बुधः । एते सदा सर्वदा बहुसुतां प्रभूतपुत्राम् । धनभागिनीं च वित्तान्वितां कन्यकां कुर्युः । दिवाकरसुतः सौरिः । व्यक्तां कीर्तियुक्ताम् । सुभगां भर्तृवल्लभां च करोति । सैंहिकेयो राहुः । नियमान्निश्चयान्मृत्युं मरणं ददाति । खलुशब्दस्त्वर्थे वाक्यालङ्कारे वा ॥ ३ ॥

अथ चतुर्थस्थानस्थितानां सर्वग्रहाणां फलान्याह ।

स्वल्पं पयः स्रवति सूर्यसुते चतुर्थे
दौर्भाग्यमुष्णकिरणः कुरुते शशी च ।
राहुः सपत्नमपि च क्षितिजोऽल्पवित्तं
दद्याद्भृगुः सुरगुरुश्च बुधश्च सौख्यम् ॥ ४ ॥

चतुर्थे चतुर्थस्थाने । सूर्यसुते शनैश्चरे । स्वल्पं स्तोकम् । पयः क्षीरं स्रवति । उष्णकिरणः सूर्यो दौर्भाग्यं दुर्भगत्वं कुरुते । शशी च चन्द्रो दौर्भाग्यमेव कुरुते । राहुः सपत्नं शत्रुं करोति । सापत्न्यं करोतीत्यर्थः । क्षितिजोऽङ्गारकोऽल्पवित्तं स्वल्पधनं करोति । भृगुः शुक्रः । सुरगुरुर्जीवः । बुधश्च । सौख्यं दद्यात् ॥ ४ ॥

अथ पञ्चमस्थानस्थितानां सर्वग्रहाणां फलान्याह ।

नष्टात्मजां रविकुजौ खलु पञ्चमस्थौ
चन्द्रात्मजो बहुसुतां गुरुभार्गवौ च ।
राहुर्ददाति मरणं शनिरुग्ररोगं
कन्याविनाशमचिरात् कुरुते शशाङ्कः ॥ ५ ॥

रविरादित्यः । कुजोऽङ्गारकः । एतौ पञ्चमस्थौ लग्नात् पञ्चमस्थाने स्थितौ नष्टात्मजां मृतापत्यां कन्यकां कुरुतः । खलुशब्द आगमद्योतनार्थः । चन्द्रात्मजो बुधो बहुसुतां प्रभूतपुत्रां करोति । गुरुर्बृहस्पतिः । भार्गवः शुक्रः । एतावपि चशब्दाद्बहुसुतामेव कुरुतः । राहुर्मरणं ददाति । शनिः सौरिः । उग्रं तीव्रं रोगं गदं ददाति । शशाङ्कश्चन्द्रोऽचिराच्छीघ्रमेव कन्याया विनाशं कुरुते करोति ॥ ५ ॥

अथ षष्ठस्थितानां सर्वग्रहाणां फलान्याह ।

षष्ठाश्रिताः शनिदिवाकरराहुजीवाः
कुर्युः कुजश्च सुभगां श्वशुरेषु भक्ताम् ।
चन्द्रः करोति विधवामुशना दरिद्रा-
मृद्धां शशाङ्कतनयः कलहप्रियां च ॥ ६ ॥

शनिः सौरिः । दिवाकर आदित्यः । राहुः सैंहिकेयः । जीवो बृहस्पतिः । एते षष्ठाश्रिताः षष्ठस्थानस्थाः । कुजश्चाङ्गारकः षष्ठस्थानस्थ एव । सुभगां भर्तृवल्लभां श्वशुरेषु च भक्तां कन्यकां कुर्युः । चन्द्रः शशी विधवां मृतभर्तृकां करोति । उशनाः शुक्रो दरिद्रां निर्धनां करोति । शशाङ्कतनयो बुधः । [1]आढ्यां सधनां कलहप्रियां च करोति ॥ ६ ॥

अथ सप्तमस्थितानां सर्वग्रहाणां फलान्याह ।

सौरारजीवबुधराहुरवीन्दुशुक्राः
कुर्युः प्रसह्य खलु सप्तमराशिसंस्थाः ।
वैधव्यबन्धनवधक्षयमर्थनाश-
व्याधिप्रवासमरणानि यथाक्रमेण ॥ ७ ॥

सौरादयः सप्तमस्थानस्था यथाक्रमं प्रसह्यात्यर्थं वैधव्यादीन् दोषान् कुर्वन्ति । तद्यथा । शनैश्चरः सप्तमे स्थितो वैधव्यं करोति । आरोऽङ्गारको बन्धनम् । जीवो बृहस्पतिर्वधं मरणम् । बुधः क्षयं विनाशं करोति । राहुरर्थनाशं वित्तक्षयम् । रविरादित्यो व्याधिम् । इन्दुश्चन्द्रः प्रवासं देशान्तरगमनम् । शुक्रो मरणम् । एवं सप्तमस्था यथाक्रमेण परिपाट्या कुर्युः । खलुशब्दोऽवागमद्योतनार्थः ॥ ७ ॥

अथाष्टमस्थितानां सर्वग्रहाणां फलान्याह ।

स्थानेऽष्टमे गुरुबुधौ नियतं वियोगं
मृत्युं शशी भृगुसुतश्च तथैव राहुः ।
सूर्यः करोत्यविधवां सरुजां महीजः
सूर्यात्मजो धनवतीं पतिवल्लभां च ॥ ८ ॥

गुरुर्जीवः । बुधश्च । एतौ लग्नादष्टमस्थानस्थितौ नियतं सर्वकालं निश्चितं वा वियोगं जायापत्योः कुरुतः । शशी चन्द्रो भृगुसुतः शुक्रश्च मृत्युं मरणं करोति । तथैव तेनैव प्रकारेण राहुर्मृत्युं करोति । सूर्य आदित्योऽविधवां जीवद्भर्तृकां करोति । महीजोऽङ्गारकः सरुजां पीडितदेहां

---

१ सुभगामिति पाठान्तरम् ।

करोति । केचित् सुभगां भर्तृवल्लभामिति पठन्ति । सूर्यात्मजः सौरिः । धनवतीं वित्तान्विताम् । पतिवल्लभां भर्तृप्रियां च करोति ॥ ८ ॥

अथ नवमस्थानस्थितानां सर्वग्रहाणां फलान्याह ।

धर्मे स्थिता भृगुदिवाकरभूमिपुत्त्रा
जीवश्च धर्मनिरतां शशिजस्त्वरोगाम् ।
राहुश्च सूर्यतनयश्च करोति बन्ध्यां
कन्याप्रसूतिमटनां कुरुते शशाङ्कः ॥ ९ ॥

भृगुः शुक्रः । दिवाकर आदित्यः । भूमिपुत्त्रोऽङ्गारकः । जीवो बृहस्पतिश्च । एते सर्वे एव धर्मे नवमस्थाने स्थिता धर्मनिरतां कन्यकां कुर्युः । शशिजो बुधः । अरोगां कल्याणीं करोति । राहुः सैंहिकेयः । सूर्यतनयः सौरिः । एतौ बन्ध्यामपुत्त्रां कुरुतः । शशाङ्कश्चन्द्रः कन्याप्रसूतिं कन्याजननशीलाम् । अटनां भ्रमणशीलां च करोति ॥ ९ ॥

अथ दशमस्थितानां सर्वग्रहाणां फलान्याह ।

राहुर्नभःस्थलगतो विधवां करोति
पापे रतां दिनकरश्च शनैश्चरश्च ।
मृत्युं कुजोऽर्थरहितां कुलटां च चन्द्रः
शेषा ग्रहा धनवतीं सुभगां च कुर्युः ॥ १० ॥

नभःस्थलं दशमस्थानम् । नभस्थलगतो राहुर्विधवां मृतभर्तृकां करोति । दिनकर आदित्यः पापे रतां पापकर्मणि सक्तां करोति । शनैश्चरः पापरतामेव । कुजोऽङ्गारको मृत्युं मरणं करोति । चन्द्रोऽर्थरहितां दरिद्रां कुलटां बन्धकीं च करोति । शेषा बुधबृहस्पतिशुक्रा धनवतीं वित्तान्वितां सुभगां भर्तृवल्लभां च कुर्युः ॥ १० ॥

अथैकादशस्थितानां सर्वग्रहाणां फलान्याह ।

आये रविर्बहुसुतां सधनां शशाङ्कः
पुत्त्रान्वितां क्षितिसुतो रविजो धनाढ्याम् ।
आयुष्मतीं सुरगुरुः शशिजः समृद्धां
राहुः करोत्यविधवां भृगुरर्थयुक्ताम् ॥ ११ ॥

आये एकादशस्थाने रविरादित्यो बहुसुतां प्रभूतपुत्रां कन्यकां करोति । शशाङ्कश्चन्द्रः सधनां वित्तान्विताम् । क्षितिसुतोऽङ्गारकः पुत्रान्वितां सुतसंयुक्ताम् । रविजः सौरो धनाढ्यामीश्वरीम् । सुरगुरुर्जीव आयुष्मतीं चिरजीविनीम् । शशिजो बुधः समृद्धां सधनाम् । राहुरविधवां जीवद्भर्तृकाम् । भृगुः शुक्रोऽर्थयुक्तां सधनां करोति ॥ ११ ॥

अथा द्वादशस्थितानां सर्वग्रहाणां फलान्याह ।

**अन्त्ये गुरुर्धनवतीं दिनकृद्दरिद्रां**
**चन्द्रो धनव्ययकरीं कुलटां च राहुः ।**
**साध्वीं भृगुः शशिसुतो बहुपुत्त्रपौत्त्रां**
**पानप्रसक्तहृदयां रविजः कुजश्च ॥ १२ ॥**

अन्त्ये द्वादशस्थाने गुरुर्जीवो धनवतीं सधनां कन्यकां करोति । दिनकृदादित्यो दरिद्रां निर्धनाम् । चन्द्रः शशी धनव्ययकरीमर्थक्षयकरीम् । राहुः कुलटां बन्धकीम् । भृगुः शुक्रः साध्वीं सच्छीलाम् । शशिसुतो बुधो बहुपुत्रपौत्रां प्रभूतसुतां प्रभूतपौत्राम् । रविजः शनैश्चरः पानप्रसक्तहृदयां पाने प्रसक्तमनुरतं हृदयं यस्याः । कुजोऽङ्गारकश्चशब्दात् पानप्रसक्तहृदयामेव ॥ १२ ॥

अथ गोधूलिप्रशंसार्थमाह ।

**गोपैर्यष्ट्याहतानां खुरपुटदलिता या तु धूलिर्दिनान्ते**
**सोद्वाहे सुन्दरीणां विपुलधनसुतारोग्यसौभाग्यकर्त्री ।**
**तस्मिन् काले न चर्क्षं नच तिथिकरणं नैव लग्नं न योगः**
**ख्यातः पुंसां सुखार्थं शमयति दुरितान्युत्थितं गोरजस्तु ॥१३॥**

अथ गोधूलिप्रशंसावशाद्गोपशब्दो व्यवह्रियते । गोपैर्गोपालकैर्यष्ट्या लगुडेनाहतानां ताडितानां गवां खुरपुटैः पादाग्रैर्या दलिता खण्डिता धूली रजो दिनान्ते सूर्यास्तमयकाले सा उद्वाहे विवाहे सुन्दरीणां विपुलं विस्तीर्णं धनं वित्तं सुतान् पुत्रानारोग्यमरोगत्वं सौभाग्यं भर्तृवाल्लभ्यं करोति । तस्मिन् सन्ध्यासमये न चर्क्षं नक्षत्रं नच तिथिर्नन्दादिका । न करणं बवादि । नच योग आनन्दादिक उपयुज्यते । सुखार्थं पुंसां पुरुषाणां स कालः ख्यातः

उक्तः। तत्स्थितमुहूर्तं गोरजो गोधूलिर्दुरितानि दुष्कृतानि शमयत्युपशान्तिं नयति तेन हेतुना न किञ्चित् तत्रोपयुज्यत इति ॥ १३ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ विन्ध्यवासिकृतं [1]विवाहपटलं नाम द्विशततमोऽध्यायः ॥ १०२ ॥

## अथ ग्रहगोचराध्यायो व्याख्यायते।

तत्राचार्यः शिष्यजनवत्सलतया लाघवेन छन्दसां लक्षणमन्तर्भूतं करोति। तेषां च प्रस्तारविधौ गुरुलघुसञ्ज्ञाविज्ञानेन विना न किञ्चिज्ज्ञायते। आचार्येण ग्रन्थविस्तरभयात् प्रसिद्धत्वाच्च लक्षणं नोक्तम्। तदस्माभिर्गुरुलघूनां लक्षणं प्रदर्श्यते।

तथा।

मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुश्च तथादिलघुर्यः।
जो गुरुमध्यगतो रलमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः॥

अत्र व्याख्या। मस्त्रिगुरुः। यत्र यत्र मकारग्रहणं भविष्यति तत्र तत्र त्रिगुरुः प्रस्तारः। नकारस्त्रिलघुः। भकार आदिगुरुः। आदौ गुरुरन्ते लघुद्वयम्। तथा यकार आदिलघुः। आदौ लघुरन्ते गुरुद्वयम्। जो जकारो गुरुमध्यगतः। मध्यगुरुराद्यन्तयोर्लघुद्वयम्। रलमध्यः। रेफो मध्यलघुराद्यन्तयोर्गुरुद्वयम्। सोऽन्तगुरुः। सकारः आदौ लघुद्वयमन्ते गुरुः। तकारोऽन्तलघुः। आदौ तस्य गुरुद्वयमन्ते लघुरिति।

न्यासः।

म ऽऽऽ, न ।।।, भ ऽ।।, य ।ऽऽ, ज ।ऽ।, र ऽ।ऽ, स ।।ऽ, त ऽऽ।

अथाप्यपरेयं परिभाषा। अ, इ, उ, ऋ, ऌ सामान्यव्यञ्जनानि कादीनि लघवस्ते सर्वत्र प्रस्तार्याः। आ ई ऊ ॠ ॡ ए ऐ ओ औ अं अः। एते गुरवः कुटिलाश्च प्रस्तार्याः। पादान्ते स्थितो लघुरपि गुरुतां याति।

वक्ष्यत्याचार्यः।

प्रकृत्यापि[2] लघुर्यश्च वृत्तबाह्ये व्यवस्थितः।

---

१ अयमध्यायो वराहमिहिरकृतो न। अतोऽत्राध्यायसङ्ख्या द्व्यधिकशततमतुल्या न समुचिता। सर्वपुस्तकेषूपलब्धत्वादस्माभिरुपन्यस्ता।

२ अस्यैवाध्यायस्य ५८ श्लोकः।

स याति गुरुतामिति ।

यस्य वर्णस्य संयोगाक्षरः परः स गुरुर्भवति । प्रस्तारे गुरुर्लघुर्वाङ्कुष्ठपर्वप्रमाणः कार्यः ॥

तत्रादावेव प्रयोजनप्रदर्शनार्थमाह ।

**प्रायेण सूत्रेण विनाकृतानि प्रकाशरन्ध्राणि चिरन्तनानि ।**
**रत्नानि शास्त्राणि च योजितानि नवैर्गुणैर्भूषयितुं क्षमाणि ॥१॥**

प्रायेण बाहुल्येन रत्नानि मणिविशेषाणि सूत्रेण विनाकृतानि वर्जितानि प्रकाशरन्ध्राणि प्रकटच्छिद्राणि चिरन्तनानि पुरातनानि च यानि तानि नवैर्गुणैरभिनवैः सूत्रैर्योजितानि प्रोतानि विभूषयितुमलङ्कर्तुं क्षमाणि योग्यानि भवन्ति । एवं शास्त्राणि सूत्रेण अक्षररचनावृत्तबन्धेन विनाकृतानि वर्जितानि प्रकाशरन्ध्राणि प्रकटदोषाणि चिरन्तनानि पुरातनानि चिरन्तनत्वात् जातापशब्दानि । अपशब्दत्वाच्च प्रकाशरन्ध्राणि तथाभूतानि च तानि नवैर्गुणैरभिनवैः सद्वस्तुभिर्दृढव्यवृत्तबन्धैर्योजितानि वचनस्थापितानि भूषयितुं क्षमाणि योग्यानि भवन्ति नान्यथेत्यर्थः ॥ १ ॥

अधुना गोचरस्य कारणं मुखचपलार्ययाह ।

**प्रायेण गोचरो व्यवहार्योऽतस्तत्फलानि वक्ष्यामि ।**
**नानावृत्तैरार्या मुखचपलत्वं क्षमध्वं नः ॥ २ ॥**

प्रायेण बाहुल्येन गोचरो ग्रहगोचरो व्यवहार्यो व्यवहरणाय शीलमस्य व्यवहार्यः । यः कश्चित् लोके ग्रहसंस्थां पृच्छति । अतोऽस्माद्धेतोस्तत्फलानि गोचरफलानि वक्ष्यामि कथयिष्यामि । नानावृत्तैर्विविधैर्वृत्तबन्धैः सम्पाद्य । आर्याः साधवः पण्डिता अस्माकं मुखचपलत्वं बहुभाषित्वं क्षमध्वं सहत—इत्यर्थः । आर्याणामग्रे मुखचपलत्वमयोग्यमतः क्षम्यतामिति । मुखचपलेयमार्या ॥ २ ॥

अस्या लक्षणं व्याख्यायते । तत्र चार्यालक्षणेन विना तस्या लक्षणमुपदेष्टुं न युज्यते तस्मादार्यालक्षणं तावद्व्याख्यायते ।

छन्दान्तरादिगुरुभिः सोदधिलैः सप्तभिर्गणैर्गुरुणा ।
आर्यार्धे नाथायुजि जः षष्ठोऽयं नलघुको वा ॥

आर्या मात्राभिः परिमीयन्ते । पथ्यादीनामार्याणां त्रिंशन्मात्राः पूर्वमर्धं भवति । अपरं सप्तविंशतिः । चतुर्भिर्लघुभिर्गणो भवति । द्वौ गुरू यस्य द्विगुरुः । अन्तेऽवसाने गुरुर्यस्यासावन्त्यगुरुः । अन्तरगुरुर्मध्यगुरुः । आदौ गुरुर्यस्यासावादिगुरुः । तैर्गणैः । कीदृशैः । सोदधिलैः । उदधिसमसङ्ख्याश्चत्वारो ला लघवो यस्य स उदधिलः सह उदधिसङ्ख्येन लेन गणेन वर्तन्ते इति सोदधिलाः । तैः सोदधिलैरुक्तविकल्पैः । चतुर्भिर्लघुभिरित्यर्थः । एवमेष पञ्चविकल्पो गणस्तन्न्यास उक्तः ऽऽ, ।।ऽ, ।ऽ।, ऽ।।, ।।।।, तैः सप्तभिर्गणैर्गुरुणा चाष्टमेनार्धगणेनार्याणां पथ्यादिकानां पूर्वमर्धं प्रथमदलं भवति । नास्यामार्यायामयुजि प्रथमतृतीयपञ्चमसप्तमगणस्थानेषु जो गणश्च भवति । षष्ठोऽयं तु जकारो भवति । अथ वा षष्ठो गणो नलघुको यो नलघू भजते जकाराभावात् ।

अन्यदप्याह ।

ले लात् पदं द्वितीयात् प्रथमात् परकेऽथ विषमयुजि चरमे ।
षष्ठो लोऽयेऽन्त्ये त्रिषु पादो भवति भवति तु पथ्या ।

ले सर्वलघौ षष्ठे गणे सति द्वितीयाल्लात् पदं कार्यम् । प्रथमात् परक इति । षष्ठात् परके सप्तमगणे सर्वलघौ प्रथमाल्लात् पदं कार्यम् । षष्ठस्थानान्ते यतिः कार्येत्यर्थः । अथ विषमयुजि चरमे । पश्चादर्धे विषमयुजि पञ्चमस्थानभाजि ले सति प्रथमाच्चरमारभ्य पदं विधेयम् । षष्ठो ल इति । पश्चिमेऽर्धे षष्ठो गण एकलघुरेव कार्यः । अयेऽन्त्ये च त्रिषु गणेषु यदि पादो यतिर्भवेत् तदा पथ्यानाम्न्यार्या भवतीत्यार्याद्वयस्यार्थः । श्रुन्तान्तरादिगुरुभिरित्यस्य न्यासः । ले लात् पदमित्यस्य पथ्याया न्यासश्च प्रविद्धः ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ।।।। | ।।।। | ऽऽ | ऽऽ | ऽऽ | ऽऽ | ।।ऽ | ।।ऽ |
| ऽऽ | ऽऽ | ऽऽ | ।।।। | ऽऽ | ऽऽ | ।ऽ। | ऽऽ |
| ।।ऽ | ।।ऽ | ऽ।। | ऽ।। | ऽऽ | ऽऽ | ऽऽ | ऽऽ |
| ।ऽ। | ऽऽ | ऽऽ | ।।ऽ | ।।ऽ | ।।।। | ।।।। | ।ऽ। |
| ऽऽ | ऽऽ | ऽऽ | ।।ऽ | ऽऽ | ऽऽ | ऽऽ | ऽऽ |
| ।ऽ। | ।।।। | ।।।। | ।।।। | ।ऽ। | ।।।। | ।।।। | ।ऽ। |
| ।।ऽ | ऽ।। | ।।ऽ | ।।।। | ।।ऽ | ऽ।। | ऽऽ | ऽऽ |
| ऽ | ऽ | ऽ | ऽ | ऽ | ऽ | ऽ | ऽ |

एवमादयः ।

अथ विपुलाचपलयोर्लक्षणम् ।

विपुला तु याऽन्यथा पादभाक् जकारौ द्वितीयकचतुर्थौ ।
गुरुमध्यगौ भवेतां भवेत् तदा सर्वतश्चपला ॥

पथ्यातो याऽन्यथा पादं भजते । त्रिषु गणेषु यस्या यतिर्नास्तीत्यर्थः । सा विपुला । यत्र तु जकारौ मध्यगुरुगणौ द्वितीयकचतुर्थौ द्वितीयस्थाने चतुर्थे च स्थितौ तौ च गुरुमध्यगौ गुर्वोर्मध्यगौ भवेतां स्याताम् । सर्वतोऽर्धद्वयेऽपि तदा चपला भवति ।

न्यासः । ज ज
।।ऽ, ।ऽ।, ऽऽ, ।ऽ।, ऽऽ, ।ऽ।, ऽऽ, ऽ
ज ज
ऽऽ, ।ऽ।, ऽऽ, ।ऽ।, ऽऽ, ।, ऽऽ, ऽ ।

अथ मुखचपलाया लक्षणम् ।

अर्धे यदग्रिमे लक्षणं भवेत् केवले तु चपलायाः ।
मुखचपलाऽसौ गदिता शेषे पूर्वोक्तलक्षणिका ॥

चपलाया अग्रिमे प्रथमेऽर्धे केवले च एकस्मिन्नेव लक्षणमुक्तं जकारौ द्वितीयकचतुर्थकौ गुरुमध्यगौ भवेतामित्यर्थः । तथाभूतं प्रथमे यदि भवेत् स्यात् । शेषे पश्चिमे त्वर्धे पूर्वोक्तलक्षणिका पूर्वोक्तं सामान्यार्यालक्षणं भवति । तदाऽसावार्या मुखचपला गदितोक्ता । न्यासः प्रसिद्धः । एवमियं मुखचपलार्येति ।

अथात्मनो नम्रतां प्रदर्शयंस्तद्द्वारेण च जघनचपलार्यामाह ।

**माण्डव्यगिरं श्रुत्वा न मदीया रोचतेऽथवा नैवम् ।**
**साध्वी तथा न पुंसां प्रिया यथा स्याज्जघनचपला ॥ ३ ॥**

माण्डव्यस्य संबन्धिनीं गिरं वाचं श्रुत्वाकर्ण्य मदीया वाक् न रोचते न प्रतिभाति विदुषाम् ।

तथा च माण्डव्यः ।

सर्वेऽप्याकाशवासाः स्फटिकविमलताशङ्खकार्पासभासाः
ते मार्गं वर्द्धयन्तो नरपतितिलकं तं समुत्पादयन्ति ।
यत्सेनोत्तालवाजिव्रजखुरजरजोव्याप्तमालोक्य विम्बं
मुञ्चन्ते प्रेयसीभिर्दुरनुभवनिशाशङ्कया चक्रवाकाः ॥

कोऽप्यैरन्यश्च मुक्ताविचकिलधवलो रोहिणीप्राणनाथः
सर्वः संवीक्ष्यमाणः खबलयनिलयैस्तं समुत्पादयेद्वि ।
नीतं यस्य प्रगाढैर्घनमलिनमपि श्वेतिमानं यशोभि-
र्विभ्राणा शम्भुशङ्कां मधुमथनमहो मन्दमालिङ्गति श्रीः—इति ॥

अत्र नैव मदीयेयं वाग्रोचते । पुंसां पुरुषाणां साध्वी सच्छीला स्वस्त्री प्रिया प्रियालापा न भवति । यथा जघनचपला असाध्वी वेश्या प्रिया । अनेनाभिप्रायेण मदीया नीरसापि रोचत एव । इयमार्या जघनचपला ॥ ३ ॥

तल्लक्षणम् ।

पूर्वार्धं पूर्वसमं चपलाया लक्षणं निरवशेषम् ।
पाश्चात्यमर्धमाश्रित्य वर्तते जघनचपलौ सा ॥

अत्र व्याख्या । यत्र पूर्वार्धे पूर्वसमं सामान्यार्यार्धतुल्यं ह्यन्तान्तः-द्विगुरुभिरित्यादिलक्षणोपेतं प्रथमदलं पाश्चात्यं पुनर्द्वितीयमर्धं चपलायाः संबन्धि लक्षणं निरवशेषं सकलमाश्रित्य सङ्गृह्य वर्तते तिष्ठति । जकारौ द्वौ द्वितीयकचतुर्थौ गुरुमध्यगौ भवेतामिति । जघनचपला सा । सा जघनचपलार्या । न्यायः प्रसिद्धः ।

अधुना शार्दूलविक्रीडितेन सर्वग्रहाणां गोचरफलं सङ्क्षेपेण दर्शयन्नाह ।

**सूर्यः षट्त्रिदशस्थितस्त्रिदशषट्सप्ताद्यगश्चन्द्रमा**
**जीवः सप्तनवद्विपञ्चमगतो वक्रार्कजौ षट्त्रिगौ ।**
**सौम्यः षड्द्विचतुर्दशाष्टमगतः सर्वेऽप्युपान्ते शुभाः**
**शुक्रः सप्तमषड्दशर्क्षसहितः शार्दूलवत् त्रासकृत् ॥ ४ ॥**

सूर्य आदित्यः । षट्त्रिदशस्थितः । यस्य जन्मराशेः षष्ठतृतीयदशमस्थो गोचरेण शुभः । अर्थादेव परिशेषस्थानेष्वशुभः । त्रिदशषट्सप्ताद्यगश्चन्द्रमाः । चन्द्रमास्तृतीयस्थाने दशमे षष्ठे सप्तमे आद्ये जन्मनि च गतः स्थितः शुभः । शेषेष्वशोभनः । जीवः सप्तनवद्विपञ्चमगतः । जीवो बृहस्पतिः सप्तमे स्थाने नवमे द्वितीये पञ्चमे च गतः प्राप्तः शुभः । शेषेष्वशुभः । वक्रार्कजौ षट्त्रिगौ । वक्रोऽङ्गारकः । अर्कजः शनैश्चरः । तौ षट्त्रिगौ षष्ठतृतीयस्थानप्राप्तौ शुभौ । अन्यस्थानेष्वशुभाविति । सौम्यः षड्द्विचतुर्द-

ष्टाष्टमगतः । सौम्यो बुधः । षष्ठद्वितीयचतुर्थदशमाष्टमस्थानगतः शुभः ।
शेषेष्वशुभः । सर्वेऽप्युपान्ते शुभाः । अन्त्यस्य द्वादशस्य समीपमुपान्त्यमेकादशस्थानम् । तथाप्युपान्ते सर्व एव सूर्यादयः शुभाः । शुक्रः सप्तमषड्दशसंवर्जित इति । शुक्रः सप्तमे स्थाने षष्ठे दशमे च दशमे राशौ सहितः स्थितः । शार्दूलवत् सिंहवत् । भयकृद्भयं करोति । यथा सिंहो दर्शनादेव भयं जनयति । तद्वदेतेषु स्थानेषु स्थितः शुक्रः । अर्थादेवान्यस्थानेषु स्थितः शुक्रः शुभ इति । शार्दूलविक्रीडितं वृत्तमेतत् ॥ ४ ॥

तल्लक्षणम् ।

म्सौ ज्सौ तौ गुरुकं च सूर्यतुरगैः शार्दूलविक्रीडितम् ।

अथ मस्त्रिगुरुः । सोऽन्तगुरुः । जो गुरुमध्यगतः । सः पुनरन्तगुरुः । अन्तलघुस्तः । द्वौ तकारौ । अन्ते गुरुश्च । सूर्या द्वादश । तुरगा अश्वाः सप्त । अस्य सूर्यतुरगैर्द्वादशभिः सप्तभिश्च यतिर्भवति ।

न्यासः ।

| म | स | ज | स | त | त | गु. |
|---|---|---|---|---|---|---|
| ऽऽऽ | ।।ऽ | ।ऽ। | ।।ऽ, | ऽऽ। | ऽऽ। | ऽ |

इदानीमाचार्यः पृथक्पृथग्विस्तरेण गोचरफलं चिकीर्षुस्तत्रादावेवार्कस्य जन्मद्वितीयतृतीयचतुर्थस्थानेषु गोचरफलं स्रग्धरावृत्तेनाह ।

**जन्मन्यायासदोऽर्कः क्षपयति विभवान् कोष्ठरोगाध्वदाता**
**वित्तभ्रंशं द्वितीये दिशति च न सुखं वञ्चनां दृग्रुजं च ।**
**स्थानप्राप्तिं तृतीये धननिचयमुदा कल्यकृच्चारिहन्ता**
**रोगान् दत्ते चतुर्थे जनयति च मुहुः स्रग्धराभोगविघ्नम् ॥५॥**

अर्क आदित्यो जन्मनि जन्मराशौ आयासमुपद्रवं ददाति । विभवानैश्वर्यान् क्षपयति नाशयति । कोष्ठरोगाध्वदाता । कोष्ठरोगं हृदयरोगमुदरामयम ध्वानं च ददाति । वित्तभ्रंशं द्वितीय इति । द्वितीयस्थाने वित्तभ्रंशं धननाशं दिशति ददाति । न सुखं सुखं च न ददाति । केचिन्मनसि च न सुखं पठन्ति । वञ्चनामुपशमनं सर्वकार्याणाम् । दृग्रुजं नेत्रपीडां च दिशति । स्थानप्राप्तिं तृतीय इति । तृतीये स्थानप्राप्तिं स्थानलाभं तथा धननिचयमुदा कल्य

१ मनसि च न सुखम्-इति पाठान्तरम् ।

कृत् । धनस्य वित्तस्य निचयः समूहः । तेन या मुहुर्वस्तया कल्यमरोगित्वं करोति । अरिहन्ता शत्रुघाती च भवति । रोगान् दत्ते चतुर्थ इति । चतुर्थ-स्थाने रोगान् गदान् दत्ते ददाति । मुहुः क्षणं क्षणं स्रग्धराभोगविघ्नं जनयति उत्पादयति । स्रजं मालां धारयतीति स्रग्धरा स्त्री तस्या भोगे उपभोगे पीडितत्वाद्विघ्नं जनयति । स्रग्धरावृत्तमेतत् ॥ ५ ॥

तल्लक्षणम् ।

म्रौ भ्नौ याश्च त्रयः स्युः स्वरमुनितुरगैः स्रग्धरा स्याद्विरामैः ।

अत्र मस्त्रिगुरुः । रो लमध्यः । भ आदिगुरुः । नः सर्वलघुः । य आदि-लघुः । ते च त्रयो यकाः । स्वराः सप्त, सप्त मुनयस्तुरगाश्च सप्त एतैर्विरा-मैर्यतिभिः स्रग्धरा स्याद्भवेत् ।

न्यासः ।

| म | र | भ | न | य | य | य |
|---|---|---|---|---|---|---|
| ऽऽऽ | ऽ।ऽ | ऽ।। | ।।। | ।ऽऽ | ।ऽऽ | ।ऽऽ |

अथ पञ्चमषष्ठसप्तमाष्टमेषु फलं सुवदनावृत्तेनाह ।

**पीडाः स्युः पञ्चमस्थे सवितरि बहुशो रोगारिजनिताः**
**षष्ठेऽर्को हन्ति रोगान् क्षपयति च रिपून् शोकांश्च नुदति ।**
**अध्वानं सप्तमस्थो जठरगदभयं दैन्यं च कुरुते**
**रुक्त्रासौ चाष्टमस्थे भवति सुवदना न स्वापि वनिता ॥ ६ ॥**

पीडाः स्युरिति । पञ्चमस्थे पञ्चमस्थानस्थिते सवितर्यादित्ये बहुशो बहुप्रकारा रोगारिजनिता रोगजनिताः शत्रुजनिताश्च शत्रुभिरुत्पादिताः पीडा व्यथाः स्युर्भवेयुः । षष्ठेऽर्क इति । षष्ठे स्थानेऽर्कः सूर्यो रोगान् हन्ति नाशयति । रिपून् शत्रूंश्च क्षपयति विनाशयति । शोकान् चित्तसन्तापांश्च नुदति प्रेरयति नाशयतीत्यर्थः । अध्वानं सप्तमस्थ इति सप्तमस्थोऽर्कोऽध्वानं कुरुते । तथा च जठरगदभयम् । जठरमुदरम् । गदो रोगः । जठररोगभयम् । दैन्यं दीनतां च कुरुते । रुक्त्रासौ चाष्टमस्थ इति । अष्टमस्थेऽर्के रुक्त्रासौ रोगभये भवतः । स्वापि वनिता आत्मीयापि स्त्री सुवदना शोभनमुखी सस्नेहा न भवति । वृत्तमिदं सुवदना ॥ ६ ॥

तल्लक्षणम् ।

म्रो भ्नौ य्भौ ल्गौ मुनिव्योमगरसविरतिः ख्याता सुवदना ।

अत्र मस्त्रिगुरुः । रो लमध्यः । भ आदिगुरुः । नस्त्रिलघुः । यकार आदिलघुः । भ आदिगुरुः । अन्ते लघुगुरू । मुनयः सप्त । व्योमगाः सप्त । रसाः षट् । एतैर्विरतिर्विरामो यतिर्यस्याः सा सुवदना कथिता इति ।

न्यासः । म र भ न य भ ल गु ।
ऽऽऽ ऽ।ऽ ऽ।। ।।। ।ऽऽ ऽ।। । ऽ

अथ नवमेकादशद्वादशस्थानस्थेऽर्के फलं सुवृत्तयाह ।

**रवावापद्दैन्यं रुगिति नवमे वित्तचेष्टाविरोधो**
**जयं प्राप्नोत्युग्रं दशमगृहगे कर्मसिद्धिं क्रमेण ।**
**जयस्थानं मानं विभवमपि चैकादशे रोगनाशं**
**सुवृत्तानां चेष्टा भवति सफला द्वादशे नेतरेषाम् ॥ ७ ॥**

रवावापद्दैन्यमिति । रवावादित्ये नवमे नवमस्थानस्थे आपदा निर्दैन्यं दीनता । रुग्रोगः । वित्तस्य धनस्य चेष्टया क्रियया विरोधो विघ्नो भवति । इतिशब्दः प्रकाराय । जयं प्राप्नोत्युग्रमिति । दशमगृहगे दशमस्थानस्थेऽर्के जयं विजयमुग्रं कठिनं प्राप्नोति लभते । क्रमेण परिपाट्या कर्मसिद्धिं कार्याणां निष्पत्तिम् । जयस्थानमिति । एकादशे जयं विजयं स्थानं स्थानलाभं मानं पूजां विभवमैश्वर्यं रोगनाशं गदोपशमनं च प्राप्नोति । सुवृत्तानामिति । द्वादशे सूर्ये सुवृत्तानां शोभनं वृत्तं शीलं येषां तेषां चेष्टा क्रिया सफला फलसंयुक्ता भवति ।

तथा चोक्तम् ।

मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम् ।
जपतां जुह्वतां चैव विनिपातो विनश्यते -इति ॥

नेतरेषाम् दुर्वृत्तानां चेष्टा सफला न भवति । वृत्तमिदं सुवृत्ता ॥ ७ ॥

तल्लक्षणम् ।

यमो न्सो रौ गश्चेद्द्विरसमुनिभिः स्याद्विरामैः सुवृत्ता ।

य आदिलघुः । मस्त्रिगुरुः । नस्त्रिलघुः । सोऽन्तगुरुः । रलमध्यः । द्वौ रेफौ । गोऽन्ते गुरुः । द्वे यती रसैः षड्भिर्भवतः ।

तृतीया मुनिभिः सप्तभिः । एतैर्विरामैः सुवृता स्याद्भवेत् । अन्येषां मेघविस्फूर्जिता ।

न्यासः । य म न स र र गु । ।SS SSS, ।।। ।।S, S।S S।S S

तथा च यवनेश्वरः ।

हृद्रोगशोकाध्वविवादहदैन्यक्रोधक्षयव्याधिभयार्तिदोषान् ।
स्थाने शशाङ्कस्य रविः करोति व्यर्थश्रमोद्वेगमपि द्वितीये ॥
तृतीयसंस्थो धनमानधर्मस्थानासनप्रीतिसुखप्रदोऽर्कः ।
चतुर्थगस्तु क्षतजप्रवृत्तिज्वरामयोद्वेगविषादकारी ॥
नृपावमर्दात्मजबन्धुशोकव्याधिप्रदः पञ्चमसंस्थितोऽर्कः ।
आरोग्यसौख्यारिविनाशहर्षख्यातिक्रियासिद्धिकरश्च षष्ठः ॥
जामित्रसंस्थो रुधिरप्रवृत्तिज्वरक्लमाजीर्णविषाध्वकारी ।
सूर्योऽष्टमे स्त्रीसुतबन्धुदुःखव्याधिप्रदोपद्रवमृत्युकृत् स्यात् ॥
दैन्यस्थितिभ्रंशगुरुस्वबन्धुप्रद्वेषकृत् स्यान्नवमाश्रितोऽर्कः ।
मेषूरणस्थो द्विचतुष्पदस्त्रीहिरण्यरौप्याम्बरलाभकर्ता ॥
एकादशे स्थानयशःप्रहर्षमिष्टाशनारोग्यसुखप्रदोऽर्कः ।
स्थाने निहन्तुं शशिनो विधिज्ञैः क्रियाफलाघातकृदन्त्यराशौ—इति ॥

अथ चन्द्रमसो जन्मद्वितीयचतुर्थस्थस्य फलं शिखरिण्याऽऽह ।

**शशी जन्मन्यन्नप्रवरशयनाच्छादनकरो**
**द्वितीये मानार्थान् ग्लपयति सविघ्नश्च भवति ।**
**तृतीये वस्त्रस्त्रीधनविजयसौख्यानि लभते**
**चतुर्थेऽविश्वासः शिखरिणि भुजङ्गेन सदृशः ॥ ८ ॥**

शशी जन्मनीति । शशी चन्द्रः । जन्मनि जन्मराशौ स्थितः । अन्नप्रवराणि प्रधानानि शयनानि आस्तरणानि आच्छादनानि वस्त्राणि करोति । द्वितीय इति । द्वितीये स्थाने मानं पूजा । अर्था धनादयः । तान् ग्लपयति नाशयति । सविघ्नो विघ्नयुक्तश्च भवति । तृतीय इति । तृतीये स्थाने वस्त्राण्यम्बराणि स्त्री योषित् धनं वित्तं विजयो विशेषेण जयः सौख्यं सुखभावः । तानि च लभते प्राप्नोति । चतुर्थे चन्द्रे अविश्वासः विश्वासो

न भवति । अपि तु सर्वस्माटाशङ्का जायते । कीदृशोऽविश्वासः । शिखरिणि भुजङ्गेन सदृशः । शिखरिणि पर्वते भुजङ्गेन सर्पेण हेतुना यथाविश्वासो जनानाम् । यस्मिन् पर्वतस्थाने सर्पो भवति तत्र न कस्य विश्वासो भवतीति । शिखरिणीवृत्तमेतत् ॥ ८ ॥

तल्लक्षणम् ।

यमौ न्सौ भो लगन्ता रसहरविरामा शिखरिणी ।

य आदिलघुः । मस्त्रिगुरुः । नस्त्रिलघुः । सोऽन्तगुरुः । भ आदिगुरुः । लघुगुरू अन्ते । रसाः षट् । हरा रुद्रा एकादश । एतैर्विरामो यस्याः सा शिखरिणी ।

न्यासः । य म न स भ ल गु ।
ISS SSS, III IIS SII I S

अधुना पञ्चमषष्ठसप्तमाष्टमस्थस्य चन्द्रमसः फलं मन्दाक्रान्तयाह ।

**दैन्यं व्याधिं शुचमपि शशी पञ्चमे मार्गविघ्नं**
**षष्ठे वित्तं जनयति सुखं शत्रुरोगक्षयं च ।**
**यानं मानं शयनमशनं सप्तमे वित्तलाभं**
**मन्दाक्रान्ते फणिनि हिमगौ चाष्टमे भीर्न कस्य ॥ ९ ॥**

दैन्यं व्याधिमिति । शशी चन्द्रः पञ्चमे स्थाने स्थितो दैन्यं दीनतां व्याधिं पीडां शुचं शोकम् । अपि तथा मार्गे पथि विघ्नमसिद्धिं जनयत्युत्पादयति । षष्ठ इति । षष्ठे स्थाने वित्तं धनं सुखं च जनयति । तथा शत्रूणामरीणां रोगाणां गदानां च क्षयं विनाशं जनयति । यानं मानमिति । सप्तमे यानं वाहनं मानं पूजां शयनं शय्यांऽशनं भोजनं वित्तलाभं धनप्राप्तिं च जनयति । मन्दाक्रान्त इति । अष्टमे हिमगौ चन्द्रे फणिनि सर्पे मन्दाक्रान्ते । मन्दमप्रयत्नं कृत्वाक्रान्तो गृहीतो यः सर्पः स कस्य भीर्भयं न करोत्यपि तु सर्वस्यैव । अष्टमे चन्द्रे मन्दाक्रान्ते च फणिनि भयं भवतीत्यर्थः । वृत्तमिदं मन्दाक्रान्ता ॥ ९ ॥

तल्लक्षणम् ।

मन्दाक्रान्ता भभनततगा गः समुद्रर्तुलोकैः ।

मस्त्रिगुरुः । भ आदिगुरुः । नः सर्वलघुः । तोऽन्तलघुः । द्वौ यत्र

तकारौ। अन्ते गुरुद्वयम्। समुद्राश्चत्वारः। ऋतवः षट्। लो[1]का भूर्लोकादयः सप्त। एतैर्विरामैर्मन्दाक्रान्ता।

म भ न त त गु

न्यासः। SSS S,II III, S,S, SSI SS।

नवमदशमद्वादशस्थचन्द्रमसः फलं वृषभचरितेनाह।

**नवमगृहगो बन्धोद्वेगश्रमोदररोगकृद्-**
**दशमभवने चाज्ञाकर्मप्रसिद्धिकरः शशी।**
**उपचयसुहृत्संयोगार्थप्रमोदमुपान्त्यगो**
**वृषभचरितान् दोषानन्त्ये करोति च सव्ययान्॥ १०॥**

नवमगृहग इति। शशी चन्द्रो नवमगृहगः। जन्मराशेर्नवमस्थानप्राप्तो बन्धो बन्धनम्। चलवृत्तिरुद्वेगः। श्रमः खेदः। उदररोगान् जठररोगांश्च करोति। दशमभवन इति। दशमभवने दशमगृहे चन्द्रः। आज्ञां प्रभुत्वं कर्मणां च प्रसिद्धिं साधनं करोति। उपचयसुहृदिति। उपान्त्यग एकादशस्थः। उपचयोऽर्थानाम्। सुहृत्संयोगो मित्रसमागमः। अर्थानां धनानां प्रमोदो हर्षम्। एतान् करोति। वृषभचरितान् इति। अन्त्ये द्वादशे स्थाने वृषभचरितान् दोषान्। वृषभस्य बलीवर्दस्येव चरितं स्वरूपं येषां दोषाणां दुःखानाम्। स्वखुरेण भूमिताडनात् स्वचरणाहननम्। भूमेर्मृद्विदारणात् स्वविषाणोपघात इत्यादिकम्। अथवा वृषभेण चरितानुत्पादितान् दोषान्. शृङ्गाणां हननेन खुराभिघातेन चोपतापान्। तांश्च सव्ययान् व्ययेनार्थक्षत्या युक्तान् करोति। वृषभचरितं वृत्तम्॥ १०॥

एतल्लक्षणम्।

वृषभचरितं न्सौ म्रौ स्लौ गो रसोदधिसप्तकैः।

नस्त्रिलघुः। सोऽन्तगुरुः। मस्त्रिगुरुः। रलमध्यः। सोऽन्तगुरुः। लघुगुरू अन्ते। रसाः षट्। उदधयश्चत्वारः। सप्त प्रसिद्धाः। एतैर्विरामैर्वृषभचरितम्। अन्येषां हरिणी।

न स म र स ल गु

न्यासः। III IIS, SSS S,IS IIS I S।

---

[1] सम्प्रति ज्योतिषे लोकशब्देन त्रयो गृह्यन्ते।

तथा च यवनेश्वरः ।

स्वस्थानगो भोजनगन्धमाल्यनारीसुहृद्वस्त्ररतिप्रदः स्यात् ।
चन्द्रो द्वितीयर्क्षगतस्तु तस्माद्बहुव्ययायासविवादकारी ॥
तृतीयगो वस्त्रहिरण्ययोषित्सुहृद्यशोभोजनदो हिमांशुः ।
स्वबन्धुपीडाधननाशजानि कुर्वीत दुःखानि चतुर्थसंस्थः ॥
धनक्षयाजीर्णरुगध्वदैन्यविक्षोभकृत् पञ्चमगः शशाङ्कः ।
शत्रुक्षयारोग्यसुखार्थसिद्धिं स्निग्धागमप्रीतिकरश्च षष्ठः ॥
जामित्रगः स्त्रीजनबन्धुशय्याहिरण्यभोज्याम्बरदः शशाङ्कः ।
क्षुद्व्याधिचिन्ताकलहार्थनाशो मृत्युक्षयोपद्रवदोऽष्टमस्थः ॥
धनक्षयारिव्ययमानभङ्गरोगादिकारी नवमः शशाङ्कः ।
मेषूरणस्थो बहुमानहर्षचेष्टाफलोदार्यविरोधकारी ॥
एकादशः स्निग्धविवाहशय्यास्त्रीभोजनप्राप्तिसुखार्थकारी ।
निशाकरो द्वादशगस्तु दैन्यमालस्यमीर्ष्यापचयं च कुर्यात् ॥

अथ भौमस्य जन्मद्वितीयगतस्य फलमुपेन्द्रवज्रयाऽऽह ।

**कुजेऽभिघातः प्रथमे द्वितीये नरेन्द्रपीडाकलहारिदोषैः ।**
**भृशं च पित्तानलचौररोगैरुपेन्द्रवज्रप्रतिमोऽपि यः स्यात् ॥ ११ ॥**

कुजे भौमे जन्मराशिगते अभिघात उपद्रवो भवति । द्वितीये कुजे । नरेन्द्रपीडा राजपीडा । कलहारिदोषः । कलहदोषः । शत्रुदोषः । एतैः । तथा पित्तेन धातुदोषेण । अनलेनाग्निना । चौरैस्तस्करैः । रोगैर्गदैश्च । भृशमत्यर्थम् । उपघातः । अपिशब्दः सम्भावनायाम् । उपेन्द्रवज्रप्रतिमोऽपि । उपेन्द्रो नारायणः । तत्प्रतिमस्तत्सदृशः । वज्रं कुलिशम् । तत्प्रतिमोऽपि यदि स्याद्भवेत् तथाप्युपघातो भवतीति । वृत्तमिदमुपेन्द्रवज्रा ॥ ११ ॥

तल्लक्षणम् ।

उपेन्द्रवज्रा तु जतौ जगौ गः ।

जो गुरुमध्यगतः । तोऽन्तलघुः । पुनरपि जकारः । अन्ते गुरुद्वयम् ।

न्यासः । ज त ज गु ।
।ऽ। ऽऽ। ।ऽ। ऽऽ

अथ तृतीयस्थभौमस्य फलमुपजात्याऽऽह ।

**तृतीयगश्चौरकुमारकेभ्यो**
**भौमः सकाशात् फलमादधाति ।**
**प्रदीप्तिमाज्ञां धनमौर्णिकानि**
**धात्वाकराख्यानि किलापराणि ॥ १२ ॥**

तृतीयगो भौमः । चौरेभ्यस्तस्करेभ्यः । कुमारकेभ्योऽप्रवयोभ्यः । सकाशाद्धेतोः । फलमादधाति करोति । प्रदीप्तिं कान्तिम् । आज्ञामादेशं प्रभुत्वम् । धनं वित्तम् । और्णिकानि कम्बलादयः । धात्वाकराख्यानि । धातवः सुवर्णादीनि । तेषामाकर उत्पत्तिस्थानम् । धात्वाकर इत्याख्या येषां तानि । अपराण्यन्यानि । आदधाति । किलशब्द आगमार्थः । अपराण्यन्यानि वृत्तानि । उपजातिकाख्येत्यर्थः । यतः सा समिश्रा उपेन्द्रवज्रेन्द्रवज्रपादैर्मिश्रैर्भवति ॥ १२ ॥

तल्लक्षणम् ।

अनन्तरापादितलक्ष्मशोभौ पादौ भवेतां त्रिविधौर्विकल्पैः ।
यासामिमौ श्रव्ययतिप्रपञ्चौ स्मृताः स्मृतीशैरुपजातयस्ताः ॥

यासां पादावनन्तरापादितलक्ष्मशोभौ । अनन्तरमापादितमुक्तं यत् लक्ष्म लक्षणम् । तौ[१] जो गुरू चेदुदितीन्द्रवज्रा । उपेन्द्रवज्रा तु जतौ जगौ गः । अनयोर्यल्लक्षणमापादितमुक्तम् । तेन लक्षणद्वयेन शोभा चारुता ययोः पादयोस्तौ तथाभूतौ पादौ भवेतां स्याताम् । इमौ च पादौ श्रव्ययतिप्रपञ्चौ । श्रव्यः कर्णसुखजनको यतिप्रपञ्चो यतिविस्तारो ययोस्तौ तथाभूतौ । तत् स्मृतीशैः पण्डितैः । स्मरणं स्मृतिः । तस्या ईशाः स्वामिनः । तैः । ता उपजातय इति स्मृता उक्ताः ।

न्यासः ।

| ज | त | ज | गु |
|---|---|---|---|
| ।ऽ। | ऽऽ। | ।ऽ। | ऽऽ |
| त | त | ज | गु |
| ऽऽ। | ऽऽ। | ।ऽ। | ऽऽ । |

१ द्रष्टव्याऽस्यैवाध्यायस्य ३४ श्लोकटीका ।

अथ चतुर्थस्थस्य भौमस्य फलं प्रसभेनाह ।

**भवति धरणिजे चतुर्थगे ज्वरजठरगदासृगुद्भवः ।**
**कुपुरुषजनिताच्च सङ्गमात् प्रसभमपि करोति चाशुभम् ॥१३॥**

धरणिजे भौमे चतुर्थगे । ज्वरो रोगविशेषः । जठरगद उदररोगः । असृग्रक्तम् । एषामुद्भव उत्पत्तिर्भवति । तथा कुपुरुषः कुत्सितः पुरुषः । तज्जनितात् तदुत्पन्नात् सङ्गमात् संयोगात् प्रसभं प्रसह्य बलात्कारादेवाशुभमभद्रं करोति । वृत्तमेतत् प्रसभम् ॥ १३ ॥

तल्लक्षणम् ।

प्रसभमपि ननौ रलौ गुरुः ।

नस्त्रिलघुः । द्वौ नकारौ । रलमध्यः । लघुगुरू अन्ते ।

न्यासः । न न र ल गु । ।।। ।।। ऽ।ऽ । ऽ ।

अथ पञ्चमस्थस्य भौमस्य फलं मालत्याऽऽह ।

**रिपुगदकोपभयानि पञ्चमे**
**तनयकृताश्च शुचो महीसुते ।**
**द्युतिरपि नास्य चिरं भवेत् स्थिरा**
**शिरसि कपेरिव मालती यथा ॥ १४ ॥**

महीसुते भौमे पञ्चमस्थे । रिपुः शत्रुः । गदो रोगः । कोपः क्रोधः । भयं भीतिः । एतानि भवन्ति । तनयकृताः पुत्रकृताश्च शुचः शोका भवन्ति । अस्य जन्तोर्द्युतिरपि शरीरकान्तिरपि स्थिरा स्थायिनी चिरं बहुकालं च न भवति । यथा कपेर्वानरस्य शिरसि मूर्धनि । मालती पुष्पविशेषः । स्थिरा न भवति । चापल्यात् । वृत्तमिदं मालती ॥ १४ ॥

अस्या लक्षणम् ।

[1]नजजरकैरपि मालती मता ।

नस्त्रिलघुः । जो गुरुमध्यः । द्वौ जकारौ । रलमध्यः । एतैर्मालती मताऽभिमता ।

---

१ छन्दोमञ्जर्यां तु "भवति नजावथ मालती जरौ" ।

न्यासः । न स स र ।
।।। ।ऽ। ।ऽ। ऽ।ऽ

अथ षष्ठस्थस्याङ्गारकस्य फलमपरवक्त्रेणाह ।

**रिपुभयकलहैर्विवर्जितः सकनकविद्रुमताम्रकामगः ।**
**रिपुभवनगते महीसुते किमपरवक्त्रविकारमीक्षते ॥ १५ ॥**

महीसुते भौमे रिपुभवनगते षष्ठस्थानस्थे । रिपुः शत्रुः । भयं भीतिः । कलहो विरोधः । एतैर्विवर्जितो रहितः । सकनकस्य कनकेन सुवर्णेन सहितस्य विद्रुमस्य प्रवालस्य ताम्रस्य शुल्बस्य आगमो लाभो भवति । एवंविधे सति नरोऽपरस्यान्यस्य वक्त्रविकारं मुखविकृतिं किमीक्षते किमिति पश्यति । अपि तु न पश्यतीत्यर्थः । अत्याढ्यत्वात् । वृत्तमिदमपरवक्त्रम् ॥ १५ ॥

तल्लक्षणम् ।

ननर[1]लगयुतौ नजौ जरौ भवति सदा परवक्त्रमीदृशम् ॥

नस्त्रिलघुः । द्वौ नकारौ । रलमध्यः । लघुगुरू । एतैर्युतौ । नजौ जरौ । नकारस्त्रिलघुः । जो गुरुमध्यः । द्वौ जकारौ । रलमध्यः । एवंविधं सदा सर्वकालमपरवक्त्रं भवति ।

न्यासः । न न र ल गु
।।। ।।। ऽ।ऽ । ऽ
न. ज ज र ।
।।। ।ऽ। ।ऽ। ऽ।ऽ

अथ सप्तमाष्टमनवमस्थस्य भौमस्य फलं विलम्बितगतिनाह ।

**कलत्रकलहाक्षिरुग्जठररोगकृत् सप्तमे**
**शरक्षतजदूषितः क्षपितवित्तमानोऽष्टमे ।**
**कुजे नवमसंस्थिते परिभवार्थनाशादिभि-**
**र्विलम्बितगतिर्भवत्यबलदेहधातुक्रमैः ॥ १६ ॥**

कलत्रकलहाक्षिरुगिति । कुजे भौमे सप्तमे । कलत्रं भार्या तेन सह कलहो विरोधः । अक्षिरुक् चक्षुर्पीडा । जठररोग उदररोगः । एतान् करोति ।

---

१ छन्दोमञ्जर्यां तु "अयुजि न-न-र ला गुरुः समे । तदपरवक्त्रमिदं नजौ जरौ" ।

क्षरत्क्षतजरूषित इति । अष्टमे अष्टमस्थे भौमे । क्षरत् स्रवत् क्षतजं रक्तं तेन रूषितो विवर्णीकृतः । क्षपितवित्तमानः । वित्तं धनं मानं पूजा ते क्षपिते नष्टे यस्य । कुजे नवमसंस्थित इति । कुजे भौमे नवमस्थानस्थे । परिभवैरभिभवनैः । अर्थनाशैर्वित्तक्षयैः । आदियहणात् पीडाभिः । एवमादिभिर्दोषैः । तथा अबलत्वेन निष्प्रामाण्यत्वेन देहस्य शरीरस्य । तथा धातूनां क्रमेण म्लानत्वेन ।

वसासृग्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ।

एतैर्विलम्बितगतिर्भवति । विलम्बिता विघ्निता गतिर्गमनं यस्य । अशक्तित्वात् । वृत्तमिदं विलम्बितगतिः ॥ १६ ॥

तल्लक्षणम् ।

विलम्बितगतिर्जसौ जसयलैर्गयुक्तैर्भवेत् ।

जो गुरुमध्यगतः । सोऽन्तगुरुः । पुनरपि जकारसकारौ । यकार आदिलघुः । अन्ते लघुगुरू । एतैर्विलम्बितगतिः ।

| | ज | स | ज | स | य | ल | ग |
|---|---|---|---|---|---|---|---|
| न्यासः । | ।ऽ। | ।।ऽ | ।ऽ। | ।।ऽ | ।ऽऽ | । | ऽ |

अथ दशमैकादशस्थस्य कुजस्य फलं पुष्पिताग्रयाऽऽह ।

**दशमगृहगते समं महीजे**
**विविधधनाप्तिरुपान्त्यगे जयश्च ।**
**जनपदमुपरि स्थितश्च भुङ्क्ते**
**वनमिव षट्चरणः सुपुष्पिताग्रम् ॥ १७ ॥**

महीजेऽङ्गारके दशमगृहगते दशमस्थानं प्राप्ते । समं न शुभं नाप्यशुभं फलम् । उपान्त्यगे एकादशस्थे । विविधानां नानाप्रकाराणां धनानां वित्तानामाप्तिः प्राप्तिश्च भवति । उपरि मूर्ध्नि सर्वेषां जनानां प्राधान्येन स्थितो जनपदं लोकान् भुङ्क्तेऽश्नाति उपजीवति । यथा सुपुष्पिताग्रं वनं षट्चरणो भ्रमर उपरि स्थितो भुङ्क्ते । शोभनं कृत्वा पुष्पितानि सञ्जातकुसुमानि अग्राणि प्रान्तानि यस्मिन् वने । वृत्तमिदं सुपुष्पिताग्रम् ॥ १७ ॥

तल्लक्षणम् ।

अयुजि[1] नगनि नौ ततश्च रो यो नजसहितैर्जरगैश्च पुष्पिताग्रा ।

अन्त्रिलघुः । द्वौ नकारौ । ततः परमनन्तरं रलमध्यः । य आदिलघुः । पुनर्नकारः । जो गुरुमध्यः । आभ्यां सहितैर्जरगैः । जो गुरुमध्यः । रलमध्यः । अन्ते गुरुः । एतैर्जगति सुपुष्पिताग्रा भवति ।

न्यासः । न न र य
। । । । । । ऽ । ऽ । ऽ ऽ
न ज ज र गु
। । । । ऽ । । ऽ । ऽ । ऽ ऽ ।

अथ द्वादशस्थस्य भौमस्य फलमिन्द्रवंशयाह ।

**नानाव्ययैर्द्वादशगे महीसुते**
**सन्ताप्यतेऽनर्थशतैश्च मानवः ।**
**स्त्रीकोपपित्तैश्च सनेत्रवेदनै-**
**र्योऽपीन्द्रवंशाभिजनेन गर्वितः ॥ १८ ॥**

महीसुते भौमे द्वादशगे । मानवः पुरुषः । नानाप्रकारैर्व्ययैरर्थहानिभिरनर्थशतैश्चोपद्रवैर्बहुभिः सन्ताप्यते सोपतापं क्रियते । स्त्रीकोपैः स्त्रियां कोपैः । पित्तेन च । एतैः स्त्रीकोपपित्तैः । सनेत्रवेदनैश्चक्षुष्पीडासहितैरपि मानवः सन्ताप्यते । अपिशब्दः सम्भावनायां वर्तते । इन्द्रवंशाभिजनेनापि गर्वितः । इन्द्रवंशः कुलम् । इन्द्रवंशोऽभिजनः पूर्ववंशो यस्य तेन यो गर्वितः साभिमानः सोऽपि सन्ताप्यते किमुतान्ये । वृत्तमिदमिन्द्रवंशा ॥ १८ ॥

तल्लक्षणम् ।

ताविन्द्र[2]वंशा जरसंहितौ मता ।

तोऽन्तलघुः । तौ द्वौ । तकारौ जरसंहितौ जो गुरुमध्यः । रलमध्यः । तौ जरसंहितौ जराभ्यां संयुक्तौ इन्द्रवंशाभिमता ।

न्यासः । त त ज र
ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ ।

---

१ छन्दोमञ्जर्यां तु "अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा" ।
२ छन्दोमञ्जर्यां तु "तच्चेन्द्रवंशा प्रथमाक्षरे गुरौ" ।

तथा च यवनेश्वरः ।

नृपानलव्यालविषाग्निशस्त्रव्याध्यर्थनाशी वयभङ्गकारी ।
भौमः शशिस्थानगतो द्वितीये त्वनर्थसूयामिषवञ्चनाकृत् ॥
ऐश्वर्यमानद्युतिहर्षकारी तृतीयसंस्थोऽन्नसुवर्णदश्च ।
चतुर्थगस्तूदररुग्ज्वरास्रक्प्रवृत्तिनिर्वेदकरो धराजः ॥
सुतार्थनाशव्रतवैरमोहव्याधिप्रदः पञ्चमराशिसंस्थः ।
षष्ठे कुजोऽरिक्षयमानहर्षप्रख्यापनारोग्यसमृद्धिकारी ॥
जामित्रसंस्थो धनमित्रनाशक्लेशोदराद्यामयरोगकृत् स्यात् ।
भौमेऽष्टमे हृग्विषशस्त्रक्षतक्षयोपद्रवदैन्यकारी ॥
शस्त्रक्षताक्षेमसुवर्णनाशखेदाध्वकारी नवमो महीजः ।
मेषूरणे व्याध्यरिशस्त्रचोरव्रणार्तिकृत् सिद्धिकरश्च पश्चात् ॥
मानात्मजाद्याचितिताम्रहेमद्युतिप्रदो रुद्रपदेऽरिजिच्च ।
स्त्रीविग्रहोद्विजनपादरोगस्वप्रावभङ्गप्रदः कुजोऽन्त्ये ॥

अथ बुधस्य फलानि विवक्षुस्तत्र जन्मराशिस्थस्य फलं स्वागतयाऽऽह ।

दुष्टवाक्यपिशुनाहितभेदै-
र्बन्धनैः सकलहैश्च हृतस्वः ।
जन्मगे शशिसुते पथि गच्छन्
स्वागतेऽपि कुशलं न शृणोति ॥ १९ ॥

जन्मगे जन्मराशिस्थे शशिसुते बुधे । दुष्टवाक्यैरप्रियाभिधायिभिर्वाक्यैर्वचनैः पैशुन्येन सूचकत्वेन अहितेन विप्रियेण भेदेन पृथक्करणेन । एतैर्दोषैः । तथा बन्धनैः । किंभूतैः । सकलहैः कलहयुक्तैश्च । हृतस्वोऽपहृतधनो भवति । पथि गच्छन् अध्वनि व्रजन् स्वागतेऽपि स्वागतं शोभनमागतं तस्मिन्नपि कुशलं न शृणोति । न तस्य स्वागतेऽपि कुशलवार्ता भवति किं पुनः फलत इति । वृत्तमिदं स्वागता ॥ १९ ॥

तल्लक्षणम् ।

स्वागता रनभगैर्गुरुणाऽन्ते ॥

१ छन्दोमञ्जर्यां तु "स्वागता रनभगैर्गुरुणा च" ।

रलमध्यः। नस्त्रिलघुः। भ आदिगुरुः। गुरुश्च। पुनरपि गुरुरन्ते। एतैः स्वागता भवति।

र न भ गु गु
न्यासः। ऽ।ऽ ।।। ऽ।। ऽ ऽ।

अथ द्वितीयतृतीयस्थानस्थस्य बुधस्य फलं द्रुतपदेनाह।

**परिभवो धनगते धनलब्धिः**
**सहजगे शशिसुते सुहृदाप्तिः।**
**नृपतिशत्रुभयशङ्कितचित्तो**
**द्रुतपदं व्रजति दुश्चरितैः स्वैः॥ २८॥**

धनगते द्वितीयस्थानस्थे शशिसुते बुधे। परिभवोऽसम्मानो भवति। सहजगे तृतीयस्थानस्थे बुधे। सुहृदाप्तिर्मित्रलाभो भवति। स्वैरात्मीयैर्दुश्चरितैः। नृपतिशत्रुभयशङ्कितचित्तः। नृपती राजा। शत्रुररिः। तद्‌भयेः शङ्कितं सञ्जातशङ्कं चित्तं मनो यस्य। तथाभूतो द्रुतपदं त्वरितपदं व्रजति गच्छति। सापराधत्वात् सभयत्वाच्च। वृत्तमेतद्‌द्रुतपदम्॥ २०॥

तल्लक्षणम्।

द्रुतपदं नभजयैः कथितं तत्।

नस्त्रिलघुः। भ आदिगुरुः। जो गुरुमध्यः। आदिलघुर्यः। एतैर्द्रुतपदमेतद्‌वृत्तं कथितम्।

न भ ज य
न्यासः ।।। ऽ।। ।ऽ। ।ऽऽ।

अथ चतुर्थपञ्चमस्थस्य बुधस्य फलं रुचिरयाह।

**चतुर्थगे स्वजनकुटुम्बवृद्धयो**
**धनागमो भवति च शीतरश्मिजे।**
**सुतस्थिते तनयकलत्रविग्रहो**
**निषेवते न च रुचिरामपि स्त्रियम्॥ २१॥**

चतुर्थगे शीतरश्मिजे चन्द्रपुत्रे बुधे। स्वजनकुटुम्बवृद्धयः। स्वजना आत्मीयजनाः। कुटुम्बा ज्ञातयः। एषां वृद्धयः। धनागमश्च

भवति । सुतस्थिते पञ्चमस्थानस्थिते बुधे । तनयकलत्रविग्रहः । तनयाः पुत्राः । कलत्रं भार्या । तैः सह विग्रहः कलहः । रुचिरां शोभनामपि स्त्रियं रामां न निषेवते नोपभुङ्क्ते । सोद्वेगत्वात् । वृत्तमिदं रुचिरा ॥ २१ ॥

तल्लक्षणम् ।

जभौ[1] सजौ गिति रुचिरा चतुर्ग्रहैः ।

जो गुरुमध्यः । भ आदिगुरुः । सोऽन्तगुरुः । पुनर्जकारः । अन्ते गुरुः । यत्र्येवंप्रकारः । चतुर्ग्रहैः । चतुर्थवर्णैर्नवमवर्णैश्च विरामः ।

ज भ स ज गु
न्यासः । ⏜ ⏜ ⏜ ⏜ ⏜ ।
।ऽ। ऽ,।। ।।ऽ ।ऽ। ऽ

अथ षष्ठसप्तमाष्टमस्थस्य बुधस्य फलं प्रहर्षण्याऽऽह ।

**सौभाग्यं विजयमथोन्नतिं च षष्ठे**
**वैवर्ण्यं कलहमतीव सप्तमे ज्ञः ।**
**मृत्युस्थे जयसुतवस्त्रवित्तलाभा**
**नैपुण्यं भवति मतिप्रहर्षणीयम् ॥ २२ ॥**

षष्ठे षष्ठस्थाने ज्ञो बुधः । सौभाग्यं सर्वजनवाल्लभ्यम् । विजयं विशेषजयम् । अथशब्दः पादपूरणे । उन्नतिं शत्रूणामजितत्वं च कुरुते । सप्तमे सप्तमस्थाने । वैवर्ण्यं विवर्णताम् । अतीवात्यर्थम् । कलहं विरोधं च करोति । मृत्युस्थेऽष्टमस्थानस्थे । जयः । सुताः पुत्राः । वस्त्राण्यम्बराणि । वित्तं धनम् । एतेषां लाभा भवन्ति । मतिप्रहर्षणीयम् । येन बुद्धेः प्रहर्षमुत्पद्यते तथाभूतं नैपुण्यं कलासु सूक्ष्मदर्शितत्वं भवति । प्रहर्षणीयं वृत्तमेतत् ॥ २२ ॥

तल्लक्षणम् ।

म्नौ ज्रौ गस्त्रि[2]कदशकैः प्रहर्षणीयम् ।

मस्त्रिगुरुः । नस्त्रिलघुः । जो गुरुमध्यः । रलमध्यः । अन्ते गुरुः । त्रिकदशकैर्विरामः । त्रिभिर्दशभिश्च यतिर्यस्य तत् प्रहर्षणीयम् ।

म न ज र गु
न्यासः । ⏜ ⏜ ⏜ ⏜ ⏜ ।
ऽऽऽ, ।।। ।ऽ। ऽ।ऽ ऽ

---

१ छन्दोमञ्जर्यामपीदमेव ।
२ छन्दोमञ्जर्यां तु "त्र्याशाभिर्मनजरगाः प्रहर्षणीयम्" ।

अथ नवमदशमस्थस्य बुधस्य [1]फल दोधकेनाह ।

**विघ्नकरो नवमः शशिपुत्रः कर्मगतो रिपुहा धनदश्च ।**
**सप्रमदं शयनं च विधत्ते तद्गृहदोऽथ[2] कथां स्तरणं च ॥ २३ ॥**

नवमस्थानस्थः शशिपुत्रो बुधो विघ्नकरः सर्वकार्याणां विघ्नं करोति । कर्मगतो दशमस्थानस्थो रिपुहा शत्रुहन्ता धनदश्च भवति । सप्रमदं सस्त्रीकं शयनं शय्यां च विधत्ते ददाति । तद्गृहदः । तस्याः प्रमदाया यद्गृहं वेश्म तद्ददाति । अथशब्दश्चार्थे । कथां चेतिहासिकां ददाति । स्तरणं शय्यापृष्ठं च ददाति । केचित् कुथास्तरणमितीच्छन्ति । कुथो वारणकम्बलस्तदेवास्तरणम् । वृत्तमेतद्दोधकम् ॥ २३ ॥

तल्लक्षणम् ।

भो तु भगौ गिति दोधकमेतत् ।

भ आदिगुरुः । द्वौ भकारौ । पुनर्भकारः । अन्ते गुरुद्वयम् ।

न्यासः । भ भ भ गु । ऽ।। ऽ।। ऽ।। ऽऽ ।

अथैकादशद्वादशस्थस्य बुधस्य फलं मालिन्याऽऽह ।

**धनसुतसुखयोषिन्मित्रवाहाप्तितुष्टि-**
**स्तुहिनकिरणपुत्रे लाभगे मृष्टवाक्यः ।**
**रिपुपरिभवरोगैः पीडितो द्वादशस्थे**
**न सहति परिभोक्तुं मालिनीयोगसौख्यम् ॥ २४ ॥**

तुहिनकिरणश्चन्द्रः । तस्य पुत्रो बुधः । तस्मिन् लाभगे एकादशस्थानस्थे । धनं वित्तम् । सुताः पुत्राः । सुखं चित्तनिर्वृतिः । योषित् स्त्री । मित्रं सुहृत् । वाहो वाहनम् । एतेषामाप्तिर्लाभः । तुष्टिश्चित्तहर्षः । तथा मृष्टवाक्यः शुभवचनश्च भवति । द्वादशस्थे बुधे । रिपुभिः शत्रुभिः । परिभवैरसम्मानैः । रोगैर्गदैश्च पीडितोऽर्दितः । मालिनीयोगसौख्यं परिभोक्तुं न सहति । माला विद्यते यस्याः सा मालिनी स्त्री । तया योगः संयोगः । उद्योगादुद्योगसौख्यं परिभोक्तुं न सहति न शक्नोति अशक्तत्वात् । वृत्तमेतन्मालिनी ॥ २४ ॥

---

१ कुथास्तरणं च-इति पाठान्तरम् ।
२ हैन्दोमञ्जर्यां तु "दोधकमिच्छति भत्रितयाद्गौ"

तल्लक्षणम् ।

वसु[1]मुनिविरतिश्चेन्मालिनी नौ मयौ यः ।

नस्त्रिलघुः । द्वौ नकारौ । मस्त्रिगुरुः । य आदिलघुः । द्वौ यकारौ । वसवोऽष्टौ । मुनयः सप्त । एतैर्विरामो भवति ।

न्यासः । न न म य य । ।।। ।।। ऽऽ,ऽ ।ऽऽ ।ऽऽ

तथा च यवनेश्वरः ।

स्थाने शशाङ्कस्य शशाङ्कसूनुः सौभाग्यविद्याभिमानहर्ता ।
द्वितीयसंस्थस्त्वपवादशोकस्वैरक्रियामन्वतिदैन्यकारी ॥
तृतीयगो बन्धुविरोधरोधव्यापत्तिकर्ता द्रविणस्य सौम्यः ।
चतुर्थगो मानगुणप्रशंसाप्रमोदयोषिद्धनलाभकारी ॥
नेष्टान्यमुद्वेगमनर्थचर्यां कुर्याद्बुधः पञ्चमगोऽरतं च ।
षष्ठे विवृद्धिं मनसः प्रहर्षमुत्साहलाभोपचयं करोति ॥
जामित्रगश्चान्द्रिरनिष्टमार्गसन्तापदैन्याद्रुविरोधकारी ।
स्यादष्टमस्थो विविधोपकारी बुद्धिप्रसादस्थितिसौख्यकर्ता ॥
भङ्गापवादाध्वपरिश्रमान्तरायापकारी नवमर्क्षसंस्थः ।
क्रियाप्रसिद्धिं दशमेऽर्थलाभं विस्रम्भमानं च बुधो ददाति ॥
एकादशे मानचतुष्पदस्त्रीचित्तार्थसौभाग्यविनोदकर्ता ।
बुधोऽन्त्यराशौ विपरंश्च कुर्यादुद्वेजनं कार्यपरिश्रमं च ॥

अथ जीवस्य फलमाह ।

तत्रादौ जन्मराशिगतस्य द्वितीयस्थस्य च फलं भ्रमरविलसितयाऽऽह ।

**जीवे जन्मन्यपगतधनधीः**
**स्थानभ्रष्टो बहुकलहयुतः ।**
**प्राप्यार्थेऽर्थान् व्यरिरपि कुरुते**
**कान्तास्याब्जे भ्रमरविलसितम् ॥ २५ ॥**

---

१ छन्दोमञ्जर्यां तु "ननमयययुतेयं मालिनी भोगिलोकैः" ।

जीवे बृहस्पतौ जन्मनि जन्मराशिव्यवस्थिते । पुरुषोऽपगतधनधीर्भवति । अपगतं नष्टं धनं वित्तं धीर्बुद्धिश्च यस्य । स्थानभ्रष्टः स्वस्थानाच्च्युतः । बहुकलहयुतः प्रभूतविरोधैर्युतः समेतश्च भवति । अर्थे द्वितीयस्थाने अर्थान् धनानि प्राप्य लब्ध्वा अरिभिरपि विगतशत्रुरपि कान्तास्याब्जे । कान्ता वल्लभा तस्या आस्यं मुखम् । तदेवाब्जं पद्मम् । तत्र भ्रमरवत् षट्पदवद्विलसितं क्रीडां कुरुते परिचुम्बत इत्यर्थः । वृत्तमेतद् भ्रमरविलसितम् ॥ २५ ॥

तल्लक्षणम् ।

म्भौ न्लौ त्वान्ता[१] भ्रमरविलसिता ।

मस्तिगुरुः । भ आदिगुरुः । नस्त्रिलघुः । लघुगुरू अन्ते । भ्रमरविलसिता ।

| | म | भ | न | ल | गु |
|---|---|---|---|---|---|
| न्यासः । | ऽऽऽ | ऽ।। | ।।। | । | ऽ |

अथ तृतीयस्थानस्थस्य चतुर्थस्थस्य च गुरोः फलं मत्तमयूरेणाह ।

स्थानभ्रंशात् कार्यविघाताच्च तृतीयेऽ-
नेकैः क्लेशैर्बन्धुजनोत्थैश्च चतुर्थे ।
जीवे शान्तिं पीडितचित्तश्च स विन्देत्
नैव ग्रामे नापि वने मत्तमयूरे ॥ २६ ॥

तृतीयस्थानस्थे जीवे गुरौ । स्थानभ्रंशात् स्वस्थानच्यवात् कार्याणां विघातान्नाशाच्च पीडितचित्तो भवति । चतुर्थे जीवे । अनेकैः क्लेशैर्बन्धुजनोत्थैः स्वजनोत्पादितैः पीडितचित्तो व्यथितमनाः । नैव ग्रामे पुरादौ नापि वनेऽरण्ये । किंविशिष्टे । मत्ता मयूरा यस्मिन् तथाभूते । शान्तिं विश्रामं स विन्देल्लभते । वृत्तमेतन्मत्तमयूरम् ॥ २६ ॥

तल्लक्षणम् ।

म्तौ य्सौ गा[२]न्तं वेद यतिर्मत्तमयूरम् ।

मस्त्रिगुरुः । तोऽन्तलघुः । य आदिलघुः । सोऽन्तगुरुः । अन्ते गुरुः । वेद पूर्वोक्ता यतिश्चतुर्भिरिति ।

१ छन्दोमञ्जर्याम् "म्भौ नौ गौ भ्रमरविलसिता" ।
२ छन्दोमञ्जर्याम् । "वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम्" ।

न्यासः। म त य स गु।
ऽऽऽ ऽ,ऽ। ।ऽऽ ।।ऽ ऽ

अथ पञ्चमस्थस्य गुरोः फलं मणिगुणनिकरेणाह।

जनयति च तनयभवनमुपगतः
परिजनशुभसुतकरितुरगवृषान्।
सकनकपुरगृहयुवतिवसनकृन्-
मणिगुणनिकरकृदपि विबुधगुरुः॥ २७॥

विबुधा देवाः। तेषां गुरुर्जीवः। तनयभवनं पञ्चमस्थानमुपगतः प्राप्तः। परिजनः। परिवारजनः। शुभं धर्मादि। सुताः पुत्राः। करिणो गजाः। तुरगा अश्वाः। वृषा बलीवर्दाः। एतान् जनयति ददातीत्यर्थः। सकनकेति। कनकेन सुवर्णेन युक्तानि। पुरं नगरम्। तत्र गृहं वेश्म। युवतिः स्त्री। वसनान्यम्बराणि च। एतानि करोति। मणीनां रत्नानाम्। गुणानां विद्याशौर्यादीनां निकरः समूहस्तं करोति। वृत्तमेतन्मणिगुणनिकरः॥ २७॥

तल्लक्षणम्।

वसुमुनियतिरिति मणिगुणनिकरः।

[1]वसवोऽष्टौ। मुनयः सप्त। एतैर्विरामैः। त्रयोदशलघवः। अन्ते लघुगुरू।

न्यासः। ला गु।
।।।।।।।।।।।।। ऽ

अथ षष्ठगतस्य गुरोः फलं हरिणप्लुतेनाह।

न सखीवदनं तिलकोज्ज्वलं
न च वनं शिखिकोकिलनादितम्।
हरिणप्लुतशावविचित्रितं
रिपुगते मनसः सुखदं गुरौ॥ २८॥

गुरौ जीवे रिपुगते षष्ठस्थानसंस्थिते सखीवदनमालीवक्त्रं तिलकोज्ज्वलं तमालपत्त्रोपशोभितं मनसश्चेतसो न सुखदं सुखं न ददाति। न च वनमरण्यमुपवनं शिखिकोकिलनादितम्। शिखिभिर्मयूरैः। कोकिलैः परभृतैः। नादितं कृतशब्दम्। हरिणप्लुतैः। मृगाणां प्लवनैः। हरिणशावैः

1 [illegible]

हरिणशिशुभिश्च । विचित्रितं रम्यम् । मनसश्चेतसः । सुखदं सुखं ददाति । वृत्तमेतद्धरिणप्लुतम् ॥ २८ ॥

तल्लक्षणम् ।

त्रिस[1]कारविरतेर्भवतो लगौ ।

नभभरैश्च गणैर्हरिणप्लुतम् ॥

सोऽन्तगुरुः । सकारत्रितयम् । त्रिसकारचितेश्च परात्परतो लगौ लघुगुरू भवत एकपादे । द्वितीये नस्त्रिलघुः । भ आदिगुरुः । द्वौ भकारौ । रलमध्यः । एतैर्गणैर्हरिणप्लुतम् ।

न्यासः ।

| स | स | स | ल | गु |
|---|---|---|---|---|
| ।।ऽ | ।।ऽ | ।।ऽ | । | ऽ |

| न | भ | भ | र |
|---|---|---|---|
| ।।। | ऽ।। | ऽ।। | ऽ।ऽ |

अथ सप्तमगस्य गुरोः फलं ललितपदेनाह ।

त्रिदशगुरुः शयनं रतिभोगं
धनमशनं कुसुमान्युपवाह्यम् ।
जनयति सप्तमराशिमुपेतो
ललितपदां च गिरं धिषणां च ॥ २९ ॥

त्रिदशगुरुर्जीवः । सप्तमराशिमुपेतः प्राप्तः । शयनं शय्याम् । रतिभोगं सुरतभोगम् । धनं वित्तम् । अशनं भोजनम् । कुसुमानि पुष्पाणि । उपवाह्यमश्वादिकं जनयति ददाति । गिरं वाचं ललितपदाम् । ललितानि च पदानि सुप्तिङन्तानि यस्यास्तथाभूतां धिषणां बुद्धिं च जनयति । ललितपदं वृत्तमेतत् ॥ २९ ॥

तल्लक्षणम् ।

ललि[2]तपदं नजयैर्भवतीह ।

नस्त्रिलघुः । जो गुरुमध्यः । पुनरपि जकारः । य आदिलघुः । एतैर्ललितपदं भवति ।

---

[1] छन्दोमञ्जर्याम् । "अयुजि प्रथमेन विवर्जिता । द्रुतविलम्बिता हरिणप्लुता" ।

[2] छन्दोमञ्जर्यामिदं तामरसम् । तल्लक्षणं च "इह वद तामरसं नजजा यः" ।

न ज ज य
न्यास: । ‿‿‿ ‿–‿ ‿–‿ ‿–– ।
।।। ।ऽ। ।ऽ। ।ऽऽ

अथाष्टमनवमस्थस्य गुरोः फलं शालिन्याह ।

**बन्धं व्याधिं चाष्टमे शोकमुग्रं**
**मार्गक्लेशान् मृत्युतुल्यांश्च रोगान् ।**
**नैपुण्याज्ञापुत्रकर्मार्थसिद्धिं**
**धर्मे जीवः शालिनीनां च लाभम् ॥ ३० ॥**

जीवो बृहस्पतिरष्टमे स्थाने । बन्धं बन्धनम् । व्याधिं पीडाम् । उग्रं तीव्रम् । शोकं दुःखम् । मार्गे पथि । क्लेशान् कृच्छ्रान् । मृत्युतुल्यान् मरणसमांश्च रोगान् गदांश्च करोति । धर्मे नवमे नैपुण्यं सर्वकार्याणाम् । आज्ञां प्रभुत्वम् । पुत्राणां सुतानां कर्मणां कार्याणामर्थानां वित्तानां च सिद्धिं करोति । शालयो विद्यन्ते यासु ताः शालिन्यः । अत्रानुक्तमपि भूमिग्रहणं विज्ञायते । सस्ययुक्तानां भूमीनां लाभं करोतीत्यर्थः । अथवा स्वगुणैर्याः स्त्रियः शालन्ते श्लाघन्ते तासां लाभं करोति । शालिनीवृत्तमेतत् ॥ ३० ॥

तल्लक्षणम् ।

मात् तौ गौ चेच्छा[1]लिना वेदलोकैः ।

मस्त्रिगुरुः । तोऽन्तगुरुः । पुनस्तकारः । अन्ते गुरुद्वयम् । वेदैश्चतुर्भिर्लोकैः सप्तभिर्विरामो भवतः सा शालिनी ।

म त त ग
यथा न्यास: । ––– ––‿ ––‿ –– ।
ऽऽऽ ऽऽ। ऽऽ। ऽऽ

अधुना दशमैकादशद्वादशस्थस्य गुरोः फलं रथोद्धतयाऽऽह ।

**स्थानकल्यधनहा दशसंग-**
**स्तत्प्रदो भवति लाभगो गुरुः ।**
**द्वादशेऽध्वनि विलोमदुःखभाग्-**
**याति यद्यपि नरो रथोद्धतः ॥ ३१ ॥**

---

१ छन्दोमञ्जर्यामपीदमेव ।

गुरुर्जीवो दशर्क्षगो दशमस्थानगतः। स्थानहा स्थानहन्ता। कल्यहा आरोग्यहन्ता। धनहा वित्तहा वित्तहन्ता भवति। लाभगः। एकादशगतस्तत्प्रदः। तदिति स्थानादीनां परामर्शः। तान्येव ददाति। स्थानकल्यधनप्रदो भवति। द्वादशे जीवे। अध्वनि पथि विलोमदुःखभाक् विलोमेन अपथि गमनेन दुःखं भजते। नरः पुरुषो यद्यपि रथोद्धतो याति रथेनोद्धतेनोपयुक्तेन यद्यपि गच्छति तथापि विलोमदुःखभाग् भवति। वृत्तमेतद्रथोद्धता॥ ३१॥

तल्लक्षणम्।

रो नरौ लगयुता रथोद्धता।

रलमध्यः। नस्त्रिलघुः। पुनरपि रेफः। लघुगुरू अन्ते।

र न र ल गु

न्यासः। ⁀ ⁀ ⁀ ⁀ ⁀ ।

ऽ।ऽ ।।। ऽ।ऽ । ऽ

तथा च यवनेश्वरः।

मोहार्थनाशस्थितिमानभङ्गयामाध्वरुग्जातिविरोधवैरान्।
गुरुः शशिस्थानगतः करोति स्थानात्मजाज्ञाधनदो द्वितीये॥
गुरुस्तृतीये स्वजनार्थनाशक्रियावधाध्वश्रमवस्त्रनाकृत्।
त्रिमानचेष्टापचयापवादबन्धुक्षयोद्वेगकरश्चतुर्थे॥
भृत्याम्बरस्थानसुवर्णमानपुत्रप्रदः पञ्चमगोऽरिजिद्वा।
षष्ठे गुरुर्बन्धुविवादवैरचापप्रचेष्टाकलहानिकारी॥
जामित्रगः स्त्रीवसनान्नपानसौमुख्यसुस्फीतकलाध्वकर्ता।
जीवोऽष्टमस्थो बधभङ्गबन्धव्याधिश्रमानर्थविवादकारी॥
करोति जीवो नवमे सुतस्त्रीभूस्थानमानार्थसमृद्धिमग्र्याम्।
मेषूरणस्थोऽविरुगिष्टहानिश्लेष्मामयायासुतान्तकारी॥
एकादशे भूभवनात्मजस्त्रीहिरण्यधान्याम्बरवाहनानाम्।
दाता गुरुर्द्वादशगोऽथ मन्दाद्विदेशचर्याश्रमशोककारी॥

अथ शुक्रस्य गोचरः।

तत्रादावेवास्य जन्मगतस्य फलं विलासिन्याह।

**प्रथमगृहोपगो भृगुसुतः स्मरोपकरणैः**
**सुरभिमनोज्ञगन्धकुसुमाम्बरैरुपचयम्।**

**शयनगृहासनाशनयुतस्य चानुकुरुते**
**समदविलासिनीमुखसरोजषट्चरणताम् ॥ ३२ ॥**

भृगुसुतः शुक्रः । प्रथमगृहोपगो जन्मराशिगः । स्मरोपकरणैः कामोपकरणैः । शयनभूषणाच्छादनानुलेपनैर्गीतवाद्यनृत्यैः । तथा सुरभिभिः सुगन्धैः । मनोज्ञैश्चित्ताह्लादकैः । गन्धैर्गन्धद्रव्यैः । कुसुमैः पुष्पैः । अम्बरैर्वस्त्रैश्च । उपचयं लाभं करोति । शयनेनास्तरणेन । गृहेण वेश्मनाऽऽसनेन पर्यङ्केणाशनेन भोजनेन च युतो भवति । एवंविधस्य शयनगृहासनाशनयुतस्य पुंसः समदविलासिनीमुखसरोजषट्चरणतामनुकुरुते । समदा या विलासिनी मद्यपानेन समदा प्रमत्ता । तस्या मुखसरोजे वदनारविन्दे षट्चरणतां भ्रमरत्वमनुकुरुते विदधाति । परिचुम्बनादिकमनुददातीत्यर्थः । वृत्तमेतद्विलासिनी ॥ ३२ ॥

तल्लक्षणम् ।

भवति विलासिनी यदि नजौ भजौ भलगुरू ।

नस्त्रिलघुः । जो मध्यगुरुः । भ आदिगुरुः । पुनर्जकारः । पुनर्भकारः । अन्ते लघुगुरू ।

| | न | ज | भ | ज | भ | ल | गु |
|---|---|---|---|---|---|---|---|
| न्यासः । | ।।। | ।ऽ। | ऽ।। | ।ऽ। | ऽ।। | । | ऽ |

अथ द्वितीयस्थस्य शुक्रस्य फलं वसन्ततिलकेनाह ।

**शुक्रे द्वितीयगृहगे प्रसवार्थधान्य-**
**भूपालसन्नतकुटुम्बहितान्यवाप्य ।**
**संसेवते कुसुमरत्नविभूषितश्च**
**कामं वसन्ततिलकद्युतिमूर्धजोऽपि ॥ ३३ ॥**

शुक्रे द्वितीयगृहगे द्वितीयस्थानस्थे । प्रसवोऽपत्यम् । अर्थो धनम् । धान्यं शालयः । भूपालसन्नतः । भूपालो राजा सन्नतः सम्यक् नतः प्रह्वो भवति । राजवाल्लभ्यम् । कुटुम्बेभ्यो हितम् । एतान्यवाप्य प्राप्य । कुसुमैः पुष्पैः । रत्नैर्मणिभिश्च । विभूषितोऽलङ्कृतः । कामं मैथुनं संसेवते । कीदृशः । वसन्ततिलकद्युतिमूर्धजोऽपि । वसन्ततिलको वृक्षस्तस्य पुष्पमतीव श्वेतवर्णं भवति । वसन्ततिलकसदृशी द्युतिः कान्तिर्मूर्धजेषु यस्य । अनभिप्रेतकामोऽपि कामं संसेवते । जरार्दितोऽपि स्त्रीष्वनुरतो भवतीत्यर्थः । वृत्तमेतद्वसन्ततिलकम् ॥ ३३ ॥

तल्लक्षणम् ।

द्वौ जो व[1]सन्ततिलकं गुरुकद्वयं चेत् ।

तोऽन्तलघुः । भ आदिगुरुः । जो गुरुमध्यः । जकारद्वयम् । अन्ते गुरुद्वयम् ।

त भ ज ज गु
न्यासः । ऽऽ। ऽ।। ।ऽ। ।ऽ। ऽऽ ।

अथ तृतीयचतुर्थस्थस्य शुक्रस्य फलमिन्द्रवज्रयाऽऽह ।

**आज्ञार्थमानास्पदभूतिवस्त्रशत्रुक्षयान् दैत्यगुरुस्तृतीये ।**
**दत्ते चतुर्थश्च सुहृत्समाजं रुद्रेन्द्रवज्रप्रतिमां च शक्तिम्॥३४॥**

दैत्यगुरुः शुक्रः । तृतीये स्थाने आज्ञां प्रभुत्वम् । अर्थं धनम् । मानं पूजाम् । आस्पदं स्थानम् । भूतिं समृद्धिम् । वस्त्रमम्बरम् । शत्रुक्षयं रिपुविनाशम् । दत्ते ददाति । चतुर्थश्चतुर्थस्थानस्थश्च । सुहृद्भिर्मित्रैः समाजं संयोगम् । तथा रुद्रप्रतिमां महेश्वरतुल्यामिन्द्रप्रतिमां शक्रतुल्यां वज्रप्रतिमां कुलिशप्रतिमां शक्तिं सामर्थ्यं च ददाति । वृत्तमेतदिन्द्रवज्रा ॥ ३४ ॥

तल्लक्षणम् ।

तौ[2]जो गुरू चेद्वदतीन्द्रवज्रा ।

तोऽन्तलघुः । द्वौ तकारौ । जो गुरुमध्यः । अन्ते गुरुद्वयम् ।

त त ज गु
न्यासः । ऽऽ। ऽऽ। ।ऽ। ऽऽ ।

अथ पञ्चमस्थस्य शुक्रस्यानवसितयाऽऽह ।

**जनयति शुक्रः पञ्चमसंस्थो गुरुपरितोषं बन्धुजनाप्तिम् ।**
**सुतधनलब्धिं मित्रसहायाननवसितत्वं चारिबलेषु ॥ ३५ ॥**

शुक्रः पञ्चमसंस्थः पञ्चमस्थानसंस्थो गुरुपरितोषं जनयति उत्पादयति । गुरवः परितुष्टा भवन्तीत्यर्थः । बन्धुजनाप्तिं बन्धुजनप्राप्तिम् । सुतानां पुत्राणां धनानां वित्तानां लब्धिं प्राप्तिम् । मित्राणि सहायान् सार्थिनश्च लभते । अरिबलेषु शत्रुसैन्येषु अनवसितत्वमनवस्थितिं च जनयत्युत्पादयति । शत्रूणामभावो भवतीत्यर्थः । अनवसिता वृत्तमेतत् ॥ ३५ ॥

---

१ छन्दोमञ्जर्यां तु "उक्तं वसन्ततिलकं तभजा जगौ गः" ।
२ छन्दोमञ्जर्यां तु । "स्यादिन्द्रवज्रा यदि तौ जगौ गः" ।

तल्लक्षणम् ।

अ[1]नवसिता न्यौ भ् गौ च यदि स्यात् ।

नस्त्रिलघुः । य आदि लघुः । भ आदिगुरुः । अन्ते गुरुद्वयम् ।

न्यासः । न य भ गु ।
।।। ।ऽऽ ऽ।। ऽऽ

अथ षष्ठसप्तमाष्टमस्थस्य शुक्रस्य फलं लक्ष्म्याऽऽह ।

षष्ठो भृगुः परिभवरोगतापदः
स्त्रीहेतुकं जनयति सप्तमोऽशुभम् ।
यातोऽष्टमं भवनपरिच्छदप्रदो
लक्ष्मीवतीमुपनयति स्त्रियं च सः ॥ ३६ ॥

भृगुः शुक्रः । षष्ठः षष्ठस्थानस्थः । परिभवोऽसम्मानम् । रोगो गदः । तापः सन्तापः । एतान् ददाति । सप्तमः स्त्रीहेतुकं योषिन्निमित्तमशुभमनिष्टं जनयत्युत्पादयति । अष्टमं यातः प्राप्तो भवनपरिच्छदप्रदः । भवनं गृहम् । परिच्छदः परिवारः । एतौ प्रददाति । लक्ष्मीः श्रीर्विद्यते यस्याः सा लक्ष्मीवती । स पुरुषो लक्ष्मीवतीं स्त्रियमुपनयति प्राप्नोति । वृत्तमेतल्लक्ष्मीः ॥ ३६ ॥

तल्लक्षणम् ।

लक्ष्मीरियं तभसजगैरुदाहृता ।

तोऽन्तलघुः । भ आदिगुरुः । सोऽन्तगुरुः । जो गुरुमध्यः । अन्ते गुरुः । एतैरुदाहृता ।

न्यासः । त भ स ज गु ।
ऽऽ। ऽ।। ।।ऽ ।ऽ। ऽ

अथ नवमदशमस्थस्य शुक्रस्य फलं प्रमिताक्षरयाऽऽह ।

नवमे तु धर्मवनितासुखभाग्-
भृगुजेऽर्थवस्त्रनिचयश्च भवेत् ।
दशमेऽवमानकलहान् नियमात्
प्रमिताक्षराण्यपि वदन् लभते ॥ ३७ ॥

---

१ वृत्तरत्नाकरे "ननवसिता न्यौ भ्गौ गुरुरन्ते" ।

नवमे नवमस्थानगते भृगुजे शुक्रे। धर्मस्य वनितानां स्त्रीणां सुखस्य च भागी भवति । तथार्थनिचयो धनसमूहो वस्त्रनिचयोऽम्बरसमूहश्च भवेत् । दशमे शुक्रे। अवमानं पराभवः । कलहा विरोधाः । एतान् नियमान्निश्चयाल्लभते । स पुरुषो वदन्नपि जल्पन्नपि अर्थितया प्रमितानि स्वल्पानि अक्षराणि वर्णान् लभते न बहुवक्तृतां लभत इत्यर्थः । वृत्तमेतत् प्रमिताक्षरा ॥ ३७ ॥

तल्लक्षणम् ।

प्रमिताक्षरा[1] सजसुतावथ सौ ।

सोऽन्तगुरुः । जो गुरुमध्यः । ताभ्यां युक्तौ द्वौ सकारौ ।

| | स | ज | स | स |
|---|---|---|---|---|
| न्यासः । | ।।ऽ | ।ऽ। | ।।ऽ | ।।ऽ |

अथैकादशद्वादशस्थस्य शुक्रस्य फलं स्थिरेणाह ।

**उपान्त्यगो भृगोः सुतः सुहृद्धनान्नगन्धदः ।**

**धनाम्बरागमोऽन्त्यगः स्थिरस्तु नाम्बरागमः ॥ ३८ ॥**

भृगोः सुतः शुक्रः । उपान्त्यगः । अन्त्यस्य समीपमुपान्त्यमेकादशम् । तत्र यदा गतः । सुहृन्मित्रम् । धनं वित्तम् । अन्नमशनम् । गन्धाः सुगन्धद्रव्याणि । एतान् ददाति । अन्त्यगो द्वादशस्थानगतः । धनाम्बरागमः । धनं वित्तम् । अम्बरं वस्त्रम् । एतयोरागमो लाभः । अम्बरागमः स्थिरो न भवति । अम्बरमपह्रियत इति । वृत्तमेतत् स्थिरम् ॥ ३८ ॥

तल्लक्षणम् ।

लगौ[2] स्थिरः प्रकीर्तितः ।

लगौ लघुर्गुरुर्लघुर्गुरुरिति यत्र क्रमेण संस्थितम् ।

| | ल | गु | ल | गु | ल | गु | ल | गु |
|---|---|---|---|---|---|---|---|---|
| न्यासः । | । | ऽ | । | ऽ | । | ऽ | । | ऽ |

१ छन्दोमञ्जर्याम् । "प्रमिताक्षरा सजससैः कथिता" ।

२ छन्दोमञ्जर्यामस्य प्रमाणिका नाम । तल्लक्षणं च । "प्रमाणिका जरौ लगौ" ।

तथा च यवनेश्वरः।

हिरण्यनारीरजतार्थविद्यासुताम्बरस्थानचतुष्पदानाम्।
लाभं शशिस्थानमुपेत्य शुक्रः कुर्याद्द्वितीये तु वराङ्गनाप्तिम्॥
मित्रान्नवस्त्रात्मजमानहर्षस्थानाङ्गनारोग्यकरस्तृतीये।
शुक्रश्चतुर्थे धनपत्निपुत्रमित्रेष्टभोज्याम्बरगन्धदः स्यात्॥
सुहृत्सुतोद्भूतिगुणप्रवृत्तिख्यातिप्रदः पञ्चमगोऽर्थदश्च।
षष्ठे भृगुर्दैन्यविवादरोगद्वेषोद्भवान् मानवधांश्च कुर्यात्॥
जामित्रसंस्थो भृगुजस्तृपाध्वस्त्रीहेतुकोद्वेगकुमित्रदः स्यात्।
स्त्रीसौख्यविख्यापनमानहर्षप्रियागमाच्छादनदोऽष्टमस्थः॥
सुहृद्गुरुस्त्रीधनधर्मविद्यायशोगुणाप्तिं नवमर्क्षसंस्थः।
करोति शुक्रो दशमे सबन्धुसमीतिचेष्टाफलमानविघ्नान्॥
एकादशे स्त्रीशयनान्नपानभूषारतिस्वेदगृहार्थकारी।
भृग्वात्मजो द्वादशगस्तु चन्द्राद्भोग्यप्रदो वस्त्रविनाशकृच्च॥

अथ सौरस्य गोचरः।

तत्रास्य जन्मराशिस्थस्य फलं तोटकेनाह।

**प्रथमे रविजे विषवह्निहतः स्वजनैर्वियुतः कृतबन्धुवधः।**
**परदेशमुपेत्यसुहृद्भवनो विमुखार्थसुतोऽटकदीनमुखः॥ ३९॥**

रविजे शनैश्चरे। प्रथमे जन्मगते। विषेण गरलेन। वह्निनाऽग्निना च। हतः पीडितः। स्वजनैर्बन्धुभिर्वियुतो रहितः। कृतबन्धुवधः। कृतो बन्धोर्वधो येन। परदेशमुपेत्युपगच्छति। कीदृशश्चं तत्र। असुहृद्भवनः। अविद्यमानाः सुहृदो मित्राणि भवनं गृहं च यस्य। तथा विमुखार्थसुतोऽटकदीनमुखः। विमुखो नष्टमुखः। विगतार्थो निर्धनः। विगतसुतः पुत्ररहितः। अटकः परिभ्रमणशीलः। दीनमुखो म्लानवदनः। अटकश्चासौ दीनमुखश्चेति। वृत्तमेतत् तोटकम्॥ ३९॥

तल्लक्षणम्।

अथ तोटकमब्धिसकाररचितम्।
सोऽन्तगुरुः। अब्धिसङ्ख्यैश्चतुर्भिः सकारैश्चितं रचितम्।

न्यासः। स स स स। ।।ऽ ।।ऽ ।।ऽ ।।ऽ

अथ द्वितीयस्थस्य सौरस्य फलं वंशपत्रपतितेनाह ।

चारवशाद्द्वितीयगृहगे दिनकरतनये
रूपसुखापवर्जिततनुर्विगतमदबलः ।
अन्यगुणैः कृतं वसुचयं तदपि खलु भव-
त्यम्बिव वंशपत्रपतितं न बहु न च चिरम् ॥ ४० ॥

दिनकरतनये शनैश्चरे। चारवशाच्चारक्रमेण । द्वितीयगृहगे द्वितीयस्थानगते। रूपसुखापवर्जिततनुः । रूपेण सुवेषेण सुखेन चापवर्जिता तनुः शरीरं यस्य सः । तथा विगतमदबलः। विगतं नष्टं मदो दर्पं बलं वीर्यं च यस्य। अन्यगुणैरपरैर्विद्यादिकैर्गुणैः कृतमर्जितं वसुचयं धनसमूहो यदि भवति तदपि खलु न बहु प्रभूतं पर्याप्तं न च चिरं चिरकालं भवति । खलुशब्दः समुच्चये । यथाऽम्बु जलं वंशपत्रपतितं न बहु भवति न च चिरकालं तिष्ठति । वृत्तमेतद्वंशपत्रपतितम् ॥ ४० ॥

तल्लक्षणम् ।

दिङ्[1]मुनिवंशपत्रपतितं भरनभनलगैः ।

भ आदिगुरुः । रलमध्यः । नस्त्रिलघुः । पुनर्भकारनकारौ । अन्ते लघुगुरू। एतैर्वंशपत्रपतितम्। दिक्शब्देन दश । मुनयः सप्त। एतैर्विरामौ ।

| | भ | र | न | भ | न | ल | गु | |
|---|---|---|---|---|---|---|---|---|
| न्यासः । | ऽ।। | ऽ।ऽ | ।।। | ऽ।। | ।।। | । | ऽ | । |

अथ तृतीयस्थस्य सौरस्य फलं ललितेनाह ।

सूर्यसुते तृतीयगृहगे धनानि लभते
दासपरिच्छदोष्ट्रमहिषाश्वकुञ्जरखरान् ।
सद्मविभूतिसौख्यममितं गदव्युपरमं
भीरुरपि प्रशास्त्यधिरिपूंश्च वीरललितैः ॥ ४१ ॥

सूर्यसुते शनैश्चरे । तृतीयगृहगे तृतीयस्थानस्थे । धनानि वित्तानि लभते प्राप्नोति। दासाः कर्मकराः। परिच्छदाः परिवाराः। उष्ट्राः करभाः। महिषाः प्रसिद्धाः। अश्वास्तुरगाः। कुञ्जरा हस्तिनः। खरा गर्दभाः। एतान् प्राप्नो-

१ छन्दोमञ्जर्यामपीदमेव ।

ति । सद्म गृहम् । विभूतिरैश्वर्यम् । सौख्यममितमतिप्रभूतम् । गदानां रोगाणां व्युपरमं विनाशः । एतदपि लभते । स पुरुषो भीरुरपि भयार्तोऽपि वीरललितैर्वीराणां ललितैश्चरितैः । अधिरिपून् महाशत्रून् प्रशास्ति स्वायत्तान् कुरुते । वृत्तमेतल्ललितम् ॥ ४१ ॥

तल्लक्षणम् ।

स्याद्[1] भ्रौ नरनौ रनौ च गुरु नाम साच ललिता ।

भ आदिगुरुः । रलमध्यः । नस्त्रिलघुः । पुना रेफनकारौ । अन्ते गुरुः । सा वृत्तजातिः । अथास्मिन् छन्दसि ललिता नाम स्याद्भवेत् ।

न्यासः । भ र न र न गु ।
ऽ।। ऽ।ऽ ।।। ऽ।ऽ ।।। ऽ

अथ चतुर्थस्य सौरस्य फलं भुजङ्गप्रयातेनाह ।

**चतुर्थं गृहं सूर्यपुत्रेऽभ्युपेते**
**सुहृद्वित्तभार्यादिभिर्विप्रयुक्तः ।**
**भवत्यस्य सर्वत्र चासाधु दुष्टं**
**भुजङ्गप्रयातानुकारं च चित्तम् ॥ ४२ ॥**

सूर्यपुत्रे सौरे । चतुर्थगृहं वेदस्थानमभ्युपेते प्राप्ते । सुहृद्भिर्मित्रैः । वित्तेन धनेन । भार्यया स्त्रिया । आदिग्रहणात् पुत्रैर्बन्धुभिश्च । एतैर्विप्रयुक्तो रहितो भवति । अस्य नरस्य चित्तं मनः । सर्वत्र सर्वस्मिन्नेव । असाध्वशोभनम् । दुष्टं पापादिष्वनुरतम् । भुजङ्गप्रयातानुकारं च भवति । भुजङ्गस्य सर्पस्य प्रयातं गमनमनुकरोति । अतिकुटिलचित्तो भवतीत्यर्थः । वृत्तमेतद्भुजङ्गप्रयातम् ॥ ४२ ॥

तल्लक्षणम् ।

भुजङ्गप्रयातं[2] चतुर्भिर्यकारैः ।

य आदिलघुः । चतुर्भिर्यकारैर्भुजङ्गप्रयातं भवति ।

न्यासः । य य य य ।
।ऽऽ ।ऽऽ ।ऽऽ ।ऽऽ

---

१ छन्दोमञ्जर्यामस्य धीरललिता नाम । तल्लक्षणम् । सङ्कथिता भरौ नरनयाश्च धीरललिता ।

२ छन्दोमञ्जर्यामप्येवमेव ।

अथ पञ्चमषष्ठस्थस्य सौरस्य फलं पुटयाऽऽह ।

सुतधनपरिहीणः पञ्चमस्थे
प्रचुरकलहयुक्तश्चार्कपुत्रे ।
विनिहतरिपुरोगः षष्ठयाते
पिबति च वनितास्यं श्रीपुटोष्ठम् ॥ ४३ ॥

अर्कपुत्रे शनैश्चरे । पञ्चमस्थे सुतस्थानप्राप्ते । सुतैः पुत्रैः । धनैर्वित्तैश्च परिहीणो रहितः । प्रचुरेण प्रभूतेन कलहेन विरोधेन च युक्तः । षष्ठयाते षष्ठस्थानस्थे । विनिहतरिपुरोगः । विनिहता नष्टा रिपवः शत्रवो रोगा गदाश्च यस्य । तथाभूतो वनितास्यं स्त्रीमुखं पिबत्यास्वादयति । कीदृशं श्रीपुटोष्ठम् । श्रीर्लक्ष्मीः पुटा संश्लिष्टा लग्ना ओष्ठयोर्दन्तच्छदयोर्यस्मिन् मुखे तच्छ्रीपुटोष्ठम् । वृत्तमेतत् पुटा ॥ ४३ ॥

तल्लक्षणम् ।

वसुजलधिविरामौ नौ पुटा म्यौ[1] ।

नस्त्रिलघुः । द्वौ नकारौ । मस्त्रिगुरुः । यश्चादिलघुः । वसवोऽष्टौ । जलधयश्चत्वारः । एतैर्विरामौ ।

न न म य
न्यासः । ।।। ।।। ऽऽ,ऽ ।ऽऽ ।

अथ सप्तमाष्टमनवमस्थस्य सौरस्य फलं वैश्वदेव्याऽऽह ।

गच्छत्यध्वानं सप्तमे चाष्टमे च
हीनः स्त्रीपुत्रैः सूर्यजे दीनचेष्टः ।
तद्वद्धर्मस्थे वैरहृद्रोगबन्धै-
र्धर्मोऽप्युच्छिद्येद्वैश्वदेवीक्रियाद्यः ॥ ४४ ॥

सप्तमस्थानस्थे शनैश्चरे । अध्वानं गच्छति पथि व्रजति । अष्टमे शनैश्चरे चशब्दादध्वानमेव गच्छति । हीनो वर्जितः । स्त्रीपुत्रैर्भार्यासुतैः । दीनचेष्टश्च भवति । दीना चेष्टा क्रिया यस्य । धर्मस्थे नवमस्थानस्थे । तद्वत् तेनैव प्रकारेण । गच्छत्यध्वानं हीनः स्त्रीपुत्रैर्दीनचेष्टश्च भवति ।

---

१ कुम्भोमञ्जर्याम् । वसुयुगविरतिर्नौ म्यौ पुटोऽयम् ।

वैरैर्द्वेषैः । हृद्रोगैर्जठरगदैः । बन्धैर्बन्धनैश्च । वैश्वदेवीक्रियाद्यः । वैश्वदेवी क्रिया आद्या प्रथमा यस्मिन् तथाभूतो धर्मोऽप्युच्छिद्येन्नश्यति । वैश्वदेवी वृत्तमेतत् ॥ ४४ ॥

तल्लक्षणम् ।

मौ यौ पञ्चा[1]श्वैर्वैश्वदेवीति नाम्ना ।

मस्त्रिगुरुः । द्वौ मकारौ । य आदिलघुः । द्वौ यकारौ । पञ्चभिः । अश्वैश्च सप्तभि. । एतैर्विरामो भवतः ।

म म य य

न्यासः । ऽऽऽ ऽऽ,ऽ ।ऽऽ ।ऽऽ ।

अथ दशमैकादशद्वादशस्थस्य सौरस्य फलमूर्मिमालयाऽऽह ।

**कर्मप्राप्तिर्दशमेऽर्थक्षयश्च**
**विद्याकीर्त्योः परिहानिश्च सौरे ।**
**तैक्ष्ण्यं लाभे परयोषार्थलाभ-**
**श्चान्त्ये प्राप्नोत्यपि शोकोर्मिमालाम् ॥ ४५ ॥**

दशमे दशमस्थानस्थे सौरे शनैश्चरे । कर्मणां प्राप्तिः सिद्धिः । अर्थस्य धनस्य च क्षयो विनाशो भवति । विद्या शास्त्रम् । कीर्तिर्यशः । एतयोः परिहानिश्च भवति । लाभे एकादशे तैक्ष्ण्यमुग्रस्वभावता । परयोषार्थलाभः । परेषामन्येषां संबन्धिन्यो या योषाः स्त्रियः । तासाम् । परार्थानां परधनानां च लाभः प्राप्तिर्भवति । अन्त्ये द्वादशस्थे सौरे । शोकोर्मिमालां प्राप्नोति । शोकानां दुःखानामूर्मयः कल्लोलास्तेषां या माला निचयस्तां प्राप्नोति । ऊर्मिमाला वृत्तमेतत् ॥ ४५ ॥

तल्लक्षणम् ।

म्भौ तौ गौ चेत् क[2]थिता सोर्मिमाला ।

मस्त्रिगुरुः । भ आदिगुरुः । तोऽन्तलघुः । अन्ते गुरुद्वयम् ।

म भ त गु

न्यासः । ऽऽऽ ऽ।। ऽऽ। ऽऽ ।

---

१ छन्दोमञ्जर्याम् । "बाणाश्वैश्छिन्ना वैश्वदेवी ममौ यौ" ।

२ छन्दोमञ्जर्यामियं वातोर्मी । तल्लक्षणम् । "वातोर्मीयं गदिता म्भौ तगौ गः" ।

तथा च यवनेश्वरः ।

बन्धाध्वशस्त्रानिलरुग्विषाग्नि विडम्बनस्त्रीसुतवित्तनाशम् ।
स्थाने विधत्ते शशिनोऽर्कपुत्रस्ततो व्ययायासकरो द्वितीये ॥
तृतीयगोऽरिक्षयमानहर्षसौभाग्यबह्वागमदोऽर्कसूनुः ।
चतुर्थगो बन्धुबधावमानच्छायाविघाताध्वभयार्त्तिकारी ॥
स्थितिक्रियारम्भसुतार्थनाशस्वबन्धुविद्वेषविवादकारी ।
शनैश्चरः पञ्चमगोऽथ षष्ठे शत्रुक्षयामोदसुतार्थदाता ॥
छायाविघातश्रमगुह्यरोगस्त्रीमित्रनाशाध्वकृदर्कसूनुः ।
आमित्रसंस्थोऽष्टमगोऽथ शोकसुहृन्धुभृत्यव्यसनार्त्तिकारी ॥
व्याध्यध्ववैरश्रमवित्तनाशसुत्क्लेशदः स्यान्नवमर्क्षसंस्थः ।
ऐश्वर्यचेष्टाफलसञ्चयघ्नो मेषूरणे व्याध्यपकीर्तिकृच्च ॥
यशःपरस्त्रीधनभृत्यलाभक्रियासमृद्धिस्थितिमानदस्तु ।
एकादशे द्वादशगस्तु चेष्टानैपुण्यकीर्तिद्युतिमानहर्त्ता ॥

नन्वत्र यद्गोचरफलं ग्रहाणामुक्तं तत् कस्यचित् फलस्य निष्फलतां यात्यत्र किमिति विपर्ययो दृश्यत इत्येतदर्थं हेतूपन्यासं वितानेनाह ।

**अपि कालमपेक्ष्य च पात्रं शुभकृद्विदधात्यनुरूपम् ।**
**न मधौ बहु कं कुडवे वा विसृजत्यपि मेघवितानः ॥ ४६ ॥**

शुभकृच्छुभफलप्रदो ग्रहः । कालं शुभदशाकालं वर्तमानमपेक्ष्य पात्र पुरुषं वाप्यपेक्ष्य तदनुरूपं फलं विदधाति करोति । एतदुक्तं भवति । शोभना यस्य दशा वर्तते । तस्य ग्रहगोचरानुकूलाः शुभं फलं प्रयच्छन्ति । तथा च पुरुषस्य यत् फलं सम्भाव्यते तस्यैव शोभनं फलं प्रयच्छति नापात्रस्य । अत्र दृष्टान्तमाह । न मधौ बहु कमिमि । मधौ वसन्ते मेघवितानो घनसमूहः कं पयो विसृजत्युत्सृजत्यपि कुडवे भाण्डविशेषे पात्रे न बहु वर्षति । वाशब्दोऽत्र इवार्थे । यथा न तत्र प्रभूतं वर्षति । यतो मधौ तत्कालं जलं कुडवमापने तन्न पर्याप्तमिति । वृत्तमेतद्वितानम् ॥ ४६ ॥

तल्लक्षणम् ।

चित्सगैरपि विद्धि वितानम् ।

स्रोऽन्तगुरुः । सकारत्रयम् । अन्ते गुरुः । एतद्वितानं विद्धि जानीहि ।

न्यासः । स स स गु ।
।।ऽ ।।ऽ ।।ऽ ऽ

अथ गोचराशुभस्थानस्थितानां ग्रहाणां पूजनं भुजङ्गविजृम्भितेनाह ।

**रक्तैः पुष्पैर्गन्धैस्ताम्रैः**
**कनकवृषबकुलकुसुमैर्दिवाकरभूसुतौ**
**भक्त्या पूज्याविन्दुर्धेन्वा**
**सितकुसुमरजतमधुरैः सितश्च मदप्रदैः ।**
**कृष्णद्रव्यैः सौरिः सौम्यो**
**मणिरजततिलककुसुमैर्गुरुः परिपीतकैः**
**प्रीतैः पीडा न स्यादुच्चा-**
**द्यदि पतति विशति यदि वा भुजङ्गविजृम्भितम् ॥ ४७ ॥**

रक्तैः पुष्पैरिति । रक्तैर्लोहितवर्णैः पुष्पैः कुसुमैः । गन्धैः सुगन्धद्रव्यैश्च समालम्भने रक्तचन्दनप्रभृतिभिः । ताम्रैस्ताम्रवर्णैः । कनकेन सुवर्णेन । वृषेण दान्तेन । बकुलकुसुमैर्बकुलपुष्पैः । दिवाकरभूसुतौ सूर्याङ्गारकौ भक्त्या पूज्यावर्च्यौ । इन्दुश्चन्द्रो धेन्वा हिरण्यगवा । सितकुसुमैः श्वेतपुष्पैः । रजतेन रौप्येण । मधुरैर्मधुरद्रव्यैर्दधिमधुघृतशर्करादिभिः पूज्यः । सितः शुक्रश्च मदप्रदैर्मन्मथोद्दीपनैर्गन्धकुसुमधूपबलिभिश्च पूज्यः । चशब्दात् श्वेतैश्च । सौरिः शनैश्चरः । कृष्णद्रव्यैः सर्वैर्गन्धकुसुमोपहारैः पूज्यः । सौम्यो बुधः । मणिभिः । रजतेन रौप्येण । तिलककुसुमैस्तिलपुष्पैः पूज्यः । गुरुर्जीवः परिपीतकैः पीतवर्णकुसुमगन्धोपहारैश्च । एतैर्ग्रहैः प्रीतैः परितुष्टैः पीडा न स्यान्न भवेत् । येन पुरुषेण ग्रहाः पूजिताः स यद्युच्चादुन्नतादध एव पतति । यदि वा भुजङ्गानां सर्पाणां विजृम्भितं विशति सर्पाणां क्रीडासक्तानां मध्ये प्रविश तथापि तस्य पीडा न स्यात् । वृत्तमेतद्भुजङ्गविजृम्भितम् ॥ ४७ ॥

तल्लक्षणम् ।

मौ तौ ना रः सल्गाः प्राङ्कर्वसुमदनदहनमुनिभिर्भुजङ्गविजृम्भितम् ।
मस्त्रिगुरुः । द्वौ मकारौ । तोऽन्तलघुः । नस्त्रिलघुः । नकारत्रयम् ।

१ छन्दोमञ्जर्याम् । "वस्वीशाश्वैश्छेदोपेतं ममतनननयुगरसलगैर्भुजङ्गविजृम्भितम्" ।

रलमध्यः । सोऽन्तगुरुः । लघुगुरू अन्ते । ते वसवोऽष्टौ । मदनदहना रुद्रा एकादश । मुनयः सप्त । एतैर्विरामैः प्राहुरुक्तवन्तः पिङ्गलादयः ।

न्यासः । म म त न न न र स ल गु
ऽऽऽ ऽऽऽ ऽऽ,। ।।। ।।। ।।। ऽ,।ऽ ।।ऽ । ऽ

अथैव ग्रहपूजाप्रशंसामुद्गतयाऽऽह ।

शमयोद्गतामशुभदृष्टि-
मपि विबुधविप्रपूजया ।
शान्तिजपनियमदानदमैः
सुजनाभिभाषणसमागमैस्तथा ॥ ४८ ॥

अशुभदृष्टिमप्युद्गतामुत्पन्नाम् । शमय शान्तिं नय । अशुभा चासौ दृष्टिरशुभदृष्टिः । ताम् । कथं शमय । विबुधविप्रपूजया । विबुधानां देवानां विप्राणां ब्राह्मणानां च पूजया पूजनेन । तथा शान्त्या जपेन मन्त्रजपेन । नियमेन नीत्या जिताहारत्वेन ब्रह्मचर्यत्वेन च । दानेन । दमेन जितेन्द्रियत्वेन । तथा सुजनानां प्रधानजनानामभिभाषणेन सम्भाषणेन । एतैः सर्वैः । तथा सुजनानामपि समागमेनाशुभदृष्टिमुद्गतां शमय । एतदुक्तं भवति । एवंविधो यस्याचारः सर्वकालं भवति तस्य शुभो भवतीति । वृत्तमिदमुद्गता ॥ ४८ ॥

तल्लक्षणम् ।

प्रथमे [1]सजौ यदि सलौ च नसजगुरुकाण्यनन्तरम् ।
यद्यथ भनजलगाः स्युरथो सजसा जगौ च भवतीयमुद्गता ॥

इयमुद्गता नाम वृत्तजातिः । यस्याः प्रथमः पादः सजसलेषु भवति । सोऽन्तगुरुः । जो गुरुमध्यः । पुनरपि सकारः । अन्ते लघुः । एतेषु सत्सु विद्यमानेषु । अथ द्वितीये नसजगुरुकेष्वथैक्यतः सत्सु । नकारस्त्रिलघुः । सोऽन्तगुरुः । जो गुरुमध्यगतः । अन्ते गुरुः । ततस्तृतीयपादे भनजलगा भवन्ति । भ आदिगुरुः । नस्त्रिलघुः । जो गुरुमध्यः । लघुगुरू अन्ते । चतुर्थपदे सोऽन्तगुरुः । जो गुरु मध्यः । पुनः सकारः । जो गुरुमध्यः । अन्ते गुरुः ।

---

१ छन्दोमञ्जर्यामपीदमेव ।

न्यासः । स ज स लं
115 151 115 1
न स ज गु
111 115 151 5 ।
भ न ज ल गु
511 111 151 1 5
स ज स ज गु
115 151 115 151 5 ॥

अधुना गोचरोक्तस्य फलस्य रविभौमयोः शशिसौरयोश्च प्रधानकालं गीत्युपगीतिलक्षणं चाह ।

**रविभौमौ पूर्वार्धे शशिसौरौ कथयतोऽन्त्यगौ राशेः ।**
**सदसल्लक्षणमार्यागीत्युपगीत्योर्यथासङ्ख्यम् ॥ ४९ ॥**

रविरादित्यः । भौमः कुजः । एतौ रविभौमौ राशेः पूर्वार्धे स्थितौ सदसच्छुभमशुभं वा फलं कथयतः कुरुतः ।

यत उक्तम् ।

दिनकररुधिरौ प्रवेशकाल इति ।[1]

शशिसौरौ चन्द्रशनैश्चरौ राशेरन्त्यगौ पश्चिमभागावस्थितौ सदसत् फलं कथयतः कुरुतः ।

यत उक्तम् । "रविसुतशशिनौ[2] त्रिनिर्गमस्याविति" ।

एवमार्यागीत्युपगीत्योर्लक्षणं यथासङ्ख्यं यथाक्रमम् । एतदुक्तं भवति । यस्या आर्यायाः प्रथमार्धसदृशौ द्वावप्यर्धौ सा गीतिः । यस्या आर्याया आर्याद्वितीयार्धसदृशौ द्वावप्यर्धौ सा उपगीतिः ॥ ४९ ॥

तल्लक्षणम् ।

आर्यायाः पूर्वार्धे यदुक्तमितरच्च प्रथमतो लक्ष्म ।
गीतिं गीतिविधिविदो वदन्ति संवीक्ष्य तदितरच्चापि ॥

---

१ बृहज्जातके २३ अध्यायस्य ६ श्लोकः ।
२ बृहज्जातके २३ अध्यायस्य ६ श्लोकः ।

प्रथमतो यल्लक्ष्म लक्षणमार्यायाः पूर्वार्धे प्रथमदले उक्तं तदितरथा-प्यन्यस्मिन्नप्यर्धे संवीक्ष्य दृष्ट्वा गीतिविधिविदो गीतिविधिं विदन्ति जानन्तीति गीतिविधिविदः। तां गीतिं गीत्यार्यां वदन्ति कथयन्ति।

उपगीतिलक्षणम्।

आर्याद्वितीयदलतोऽर्धे लक्ष्म प्रतिनियतमवगम्य।
उभयथाप्युपगीतिं वदन्ति यत्यंशकोर्गदितैः॥

आर्याया द्वितीयदले अपरार्धे यद्भवति लक्ष्म लक्षणं तत् प्रतिनियतं निश्चितमवगम्य दृष्ट्वा उभयथाप्युपगीतिं वदन्ति कथयन्ति। यत्यंशकोर्गदितैः पूर्वोक्तैरिति।

न्यासः प्रसिद्धः।

अथ बुधस्य गोचरोक्तस्य फलप्रधानकालमुपगीत्यार्ययाऽऽह।

**आदौ यादृक् सौम्यः पश्चादपि तादृशो भवति।**
**उपगीतेर्मात्राणां गणवत् सत्सम्प्रयोगो वा॥ ५०॥**

आदौ राशिप्रवेशकाले यादृक् शुभो वाशुभः सौम्यो बुधो भवति तादृशः पश्चाद्राश्यन्तेऽपि। यत उक्तम्।

“शशितनयः फलदस्तु सर्वकालमिति”।

एवं राश्याद्यन्तयोस्तुल्यफलमुपगीतिमात्राणां गणवत्। उपगीतिरार्या। तस्या मात्राणां ये गणास्चतुर्भागास्तेषां यथाऽऽद्यन्तयोः समता तथा बुधस्य। अथवा यथा सत्सम्प्रयोगः सतां साधूनां सम्प्रयोगः समागमः। यादृगादौ भवति तादृगन्ते न कदाचिद्विरूपता। उपगीतिवृत्तमिदम्॥ ५०॥

आर्याद्वितीयदलेत्याद्यस्या लक्षणम्।

न्यासः प्रसिद्धः।

अधुना जीवगोचरफलस्योपदेशेनार्यालक्षणमाह।

**आर्याणामपि कुरुते विनाशमन्तर्गुरुर्विषमसंस्थः।**
**गण इव षष्ठे दुष्टः स सर्वलघुतां जनं नयति॥ ५१॥**

१. बृहज्जातके २१ अध्यायस्य ६ श्लोकः।

आर्याणां साधूनामपि गुरुर्जीवो विषमसंस्थोऽन्तर्मध्ये मध्यमराशौ मध्यभागे प्राप्तो विनाशं करोति अशुभं फलं विदधाति । शुक्रोऽप्येवमेव वेदितव्यो गुरुग्रहणात् । यतः सोऽपि राशेर्मध्ये फलं ददाति ।

उक्तं च ।

"गुरुभृगुजौ भवनस्य मध्ययाताविति" ।

यथा गणो देवविशेषो याचायां गणयागविधावुक्तः । "अनर्चितास्ते मूर्धानं सवाहनं विनाशयन्ती"त्यादि स गणो विषमस्थोऽप्रसन्नः । आर्याणामपि विनाशं करोति । तद्वदिति । स एव गुरुः षष्ठे स्थाने गतो दृष्टः । जन्मराशेः षष्ठस्थानप्राप्तो विलोकितश्च जनं पुरुषं सर्वलघुतां सर्वचाल्पतां नयति । स पुरुषः सर्वत्र गौरवरहितो भवतीत्यर्थः । अथ द्वितीयोऽर्थो व्याख्यायते । आर्या वृत्तविशेषः । आर्याणामन्तर्गुरुर्जगणो दृष्टस्तत्र भवति । अथ तस्या गणे षष्ठे जकारः विषमसंस्थः प्रथमतृतीयपञ्चमसप्तमस्थानानामन्यतमस्थानस्थो विनाशं कुरुते । आर्यं विनश्यति भज्यत इत्यर्थः । तदेतत् स्थानं सर्वलघुतां नयति । सर्वे तत्र चत्वार एव लघवो भवन्तीत्यर्थः । वृत्तमेतदार्या ॥ ५१ ॥

तल्लक्षणं "द्व्यन्तान्तरादिगुरुभि"रिति प्रागेव व्याख्यातम् ।

अथ शुभाशुभग्रहयोः परस्परदर्शनाद्गोचरफलस्य निष्फलत्वं नर्कुटकेनाह ।

**अशुभनिरीक्षितः शुभफलो बलिना बलवा-**
**नशुभफलप्रदश्च शुभदृग्विषयोपगतः ।**
**अशुभशुभावपि स्वफलयोर्व्रजतः समता-**
**मिदमपि गीतकं च खलु नर्कुटकं च यथा ॥ ५२ ॥**

अशुभं गोचरफलं ददातीत्यशुभफलदः । तत्र शुभफलो ग्रहो बलवान् वीर्ययुक्तः संन् अशुभनिरीक्षतः । अशुभफलप्रदेन ग्रहेण बलिना वीर्ययुक्तेन निरीक्षितो दृष्टः । तथा च अशुभफलप्रदो ग्रहो बलवान् शुभफलप्रदस्य बलिनो दृग्विषये दर्शनगोचरे उपगतः प्राप्तः । तावशुभशुभप्रदावपि ग्रहो स्वफलयोरात्मीयशुभाशुभफलयोः समतां तुल्यतां व्रजतो गच्छतः ।

---

१ बृहज्जातके २३ अध्यायस्य ६ श्लोकः ।
२ दृष्टव्यास्य ग्रन्थस्य ११९३ पृष्ठे २ श्लोकटीका

न शुभं नाप्यशुभं फलं कुरुतः । शुभदर्शनादशुभफलस्य दुष्टं फलं विनश्यति । अशुभदर्शनाच्छुभस्य शोभनं फलं विनश्यति । यथा गीतकमिदं नर्कुटकं च छन्दसां समतां तुल्यतां व्रजतो गच्छतः । गीतकं प्राकृते । नर्कुटकं संस्कृते । तौ च तुल्यप्रस्तारौ तुल्यविरामावेव भवतः । खलुशब्दः पादपूरणे प्रकारार्थे वा । वृत्तमेतन्नर्कुटकम् ॥ ५२ ॥

तल्लक्षणम् ।

नजभजजा लगौ च यदि नर्कुटकं तु तदा ।

नस्त्रिलघुः । जो मध्यगुरुः । भ आदिगुरुः । पुनर्जकारद्वयम् । अन्ते लघुगुरू ।

न्यासः । न ज भ ज ज ल गु
।।। ।ऽ। ऽ।। ।ऽ। ।ऽ। । ऽ

एतदेव प्राकृते गीतकं ज्ञेयम् ।

यथा ।

म[1]हुरअसोअपणपणओज्जलसोहअआ
मणहरवाणिसट्टपरिपन्थिअकोइलआ ।
महुरसघुणमाणणअणट्टणिरिक्खणिआ
मह सअणाण पुणरहिआण मुहेक्कणिआ[2] ॥

अधुना विबलस्य ग्रहस्य शुभगोचरफले नैष्फल्यं विलासेनाह ।

**नीचेऽरिभेऽस्ते चारिदृष्टस्य सर्वं वृथा यत् परिकीर्त्तितम् ।**
**पुरतोऽन्धस्येव कामिन्याः सविलासकटाक्षनिरीक्षणम् ॥ ५३ ॥**

---

१ मुहुरसोवपणपअलानसोआपणहरवाणिसघपरिवधिअको(इ)लआ ।
हुरसुघुळपाणणअणद्धणिरक्खणिआमर्पासअणाणपुस्तरहिमुहेक्कणिआ ॥ इति क॰ पु॰ पाठः ।
मुहुरसोवधणअपर्वरातसमलासिसामणहरयाणि सठपारेतञ्जिआ कोइलआ ।
महुरसळमाणायट्ठणिरक्कणिआसिसनपरणसापुणाहिआणमुहेपणिआ ॥ इति ग॰ पु॰ पाठः ।
महुरशोयवर्णा पलालिनयामाणहरवाणिसठगरिनजोठ्वकोपिलआ ।
मिहरसघुपणमाणपणठणिरक्कणिआघाघिमअणपुरेहिअयणमुहेकठणिआ ॥ इति घ॰ पु॰ पाठः ।
महुरशोकपपणपआलालसोआ मणहरवाणिसअपरिपंथिअकोइलआ ।
मुहुरसधुळपाणणअणट्टुरणणिरः खणिआ समिसअणाणपुणरहिआणमुहेः कणिआ ॥ इति
[च॰ पु॰ पाठः ।
२ मधुराशोकपर्णप्रणयोज्ज्वलशोभना मनोहरवाणीप्रकटपरिपन्थिकोकिला ।
मधुरसघूर्णमाननयनार्द्धनिरीक्षणिका मयि शयनानां पुनररहितानां मुखैकक्षणिका ॥

नीचे नीचराशौ स्थितस्य ग्रहस्य । अरिभे शत्रुक्षेत्रे वा स्थितस्य अस्ते सूर्यमण्डलेऽस्तं गतस्य । तथा यत्र तत्रावस्थितस्यारिदृष्टस्य शत्रुणावलोकितस्य। यत् फलं शुभं प्रकीर्तितमुक्तं तत् सर्वं वृथा निष्फलं भवति । अर्थादेवाशुभं फलं तत्रातिपुष्टं भवति ।

तथा च यवनेश्वरः ।

> द्विड्वेश्मगा नीचगृहस्थिता वा दुर्मार्गगाः सूर्यमनुप्रविष्टाः ।
> शस्तानि निघ्नन्ति शुभानि चैते फलान्यनिष्टान्यभिवर्धयन्ति ॥

अत्रैव दृष्टान्तमाह ।

पुरतोऽन्धस्येव कामिन्याः । यथा । कामिन्याः सञ्जातकामायाः स्त्रियाः । अन्धस्य नेत्रहीनस्य पुरतोऽग्रतः सविलासकटाक्षनिरीक्षणं वृथा । विलासो लावण्यम् । कटाक्षो नयनविभ्रमः । सह विलासकटाक्षाभ्यां यन्निरीक्षणमवलोकनं तत् । वृत्तमेतद्विलासवस्त्रम् ॥ ५३ ॥

तल्लक्षणम् ।

तौ मो यगौ यस्याद्यपादे स्यात् तौ जगौ तथा यत्र च दृश्यते ।
संदन्तौ मश्चतुर्थे स्यात् ससगा लगु विलासमुदाहृतम् ॥

यस्य प्रथमपादे तोऽन्तलघुः । मस्त्रिगुरुः । य आदिलघुः । अन्ते गुरुश्च । द्वितीये तोऽन्तलघुः । द्वौ तकारौ । जो मध्यगुरुः । अन्ते गुरुश्च । तृतीये सोऽन्तगुरुः । तोऽन्तलघुः । मस्त्रिगुरुः । चतुर्थे सकारत्रयमन्ते लघुगुरू ।

न्यासः ।

| | त | म | य | गु |
|---|---|---|---|---|
| | SSI | SSS | ISS | S |
| | त | त | ज | गु |
| | SSI | SSI | ISI | S । |
| | स | त | म | |
| | IIS | SSI | SSS | |
| स | स | स | ल | गु |
| IIS | IIS | IIS | I | S ॥ |

अथार्कसौम्ययोः फलं साम्यं संयोगवशेन

स्कन्धकस्यार्यागीत्या साम्यं वैतालीयस्य मागधिकया गाथाया आर्यया चेत्येतदार्यागीत्याह ।

**सूर्यसुतोऽर्कफलसमश्चन्द्रसुतश्छन्दतः समनुयाति यथा ।**
**स्कन्धकमार्यागीतिर्वैतालीयं च मागधी गाथाऽऽर्याम् ॥ ५४ ॥**

सूर्यसुतः शनैश्चरः । अर्कफलसम आदित्यस्य गोचरफलेन सदृशः । येषु स्थानेषु तृतीयषष्ठदशमैकादशेषु शुभः सूर्यस्तेष्वेव सौरः । चन्द्रसुतो बुधश्छन्दतः समनुयाति । परचित्तग्रहणं लोके छन्द उच्यते । सौम्ययुक्तः सौम्यवत् पापयुक्तः पापवद्भवति । अथवा यत्र राशिगो भवति तत्र यावत् तिष्ठति तावच्छुभफलं करोति । यथाशुभस्तथाशोभनमेव फलं करोति । येन प्रकारेण स्कन्धकमार्यागीतिश्छन्दतः समनुयाति । संस्कृते याऽऽर्यागीतिः स प्राकृते स्कन्धकः । एवं वैतालीयं मागधी छन्दतः समनुयाति । संस्कृते यद्वैतालीयं सा प्राकृते मागधी । गाथाऽऽर्यां छन्दतः समनुयाति । संस्कृते याऽऽर्या सा प्राकृते गाथा ॥ ५४ ॥

आर्यागीतिनियमे तल्लक्षणम् ।

गुर्वन्ताष्टमगणभागार्या पूर्वार्धसदृशशकलद्वितया ।
आर्यैरार्यागीतिर्गीता सङ्गीतगीतिभिर्गीतिविधौ ॥

गुर्वन्तमष्टमं गणं भजते याऽऽर्या सा गुर्वन्ताष्टमगणभाक् तथोक्ता । पूर्वार्धेन प्रथमदलेन सदृशं तुल्यं द्वितयं शकलमपरमर्धं यस्याः सा पूर्वार्धसदृशशकलद्वितया । "षष्ठो लो[1] लात् पद"मित्यादि पूर्वस्मिन्नर्धे पथ्याया यदुक्तं तत् सर्वं यस्या आर्याया प्रथमेऽर्धे भवति । चिषु गणेषु पादः । द्वितीयेऽप्यर्धे षष्ठो गणो लघुरेको न भवति किं च चतुर्मात्र एव । एवं भवति यस्यां साऽऽर्यैः पण्डितैरार्यागीतिरिति गीता कथिता । किम्भूतैः । सङ्गीतगीतिभिः । सङ्गीता सम्यक् कथिता गीतिर्यैस्ते सङ्गीतगीतयः पण्डितास्तैः । गीतिविधौ गीतिविधाने ।

न्यासः प्रसिद्धः ।

यता[2] वदेव स्कन्धकलक्षणम् ।

1 द्रष्टव्योऽस्य ग्रन्थस्य ११६४पृष्ठे २ श्लोकटीका ।
2 तथा च प्राकृतपिङ्गलसूत्रे ।
छउमत्ता अट्ठगणा पुव्वद्धे उत्तद्धे होइ समरूआ ।
सो खन्धआ विआणहु पिङ्गल पभणेइ मुद्धि बहुसंभेआ ॥

यथा ।

स[1]अणविमद्दिअसिढिलं केसकलावं सुअन्धिअं अ वहमाणा ।
ललणा कस्स ण हिअअं गिह्मसमअमलअपंक विअ हरइ तरुणि ॥

वेतालीयलक्षणम् ।

लाः षट् ल्गौ नैधना अयुक्पादोऽष्टौ तु तथा समे च लाः ।
न समोऽत्र परेण युज्यते नैते षट् च निरन्तरा युजोः ॥

वेतालीयं नामेदं मात्रावृत्तमुच्यते । यस्य ला लघवः षट् । ते किम्भूता ल्गौ नैधनाः । रलमध्यः । लघुगुरू । एते ल्गौ नैधनाः । निधने अन्ते भवाः । एषां षण्णां लघूनामन्ते । तथाभूतोऽयुक्पादः प्रथमस्तृतीयश्च । तथा युक्पादो द्वितीयश्चतुर्थश्च समस्तस्मिन् । अष्टौ लाः । ते च ल्गौ नैधना भवन्ति । न समोऽत्र परेण युज्यत इति । अत्रास्मिन् वेतालीयेऽयुक्पादे प्रथमेषु षट्सु लघुषु । तथा युक्पादे प्रथमेष्वेवाष्टसु लघुषु समो द्वितीयचतुर्थादिको लघुः परेण तृतीयपञ्चमादिना सह न युज्यते न समस्यते न तन्निमित्ता गुरुता सम्पद्यते इत्यर्थः । नैते षट् च निरन्तरा युजोः । एतेऽष्टौ लघवो युजोः पादयोर्द्वितीयचतुर्थयोरनियताः सन्ति । तेषां मध्ये षट् लघवो निरन्तरा गुरुणाऽव्यवहिता न कर्तव्याः । सर्वे षट् लघव एव न रचनीया इत्यर्थः । युजोः पादयोर्नियमादयुजोरनियमः ॥

न्यासः । ल र ल गु
। । । । । । ऽ । ऽ । ऽ
ल र ल गु ।
। । । । । । । । ऽ । ऽ । ऽ

एतदेव मागधिकालक्षणम् ।

किन्त्वत्र[2] विशेषोऽयम् । रेफलकारयोर्यथाक्रमं लकाररेफावादेशौ कार्याविति ।

---

चतुर्मात्रिका अष्टौ गणाः पूर्वार्धे उत्तरार्धे भवन्ति समरूपाः ।
तं स्कन्धकं विजानीहि पिङ्गलः प्रभणति मुग्धे बहुसंभेदम् ॥

१ शयनविमर्दितशिथिलं केशकलापं सुगन्धितं च वहमाना ।
ललना कस्य न हृदयं ग्रीष्मसमयमलयपङ्क इव हरति तरुणी ॥

२ किन्त्वत्रेतिप्रभृति कार्याविति इत्यन्तं केनचिदनभिज्ञेन प्रक्षिप्तमिति भाति ।

यथा ।

[1]परमागहिआ सुहासिणी कणआडी पिअकोइलालआ ।

सुअणअणरमणी अ मेठिली कलहोड्ड उज्जली मुहोगआत।[2] ॥

एवं गाथायां । आर्याया यल्लक्षणं तद्गाथायाः । गाथालक्षणं छ्न्[3]दोन्तरादिमुखभिरित्युक्तम् । तदेव गाथायां ।

यथा ।

गा[4]हाधिकठकंठे मणहरसअणम्मि तुङ्गथोरथणी ।

अणिणद्दामदि बाला सा णिद्दा मर्णेसिता अवरा[5] ॥

अथास्तमितसौरस्यातिशयेनाशुभप्रतिपादनं फलं पथ्ययाऽऽर्ययाऽऽह ।

**सौरोऽर्करश्मियोगात् सविकारो लब्धवृद्धिरधिकतरम् ।**

**पित्तवदाचरति नृणां पथ्यकृतां न तु तथाऽऽर्याणाम् ॥ ५५ ॥**

सौरः शनैश्चरोऽर्कस्यादित्यस्य रश्मियोगात् किरणसङ्गतत्वादस्तमितत्वाद्धेतोः सविकारो विकृतत्वं गतो भवति । सविकारो भूत्वा लब्धवृद्धिरशुभफलप्रदाने भवति । तदाधिकतरं नृणां पुंसां पित्तवदाचरति शरीरमुपतापयति । यथाऽर्करश्मिसंयोगात् सूर्यकिरणसन्तापनात् पित्तं धातुविशेषः सविकारो भवति । अधिकतरं प्रकोपमायाति । सविकारत्वाल्लब्धवृद्धिर्भूत्वाऽधिकतरं भवति । आर्याणां साधूनां पथ्यकृतां पथ्याशिनां तु न तथापि पीडा

१ परमाराहिआ सुहारिणी कल्हाजिअ कोइलालया ।
सुअणालमणीलमे इओ कलाह सो कोलि मुह उन्नत्रा ॥ इति ग· पु· पाठः ।
परमा र्यत्र आ सुहारिणी कणहाडां जिअ कोइलालया ।
धुअण लमिणी लमे इआ कहसो क्कालि गुह ए उ मूअ ॥ इति विजयनगरसंस्कृतपुस्तकालयस्थपुस्तके पाठः ।
परमार्गहिआगुहारिणी कायडाहिअकोइलालयांसु ।
अनलमाणीलामेइओकहणेर्कोलिसहम बडस्य ॥ इति प्र· पु· पाठः ।
परमार्गाधिका सुभाषिणी कार्णाटी प्रियकोकिलालपा ।
सुनयनरमणी च मैथिली कलभोडरीत्कर्ली मुखोचता ॥
द्रष्टव्यास्य ग्रन्थस्य ११९३ पृष्ठे ७ श्लोकस्य टीका ।
गाहाधिकणकपठे मणहरसअणम्मितुंगथोरथणी ।
अंणिक्कायति वाबा साणिक्कामणासउअपरम् ॥ इति प्र· पुस्तके पाठः ।
माहादिकणकपठो मणंहरसअणस्मितुंगयरोथणी ।
अं णिक्कापति बाला माणिक्कामणि सत अपरं ॥ इति क· पु· पाठः ।
गाहा विजणकंचे मणहरसयणं मिण्णयथोरयणी ।
अणिक्कायवानासाणिक्कामरणसअपरां ॥ इति ग· पु· पाठः ।
गाढाधिकठकण्ठे मनोहरशयने तुङ्गस्थूलस्तनी ।
यन्निद्राति बाला सा निद्रा मनस्विताऽपरा ॥

भवति । यतो मङ्गलाचार्ययुक्तानामित्यनेन ग्रहोपतापो न भवति पथ्याशिनां तु प्रकोपो न भवति । आर्येयं पथ्या ॥ ५५ ॥

तल्लक्षणम् ।

द्वा[1]न्तान्तरादिगुरुभिरित्यनेनार्याद्वयेन प्रागेव प्रदर्शितम् ।

अथ ग्रहसंयोगाच्चन्द्रफलविशेषं वक्त्रेणाह ।

**यादृशेन ग्रहेणेन्दुर्युक्तस्तादृग्भवेत् सोऽपि ।**

**मनोवृत्तिसमायोगाद्विकार इव वक्त्रस्य ॥ ५६ ॥**

इन्दुश्चन्द्रमा यादृशेन ग्रहेण शुभेन वाऽशुभेन युक्तस्तादृशः सोऽपि भवति । पापयुतः पापफलः सौम्ययुतः शुभफल इत्यर्थः । मनोवृत्तिसमायोगाद्धेतोः । यतश्चन्द्रो मनः । उक्तं च "मन[2]स्तुहिनगुरिति" । मनसो येन सह संयोगस्तादृगेव तदपि भवति । यथा मनोवृत्तिसमायोगाद्वक्त्रस्य मुखस्य विकारो भवति । वक्त्रस्य किल मनोवृत्तिसमायोगाद्विकार उच्यते । सुस्थिते मनसि प्रहृष्टं दृश्यते । दुःखिते दीनमिति । वृत्तमेतद्वक्त्रम् ॥ ५६ ॥

तल्लक्षणम् ।

रौ यदा गौ तु वक्त्रं स्यात् म्रौ गावन्यत्र दृश्येते ।

तृतीये चरणे य्सौ गौ ज्सौ गुरुरथो गः स्यात् ॥

अस्य प्रथमपादे रौ गौ । रलमध्यः । द्वौ रेफौ । द्वौ गुरू । अन्यत्र द्वितीये म्रौ गौ दृश्येते । मस्त्रिगुरुः । रलमध्यः । गुरुद्वयम् । तृतीये पादे य्सौ गौ । य आदिलघुः । सोऽन्तगुरुः । गुरुद्वयम् । चतुर्थे ज्सौ । जो गुरुमध्यः । सोऽन्तगुरुः । अन्ते गुरुद्वयम् ।

न्यासः ।

| | | | | | |
|---|---|---|---|---|---|
| र | र | गु | म | र | गु |
| ऽ।ऽ | ऽ।ऽ | ऽऽ | ऽऽऽ | ऽ।ऽ | ऽऽ |
| य | स | गु | ज | स | गु |
| ।ऽऽ | ।।ऽ | ऽऽ | ।ऽ। | ।।ऽ | ऽऽ |

---

१ द्रष्टव्यास्य ग्रन्थस्य ११९३-११९४ पृष्ठे २ श्लोकस्य टीका ।

२ बृहज्जातके २ अध्यायस्थे १ श्लोकः ।

अथ दुःस्थितैर्ग्रहैर्नरस्य लघुता भवतीत्येतच्छ्लोकेनाह ।

**पञ्चमं लघु सर्वेषु सप्तमं द्विचतुर्थयोः ।**
**यद्वच्छ्लोकाक्षरं तद्वल्लघुतां याति दुःस्थितैः ॥ ५७ ॥**

श्लोकाक्षरं श्लोकवृत्तस्य वर्णं यद्वद्येन प्रकारेण सर्वेषु चतुर्ष्वपि पादेषु पञ्चमं द्विचतुर्थयोः पादयोः सप्तमं च लघुतां याति तद्वद्दुःस्थितैरननुकूलैर्ग्रहैर्लघुतां लघुत्वमगौरवभावं पुरुषो याति गच्छति । वृत्तमेतत् श्लोकाख्यम् । एतदेवोदाहरणम् ॥ ५७ ॥

न्यासः ।

ल
S.I S I I S SS
ल ल
S I S II S I S
ल
SSS S I S SS
ल ल
II S S I S I S

अथ सुस्थितैर्ग्रहैः पुरुषस्य सुस्थितत्वमाह ।

**प्रकृत्यापि लघुर्यश्च वृत्तबाह्ये व्यवस्थितः ।**
**स याति गुरुतां लोके यदा स्युः सुस्थिता ग्रहाः ॥ ५८ ॥**

यः पुरुषः प्रकृत्या स्वभावेन लघुः स्वल्पोऽसत्कुलप्रसूतः । तथा वृत्तबाह्ये बाह्येन्द्रिये व्यवस्थितो दुःशील इत्यर्थः । स तथाभूतोऽपि लोके गुरुतां पूज्यतां याति गच्छति । यदा सुस्थिताः शोभनस्थानस्था अनुकूला ग्रहाः स्युर्भवेयुः । छन्दसां प्रस्तारे परिभाषेयम् । यो वर्णः प्रकृत्यापि स्वभावत एव लघुरेकमात्रः । वृत्ताच्छन्दसो बाह्ये पादान्ते स्थितः स गुरुतां गुरुत्वं द्विमात्रत्वं याति । यदा सुस्थिता ग्रहा गणाश्चतुर्मात्रादिकाः स्युर्येन प्रस्तारदोषो नोत्पद्यते तदा तस्य गुरुता कार्या नान्यथेति । एकमात्रिक एवापरपादान्ते वर्णो दीर्घो भवति । वृत्तमेतदपरमनुष्टुभं विन्द्यात् । एतदेवोदाहरणम् ॥ ५८ ॥

असुस्थितैर्यत् कर्म क्रियते तत् कर्तुश्चोपघातं करोतीत्येतद्वैतालीयेनाह ।

**प्रारब्धमसुस्थितैर्ग्रहैर्यत् कर्मात्मविवृद्धये बुधैः ।**

**विनिहन्ति तदेव कर्म तान् वैतालीयमिवायथाकृतम् ॥ ५९ ॥**

बुधैः पण्डितैः । यत् कर्म कार्यमात्मविवृद्धये आत्मनो वृद्ध्यर्थम-सुस्थितैर्ग्रहैः प्रारब्धमारब्धम् ।

[1]उदयसमये यः स्निग्धांशुर्महाप्रकृतिस्थितो

यदि च निहतो निर्घातोल्कारजोग्रहमर्दनैः ।

स्वभवनगतः स्वोच्चप्राप्तः शुभग्रहवीक्षितः—इति ।

एतस्माद्विपरीतस्थिता असुस्थिता दुःस्थिताः । तैस्तथाभूतैर्यत् कर्म प्रारब्धं तदेव कर्म तान् बुधान् विनिहन्ति घातयति । आत्मविवृद्ध्यर्थमारब्धमात्मन एव हानिं करोति । यथा वैतालीयं वेतालनिमित्तं कर्म वैतालीयम् । अयथाकृतमविधानेन कृतं तानेव साधकान् हन्ति । यैरात्मविवृद्ध्यर्थं रसरसायनविधिविलासार्थं कृतमविधिना तानेव हन्ति । वृत्तमेतद्वैतालीयम् ॥ ५९ ॥

तल्लक्षणम् ।

[2]लाः षट् ल्गौ इत्यादि ।

सुस्थितैर्ग्रहैर्यत् कर्म क्रियते तदल्पप्रयत्नेन सिद्ध्यतीत्येतदौपच्छन्दसिकेनाह ।

**सौस्थित्यमवेक्ष्य यो ग्रहेभ्यः**

**काले प्रक्रमणं करोति राजा ।**

**अगुणापि स पौरुषेण वृत्त-**

**स्यौपच्छन्दसिकस्य याति पारम् ॥ ६० ॥**

ग्रहाणां सुस्थितत्वमाचार्येणोक्तम् ।

[3]उदयसमये यः स्निग्धांशुरित्यादि ।

अमुमेवार्थं सिद्धार्थो यात्राकारः स्पष्टतरमाह ।

स्वराशिं वा स्ववर्गं वा मित्रवर्गगृहाणि वा ।

स्वोच्चं वा भवनं यातो विचरन् प्राकृतीं गतिम् ।

---

१ द्रष्टव्योऽस्य ग्रन्थस्य ११९ पृष्ठे ३१ श्लोकः ।

२ द्रष्टव्याऽस्यैवाध्यायस्य ५४ श्लोकटीका ।

३ द्रष्टव्योऽस्य ग्रन्थस्य ११९ पृष्ठे ३१ श्लोकः ।

वपुष्मान् वर्णवान् भास्वान् बलैः सर्वैः समन्वितः ।
बलिभिः कारकैर्मित्रैर्ग्रहैः समवलोकितः ॥
दिवि भौमान्तरिक्षैश्च यश्चोत्पातैरपीडितः ।
स्वजन्मस्थं च वर्गं च मार्गं चोपगतः शुभः ॥
योऽनुकूलो विजेता वा स ज्ञेयः सुस्थितो ग्रहः ।
यथोक्तविपरीतो यो विज्ञातव्यः स दुःस्थितः ॥

इत्येवंप्रकारं सौस्थित्यं ग्रहेभ्योऽवेक्ष्य निरूप्य काले यथोक्ते यात्राकाले प्रक्रमणं यात्रां करोति । यात्राकालोऽभिहित आचार्येणैव ।

तथा च ।

यात्राऽजसिंहतुरगोपगता वरिष्ठा मध्या घनेश्वरबुधोशनसां गृहेषु ।
भानौ कुलीरशशिवृश्चिकगेऽतिदीर्घा शस्ता तु देवलमतेऽध्वनि पृष्ठतोऽर्के ।

तथा ।

यात्रा नृपस्य शरदीष्टफला मघौ च छिद्रे रिपोर्न नियमोऽत्र च कोविदाहुः ।
छिद्रेऽप्यरेर्भवति दैवयुतस्य सिद्धिः सामान्यमामिषमिदं प्रतिभूमिपानाम्—इति ॥

एवं यथोक्ते यात्राकाले यः प्रक्रमणं करोति राजा गमनमारभते सोऽणुना स्वल्पेनापि पौरुषेण सैन्येन युक्तो भवति । तथापि वृत्तस्योपच्छन्दसिकस्य । वृत्तं क्रिया । औपच्छन्दसिकस्य वेदोक्तस्य वृत्तस्य पारं याति ।

एतदुक्तं भवति । सर्वथा विजिगीषुणा सुस्थितैर्ग्रहैः स्वल्पतन्त्रेणापि यातव्यम् । तत्र गतो मानयशोवित्तं लभते ।

तथा च सिद्धार्थो यात्राकार आह ।

मानमाप्नोति यशोवित्तं सुस्थितैः प्रवसन् ग्रहैः ।
विन्दते दुःस्थितैस्त्वेतैस्तद्विपर्ययमश्नुते ॥

असुस्थितैस्तु पुनः पुष्टतन्त्रेणापि न यातव्यम् ।

अमुमेवार्थं नन्दी आह ।

दैवोपहता यात्रा कथञ्चिदपि भवति यातुश्चेत् ।
क्षितिपस्यानुपकारा सर्वस्य विनाशनीया स्यात् ॥
तस्मादतिसामर्थ्ये प्रवर्तमानेऽपि दैवहीनेन ।
यात्रोद्यमो न कार्यः स्वसुखोदयमिच्छता राज्ञा ॥

वृत्तमेतदौपच्छन्दसिकम् ॥ ६० ॥

तल्लक्षणम्।

[1]यौजस्ते चेच्चूर्धसाम्यादौपच्छन्दसिकं वदन्ति सन्तः।

रेफयकारावन्ते भवतः। रलमध्यः। य आदिलघुः। शेषं लक्षणं वैतालीयसमम्। षण्मात्रा अयुक्पादेऽष्टौ समे च। सन्तः पण्डिता वदन्ति कथयन्त्यौपच्छन्दसिकम्।

न्यासः प्रसिद्धः।

अधुनाऽऽदित्यदिने यानि कर्माणि कारयेत् तानि दण्डकपादेनाह।

**उपचयभवनोपयातस्य भानोर्दिने कारयेद्धे-**
**मताम्राश्वकाष्ठास्थिचर्मा[2]र्णिकाद्रिद्रुमत्वग्-**
**नखव्यालचौरायुधीयाटवीक्रूरराजोपसेवा-**
**भिषेकौषधक्षौमप[3]ण्यादिगोपालकान्तार-**
**वैद्याश्मकूटावदाताभिविख्यातशूराहवश्लाघ्य-**
**याय्यग्निकर्माणि सिद्ध्यन्ति लग्नस्थिते वा रवौ।**

उपचयभवनोपयातस्येति। भानोरादित्यस्योपचयभवनोपयातस्य जन्मराशितस्त्रिषडेकादशदशमस्थानानामन्यतमस्थानस्थस्य दिने तद्वासरे कारयेत् विदध्यात्। हेम सुवर्णम्। ताम्रमुदुम्बरम्। अश्वास्तुरगाः। काष्ठं प्रसिद्धं दारु। अस्थि प्रसिद्धम्। चर्म व्याघ्रादिचर्म। और्णिकः कम्बलः। चर्मोर्मिकेति पाठान्तरम्। ऊर्मिका जलधिवेला। अद्रिः प्रसिद्धः। द्रुमो वृक्षः। त्वक् प्रसिद्धा द्रव्यविशेषः सुगन्धद्रव्यम्। नखः शुक्तिः। व्यालः सर्पः। चोरस्तस्करः। आयुधः खड्गादिस्तस्मिन् हितमायुधीयम्। अटवी अरण्यम्। क्रूरं वध्बन्धकर्म दुर्गादि। राजोपसेवा नृपाराधनम्। अभिषेको नृपादेः। औषधं भेषजम्। क्षौमः क्षुमासम्भवः। पण्यादि क्रयविक्रयम्। केचिद्वन्यादि पठन्ति। वने भवो वन्यः। मनुष्याणां तज्जातानां वा प्राणिनां संग्रहपोषणादि। गोपालो गोरक्षकः। कान्तारो मरुभूमिः। वैद्यः कायचिकित्सकः। अश्मा पाषाणः। कूटं दम्भः। अव-

---

[1] वृत्तरत्नाकरे "पर्यन्ते र्यौ तथैव शेषमौपच्छन्दसिकं सुधीभिरुक्तम्"।

[2] चर्मोर्मिका—इति पाठान्तरम्।

[3] वन्यादि—इति पाठान्तरम्।

दाता सत्कुलजः । अभिविख्यातः कीर्तियुक्तः । शूरः सङ्ग्रामप्रियः । आहवश्लाघ्यः सङ्ग्रामे कथनीयः । यायी गमनशीलः । अभिकर्माणि अभ्यामिलकार्याणि । एतेषां वस्तूनां संबन्धीनि यानि कार्याणि तानि रविदिने लग्नस्थिते प्राग्लग्नगे वा रवौ सिद्ध्यन्ति ।

तथा च समाससंहितायाम् ।

नृपाग्निपशुकर्माणि युद्धकार्याणि यानि च ।
सूर्यस्य दिवसे प्रशस्तानि सर्वाणि कारयेत् ॥

तथा च यवनेश्वरः ।

नृपप्रतिष्ठायुधयुद्धयोधहेमाग्निगोमूषभिषक्प्रयोगान् ।
रवेर्दिने वन्यमृगार्दनादि प्रशस्यते द्विड्भयकृच्च कर्म ॥

तथा च गर्गः ।

क्रौर्यं शाठ्यं नृपाद्वेदं शत्रूणां चैव बन्धनम् ।
अध्वानं च विवाहं च निधिकार्यं च कारयेत् ॥
तनुशुद्धिशिराकर्म बद्धबाध्वविमोचनम् ।
सर्वमेतद्यथोद्दिष्टं कारयेद्रविवासरे ॥

अथ चन्द्रस्य दिने यानि कर्माणि क्रियन्ते तानि द्वितीयदण्डकपादेनाह ।

शिशिरकिरणवासरे तस्य वाप्युद्गमे केन्द्र-
संस्थेऽथवा भूषणं शङ्खमुक्ताब्जरूप्याम्बु-
यज्ञेक्षुभोज्याङ्गनाक्षीरसुस्निग्धवृक्षक्षुपानूप-
धान्यद्रवद्रव्यविप्राश्वगीतक्रियाशृङ्गिकृष्यादि-
सेनाधिपाक्रन्दभूपालशोभाभ्यनक्षत्र-
श्लेष्मिकद्रव्यमातुल्यपुष्पाम्बरारम्भसिद्धिर्भवेत् ॥

शिशिरकिरणवासर इति । शिशिरकिरणश्चन्द्रस्तस्य वासरे दिने तस्य वाप्युद्गमे लग्नगते तस्मिन् लग्नगते तल्लग्ने कर्कटके वा केन्द्रसंस्थेऽथवा लग्नचतुर्थसप्तमदशमस्थानानामन्यतमस्थानस्थे । भूषणमलङ्करणम् । शङ्खः प्रसिद्धः । मुक्ता मुक्ताफलानि । अब्जं पद्मादि । रूप्यं रजतम् । अम्बु जलम् । यज्ञो यागः ।

वत्सः प्रसिद्धः । भोज्यमशनम् । अङ्गना स्त्री । क्षीरं प्रसिद्धम् । सुस्निग्धवृ-क्षोऽक्षोटकादिः । क्षुपास्तृणानि । अनूपो बहूदकप्रदेशः । धान्यं शालयः । द्रवद्रव्यं लेह्यम् । विप्रो ब्राह्मणः । अध्वा पन्थाः । गीतक्रिया गानकर्म । शृङ्गिणो हरिणादयः । कृष्यादि वपनलवनादि । सेनाधिपश्चमूपतिः । आक्रन्दो विजिगीषूणां पश्चात् पार्ष्णिग्राहः । पार्ष्णिग्राहस्य पश्चादाक्रन्दः । भूपालो राजा । सौभाग्यकरणं जनवाल्लभ्यम् । नक्तञ्चरो रात्रिचरः । श्लेष्मिकं द्रव्यं श्लेष्मिणो हितम् । मातुल्यं मातुलस्य हितं मातुल्यम् । पुष्पं कुसुमम् । अम्बरं वस्त्रम् । एतेषां संबन्धीनि यानि कार्याणि तेषां कार्याणामारम्भे सिद्धिर्भवेत् ॥

तथा च समाससंहितायाम् ।

जलस्त्रीराजकर्माणि मृदून्यन्यानि यानि च ।
तानि चन्द्रदिने कुर्यात् शुक्लपक्षे विशेषतः ॥

तथा च यवनेश्वरः ।

स्त्रीसङ्गमालङ्करणाम्बरस्रगतिन्त्रियाहर्षसुखाश्रयांश्च ।
कुर्वीत चन्द्रस्य दिने प्रदानयज्ञोत्सवान् रत्नरसार्जनं च ॥

तथा च गर्गः ।

उपभोगं तथा शय्यां नवमिश्रं गृहे चरेत् ।
पचेद्घृतं च तैलं च संबन्धं चात्र कारयेत् ॥
क्षुरकर्म तथा दानं गवां वेश्मप्रवेशनम् ।
नृपचन्द्रशनं विन्द्यात् कुर्याच्चैव निवेशनम् ॥
सर्वमेतद्यथोद्दिष्टं कुर्याच्चन्द्रदिने शुभे ।

अथ भौमस्य दिने यानि कर्माणि कार्याणि तानि दण्डकतृतीयपादेनाह ।

**क्षितितनयदिने प्रसिध्यन्ति धात्वाकरादीनि**
**सर्वाणि कार्याणि चामीकराग्निप्रवालायुध-**
**क्रौर्यचौर्याभिघाताटवीदुर्गसेनाधिकारास्तथा**
**रक्तपुष्पद्रुमा रक्तमन्यच्च तिक्तं कटुद्रव्यकूटा-**

हिंसाशाजितस्वाः कुमारा भिषक्छाक्यभिक्षु-
क्षपावृत्ति[1]कौशेयशाठ्यानि सिध्यन्ति दम्भास्तथा ।

क्षितितनयदिन इति । क्षितितनयोऽङ्गारकस्तस्मिन् दिने प्रसिद्ध्यन्ति धात्वाकरादीनि धातूनामाकर उत्पत्तिस्थानम् । धात्वाकरादीनि सर्वाणि धातुद्रव्याणि । आदिग्रहणात् चालनं पाचनं च । चामीकरं सुवर्णम् । अग्निः प्रसिद्धः । प्रवालं विद्रुमम् । आयुधं खड्गादि । क्रौर्यं क्रूरत्वम् । चौर्यं स्तेयत्वम् । अभिघातः परोपद्रवः । अटवी अरण्यम् । दुर्गं गिरिजलदुर्गादि । सेनाधिकारास्तथा । तथा तेनैव प्रकारेण सेनाधिपत्यम् । रक्तपुष्पद्रुमा रक्तानि पुष्पाणि लोहितानि कुसुमानि येषां द्रुमाणां वृक्षाणाम् । रक्तं लोहितवर्णं यत्किञ्चित् । तिक्तं निम्बादि । कटुद्रव्यं मरिचादि । कूटैर्दम्भैः । अहिपाशैः सर्पबन्धैः अर्जितं स्वं धनं यैः । कुमाराः प्रसिद्धाः । भिषक् वैद्यः । शाक्यभिक्षुः श्रमणकः । क्षपावृत्ती रात्रिवर्तनम् । कौशेयः । कोशो गञ्जस्तस्येशो नायकः । केचित् कौशेयं पट्टमितीच्छन्ति । शाठ्यं शठभावः परकार्यविमुखत्वम् । एतदाश्रितानि सर्वाणि कार्याणि सिध्यन्ति संसिद्धिमायान्ति । तथा तेनैव प्रकारेण दम्भाः सिध्यन्ति ।

तथा च समाससंहितायाम् ।

दुर्गग्रहणकर्माणि हेमकर्माणि यानि च ।
तथा च पशुकर्माणि कुर्याद्भौमदिने नरः ॥

तथा च यवनेश्वरः ।

वधावरोधानृतभिन्नभेदाः स्तेयाग्निशस्त्रादिविषप्रयोगाः ।
दिने कुजस्य ध्वजिनीनिवेशाः कार्याः सुवर्णाजपशुक्रियाश्च ॥

तथा च गर्गः ।

आयुधं कारयेत् प्राज्ञः पापकर्म तथैव च ।
बन्धनाद्यानि कर्माणि लुण्ठनं तु वधादिकम् ॥
षण्मुखस्यार्चं कर्तव्या पूजा च शिखिकुक्कुटैः ।
पूजयेदनलं चात्र यन्त्रकार्यं समारभेत् ॥
मन्त्रकर्म विवाहं च दिने भौमस्य वर्जयेत् ।

[1] कौशेय-इति पाठान्तरम् ।

अथ बुधस्य दिने यानि कार्याणि क्रियन्ते तानि दण्डकचतुर्थपादेनाह ।

**हरितमणिमहीसुगन्धीनि वस्त्राणि साधारणं**
**नाटकं शास्त्रविज्ञानकाव्यानि सर्वाः कलायुक्तयो**
**मन्त्रधातुक्रियावादनैपुण्यपुण्यव्रतायोगदू-**
**तास्तथाऽऽयुष्यमायानृतस्नानह्रस्वाणि दीर्घाणि**
**मध्यानि च च्छन्दतश्चण्डवृष्टिप्रयातानुकारीणि**
**कार्याणि सिद्ध्यन्ति सौम्यस्य लग्नेऽह्नि वा ॥ ६१ ॥**

हरितमणीति । हरितमणीनां संबन्धः । अथवा हरितद्रव्याणां मणीनां च मही भूः । सुगन्धीनि सुगन्धद्रव्याणि । वस्त्राण्यम्बराणि । साधारणमुग्रं सौम्यं च । नाटकं नर्तनम् । शास्त्रं प्रसिद्धम् । विज्ञानमध्यात्मिकम् । काव्यानि प्रसिद्धानि । सर्वा निःशेषाः कला गीतवाद्यनृत्तचित्रलेपकर्मादि । युक्तयो द्रव्याणां योजनम् । मन्त्रक्रिया मन्त्रसाधनम् । धातुक्रिया धातुवादः । वादः परस्परं केनचित् सह वदनम् । नैपुण्यं निपुणता । पुण्यं धर्मक्रियानुसेवनम् । व्रतायोगो व्रतग्रहणम् । दूतो गमागमिकः । तथाऽऽयुष्यमायुषो हितं रसायनवाजीकरणानि । माया व्याजव्यवहरणम् । अनृतमसत्यम् । स्नानं मलापहं पुष्यस्नानादि वा । तथा यानि कार्याणि ह्रस्वाणि क्षिप्रकालकरणीयानि । दीर्घाणि चिरकालकरणीयानि । मध्यानि न शीघ्रं न चिरकालं करणीयानि । तथा छन्दतः परिचिन्तग्रहणपूर्वकाणि चण्डवृष्टिप्रयातानुकारीणि कार्याणि । चण्डा चासौ वृष्टिः चण्डवृष्टिः । चण्डवृष्टौ प्रयातं गमनं यस्य तदनुकारीणि तत्सदृशानि । तस्यां गमनं पदविन्यासः । कश्चिद्ध्रस्वः कश्चिद्दीर्घः कश्चिन्मध्यो भवति । मार्गस्य जलावृतत्वाच्छिथिलत्वात् पदविन्यासस्तथाविधो भवति । तदनुकारीणि कार्याणि सिद्ध्यन्ति । सौम्यस्य बुधस्य लग्नेऽह्नि वा ।

तथा च समाससंहितायाम् ।

स्वाध्यायशिल्पव्यायामकलाकर्मरतानि च ।
तानि सौम्यदिने कुर्याद्यदि पापैर्न संयुतः ॥

तथा च यवनेश्वरः ।

स्वाध्यायसेवालिपिलेख्यशिल्पव्यायामनैपुण्यकलाविशेषाः ।
वृष्टिक्रियाः काञ्चनधातुयुक्तिवाग्युक्तिसन्धिप्रभृता बुधेऽह्नि ॥

तथा च गर्गः ।

बन्धयोधवधं सर्वं व्यायामं च विशेषतः ।
नृपसेवां च यात्रां च तथैव क्रयविक्रयौ ॥
चौरांश्च योजयेत् प्राज्ञो बद्धान् पाशांश्च मोचयेत् ।
सर्वं मित्रं च शिष्यं च बन्धुभिः सह सङ्गमम् ॥
आश्रमे च तथा भूमौ केदारे वपने तथा ।
शिक्षेत कूपकर्माणि दिने चन्द्रसुतस्य च ॥

आचार्येण चण्डवृष्टिप्रयातानुकारिणीत्यनेन चण्डवृष्टिप्रयातानां सर्वदण्डकानां लक्षणं प्रदर्शितम् ॥ ६१ ॥

तथा च ।

प्रथमकं इह दण्डकश्चण्डवृष्टिप्रयातो भवेन्नद्वयेनाथ रैः सप्तभिः ।
प्रतिपदमिह रेफवृद्धाः स्युरर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः ।

उत्कृतेरधिकाक्षरो दण्डकः । दण्डका नाम समासवृत्तविशेषा भवन्ति । येषां पादौ द्वाभ्यां नकाराभ्यां सप्तभिश्च रेफैर्भवति । नस्त्रिलघुः । रलमध्यः । इहास्मिन् छन्दोलक्षणे प्रथमको दण्डकश्चण्डवृष्टिप्रयातसञ्ज्ञः सप्तविंशत्यक्षरपादो भवति पिङ्गलादीनामाचार्याणां मतेन रात[2]माण्डव्यौ वर्जयित्वा । तयोस्तु मते एष सुवर्णाख्यः ।

तथा च तावूचतुः ।

सुवर्णश्चण्डवेगश्च प्लवो जीमूत एव च ।
बलाहको भुजङ्गश्च समुद्रश्चेति दण्डकाः ॥

तथा च पाठान्तरम् ।

अर्णोऽर्णवः प्लवश्चैव जीमूतोऽथ बलाहकः ।
समुद्रश्च भुजङ्गश्च सप्तैते दण्डकाः स्मृताः ॥

---

१ पिङ्गलच्छन्दःसूत्रे ७ अध्यायस्य ३३ सूत्रानुसारेणास्य "चण्डवृष्टिप्रपात" इति नाम ।
२ पिङ्गलच्छन्दःसूत्रे ७ अध्यायस्य ३४ सूत्रानुसारेण "रातमाण्डव्यौ" इति पाठः साधुः ।

एवं नद्वयेन सप्तभिश्च रेफैश्चण्डवृष्टिप्रयातः । प्रतिपदमिह रेफवृद्धाः । इहास्मिन् लक्षणे । पदं पदं प्रति प्रतिपदम् । रेफवृद्धा अन्ये स्युर्भवेयुः । एवं नद्वयेन अष्टभिश्च रेफैरर्णः । नवभिरर्णवः । दशभिर्व्यालः । एकादशभिर्जीमूतः । द्वादशभिर्लीलाकरः । त्रयोदशभिरुद्दामः । चतुर्दशभिः शङ्खः । आदिग्रहणाद्रेफवृद्ध्याऽन्ये कल्पनीयाः । जलचं पद्मादि ।

प्रचित इति कविभिर्वर्णितोऽस्मादिहोपान्तशेषात् चिकैरुत्तरैर्नद्वयाद्यैः ।

इहास्मिन् लक्षणे प्रचित इति वर्णित उक्तः । अस्मात् पूर्वोक्ताल्लक्षणात् कविभिः पण्डितैरिहास्मिन् प्रथमदण्डके उपान्ता गृहीताः । त्रिका रेफाः । तैस्त्रिकैः शेषान्नकारद्वयादुत्तरैः परतः स्थितः सप्तभिर्यकारैः । अन्वर्थसञ्ज्ञा चेयम् । प्रतिपदं रेफादिवृद्ध्योपचितत्वात् प्रचित इत्युच्यते । शेषरेफतोऽन्येस्त्रिकः सप्तकः । आचार्येण नद्वयात् रेफद्वात्रिंशता दण्डक उक्तः । अथ उपचयभवननोपयातस्येत्यस्य

न्यासः । नद्वयं रेफा द्वात्रिंशत् ।

अथ बृहस्पतिदिने यानि कर्माणि क्रियन्ते तानि वर्णकदण्डकेनाह ।

सुरगुरुदिवसे कनकं रजतं तुरगाः
करिणो वृषभा भिषगौषधयः ।
द्विजपितृसुरकार्यपुरःस्थितघर्म-
निवारणचामरभूषणभूपतयः ॥
विबुधभवनधर्मसमाश्रयमङ्गल-
शास्त्रमनोज्ञबलप्रदसत्यगिरः ।
व्रतहवनधनानि च सिद्धिकराणि
तथा रुचिराणि च वर्णकदण्डकवत् ॥ ६२ ॥

सुरगुरुदिवस इति । सुरगुरुदिवसे बृहस्पतिदिने कनकं सुवर्णम् । रजतं रौप्यम् । तुरगा अश्वाः । करिणो हस्तिनः । वृषभा दान्ताः । भिषग्वैद्यः । ओषधयः प्रसिद्धाः । अथवा भिषगौषधयो वैद्यप्रणीतानि द्रव्याणि । द्विजानां ब्राह्मणानां तर्पणम् । पितृणां श्राद्धम् । सुराणां देवानां च कार्याणि । पुरःस्थितोऽग्रस्थितः पदातिः । घर्मनिवारणं छत्रादिकम् । चामरं

सालव्यञ्जनम् । भूषणमलङ्करणम् । भूपतयो राजानः । विबुधभवनं देवगृहम् । अथवा विबुधानां प्रतिष्ठा । भवनानां गृहाणां च प्रतिष्ठा । धर्मसमाश्रयो धर्माश्रयणम् । मङ्गलं शुभकार्यम् । शास्त्रं प्रसिद्धम् । मनोह्लादकः । बलप्रदं मांसाद्याहारः । सत्यगिरः सत्ययुक्ता वाचः । व्रतं चान्द्रायणादि । हुतवहमग्नौ । धनं वित्तम् । एवमादिकानि संबन्धीनि यानि कर्माणि सिद्धिकराणि सिद्धिप्रदानि । तथा रुचिराणि श्रेष्ठानि चान्यानि । कथं रुचिराणि । वर्णकदण्डकवत् । वर्णकेन नागादिना यथा रुचिरं स्फुटतरं दण्डकं तद्वद्यानि रुचिराणि । एतद्वर्णकदण्डकं नाम दण्डकं नद्वयेन सप्तभिर्भैर्गुरुणा च ॥ ६२ ॥

न्यासः । न न भ भ भ भ भ भ भ गु । ।।। ।।। ऽ।। ऽ।। ऽ।। ऽ।। ऽ।। ऽ।। ऽ।। ऽ

तथा च समाससंहितायाम् ।

शान्तिपौष्टिककर्माणि तथा स्नानाश्रितानि च ।
तानि कृत्स्नं विधेयानि दिने देवगुरोः शुभे ॥

तथा च यवनेश्वरः ।

दिने गुरोर्धार्मिकपौष्टिकेज्याध्याभिषेयप्रमुखानादि ।
क्रियाश्रिता धर्मसुवर्णवस्त्रदेहाश्रयास्त्वाश्वरथाश्रयाश्च ॥

तथा च गर्गः ।

यज्ञं च विविधं कुर्यात् तपांसि च विशेषतः ।
यज्ञे यज्ञे तपस्तेपे छादयेत् कारयेद्गृहम् ॥
आरभेद्भारतं चेदं ज्योतिषं च विशेषतः ।
ग्राहयेन्नववस्त्राणि ग्रासं दद्यान्नृपस्य च ॥
आदिशेन्न व्रतं पुत्रे बीजान् सर्वांश्च वापयेत् ।
योजयेच्छकटं चाप दिने देवगुरोः शुभे ॥

अथ शुक्रदिने यानि कार्याणि क्रियन्ते तानि समुद्रदण्डकप्रथमार्द्धेनाह ।

**भृगुसुतदिवसे च चित्रवस्त्रपुष्पवेश्यकामिनीविलासहासयौवनोपभोगरम्यभूमयः ।**

**स्फटिकरजतमन्मथोपचारवाहनेक्षुशारद-**
**प्रकारगोवणिक्कृषीवलौषधाम्बुजानि च ॥**

भृगुसुतदिवस इति । भृगुसुतदिवसे शुक्रदिने च । चित्रं चित्रकर्म । वस्त्रमम्बरम् । वृष्यप्रयोगो रेतोवृद्धिकरः । वेश्या पण्यस्त्री । कामिनी कामयुक्ताङ्गना । विलासः क्रीडनम् । हास उपहासः । यौवनोपभोगो रतादि । रम्या रमणीया भूमय उपवनादि । स्फटिकः स्फटिकोपलम् । रजतं रौप्यम् । मन्मथोपचारः कामोपचरणम् । वाहनमश्वादि । इक्षुः प्रसिद्धः । शारदप्रकारो धान्यानि । वणिक्कर्माणि । कृषिकर्माणि । औषधं प्रसिद्धम् । अम्बुजं जलजं पद्मादि । एतानि कार्याणि ॥

तथा च समाससंहितायाम् ।

कलागन्धर्वकर्माणि रत्नकर्माणि यानि च ।
तानि कार्याणि दिवसे सदा दैत्यगुरोः शुभे ॥

तथा च यवनेश्वरः ।

गान्धर्वविद्यामणिरत्नगन्धगोभूमिशय्याम्बरभूषणानाम् ।
स्त्रीपण्यकोशोत्सवनन्दनानां क्रियाविधिः शुक्रदिने प्रशस्तः ॥

तथा च गर्गः ।

गजमश्वं प्रयुञ्जीत कर्णबन्धे नियोजयेत् ।
पिबेत् सुरां च मद्यं च प्रचरेत् कुसुमाम्बरम् ॥
गन्धांश्च विविधानद्यात् कामयेच्च वराङ्गनाः ।
द्यूते च सहसा प्रीतिं तिलं तैलं च योजयेत् ॥
मङ्गलं स्थापयेदेव रोपयेच्चैव पादपान् ।
सर्वमेतद्यथोद्दिष्टं कुर्याच्छुक्रदिने शुभे ॥

अथ सौरस्य दिने यानि कर्माणि क्रियन्ते तानि समुद्रदण्डकापराधेनाह ।

**रविसुतदिने च कारयेन्महिष्यजोष्ट्रकृष्ण-**
**लोहदाससृद्धनीचकर्मपक्षिचौरपाशिकान् ।**
**च्युतविनयविशीर्णभाण्डहस्त्यपेक्षविघ्नकारणानि**
**चान्यथा न सोक्षयेत् समुद्रगोऽप्यपां कणम् ॥ ६३ ॥**

सवितृसुतदिन इति । सवितृसुतदिने शनैश्चरदिवसे च कर्माणि कारयेत् । महिषी प्रसिद्धा । अजश्छाग: । उष्ट्र: करभ: । कृष्णलोह: शस्त्रायुधादि । दास: कर्मकर: । वृद्धो गतवया: । नीच: कुलाधमकर्मकृत् । पक्षी श्येनादि । चोरस्तस्कर: । पाशिका: पाशबन्धनादिविद: । च्युतविनयो नीच: । विशीर्णभाण्डं भिन्नभाण्डम् । हस्त्यपेक्षा हस्तिनोऽपेक्षा । हस्त्यपेक्षा ग्रहणादि । विघ्नकारणानि यानि निमित्तानि च कार्याणि एतदाश्रितानि च सर्वाणि सिद्ध्यन्ति । एतानि वर्जयित्वाऽन्यथाऽन्येन प्रकारेण समुद्रगोऽपि सागरप्राप्तोऽप्यपां कणं जलबिन्दुमपि तस्मात् सागरान्न साधयेत् । समुद्रसञ्ज्ञं दण्डकमेतत् ॥ ९३ ॥

अथ नद्वयात् परत: पञ्च रेफा जकारान्तरिता भवन्त्यन्ते लघुगुरू ।

न्यास: । न न र ज र ज र ज र ज र ज र ल गु

। । । । । । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ

तथा च समाससंहितायाम् ।

शस्त्राणि पाशकर्माणि पशुकर्माणि यानि च ।
तानि सौरदिने कुर्याल्लोहकर्माणि यानि च ॥
संवत्सरे तथा मासे होरायामुदये तथा ।
उक्तानि यानि कर्माणि तथा कुर्याद्ग्रहस्य च ॥

तथा च यवनेश्वर: ।

विषाश्मशस्त्रचपुसीसलोहप्राकारबन्धावृतमारणानि ।
सर्वं च पापात्मकमर्कजाह्नि कार्पासवप्रार्जितानि चेष्टम् ॥

तथा च गर्ग: ।

नियोगान् विविधान् कुर्याद्वेश्म चापि प्रवेशयेत्
कर्म चौर्यं मृतिं चैवाश्वरथेष्वश्वयोजनम् ॥
हस्त्यपेक्षा विघ्नकर्म द्रव्यं दम्भाश्रितं तथा ।
वर्जयेच्चैव यात्रां च दिने सूर्यसुतस्य च ॥

अधुनार्थं प्रशंसार्थं विपुलामार्यामाह।

विपुलामपि बुद्धा छन्दोविचितिं भवति कार्यमेतावत्।
श्रुतिसुखदवृत्तसङ्ग्रहमिममाह वराहमिहिरोऽतः॥ ६४॥

विपुलां विस्तीर्णामपि छन्दोविचितिं छन्दसां प्रस्तारं बुद्धा ज्ञात्वा एतावत् कार्यं भवति। यावन्ति छन्दांस्यत्र प्रदर्शितानि तावन्ति ज्ञायन्ते। अतोऽस्माद्धेतोर्वराहमिहिर इमं वृत्तसमुच्चयं श्रुतिसुखदं कर्णसुखजनकमाहोक्तवान्। बहुभिराचार्यैश्छन्दोलक्षणमुक्तं तच्च दुर्विज्ञेयमश्रव्यं च। वराहमिहिरेण पुनः श्रव्यं सुखबोधं व्यापकं सङ्क्षिप्तमुक्तमिति। विपुलेयमार्या॥ ६४॥

अस्या लक्षणम्।

वि[१]पुला तु यान्यथा पादभागित्यादि।

वराहमिहिरीयेऽस्मिन् छन्दसां सारसङ्ग्रहे।
उत्पलो गोचरे टीकां चक्रे शिष्यहितावहाम्॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ ग्रहगोचरो नाम त्र्यधिकशततमोऽध्यायः॥ १०३॥

## अथ रूपसत्रं व्याख्यायते।

आदौ नक्षत्रपुरुषस्याङ्गविभागं तन्नक्षत्रावस्थितिं चाह।

पादौ मूलं जङ्घे च रोहिणी जानुनी तथाश्विन्यः।
ऊरू चाषाढाद्वयमथ गुह्यं फल्गुनीद्वितयम्॥ १॥

कटिरपि च कृत्तिका पार्श्वयोश्च यमला भवन्ति भद्रपदाः।
कुक्षिस्था रेवत्यो विज्ञेयमुरोऽनुराधा च॥ २॥

पृष्ठं विद्धि धनिष्ठां भुजौ विशाखा स्मृतौ करौ हस्तः।
अङ्गुल्यश्च पुनर्वसुराश्लेषासञ्ज्ञिताश्च नखाः॥ ३॥

ग्रीवा ज्येष्ठा श्रवणं श्रवणौ पुष्यो मुखं द्विजाः स्वातिः।
हसितं शतभिषगथ नासिका मघा मृगशिरो नेत्रे॥ ४॥

चित्रा ललाटसंस्था शिरो भरण्यः शिरोरुहाश्चार्द्रा।
नक्षत्रपुरुषकोऽयं कर्त्तव्यो रूपमिच्छद्भिः॥ ५॥

---

[१] द्रष्टव्यास्य ग्रन्थस्य ११९१ पृष्ठे २ श्लोकस्य टीका।

पादौ मूलमिति । नक्षत्रपुरुषस्य पादौ चरणौ मूलम् । एवं जङ्घे द्वे रोहिणी । जानुनी तथाऽश्विन्यः । ऊरू द्वावाषाढाद्वयम् । पूर्वाषाढोत्तराषाढे । अथशब्दश्चार्थे । गुह्यं लिङ्गं गुदश्च फल्गुनीद्वितयं पूर्वफल्गुन्युत्तरफल्गुनीति ॥ १ ॥

कटिरपि चेति । कृत्तिका कटिर्जघनम् । पार्श्वयोश्च यमला भद्रपदा भवन्ति । पूर्वभद्रपदोत्तरभद्रपदे । रेवत्यः कुक्षिस्थाः । अनुराधा उरो वक्षो विज्ञेयं ज्ञातव्यम् ॥ २ ॥

पृष्ठमिति । धनिष्ठां पृष्ठं विद्धि जानीहि । विशाखा भुजौ द्वौ स्मृतावुक्तौ । हस्तौ द्वौ करौ हस्त एव । पुनर्वसुरङ्गुल्यः करशाखाः । आश्लेषासंज्ञिताश्च नखाः कररुहाः ॥ ३ ॥

ग्रीवा ज्येष्ठेति । ग्रीवा शिरोधरा ज्येष्ठा । श्रवणं श्रवणौ द्वौ कर्णौ । पुष्यो मुखं वक्त्रम् । स्वातिर्द्विजा दशनाः । हसितं शतभिषक् । अथशब्दश्चार्थे । नासिका मघा । नेत्रे द्वे चक्षुषी मृगशिरः ॥ ४ ॥

चित्रा ललाटसंस्थेति । ललाटे मुखपृष्ठे संस्था चित्रा । भरण्यः शिरः । आर्द्रा शिरोरुहाः केशाः । अयं नक्षत्रपुरुषको रूपमिच्छद्भिः शोभनं रूपमभिलषद्भिः पुम्भिः कर्त्तव्यः ॥ ५ ॥

अथ कस्मिन् काले रूपसत्राख्यं व्रतं ग्रहीतव्यमित्येतदाह ।

**चैत्रस्य बहुलपक्षे ह्यष्टम्यां मूलसंयुते चन्द्रे ।**
**ह्युपवासः कर्त्तव्यो विष्णुं सम्पूज्य धिष्ण्यं च ॥ ६ ॥**

चैत्रमासस्य बहुलपक्षे कृष्णपक्षे अष्टम्यां तिथौ मूलसंयुते चन्द्रे चन्द्रवासरे । मूलं नक्षत्रं तत्र यदि भवति तस्मिन् दिने प्रथमत उपवासः कर्त्तव्यो विष्णुं नारायणं धिष्ण्यं नक्षत्रं च सम्पूज्याभ्यर्च्य ततो यथा यथा रोहिण्यादीनि नक्षत्राणि भवन्ति तथा तथोपवासः कर्त्तव्यो यावदार्द्राम् ॥ ६ ॥

तथा च गर्गः ।

अष्टम्यां मधुमासस्य कृष्णपक्षे तु नैर्ऋते ।
नक्षत्रे चन्द्रवारे तु मुहूर्ते तु गुणान्विते ॥
प्रारभेद्रूपसत्राख्यं व्रतं धर्मात्मकः पुमान् ।
येन पूर्वेण मनुजो रूपसौभाग्यमाप्नुयात् ॥

अथ व्रतान्ते यत् कर्तव्यं तदाह ।

दद्याद्व्रते समाप्ते घृतपूर्णं भाजनं सुवर्णयुतम् ।
विप्राय कालविदुषे सरत्नवस्त्रं स्वशक्त्या च ॥ ७ ॥

ततो व्रते रूपसत्राख्ये समाप्ते निष्पन्ने घृतपरिपूर्णं भाजनमाज्यपरिपूर्णं पात्रं सुवर्णयुक्तं काञ्चनसंयुक्तं विप्राय ब्राह्मणाय कालविदुषे कालज्ञाय दद्यात् प्रतिपादयेत् । सरत्नवस्त्रं रत्नवस्त्रसहितं स्वशक्त्याऽऽत्मीयशक्त्या विभवानुसारेण दद्यात् ॥ ७ ॥

अन्यत् किं कुर्यादित्याह ।

अन्नैः क्षीरघृतोत्कटैः सह गुडैर्विप्रान् समभ्यर्चयेद्-
दद्यात् तेषु सुवर्णवस्त्ररजतं लावण्यमिच्छन्नरः ।
पादर्क्षात् प्रभृति क्रमादुपवसन्नङ्गर्क्षनामस्वपि
कुर्यात् केशवपूजनं स्वविधिना धिष्ण्यस्य पूजां तथा ॥८॥

अन्नैर्भोज्यविशेषैः । क्षीरघृतोत्कटैः । क्षीरेण दुग्धेन घृतेनाज्येन चोत्कटैराधिक्येन सहितैस्तैश्च सह गुडैः गुडेनेक्षुविकारेण युक्तैः विप्रान् ब्राह्मणान् समभ्यर्चयेत् पूजयेत् । तेषु च ब्राह्मणेषु । सुवर्णं कनकम् । वस्त्रमम्बरम् । रजतं रूप्यम् । नरो मनुष्यो लावण्यमिच्छन् रूपमभिलषन् दद्यात् प्रतिपादयेत् । पादर्क्षाच्चरणनक्षत्रात् मूलात् प्रभृत्यारभ्य क्रमादनुक्रमेणोपवसन् भुञ्जन् अङ्गर्क्षनामस्वपि स्वविधिनाऽऽत्मीयविधानेन वैष्णव्येन पञ्चरात्रविहितेन पूजाक्रमेण वैदिकेन वा केशवपूजनं नारायणार्चनं कुर्याद्विदध्यात् । तथा तेनैव प्रकारेण धिष्ण्यस्य नक्षत्रस्य । यथा भगवतो हरेस्तथा नक्षत्रस्यापि पूजां कुर्यात् ॥८॥

अथ चरितव्रतः पुरुषः कीदृगन्यजन्मनि भवतीत्याह ।

प्रलम्बबाहुः पृथुपीनवक्षाः क्षपाकरास्यः सितचारुदन्तः ।
गजेन्द्रगामी कमलायताक्षः स्त्रीचित्तहारी स्मरतुल्यमूर्त्तिः ॥९॥

मनुष्यः पुरुषः कृतरूपसत्रव्रत ईदृग्भवति । प्रलम्बबाहुः । प्रलम्बौ दीर्घौ बाहू भुजौ यस्य । आजानुबाहुरित्यर्थः । पृथुपीनवक्षाः । पृथु विस्तीर्णं पीनं मांसलं च वक्ष उरो यस्य । क्षपाकरास्यश्चन्द्रवदनः । सितचारुदन्तः शुक्लशोभनदन्तः । गजेन्द्रगामी गजेन्द्रो मत्तहस्तीव सविलासं गच्छति ।

कमलायताक्षः । कमलं पद्मं तद्वत् आयते विस्तीर्णे अक्षिणी नेत्रे यस्य । स्त्रीचित्तहारी । स्त्रीणां योषितां चित्तं मनो हरति तच्छील: । स्मरतुल्यमूर्तिः कामसदृशदेहः ॥ ९ ॥

अथ स्त्री कीदृशी भवति ।

**शरदमलपूर्णचन्द्रद्युतिसदृशमुखी सरोजदलनेत्रा ।**
**रुचिरदशना सुकर्णा भ्रमरोदरसन्निभैः केशैः ॥ १० ॥**
**पुंस्कोकिलसमवाणी ताम्रोष्ठी पद्मपत्रकरचरणा ।**
**स्तनभारानतमध्या प्रदक्षिणावर्त्तया नाभ्या ॥ ११ ॥**
**कदलीकाण्डनिभोरुः सुश्रोणी वरकुकुन्दरा सुभगा ।**
**सुश्लिष्टाङ्गुलिपादा भवति प्रमदा मनुष्यश्च ॥ १२ ॥**

शरदमलपूर्णचन्द्रेति । स्त्री कृतद्रूपसत्त्वव्रता कीदृशी भवति । शरदमलपूर्णचन्द्रद्युतिसदृशमुखी । शरत्काले योऽसावमलो निर्मलः पूर्णचन्द्रः शशी । तस्य द्युतिः कान्तिः । तत्सदृशं मुखं वदनं यस्याः । सरोजदलनेत्रा पद्मपत्रसदृशाक्षी । रुचिरदशना सुशोभनशुक्लदन्ता । सुकर्णा शोभनकर्णा । केशैर्मूर्धजैर्भ्रमरोदरसन्निभैर्द्विरेफजठरकान्तिभिः । अतिनीलवर्णैरित्यर्थः ॥ १० ॥

पुंस्कोकिलेति । पुंस्कोकिलस्य । पुमांश्चासौ कोकिलः पुंस्कोकिलः । प्रधानकोकिलस्य समा तुल्या वाणी स्वरो यस्याः । ताम्रोष्ठी लोहितदन्तच्छदा । पद्मपत्रकरचरणा पद्मपत्राभौ करौ हस्तौ चरणौ पादौ च यस्याः । स्तनभारानतमध्या । स्तनभारेण कुचयुगलोद्वहनेन नतं विनतं मध्यं यस्याः । तथा नाभ्या प्रदक्षिणावर्त्तया संयुक्ता प्रदक्षिणेनावर्त्तो यस्याः ॥ ११ ॥

कदलीकाण्डनिभोरुः । कदली रम्भा । तस्याः काण्डं शाखा । तन्निभौ तत्सदृशावूरू यस्याः । सुश्रोणी शोभनवराङ्गा । वरकुकुन्दरा । वरौ शोभनौ कुकुन्दरौ नितम्बकूपकौ यस्याः ।

तथा च ।

नितम्बकूपकौ यौ तु तौ कुकुन्दरसञ्ज्ञितौ ।

सुभगा सौभाग्योपेता । भर्तृवल्लभेत्यर्थः । सुश्लिष्टाङ्गुलिपादा । सुश्लिष्टाः संहिता अङ्गुलयो ययोस्तादृशौ पादौ यस्याः । एवंविधा प्रमदा स्त्री । मनुष्यः पुरुषश्च भवति ॥ १२ ॥

अथ रूपसत्रावरितस्य प्रशंसार्थमाह ।

**यावन्नक्षत्रमाला विचरति गगने भूषयन्तीह भासा**
**तावन्नक्षत्रभूतो विचरति सह तैर्ब्रह्मणोऽह्नोऽवशेषम् ।**
**कल्पादौ चक्रवर्त्ती भवति हि मतिमांस्तत्क्षयाच्चापि भूयः**
**संसारे जायमानो भवति नरपतिर्ब्राह्मणो वा धनाढ्यः ॥ १३ ॥**

गगने नभसि नक्षत्राणामृक्षाणां माला पङ्क्तिर्यावद्विचरति तिष्ठति । इहास्मिन् लोके भासा कान्त्या भूषयन्ती शोभामुत्पादयन्ती । तावत् पुरुषः स्त्री वा तैरेव नक्षत्रैः सह साकं नक्षत्रभूतस्तारकरूपो विचरति तिष्ठति । ब्रह्मणः पितामहस्याह्नो दिनस्यावशेषं कल्पान्तं यावत् । अन्यस्मिन् कल्पादौ पुनः कल्पप्रारम्भे चक्रवर्त्ती सार्वभौमो राजा मतिमान् पण्डितश्च भवति । भूयः पुनस्तत्क्षयाच्चक्रवर्तित्वविनाशात् संसारे मनुष्यो जायमान उत्पद्यमानो नरपती राजा भवति । अथवा ब्राह्मणो द्विजो धनाढ्यो बहुवित्तो भवति ॥ १३ ॥

इति रूपसत्रम् ॥

## अथ द्वादशमासनामानि व्याख्यायन्ते ।

तत्र मार्गशीर्षमासात् प्रभृति द्वादशमासानां नामान्याह ।

**मृगशीर्षाद्याः केशवनारायणमाधवाः सगोविन्दाः ।**
**विष्णुमधुसूदनाख्यौ त्रिविक्रमो वामनश्चैव ॥ १४ ॥**
**श्रीधरनामा तस्मात् सहृषीकेशश्च पद्मनाभश्च ।**
**दामोदर इत्येते मासाः[१] प्रोक्ता यथासङ्ख्यम् ॥ १५ ॥**

मृगशीर्षाद्या इति । मार्गशीर्षमासात् प्रभृति । द्वादशानां मासानां द्वादश नामानि । तद्यथा । केशवो मार्गशीर्षः । नारायणः पौषः । माधवो माघः । गोविन्दः फाल्गुनः । विष्णुश्चैत्रः । मधुसूदनाख्यो वैशाखः । त्रिविक्रमो ज्येष्ठः । वामन आषाढः ॥ १४ ॥

तस्मादुत्तरः श्रीधरनामा श्रावणः । हृषीकेशो भाद्रपदः । पद्मनाभ आश्वयुजः । चकारः समुच्चये । दामोदरः कार्त्तिकः । इत्येवंप्रकारा यथा-

---

[१] मासेशाः स्युर्यथासङ्ख्यम्-इति पाठान्तरम् ।

सङ्ख्यं यथाक्रमं मासाः प्रोक्ताः कथिताः । भगवन्नाम्ना मासाः क्रमेणैते ज्ञेया इति । केचित् पठन्ति "मासेशाः स्युर्यथासङ्ख्य"मिति । यथासङ्ख्यं यथाक्रममेते द्वादशानां मासानामीशाः स्वामिनः स्युर्भवेयुः ॥ १५ ॥

अथ द्वादशीप्रशंसार्थमाह ।

**मासनामसमुपोषितो नरो द्वादशीषु विधिवत् प्रकीर्त्तयन् ।**
**केशवं समभिपूज्य तत्पदं याति यत्र नहि जन्मजं भयम् ॥१६॥**

नरो मनुष्यो मासनाम्ना समुपोषितः कृतोपवासः द्वादशीषु विधिवद्विधानेन प्रकीर्तयन् स्मरन् केशवं नारायणमित्यादि । यथा मार्गशीर्षद्वादश्यां केशवम् । पौषस्य द्वादश्यां नारायणम् । एवमन्येष्वपि । तथा च समभिपूज्य समभ्यर्च्य तस्य पदं स्थानं याति प्राप्नोति । यत्र पुनर्नहि जन्मजं भयं भवति संसारे भूयो न जायते । परमेश्वरसायुज्यतां गच्छतीति ॥ १६ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ रूपसत्रद्वादशनामानुकीर्तनं नाम चतुराधिकशततमोऽध्यायः ॥ १०४ ॥

## अथोपसंहाराध्यायो व्याख्यायते ।

तत्रादावेव शास्त्रमत्योर्माहात्म्यमाह ।

**ज्योतिःशास्त्रसमुद्रं प्रमथ्य मतिमन्दराद्रिणाऽथ मया ।**
**लोकस्यालोककरः शास्त्रशशाङ्कः समुत्क्षिप्तः ॥ १ ॥**

ज्योतिःशब्देन प्रधानतत्त्वाण्युच्यन्ते । ज्योतिषां शास्त्रं ज्योतिःशास्त्रम् । तदेव दुर्विज्ञेयत्वात् समुद्रं सागरम् । मतिमन्दराद्रिणा । मतिर्बुद्धिरेव मन्दरः पर्वतः । तेन मतिमन्दराद्रिणा । प्रमथ्य निर्मथ्य । लोकस्य जगतः । आलोककरः प्रकाशकरः । शास्त्रशशाङ्कः शास्त्रचन्द्रः समुत्क्षिप्त उद्धृतः ॥ १ ॥

अन्यत् प्रतिपादयितुमाह ।

**पूर्वाचार्यग्रन्था नोत्सृष्टाः कुर्वता मया शास्त्रम् ।**
**तानवलोक्येदं च प्रयतध्वं कामतः सुजनाः ॥ २ ॥**

पूर्वोक्तानि यानि शास्त्राणि तानि न सन्त्यक्तानि । तान्येव दृष्ट्वा सर्वेषां सङ्क्षेपेण सुवृत्तैः कृतम् । तान् पूर्वाचार्यकृतान् इदं मदीयं च शास्त्रमव-

लोक्य दृष्ट्वा कामतो यथेच्छं सुजनाः साधवो बुधाः प्रयतध्वम् । यच्छोभनं तदेव ग्राह्यमित्यर्थः ॥ २ ॥

अधुना सज्जनानां दुर्जनानां च चेष्टितमाह ।

**अथवा कणमपि सुजनः प्रथयति दोषार्णवाद्गुणं दृष्ट्वा ।**
**नीचस्तद्विपरीतः प्रकृतिरियं साध्वसाधूनाम् ॥ ३ ॥**

अथवा सुजनः प्रधानजनो दोषार्णवाद्दोषसागरात् कणमपि स्वल्पमपि गुणं दृष्ट्वा तमेव प्रथयति प्रख्यापयति दोषान् प्रच्छादयति । नीचस्तद्विपरीत इति । नीचो गुणसागरात् स्वल्पं दोषं दृष्ट्वा गुणान् प्रच्छाद्य तमेव दोषं प्रख्यापयति । इयं साध्वसाधूनां सज्जनदुर्जनानां प्रकृतिः स्वभाव इति ॥ ३ ॥

काव्यमभिनवं सर्वथा दुर्जनानां प्रदर्शयितव्यमित्येतत् प्रतिपादयितुमाह ।

**दुर्जनहुताशतप्तं काव्यसुवर्णं विशुद्धिमायाति ।**
**श्रावयितव्यं तस्माद्दुष्टजनस्य प्रयत्नेन ॥ ४ ॥**

दुर्जनहुताशेन दुर्जनाग्निना काव्यसुवर्णं काव्यमेव सुवर्णं तप्तं तापितं विशुद्धिं निर्मलतामायाति प्राप्नोति । यथा कनकं वह्नितप्तं शुद्धं भवत्येवं दुर्जनमुखपतितं काव्यं शुद्धं भवति । यतः स दोषतत्परो भवति न गुणग्राही तस्मात् प्रयत्नेन दुष्टजनस्य दुर्जनस्य काव्यं श्रावयितव्यं प्रदर्शनीयमिति ॥ ४ ॥

अधुना विदुषः प्रार्थयन्नाह ।

**ग्रन्थस्य यत् प्रचरतोऽस्य विनाशमात**
**लेख्याद्बहुश्रुतमुखाधिगमक्रमेण ।**
**यद्वा मया कुकृतमल्पमिहाकृतं वा**
**कार्यं तदत्र विदुषा परिहृत्य रागम् ॥ ५ ॥**

अस्य ग्रन्थस्य प्रचरतः प्रचरमाणस्य यद्विनाशमेत्यपशब्दतां गच्छति । लेख्याल्लेखकदोषात् बहुश्रुतमुखाधिगमक्रमेण । बहुश्रुता ये जनास्तन्मुखेभ्योऽधिगमः प्राप्तिस्तस्य क्रमेण परिपाट्या पूर्वापरपर्यालोचनयाऽर्थावबोधोत्पत्तेर्योऽस-

शब्दं जानन्ति तद्यस्मिन् शास्त्रे विदुषा रागं परिहृत्य कार्यम्। तन्मुखेभ्यो-ऽधिगम्य विदुषा पण्डितेन रागं मात्सर्यं परिहृत्य त्यक्त्वा कार्यं कर्तव्यम्। तथा यद्वा मया कुकृतं कुत्सितमनागमेन कृतं विरचितमल्पं वा परिमितमध्यापकं कृतं वा इहास्मिन् शास्त्रे मूलादेवाकृतं यन्न कृतं तद्यस्मिन् शास्त्रे विदुषा रागं परिहृत्य कार्यमिति ॥ ५ ॥

सतां प्रणामपूर्वकाणि शास्त्राणि प्रसिद्धानि भवन्त्येतदेव प्रदर्शयन्नाह।

**दिनकरमुनिगुरुचरणप्रणिपातकृतप्रसादमतिनेदम्।**
**शास्त्रमुपसङ्गृहीतं नमोऽस्तु पूर्वप्रणेतृभ्यः ॥ ६ ॥**

दिनकर आदित्यः। ताराभाः सर्व एव ग्रहाः। मुनयो वसिष्ठाद्यः। गुरुरादित्यदासाख्यः स्वपिता। दिनकरमुनिगुरूणां चरणाः पादाः। तेषां प्रणिपातो नमस्कारः। तत्कृतात् तत्करणाज्जातः प्रसादोऽनुग्रहो यस्ततो मतिर्बुद्धिर्यस्य तेन दिनकरमुनिगुरुचरणप्रणिपातकृतप्रसादमतिना मयेदं शास्त्रं ज्योतिषग्रन्थमुपसङ्गृहीतं संक्षिप्तीकृतम्। तस्मात् तेभ्यः पूर्वप्रणेतृभ्यः पूर्वाचार्येभ्यो नमोऽस्तु नमस्कारो भवतु ॥ ६ ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतावुपसंहारो नाम
पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

## अथ शास्त्रानुक्रमणी व्याख्यायते।

कदाचिदादर्शदोषाल्लेखदोषाद्वाऽध्यायव्यत्ययो भवत्यतोऽनुक्रमणी बहिः क्रियते। तत्रादावेवाध्यायसङ्ग्रहार्थमाह।

**शास्त्रोपनयः पूर्वं सांवत्सरसूत्रमर्कचारश्च।**
**शशिराहुभौमबुधगुरुसितमन्दशिखिग्रहाणां च ॥ १ ॥**

गतार्थेयमार्या। शिखिग्रहाः केतवः। चारशब्दोऽत्र सम्बध्यते ॥ १ ॥

अन्यदप्याह।

**चारश्चागस्त्यमुनेः सप्तर्षीणां च कूर्मयोगश्च।**
**नक्षत्राणां व्यूहो ग्रहभक्तिर्ग्रहविमर्दश्च ॥ २ ॥**

सप्तर्षीणां चारो ग्रहभक्तिर्ग्रहविमर्दो ग्रहयुद्धम्। गतार्थेयमार्या ॥ २ ॥

अन्यदप्याह ।

ग्रहशशियोगाः सम्यग्ग्रहवर्षफलं ग्रहाणां च ।
शृङ्गाटसंस्थितानां मेघानां गर्भलक्षणं चैव ॥ ३ ॥

ग्रहशशियोगः समागमः । ग्रहाणां शृङ्गाटसंस्थितानां ग्रहशृङ्गाटकफलम् । गतार्थेयमार्या ॥ ३ ॥

अन्यदप्याह ।

धारणवर्षणरोहिणिवायव्याषाढभद्रपदयोगाः ।
सद्योवृष्टिः कुसुमलताः सन्ध्याचिह्नं दिशां दाहः ॥ ४ ॥

सद्योवृष्टिः सद्योवर्षः । गतार्थेयमार्या ॥ ४ ॥

अन्यदप्याह ।

भूकम्पोल्कापरिवेषलक्षणं शक्रचापखपुरं च ।
प्रतिसूर्यो निर्घातः सस्यद्रव्यार्घकाण्डं च ॥ ५ ॥

खपुरं गन्धर्वपुरम् । गतार्थेयमार्या ॥ ५ ॥

अन्यदप्याह ।

इन्द्रध्वजनीराजनखञ्जनकोत्पातबर्हिचित्रं च ।
पुष्याभिषेकपट्टप्रमाणमसिलक्षणं वास्तु ॥ ६ ॥

बर्हिचित्रं मयूरचित्रकम् । असिलक्षणं खड्गलक्षणम् । गतार्थेयमार्या ॥ ६ ॥

अन्यदप्याह ।

उदकार्गलमारामिकममरालयलक्षणं कुलिशलेपः ।
प्रतिमा वनप्रवेशः सुरभवनानां प्रतिष्ठा च ॥ ७ ॥

आरामिकं वृक्षायुर्वेदः । कुलिशलेपो वज्रलेपः । गतार्थेयमार्या ॥ ७ ॥

अन्यदप्याह ।

चिह्नं गवामथ शुनां कुक्कुटकूर्माजपुरुषचिह्नं च ।
पशुमनुष्यविभागः स्त्रीचिह्नं वस्त्रविच्छेदः ॥ ८ ॥

चिह्नं लक्षणम् । गतार्थेयमार्या ॥ ८ ॥

अन्यदप्याह ।

चामरदण्डपरीक्षा स्त्रीस्तोत्रं चापि सुभगकरणं च ।
कान्दर्पिकानुलेपनपुंस्त्रीकाध्यायशयनविधिः ॥ ९ ॥

स्त्रीस्तोत्रं स्त्रीप्रशंसा । अनुलेपनं गन्धयुक्तिः । गतार्थैयमार्या ॥ ९ ॥

अन्यदप्याह ।

वज्रपरीक्षा मौक्तिकलक्षणमथ पद्मरागमरकतयोः ।
दीपस्य लक्षणं दन्तधावनं शाकुनं मिश्रम् ॥ १० ॥

गतार्थैयमार्या ॥ १० ॥

अन्यदप्याह ।

अन्तरचक्रं विरुतं श्वचेष्टितं विरुतमथ शिवायाश्च ।
चरितं मृगाश्वकरिणां वायसविद्योत्तरं च ततः ॥ ११ ॥

श्वचेष्टितं शिवारुते चान्तर्लीनम् । तथा गोचेष्टितमध्ये कृष्टोष्ट्रा-
श्वीसंहीप्रभानामाविनां सर्वमेवान्तर्लीनम् । तथा मृगजातीनां मध्ये विडाल-
व्याघ्रवराहसूकरोष्ट्रादीनां शृगालवच्चेष्टितलक्षणं कथितम् । अन्तर्लीनं सर्वैव
परिज्ञेयम् । गवां श्वचल्लक्षणं चेष्टितं च सर्वं परिज्ञेयम् ॥ ११ ॥

अथान्यदप्यध्यायचतुष्टयविधिमाह ।

पाको नक्षत्रगुणास्तिथिकरणगुणाः सधिष्ण्यजन्मगुणाः ।
गोचरमथ ग्रहाणां कथितो नक्षत्रपुरुषश्च ॥ १२ ॥

पाकाध्यायः । नक्षत्रगुणाः । तिथिगुणाः । करणगुणाः । अत्रैव
मध्ये राशिगुणाः । पुंसां चुल्कमेकर्क्षवेधनविंशाद्यादिकं रत्नोपतापशान्ति-
कर्म च तत्रैवोक्तम् । सह नक्षत्रजन्मगुणस्य ग्रहगोचराध्यायः । नक्षत्रपुरुषो
रूपसत्रं चोक्तं कथितम् ॥ १२ ॥

अन्यदप्याह ।

शतमिदमध्यायानामनुपरिपाटिक्रमादनुक्रान्तम् ।
अत्र श्लोकसहस्राण्याबद्धान्यूनचत्वारि ॥ १३ ॥

इदं शतमध्यायानामनुपरिपाटिक्रमादनुक्रान्तं रचितम् । येनैव प्रका-
रेण परिपठितं तेनैव रचितम् । अस्यां संहितायां श्लोकानामनुष्टुप्छन्द-

षाषूनचत्वारि सहस्राणि। एकोनचत्वारिंशच्छतानि । आबद्धानि रचितानि । शतचक्राङ्गविद्यापिटकाश्वगजलक्षणरहितमेतत्प्रमाणम् । तैश्च सह परिपूर्णानि चत्वारि सहस्राणि भवन्तीति ॥ १३ ॥

अन्यदप्याह ।

**अत्रैवान्तर्भूतं परिशेषं निगदितं च यात्रायाम् ।**
**बह्वाश्चर्यं जातकमुक्तं करणं च बहुचोद्यम् ॥ १४ ॥**

अत्रैवान्तर्भूतं जातकं यात्राविधानकरणं सर्वमन्तर्लीनं परिशेषं प्रकाशीकरणाय यात्रायां सर्वं निगदितम् । तथैव प्रकाशीकरणाय बह्वाश्चर्यं प्रभूतविस्मयजननं जातकमुक्तं विस्तृतम् । तथा [1]बहुचोद्यं करणं पञ्चसिद्धान्तिकायां शिष्यहितार्थं प्रकाशितम् ॥ १४ ॥

[2](आचार्यप्रवरस्य बोधजलधेः पारं तितीर्षुर्जनो
व्यामुह्यन्नभिधेयरत्ननिचयैः काङ्क्षंस्तरीं भ्राम्यति ।
इत्थंविधमाकलय्य करुणामालम्ब्य भट्टोत्पल-
श्चक्रे तत्कृतिसंहिताविवरणं स्थैर्यं परं कीर्तये ॥
यदत्राधिकमूनं वा भ्रान्त्या त्वज्ञानतोऽपि वा ।
विपर्ययेण वा यत् तत्सर्वं संशोध्यतां बुधाः इति) ॥

इति श्रीभट्टोत्पलविरचितायां संहिताविवृतौ शास्त्रानुक्रमणी नाम षडधिकशततमोऽध्यायः ॥ १०६ ॥

॥ शुभम् ॥





१ करणं पञ्चसिद्धान्तिका बहुचोद्यं बहुशस्त्वमुक्तं निगदितमिति वि· प· पाठः ।
२ ( ) एतौ श्लोकौ प्र· पुस्तके एव वर्तते नान्येषु ।